**दीक्षायाः प्रथमसोपानत्वम्**

ननु दीक्षां व्याख्यास्यामः इत्यनुचितं, यस्य व्याख्यानं प्रतिज्ञातं तस्यैवाग्रे कथनीयत्वेन दीक्षाभिन्नानां गणेशश्रीविद्योपास्त्यादीनां बहूनां कथनेन संदर्भविरोधात् इति चेत्–उच्यते। अत्र श्रीललिताभक्तिसाधनीभूतक्रियामात्रं अजहत्स्वार्थवृत्त्या अर्थः। अत्र दीक्षापदोच्चारणं च दीक्षायाः सर्वादित्वज्ञापनार्थम्। एतेन अदीक्षितेन उपास्तिर्न कार्येति तदभिप्रायः। अत एव परमानन्दतन्त्रे

मुक्तिसौधस्य सोपानं प्रथमं दीक्षणं भवेत् ॥ इति ॥

अत एव हिरण्यकेशिसूत्रव्याख्याने––"यज्ञं व्याख्यास्यामः" इत्यत्र एतादृशानुपपत्त्यैव यज्ञशब्दे अजहत्स्वार्था वृत्तिरङ्गीकृता वैजयन्तीकृता ॥ १ ॥

**त्रैपुरसिद्धान्तस्य परमशिवकर्तृकत्वम्**

तत्र दीक्षायां तदङ्गत्वेन त्रैपुरसिद्धान्तं श्रावयेदित्यस्ति। तत्र को नाम त्रैपुरसिद्धान्तः? तस्य कुतः प्रामाण्यं? इत्याकाङ्क्षायां तत्रादौ तादृशसिद्धान्तस्य शिवोदितत्वेन प्रामाण्यं इति वक्तुं भूमिकां रचयति–

**भगवान् परमशिवभट्टारकः श्रुत्याद्यष्टादशविद्याः[1] सर्वाणि दर्शनानि लीलया तत्तदवस्थाऽऽपन्नः प्रणीय, संविन्मय्या भगवत्या भैरव्या स्वात्माभिन्नया पृष्टः पञ्चभिः मुखैः पञ्चाम्नायान्[2] परमार्थसारभूतान्[3] प्रणिनाय ॥ २ ॥**

अत्र प्रतिपादितविद्यासु अप्रामाण्यशङ्कास्पर्शोऽपि मा भवतु इत्येतदर्थं भगवानिति।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इति स्मृतः ॥

इत्येतादृशषड्गुणैश्वर्यसंपन्नो भगवान्। ननु परमशिवः तत्त्वातीतः, तस्य विद्याकर्तृत्वं न संभवति उपाधिशून्यत्वात् इत्यत आह––भट्टारक इति। राजेत्यर्थः, "राजा भट्टारको देवः" इति कोशात्। जगदीश्वरत्वरूपधर्मवान् मायोपाधिकः इति तदर्थः। यद्वा–भट्टारको जगद्रूपनाट्यरञ्जकः, भट्टारकशब्दस्य प्रसन्नराघवनाटके नाट्यरञ्जके, "रे भट्टारक" इति संबोधनात्, "राजा भट्टारकः" इत्यस्य नाट्यवर्गस्थत्वाच्च। तस्य यथा जगत्कर्तृत्वं तथा विद्याकर्तृत्वमपि संभवत्येव। यद्वा––ईश्वरस्य परमशिवस्य पूर्णत्वेन कर्तव्यवस्तुनोऽभावात् कथं

१ एतत्सूत्राधस्तनभाष्ये, अष्टादशविद्यासर्वदर्शनपञ्चाम्नायानां संक्षेपतो दर्शनमस्ति।
२ इमे--आम्नायाः कुतः सम्भूताः किंप्रयोजनाः–इत्याद्यर्थं–द्विपरिशिष्टवि. ४ दृश्यः–
३ साररूपान्–ब.

विद्याकर्तृत्वं ? अत आह—भट्टारक इति । राजेत्यर्थः । यथा राज्ञः स्वस्य अनपेक्षितेऽपि परेषां हिताय कृतिर्दृश्यते तद्वत् । श्रुत्याद्यष्टादशविद्याः—श्रुतिः आदिः यासामिति तद्गुणसंविज्ञानबहुव्रीहिः । तथा च श्रुतयः चत्वारि, तदङ्गानि शिक्षा व्याकरणं कल्पः छन्दः ज्योतिषं निरुक्तं चेति षट्, मीमांसा, न्यायः, पुराणं, धर्मशास्त्रं, इति चतुर्दशविद्याः । आयुर्वेदः, धनुर्वेदः, गान्धर्वं, नीतिशास्त्रं, चेति चतस्रः । एवमष्टादशविद्याः । सर्वाणि दर्शनानि शाक्तदर्शनादीनि । दृश्यते अनेनेति दर्शनं ज्ञानसाधनं शास्त्रमित्यर्थः, शक्तिदर्शनशास्त्रमिति यावत् । एवमेवाग्रेऽपि । शैवदर्शनं वैष्णवदर्शनं ब्राह्मदर्शनं सौरदर्शनं बौद्धदर्शनं चेति षड् (?) दर्शनानि । लीलया अनायासेन तत्तदवस्थाऽऽपन्नः, ईश्वरावस्थाऽऽपन्नो वेदान्, पाणिनिव्यासादिस्वरूपान् गृहीत्वा व्याकरणपुराणादीनि प्रणीय निर्माय ॥

### [1]वेदस्य पौरुषेयत्वसमर्थनम्

ननु वेदस्य नित्यत्वेन अपौरुषेयत्वात् ईश्वरनिर्मितत्वं कथम् ? न च तस्य नित्यत्वमेव असिद्धमिति शङ्क्यम्; "वाचा विरूपनित्यया" इति श्रुतेरिति चेत्—न । वेदास्तु ईश्वरेण निर्मिताः, "छन्दांसि जज्ञिरे तस्मात्" इति श्रुतेः,

अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् ।
आदिकर्ता[2] शिवः साक्षाच्छूलपाणिर्महेश्वरः ॥

इति स्मृतेः । वेदः पौरुषेयः वाक्यसमूहत्वात् भारतादिवत् इत्यनुमानस्यापि प्रमाणत्वात् । अत एव "ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्" इति श्रुतौ ईशानत्वं कर्तृत्वरूपमेव । न च तस्य पौरुषेयत्वे पुरुषदोषाणां भ्रमप्रमादविप्रलिप्साकरणापाटवानां संभवात् अप्रामाण्यशङ्काऽऽस्पदत्वं स्यादिति वाच्यम्; ईश्वरे दोषसाधनानामविद्याऽऽदीनामभावेन दोषासंभवात् । एतेन तन्त्राणामपि नित्यत्वं प्रत्युक्तम् । "वाचा विरूपनित्यया" इत्यत्र नित्यत्वं दोषवत्पुरुषाप्रणीतत्वरूपं गौणं कल्प्यं उक्तप्रमाणकलापानुरोधेन । न च वैपरीत्ये किं विनिगमकमिति वाच्यम्; भूयोऽनुग्रहस्य न्याय्यत्वात् । तस्मात् सर्वा अपि विद्याः पुरुषप्रणीता एव ॥

### तन्त्रप्रणयने प्रयोजनविशेषः

ननु अष्टादशसु विद्यासु सतीषु पुनराम्नायप्रणयनं व्यर्थमत, आह—संविन्मय्येति । अयमभिप्रायः—पुरुषार्थः सुखं, तच्च नैसर्गिकं कृत्रिमं चेति । नैसर्गिकं मोक्षरूपम् । कृत्रिमं यस्तृतीयपुरुषार्थः कामः इत्युच्यते । उभयोः साधनं धर्मः । तस्यापि साधनमर्थः । एवं साक्षात् परंपरया वा पुरुषैरभिलषणीया अर्थाश्चत्वारः । तत्र कृत्रिमपुरुषार्थसाधनान्येव अष्टादशविद्याभिः प्राकट्येन प्रतिपादितानि । अकृत्रिमपुरुषार्थो यः तत्साधनं अकृत्रिमं

---

१ अत्र भगवतो वेदस्यापौरुषेयपौरुषेयत्वयोः—द्विपरिशिष्टवि. ५ द्रष्टव्यः ।
२ कविः सा—अ,
३ प,

स्पष्टं न प्रतिपादितम् । कृत्रिमोपदेशश्चाकिंचित्करोलोकानामिति जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुराम्नायविद्यां प्रणिनाय । यद्वा—निखिलवेदार्थानभिज्ञानां तत्रानधिकारिणां च मुक्त्युपायं [1]निखिलवेदसारामाम्नायविद्यां प्रणिनाय । तत्रापि संवित् अपरिच्छिन्नं चैतन्यं, प्रकाश इति यावत्, तन्मय्या तदभिन्नया । एतेन विमर्शांशेन स्वात्मानं पृच्छतीत्यर्थः सिद्धः । तदुक्तं रत्नत्रयपरीक्षायामप्पयदीक्षितैः—

नित्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्मचैतन्यमेकं
धर्मो धर्मीति भेदद्वयमिति च पृथग्भूय मायावशेन ।
धर्मस्तत्रानुभूतिस्सकलविषयिणी सर्वकार्यानुकूला
शक्तिश्चेच्छाऽऽदिरूपा भवति गुणगणश्चाश्रयस्त्वेक एव ॥ इति ॥

ननु जीवानां अस्मदादीनामपि संविन्मयत्वं अस्त्येवेति श्रीभैरव्या जीवेभ्यः को विशेषः इत्यतः आह भगवत्येति विशेषणम् । भगवच्छब्दार्थश्च व्याख्यातः पूर्वम् । तथा च जीवादिवदाणवादिमलैरावृतज्ञाना सती न पृच्छति, किंतु सर्वज्ञाऽपि केनचिदभिप्रायेण गूढेन पृच्छतीति भगवच्छब्दो ज्ञापयति । तथा हि—शिवः प्रकाशरूपः स्वयमेव विमर्शो भूत्वा प्रश्नमवतारयति । तत्र प्रयोजनमिदं—विद्वान् समर्थोऽपि पुस्तकवाचनादिना संपन्नज्ञानो न कृतार्थो भवितुमर्हति, किं तु गुरूपदिष्टमार्गेणैवेति ज्ञापयितुं स्वस्वरूपान्तरं गृहीत्वा प्रश्नः । तदुक्तं स्वच्छन्दतन्त्रे—

गुरुशिष्यपदे स्थित्वा स्वयमेव सदाशिवः ।
प्रश्नोत्तरपदैर्वाक्यैस्तन्त्रं समवतारयत् ॥ इति ॥

" तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् " इत्येवकारोऽपि श्रुतौ अमुमेवार्थमाह । इममेवार्थं द्योतयितुं भगवत्या स्वात्माभिन्नयेति विशेषणद्वयम् । भैरव्या—भैरवीशब्दार्थश्च जगतो भरणाद्रमणात् प्रलये परमशिवकुक्षिस्थितस्य सृष्टिसमये [2]वमनाच्च भैरवीति ज्ञेयम् । तया पृष्टःप्रश्नमवतारितः । इदं पूर्ववर्तिपरमशिवभट्टारक इत्यस्यैव विशेषणम् । पञ्चभिः मुखैः सद्योजात-वामदेव-अघोर-तत्पुरुष-ईशानसंज्ञकैः पञ्चाम्नायान् पूर्वाम्नाय-दक्षिणाम्नाय–पश्चिमाम्नायोत्तराम्नायोर्ध्वाम्नायनामकान्[3] । आम्नायशब्दो वेदे यद्यपि मुख्यः, "श्रुतिः स्त्री वेद आम्नायः" इति कोशात् । तथाऽपि [4]आम्नायसारप्रतिपादकत्वात् अत्रापि आम्नायशब्दः उपचर्यते । एतेन

१ एतदर्थं द्विपरिशिष्टवि.– ४ द्रष्टव्यः ।

२ अत्र श्रीललितासहस्रनाम–१२६–श्लोकगतमहाप्रलयसाक्षिणी–इत्यन्यतन्त्रादिस्थादीनिच बहुप्रमाणानि सन्ति ।

३ एतत्पञ्चाम्नायनामार्थोपयोगीयज्ञानाय–द्विपरिशिष्टवि.–४–द्रष्टव्यः ।

४ अर्थात्तन्त्राणां वैदिकविषयमर्मोद्घाटनादाम्नायप्रतिपादकत्वं मोक्षप्रदत्वं च सिद्धत्येव ।

केषांचित् तन्त्राणि वेदवत् स्वतन्त्रप्रमाणानीति मतमपास्तम्। परमार्थः अकृत्रिमस्तुरीयपुरुषार्थः तस्मिन् [1]सारभूतान् अभ्यर्हितान्। एतेन पुरुषस्य विशेषेण अभिलषणीयत्वं अतिगोप्यत्वं च सूचितम्। निखिलवेदार्थं ग्रहीतुं अशक्तान् प्रति कृपया शिवः तत्सारभूतमर्थं गृहीत्वा पञ्चाम्नायान् प्रणिनाय निर्ममे ॥ २ ॥

### त्रैपुरसिद्धान्तप्रतिपादनम्

तत्राप्यक्षमान् मन्दतरान् प्रति परमकृपालुः श्रीपरशुरामः तत्रत्यानर्थान् संगृह्य वक्तुं प्रक्रमते--

**तत्रायं सिद्धान्तः॥ ३ ॥**

तत्र पञ्चाम्नायेषु अयं वक्ष्यमाणः सिद्धान्तः विचार्यवादजनितनिर्णयविषयोऽर्थः ॥

एतदन्तेन ग्रन्थेन [2]वक्ष्यमाणसिद्धान्तार्थस्य स्वकपोलकल्पितत्वप्रयुक्ताप्रामाण्यशङ्का निरस्ता ॥

अयं भावः--यस्मिन् काले इदं विश्वं परशिवकुक्षिस्थं सूक्ष्मरूपेण तिष्ठति स एव प्रळयः। ईदृशप्रळयश्च शास्त्रैकवेद्यः। एवमेव सृष्टिरपि। तत्र प्रळयो नाम परब्रह्मणः केवलनिजस्वरूपेण अवस्थानं जीवस्य सुषुप्ताविव। तदानीं जीवराशिः तददृष्टं पञ्चभूतानि सर्वाणि वटबीजे वटवृक्ष इव सूक्ष्मरूपेण तिष्ठन्ति। तदुक्तं शक्तिसूत्रभाष्ये--"परमशिवो जगत् कबळयन्नपि न सार्वात्म्येन, अपि त्वंशेन संस्कारात्मना तत् स्थापयति" इति। स एव संस्कारः ईश्वरसिसृक्षायां सहकारिभूतः, अन्यथा वैषम्यनैर्घृण्यापत्तेरनिवारणात्। एवं स्थिते लोके दम्पत्योः सामरस्ये विधिबिलस्थितशुक्लबिन्दोरंशः योनिं प्रविश्य रक्तबिन्दुना सह एकीभावं प्राप्नोति यदा तदा बाह्याभ्यन्तर[3]भानविहीनं केवलं ब्रह्मैव भासते। तस्य गर्भोत्पादकत्वं दृष्टम्। तथा सृष्टिप्राक्काले शिवशक्त्योर्योगोऽपि प्राण्यदृष्टवशात् भवति ॥ ३ ॥

### षट्त्रिंशत्तत्त्वानि[4]

तदेव प्रपञ्चयितुं तत्त्वजालं व्यष्टुमुपक्रमते--

**षट्त्रिंशत्तत्त्वानि विश्वम्॥ ४ ॥**

तदित्थं--केवलनिजरूपेण अवस्थितस्य यदा "बहु स्यां प्रजायेय" इति इच्छाज्ञानक्रियाऽऽत्मिकाः शक्तयः ताभिर्योगे क्रमेण अर्थशब्दसृष्टी अङ्कुरच्छायावत् युगपद्भवतः।

---

१ साररूपान्--ब.

२ नाम--उपरितन २--सूत्रभाष्यान्तग्रन्थेन--एवमर्थः।

३ भाव--ब.

४ तेषां प्रत्येकेषां स्फोटार्थश्चाधस्तात् एतत्तत्सूत्रभाष्यान्तावधि द्रष्टव्यः।

ननु इच्छाज्ञानक्रियाशक्तीनां सादित्वेन अनित्यत्वापत्तिरिति चेत्—इष्टापत्तिः। तत्त्रितय-कारणीभूता सूक्ष्मरूपा शान्तानाम्नी, तस्या एव परशिवरूपाया नित्यत्वात्। तथा च तादृश-सिसृक्षारूपोपाधिविशिष्टः परमशिव एव केवलशिवपदवाच्यो भवति। स एव तत्त्वानां मध्ये आदिमः।

सा पूर्वोदिता सिसृक्षा प्रपञ्चवासनारूपा शक्तिरिति द्वितीयं तत्त्वम्। तदुक्तं रत्नत्रय-परीक्षायाम्—

कर्तृत्वं तत्र धर्मी कलयति जगतां पञ्चसृष्ट्यादिकृत्ये
धर्मः पुंरूपमाद्यात् सकलजगदुपादानभावं बिभर्ति।
स्त्रीरूपं प्राप्य दिव्या भवति च महिषी स्वाश्रयस्यादिकर्तुः
प्रोक्तौ धर्मप्रभेदावपि निगमविदां धर्मिवद्ब्रह्मकोटी॥ इति॥

पूर्वोक्ततादृशजगतः अहन्तया यद्दर्शनं तदहमिति तादृशस्पष्टवृत्तिमान् सदाशिवपदवाच्यः तृतीयं तत्त्वम्।

इदं जगदिति केवलं भेदविषयिणी या वृत्तिः तद्वान् ईश्वरपदवाच्यः तुरीयं तत्त्वम्।

जगदहमेवेत्याकारिका या सदाशिवसंबन्धिनी वृत्तिः सा विद्यापदवाच्या पञ्चमं तत्त्वम्।

इदं जगदित्याकारिका ईश्वरनिष्ठा भेदविषयिणी वृत्तिः मायापदवाच्या षष्ठं तत्त्वम्।

पूर्वोक्तविद्यातिरोधानशक्तिमती तद्विरोधिनी अविद्यापदवाच्या सप्तमं तत्त्वम्।

जीवनिष्ठं सर्वकर्तृत्वं यत्किंचित्कर्तृत्वेन संकुचितं तदेव कलापदवाच्यं अष्टमं तत्त्वम्।

पूर्वोक्तरीत्या जीवनिष्ठा या नित्यतृप्तिः सैव केषुचिद्विषयेषु अतृप्त्या संकुचिता राग-पदवाच्या नवमं तत्त्वम्।

जीवनिष्ठा या नित्यता तस्या आच्छादने सति सैव नित्यता अस्ति जायते वर्धते विपरिणमते अपक्षीयते विनश्यतीति षडभावयोगात् संकुचिता कालपदवाच्या दशमं तत्त्वम्।

परशिवजीवयोः अभेदात् यथा परशिवे सर्वस्वातन्त्र्यं तथा जीवेऽप्यस्ति, तस्य सर्व-स्वातन्त्र्यस्य[1] वि[पि]धानं पूर्वोक्ताविद्यया कृतं, तदेव कारणान्तरापेक्षं यत्कारणमपेक्षते तन्नि-यतिपदवाच्यं एकादशं तत्त्वम्।

एतादृशनियतिकालरागकलाऽविद्याऽऽश्रयो जीवः द्वादशं तत्त्वम्।

सत्वरजस्तमोगुणानां साम्यरूपा प्रकृतिः चित्तापरपर्याया त्रयोदशं तत्त्वम्।

यदा सत्वतमसी अभिभूय रजःप्रधानं तन्मनःपदवाच्यं संकल्पहेतुश्चतुर्दशं तत्त्वम्।

---

१. अत्र—प्रथमलिखितं—वि—इत्यक्षरं व्यर्थ मिवाभाति—

२. अत्र—आद्या—इत्याद्यनेकपदानि पाठान्तरे पृथक्सन्त्यन्यत्र—

रजस्तमसी अभिभूय सत्वप्रधानमन्तःकरणं तद्बुद्धिपदवाच्यं निश्चयहेतुः पञ्चदशं तत्त्वम्। यदा रजस्सत्वे अभिभूय तमःप्रधानमन्तःकरणं तदहंकारपदवाच्यं विकल्पकारणं षोडशं तत्त्वम्।

शब्दग्राहक मिन्द्रियं श्रोत्रं सप्तदशं तत्त्वम्।

स्पर्शग्राहक मिन्द्रियं त्वगष्टादशं तत्त्वम्।

रूपग्राहक मिन्द्रियं चक्षुरेकोनविंशं तत्त्वम्।

रसग्राहक मिन्द्रियं रसनं विंशं तत्त्वम्।

गन्धग्राहक मिन्द्रियं घ्राणं एकविंशं तत्त्वम्।

व्यक्तवागुच्चारणानुकूलवागिन्द्रियं द्वाविंशं तत्त्वम्।

ग्रहणत्यागानुकूल मिन्द्रियं पाणिः त्रयोविंशं तत्त्वम्।

गमनानुकूल मिन्द्रियं पादः चतुर्विंशं तत्त्वम्।

मलविसर्गजनक मिन्द्रियं पायुः पञ्चविंशं तत्त्वम्।

मैथुनजनक मिन्द्रियं उपस्थः षड्विंशं तत्त्वम्।

सूक्ष्माकाशरूपः शब्दः सप्तविंशं तत्त्वम्।

सूक्ष्मवायुरूपः स्पर्शः अष्टाविंशं तत्त्वम्।

सूक्ष्मतेजोरूपं रूपं एकोनत्रिंशं तत्त्वम्।

सूक्ष्मजलरूपो रसः त्रिंशं तत्त्वम्।

सूक्ष्मपृथ्वीरूपो गन्धः एकत्रिंशं तत्त्वम्।

अवकाशात्मकाकाशः स्थूलः द्वात्रिंशं तत्त्वम्।

सदागतिमत्त्वात्मकगुणवान् वायुः त्रयस्त्रिंशं तत्त्वम्।

उष्णत्ववत् तेजः चतुस्त्रिंशं तत्त्वम्।

द्रवत्ववज्जलं पञ्चत्रिंशं तत्त्वम्।

काठिन्यगुणवती पृथ्वी षट्त्रिंशं चरमं तत्त्वम्[1]।

एतादृशतत्त्वसंघातो विश्वं जगदिति व्यवहारविषयाभिन्नम्। उक्तार्थे प्रमाणं परमानन्दतन्त्रे—

यत्काठिन्यं तद्धरा स्याद्‌द्रवो वै जलमुच्यते।
उष्णं तेजस्संचलनं वायुर्व्योमावकाशकम्॥
एतेषां सूक्ष्मरूपं तु अनुद्भिन्नविभागकम्[2]।
गन्धस्पर्शौ रूपरसौ शब्दस्तन्मात्रकाणि वै॥

१. अत्रग्रन्थे, मूले, भाष्ये च–३६–षट्त्रिंशतत्त्वानि सार्थानि निर्दिष्टानि–

२. विभावकम्–ब.

पञ्चज्ञानेन्द्रियाण्येषां घ्राणं जिह्वा च लोचनम् ।
त्वक् श्रोत्रं चेति पञ्चानां ग्रहणव्यापृतानि वै ॥

वचनादानगमनविसर्गानन्दपञ्चकम् ।
कर्मस्वधिष्ठानरूप मतस्तत्र पृथक्कृतम् ॥

वाक्पाणिपादपायूपस्थाख्यं तत्करणं भवेत् ।
सर्वदेहगतं चापि स्फुटव्यक्ते रुदाहृतम् ॥

मनस्संकल्पकरणं बुद्धिर्निश्चयकारिणी ।
विकल्पप्रतिबिम्बानां भूमिर्दर्पणवच्छिवे ॥

एतावदभिमानात्मा चाहंकार उदाहृतः ।
दुःखनिर्वृतिमोहाख्यरजस्सत्वतमोमयम् ॥

अन्तःकरण मित्युक्तं तत्तदाधिक्यसंभवम् ।
कारणानां गुणानां तु साम्यं प्रकृतिरुच्यते ॥

तद्भिन्नः पुरुषः प्रोक्तः पूर्णः संक्षिप्तशक्तिकः ।
चिदानन्द स्तथेच्छा च ज्ञानं तद्वत् क्रियाऽपि च ॥

परिपूर्णाश्शक्तयस्तु संकोचात्तु कलादिकाः ।
सर्वकर्तृत्वरूपा वै क्रियाशक्तिः कलाऽभवत् ॥

किंचित्कर्तृत्वरूपेण ज्ञानं सर्वज्ञता तथा ।
[1]बुद्धिस्तत्प्रतिबिम्बानां वस्तूनामेव [2]बोधकः ॥

संकोचनात्तु विद्याऽऽख्या सैवाविद्येति गीयते ।
इच्छा तु नित्यतृप्त्याख्या सैव संकोचशालिनी ॥

रागः क्वचिदतृप्त्याख्या क्वचिद्रञ्जनरूपिणी ।
चिच्छक्ति र्नित्यसत्ताऽऽख्या कालः षड्भावयोगतः ॥

आनन्दशक्तिस्स्वातन्त्र्यं सार्वत्रिकमुदीरितम् ।
अन्यापेक्षणहेतोस्तु संकोचान्नियतिः स्मृता ॥

अखण्डरसमेतावदेतद्भेदननैपुणा ।
स्वतन्त्ररूपा त्वं देवि माया भैरववल्लभा ॥

भेदनेन स्वरूपस्य गोपनात् तत्त्वरूपिणी ।
स्वरूपभेदनं हित्वा चैक्यावगमनोद्यता ॥

---

१. बुद्धित-ब.
२. बोधतः-ब.

परमार्थप्रथारूपा शुद्धविद्येति शब्दिता ।
स्पष्टभेदप्रथान् भावान् स्वाभेदेनावभासयन् ॥
ईश्वरः कथितो देवि तान्[1]स्पष्टानहं त्विदम् ।
इति प्रबोधनात्मा तु सदाशिव इतीरितः ॥
स्वस्वरूपाभेदमयानहमित्येव पश्यती ।
प्रपञ्चवासनारूपा शक्तिरित्यभिधीयते ॥
निष्प्रपञ्चश्चिदेकात्मा शिवतत्त्वं समीरितम् ॥ इति ॥

एतेषां शिवादिक्षित्यन्तानां स्वरूपनिरूपणं मृगेन्द्रसंहितायां विस्तरेणास्ति, विस्तरभयादत्र न लिखितं, यावदुपयुक्तं तावदेव लिखितम् ॥

### तत्त्वसंख्यानिर्णयः

ननु साङ्ख्यैः चतुर्विंशतितत्त्वानीति सिद्धान्तितं, कथं षटत्रिंशत्तत्त्वानि ? इति चेत्—उच्यते, चतुर्विंशत्यतिरिक्तानि पुरुषादिशिवान्तानि द्वादश तत्त्वानि न सन्ति प्रमाणाभावादिति तवोक्तिः, उत चतुर्विंशतितत्त्वेषु अन्तर्भूतानीति । नाद्यः, श्रीभगवतः परशुरामस्य उक्तेरेव प्रमाणत्वात्, " षट्त्रिंशत्तत्त्वप्रासादभूनाथाय नमो नमः " इति स्कान्दे श्रुतत्वात्, " षट्त्रिंशद्विधमेतद्धै तत्त्वचक्रं समीरितम् " इति परमानन्दतन्त्रे श्रुतत्वाच्च । न द्वितीयः, पुरुषादिशिवान्तानां पूर्वोक्तलक्षणरूपविरुद्धधर्मवतामन्तर्भावासंभवात् । न च " चतुर्विंशतितत्त्वानि पुरुषस्तु ततः परः " इति महाभारतवचनविरोधः इति वाच्यम्; अग्रिमद्वादशतत्त्वानामतिकठिनवेद्यत्वेन मन्दमतीनां प्रकृत्यन्तसुगमवेद्यतत्त्वानामेव कथनीयतया तत्रैव विश्रामात्, एवं च अधिकारिभेदेन वचनद्वयस्यापि प्रामाण्यात् । एतेन—" सर्वत्र पञ्च भूतानि षष्ठं किंचिन्न विद्यते " इति वासिष्ठवचनमाश्रित्य पञ्चैव तत्त्वानीति वदन् परास्तः, तस्य अत्यन्तमन्दमतिपरत्वात् ॥

ननु विरुद्धधर्मवत्त्वं यदि तत्त्वविभागे प्रयोजकं तर्हि घटत्वपटत्वरूपविरुद्धधर्मवतोः घटपटयोरपि तत्त्वान्तरत्वापत्तिः इति चेत्—न । किं षट्त्रिंशत्तत्त्वातिरिक्तत्वमापाद्यते ? अथवा घटरूपतत्त्वापेक्षया पटतत्त्वमतिरिक्तं स्यादित्यापाद्यते ? नाद्यः, यः क्षितेरसाधारणो धर्मः काठिन्यं तेन साकं घटत्वपटत्वयोः विरोधाभावेन तदतिरिक्तत्वासिद्धेः । द्वितीये तु इष्टापत्तिरेव । एष एवार्थः उक्तः सूतसंहितायां तत्त्वलक्षणकथनपूर्वम्—

आप्रळयं यत्तिष्ठति सर्वेषां भोगदायि भूतानाम् ।
तत्तत्त्वमिति प्रोक्तं न शरीरघटादि तत्त्वमतः ॥ इति ॥

एतेन इयमाशङ्का सुतरां पराहता ॥

---

१. तान् अस्पष्टान्—इति पदच्छेदोऽत्रकार्यः ।

यद्यपि तन्त्रान्तरे प्रथमं त्रीण्येव तत्त्वानि—आत्मतत्त्वं, विद्यातत्त्वं, शिवतत्त्वं, चेति। तत्र आत्मतत्त्वं चतुर्विंशतिधा क्षित्यादिप्रकृत्यन्तम्। तदसाधारणो धर्मः केवलजडत्वम्। पुरुषमारभ्य मायाऽन्तं विद्यातत्त्वं सप्तधा। तल्लक्षणं च जडत्वप्रकाशकत्वोभयवत्त्वम्। तथाहि—यथा अयःपिण्डे वह्नितादात्म्यापन्ने जडेऽपि प्रकाशकत्वं, अयःपिण्डे जडत्वं च वह्नितादात्म्यानापन्नत्वदशायां स्पष्टम्। एवं वह्नौ अयःपिण्डतादात्म्यापन्नत्वदशायां जडत्वं प्रकाशकत्वं च स्पष्टम्। तथा पुरुषे प्रकाशरूपे तत्तादात्म्यापन्नेषु जडेषु नियत्यादिषु प्रकाशकत्वं पुरुषे च जडत्वम्। नियत्यादिषु जडत्वं पुरुषे प्रकाशकत्वं च स्पष्टम्। एवंरीत्या विद्यातत्त्वस्य मिश्रत्वम्। शुद्धविद्याऽऽदिशिवान्तं शिवतत्त्वं पञ्चधा। तदसाधारणो धर्मः केवलप्रकाशकत्वमित्यवान्तरविभागः कृतः। तथाऽपि तत्राप्युपसंहारवेळायां

षट्त्रिंशद्विधमेवं वै तत्त्वचक्रं महेश्वरि॥

इति यो धर्मः उक्तः स एव अत्राप्युक्तः इति न तेन साकं विरोधः॥

वस्तुतस्तु भागवते एकादशस्कन्धे द्वाविंशेऽध्याये

कति तत्त्वानि विश्वेश संख्यातान्यृषिभिः प्रभो।
केचित् षड्विंशतिं प्राहुरपरे पञ्चविंशतिम्॥
सप्तैके नव षट् चैके.........

इत्यारभ्य उद्धवप्रश्ने स्वमते अष्टाविंशतितत्त्वानि प्रतिपाद्य श्रीभगवान् सप्तादिविरुद्धसंख्यावादिनां मतानामुपपत्तिं कृत्वा

इति नानाप्रसंख्यानं तत्त्वाना मृषिभिः कृतम्।
सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम्[1]॥

इत्युवाच। इदमेवात्र समाधानं द्रष्टव्यम्॥ ४॥

**जीवेश्वरस्वरूपम्**

एवं तत्त्वानां विभागमुक्त्वा जीवेश्वरस्वरूपं वक्तुमारभते—

**शरीर[2]कञ्चुकितः शिवो जीवो [3]निष्कञ्चुकः परशिवः॥**

एवं षट्त्रिंशत्तत्त्वानामपि सामान्यरूपेण पुनर्द्विस्वभावत्वं—केषुचित् केवलदृश्यत्वं केषुचित् केवलद्रष्टृत्वमेव। आद्यं जडेषु, द्वितीयं केवलमिति॥

१. एतावता, नैको मुनिर्यस्य वचः प्रमाणमिति, मुनिवचसा मप्रमाणतावादिनो दुरर्थकर्तारो दूरं यापिता इति मार्मिकम्, तादृशाश्च गुह्यशब्दतथ्यार्थेऽपि भ्रमन्त्येव सांप्रतिकाः केचित्।

२. कंचुकितो जी—अ.

३. निष्कंचुकः शिवः—अ.

ननु जीवस्य तत्त्वान्तःपातित्वात् परशिवस्यातथात्वात् द्वयोर्भेद आयातः । एवं सति कथमद्वैतसिद्धान्तः तान्त्रिकाणाम् ? अतआह—शरीरेति । अयं भावः—सर्वस्वतन्त्रः परशिवः स्वस्य मायया दुर्घटया स्वनिष्ठं यदन्यानपेक्षत्वरूपं पूर्णं स्वातन्त्र्यं तदाच्छादयति । ततस्तिरोहितं यत्स्वातन्त्र्यं परिमितं स्वातन्त्र्यं तदाणवमलमुच्यते । आणवमलमेव अविद्येत्यप्युच्यते ॥

ननु पूर्णस्वातन्त्र्यं स्वीयं स्वयमेव कथमाच्छादयति इति चेत्—उच्यते । यथा सूर्यः स्वमयूखैरेव सृष्टैः मेघैः स्वयमावृतो भवति एवमेव स्वाविद्यया स्वस्यावरणे बाधकाभावात् । तथा च औपाधिकोभेदोन वास्तवः । तथा च नाद्वैतहानिः इति भावः ॥

ननु अपरिच्छिन्नचित्स्वरूपपरशिवः कथं परिच्छिन्नेन आणवमलेन तिरोहितइति चेत्— इत्थम् । मायायाः सामर्थ्यमनिर्वचनीयम् । अतोन तत्र अघटितघटनायामपि कथंभावशङ्का अस्ति । अतएवोक्तम्—

दुर्घटैकविधायिन्यां मायायां किमसंभवि ॥ इति ॥

सुभगोदयेऽपि—

मायाविभिन्नबुद्धिर्निजांशभूतेषु निखिलभूतेषु ।
नित्यं तस्या निरङ्कुशविभवं वेलेव वारिधिं रुन्धे ॥ इति ॥

एवमाणवेन मलेन छन्नः तदा स्वयमणुर्देहपरिमितः सन् अन्यान् देहपरिमितान् अनन्तान् जीवान् स्वभिन्नत्वेन पश्यति । तन्मायिकं मलम् । एवं भेदप्रथारूपमायिकमलेन मलिना शुभाशुभकर्म अनुतिष्ठन्तः तज्जनितसंस्कारवन्तोभवन्ति । तदेतत् कार्मं मलम् । एतादृशत्रिविधमलं शरीरपदेनोच्यते । तद्रूपं यत् कन्चुकम् आच्छादनं तेन आवृतः शिवएव जीवः। तदुक्तं परमार्थसारे-

परमं यत्स्वातन्त्र्यं दुर्घटसंपादनं महेशस्य ।
देवी मायाशक्तिः स्वात्मावरणं शिवस्यैतत् ॥ इति ॥ (प॰ सा॰ १५)

सुभगोदयेऽपि—

स तया परिमितमूर्तिस्संकोचितसमस्तशक्तिरेष पुमान्
रविरिव सन्ध्यारक्तस्संहृतरश्मिस्स्वभासनेऽप्यपटुः इति ॥

यद्वा--शरीरं त्रिविधं, स्थूलं, सूक्ष्मं, परं, चेति । आद्यं ध्यानश्लोकप्रतिपादितम् । द्वितीयं मन्त्ररूपम् । तृतीयं वासनाऽऽत्मकम् । एतैः शरीरैः कञ्चुकितः शिवः आद्यतत्त्वं सोऽपि जीवएवेत्यर्थः । तस्मिन्नेव जीवत्वमस्ति, का कथा अन्येष्विति भावः । एतेन शिवस्वरूपलाभोऽपि न परमपुरुषार्थइति ध्वनितम् ॥

एतादृशजीवाः त्रिविधाः--शुद्धाः, अशुद्धाः, मिश्राश्च, इति । आद्याः शिवादिसदाशिवान्ताः, तेषाम् अज्ञानाभावात् । अशुद्धाः मनुष्यादयः । मिश्राः वसिष्ठादयः । एतादृशकञ्चुकरहितोयः सः तत्त्वातीतः परशिवः इत्यर्थः ॥ ५ ॥

**पुरुषार्थस्वरूपम्**

एवं जीवेश्वरयोः स्वरूपमुक्त्वा कः पुरुषार्थः इति तं निर्दिशति--

**स्वविमर्शः पुरुषार्थः ॥ ६ ॥**

स्वस्य परशिवस्वरूपस्य विमर्शः प्रत्यभिज्ञानं सोऽहमित्याकारकं--यथा कण्ठस्थं चामीकरं विस्मृत्य तदन्वेषणाय देशाद्देशं धावन् केनचित् उद्बुद्धसंस्कारः कण्ठस्थं पश्यति तथा विस्मृतस्वरूपज्ञानस्य पुनर्लभः--पुरुषार्थः अकृत्रिमः इत्यर्थः । एतादृशपुरुषार्थलाभश्च न भगवत्कृपामृते भविष्यति । तदुक्तं भगवता श्रीकृष्णेन--

मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ इति ॥ अ. ७-१४

भगवत्प्रीतिश्च भगवदाराधनेनैव भवति । अतोभगवदाराधनं परंपरया मोक्षसाधनम् ॥ ६ ॥

**मन्त्रगुणवर्णनम्**

ननु [१]योगादिनाऽपि ईदृशपुरुषार्थलाभोभवतीति शास्त्रं बहूपलभ्यते[२] । किमुपासनाया आवश्यकत्वं वर्ण्यते इति चेत्-अस्त्युपासनाया आवश्यकता । योगादिभिः लभ्यमोक्षस्तु न पुनरावृत्तिरहितः । तदुक्तं स्वच्छन्दसंग्रहे—

मुक्तं च प्रतिबन्धात्तं पुनर्बन्धाति चेश्वरः ।
बद्धः संसरते भूयो यावद्देवं न विन्दति ॥ इति ॥

एवं स्थलान्तरेपि--

सांख्ययोगादिसंसिद्धान् श्रीकण्ठस्तदहर्मुखे ।
सृजत्येव पुनस्तेन न सदृङ्मुक्तिरीदृशी ॥ इति ॥

---

१. आदिशब्देन, वेदान्तन्यायसांख्यमीमांसावैशेषिकादीनि ज्ञेयानि

२. अर्थात्-मोक्षरूपपुरुषार्थप्रतिपादकतत्तच्छास्त्रोक्तकर्माणि, सप्रमाणानि, भूयांसि भवन्तीत्यर्थः-

अतः उपासनायाएव मुख्योपायत्वे सिद्धे उपासनायां जपस्यापि सत्त्वात् तत्र मुख्यसाधनं [1]मन्त्र इति तत्र उपासकस्य श्रद्धोत्पत्तये तद्वृत्तिगुणान् वर्णयति—

**वर्णात्मका नित्याः शब्दाः ॥ ७ ॥**

वर्णात्मकाः वर्णसमुदायरूपाः शब्दाः मन्त्राः नित्याः,—मूलाविद्यासमसत्ताकाः इत्यर्थः। न तु कालत्रयाबाध्यत्वं, अज्ञाननिवृत्तौ स्वस्वरूपातिरिक्तदेवतायाः तद्वाचकमन्त्राणां च असत्त्वात्। न च आनुपूर्वीविशेषविशिष्टवेदादीनां नित्यत्वस्य एककल्पस्थायित्वस्य वर्णितत्वेन अस्यापि तादृशत्वेन कथं ततोऽपि चिरस्थायित्वरूपं नित्यत्वम् इति वाच्यम्; मन्त्राणां देवता-सूक्ष्मशरीररूपत्वेन देवताशरीरस्य अविद्यासमकालत्वात् ॥ ७ ॥

अथवा—

सप्तकोटिमहामन्त्राः शिववक्त्राद्विनिर्गताः।

इति स्कान्दात् मन्त्राणामपि सादित्वेन नाविद्यासमकालिकत्वं तस्या अनादित्वात्। अतएव इतरसाधारणगुणत्वेन नानेन स्तुतिः संभवतीति अपरितोषेण मन्त्राणामसाधारणं गुणान्तरमाह—

**मन्त्राणामचिन्त्यशक्तिता ॥ ८ ॥**

मन्त्राणामिति षष्ठी सप्तम्यर्थे, मन्त्रेष्वित्यर्थः। न चिन्त्या अचिन्त्या शक्तिर्यत्र, ते—अचिन्त्य शक्तयः मन्त्राः, तेषां भावः तत्ता, अस्तीति शेषः। शक्तौ अचिन्त्यत्वं च तर्काविषयत्वम्। एतेन पूर्वोदितमाया अतर्क्या दुर्वारा, तथाऽपि तन्निवारणे समर्था ततोऽपि अधिकशक्तिका मन्त्रेषु लीलया ज्ञानावरकाविद्यानिवर्तकत्वशक्तिरस्तीति प्रतिपादितम् ॥ ८ ॥

**मन्त्रसिद्धौ सहकारिकारणानि**

मन्त्रेण ईप्सितकार्ये जननीये सहकारिकारणान्याह—

**संप्रदायविश्वासाभ्यां सर्वसिद्धिः ॥ ९ ॥**

संप्रदायः गुरुपरंपराऽऽचारानुसरणम्। विश्वासोमन्त्रेषु फलसाधनत्वविषयकोनिश्चयः। आभ्यां सहितमन्त्रेण सर्वसिद्धिः भवतीति शेषः। यद्यपि लोके एकेन दण्डेन एकव्यापारेण घटएव भवति न पटः। एवं तुरीवेमादिना पटएव न घटइति। एवं सर्वकारणेषु लोके नियतैककार्यजनकत्वं दृष्टम्। तथाऽपि मन्त्रेषु न तथा एकएव मन्त्रः यद्यदीप्सितं तत्सर्वं जनयति इति ज्ञापयितुं सर्वपदम्। एतेन श्रोतृप्रवृत्तये मन्त्रवर्तिगुणोऽपि प्रतिपादितो भवति ॥ ९ ॥

---

१. इतःसप्तमाष्टनवमसूत्रैर्भगवान् राम उपासनाहृदयीभूततत्तद्देवतामन्त्रावश्यकत्वगौरवमवतारयतीत्यवधेयम्—

ननु कथं लोकविरुद्धार्थकमिदं वाक्यं प्रमाणं भवितुमर्हति इत्यत आह—

**विश्वासभूयिष्ठं प्रामाण्यम् ॥ १० ॥**

प्रामाण्यं संवादिप्रवृत्तिजनकतद्वतितत्प्रकारकज्ञानजनकत्वम् । सर्वसिद्धिरिति पूर्वोक्त-वाक्यनिष्ठं विश्वासभूयिष्ठम् । अत्र विश्वासपदार्थश्च वाक्यप्रयोक्तरि आप्तत्वनिश्चयः । बहुशब्दात् अतिशयार्थे इष्ठन् प्रत्ययः । तत्र—पाणिनिसूत्रं " अतिशायने तमबिष्ठनौ " अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः इति तदर्थः । एवं स्वार्थे इष्ठनि जाते "इष्ठस्य" इति बहोः परस्य इष्ठस्य लोपः स्यात् । " बहोर्लोपो भू च बहोः " इति इडागमो भूरादेशश्च इति तदर्थः । एवं भूरादेशे इडागमे च भूयिष्ठशब्देन अत्यन्तबहुत्वविशिष्टः पुरुषार्थः । पुरुषे विश्वासभूयिष्ठत्वं च स्वोत्तरोत्पन्नत्वस्वविषयविषयकत्वसंबन्धेन विश्वास-विशिष्टशङ्काऽनधिकरणत्वं, तदाश्रयपुरुषेण सममभेदान्वयस्य बाधितत्वात् । भूयिष्ठपदस्य भूयिष्ठाश्रयज्ञानविषये लक्षणा । तस्य प्रामाण्ये अभेदान्वयः । अत्यन्तविश्वासवत्पुरुषैकवेद्यं एतच्छास्त्रप्रामाण्यमित्यर्थः । कुतर्कशालिनां शास्त्रप्रामाण्यं सर्वथा अगम्यमिति भावः । तदुक्तं भट्टपादैः—

शास्त्रैकगम्या ये ह्यर्था न तांस्तर्केण दूषयेत् ॥ इति ॥

केचित्तु—विश्वासस्य भूयिष्ठं बाहुल्यं यत्रेति बहुव्रीहिमाहुः । तच्चिन्त्यम् । भूयिष्ठपदस्य पाणिन्यनुशासनेन पुरुषपरत्वेन बाहुल्यरूपधर्मपरत्वायोगात् । यदि च धर्मे लक्षणा तदा मदाश्रितलक्षणापक्षएव श्रेष्ठः । न सः । तथा सति बाहुल्ये एकत्र लक्षणाया-मपि धर्मस्यापि प्रामाण्येन समं अभेदान्वयासंभवात् बहुव्रीहौ अन्यपदार्थे लक्षणा वाच्या, बाहुल्यसंबन्धिप्रामाण्यमिति । संबन्धश्च स्वाश्रयवृत्तिज्ञानवेद्यत्वमेव वक्तव्यम् । तथा च मन्मततुल्यम् । एतदंशे धर्मे लक्षणाऽऽधिक्यं क्लिष्टव्यधिकरणबहुव्रीह्याश्रयणं च । तस्मादिदमेव व्याख्यानं वरम् ॥

ईदृशमेव श्रद्धाभुयस्त्वमिति सुस्पष्टमुवाच श्रीस्कन्दः—

अगस्त्य किं बहूक्तेन शृणु मे निश्चितं वचः ।
संशयोनात्र कर्तव्यः सन्दिग्धाद्धि फलं न हि ॥
यावन्ति मर्त्ये तन्त्राणि मन्त्रजालान्यनेकशः ।

सहकार्यन्तरमाह—

**गुरुमन्त्रदेवताऽऽत्ममनःपवनानाम्**
**ऐक्यनिष्फालनादन्तरात्मवित्तिः ॥ ११ ॥**

गुर्वादयः स्पष्टाः । पवनाः पञ्चप्राणाः । एतेषाम् ऐक्यनिष्फालनं भावनया एकत्वसंपादनम् , तेन अन्तरात्मनः प्रत्यगात्मनः वित्तिः वेदनं भवतीति शेषः आत्मनोदेवतायाश्च ऐक्यमुपाधिनिरासे स्पष्टम् । देवताया मन्त्रस्य चैक्यं वाच्यवाचकभावापन्नत्वेन । तथा गुरोरपि । मनःपवनयोरैक्यं विष्णुपुराणे दर्शितम्—

नभस्वान्मनसोनातिभिन्नोऽतस्तन्निरोधनात् मनोनिश्चलतामेति ॥ इति ॥

यद्यपि ईदृशनिश्चयः उपासनावेळायां न भवितुमर्हति, तथापि आहार्यं क्षणमात्रं कार्यमिदमुपासनायामङ्गम् ॥

**जपरूपोपास्तिफलम्**

यद्वा—संप्रदायविश्वाससहितमन्त्रकरणकोपास्तेः फलमाह--गुरुमन्त्रेति । ऐक्यनिष्फालनं ऐक्यनिर्णयः, तद्द्वारा प्रत्यगात्मज्ञानं भवतीति विशिष्टार्थः ॥

उमाऽऽनन्दनाथास्तु—गुरुमन्त्रेत्यस्य आरंभोल्लासे गुरुमन्त्रदेवताऽऽत्मनामैक्यभावनम्—एकं साधनं, मनःपवनयोः एकयत्ननिरोद्धव्यत्वज्ञानं चापरं, द्वाभ्यां कार्यसिद्धिः इति व्याचक्रुः । तच्चिन्त्यम । निष्फालनादित्येकक्रियायाएकोऽर्थोभावनारूपः एकयत्ननिरोद्धव्यत्वज्ञानरूपोवा बुध्येत नानेकः, " सकृदुच्चरितश्शब्दः सकृदेवार्थं गमयति " इति न्यायात् । अन्यथा हरिपदात् चतुर्दशानामप्यर्थानां युगपद्बोधप्रसङ्गात् । किंच—द्वन्द्वघटकीभूतपदार्थानां यदि भिन्नक्रिययाऽन्वयः, तदा " भिक्षामट, गां चानय " इतिवत् अन्वाचयएव स्यात् , क्रियाभेदे अन्वाचयः " इति तल्लक्षणात् । एकक्रियायां युगपदन्वयित्वं हि द्वन्द्वलक्षणं, तन्निर्वाहस्तु सर्वथा कर्तुमशक्यः तन्मते । न च—"धवखदिरौ छिन्धि पश्य " इति प्रयोगो न स्यात् इति वाच्यम् ; ईदृशप्रयोगोऽप्रामाणिकएव इति सर्वैर्व्यवस्थापितत्वात् ॥ ११ ॥

**अर्चनरूपोपास्तिविधिः**

एतावत्पर्यन्तं मन्त्रस्तुत्या तत्सहकारिकारणकथनेन च मन्त्रकरणकक्रियातद्विधिरुन्नेयः । तथा च तादृशी जपरूपैव । एवं जपरूपोपास्तिं निरूप्य पूजारूपामुपास्तिं हि विधत्ते—

**आनन्दं ब्रह्मणोरूपं तच्च देहे व्यवस्थितं तस्याभिव्यञ्जकाः पञ्च मकाराः तैरर्चनं गुप्त्या प्राकट्यान्निरयः ॥ १२ ॥**

यथा चिद्रूपं ब्रह्म एवम् आनन्दरूपमपि, " विज्ञानमानन्दं ब्रह्म " इति श्रुतेः । यथा चिद्रूपमावृतमज्ञानेन न जानाति एवमानन्दस्वरूपमपि दुःखेनावृतं न जानाति । यदा कदाचित् भारादिरूपदुःखापगमे ब्रह्मणएव परिच्छिन्नं रूपं शरीरावच्छेदेन संप्रत्यपि

जानाति तादृशानन्दः परिच्छिन्नोदेहे देहावच्छेदेन व्यवस्थितः । तस्य अभिव्यञ्जकाः तद्विषयकसाक्षात्कारजनकाः पञ्चमकाराः । एतदन्तेन विधीयमानद्रव्यस्तुतिः अनुष्ठातृप्रवृत्तये यतईदृशाः श्रेष्ठाः पञ्च मकाराः अतः तैरर्चनं गुप्त्या अप्राकट्येन, कुर्वीतेति शेषः । गुप्तिद्रव्योभयविशिष्टार्चनरूपं कर्म अनेन विधीयते ॥

ननु विशिष्टकर्मविधौ कर्मणएव स्तुतिरपेक्षिता विधेयस्यैव स्तुत्यत्वनियमादिति चेत्—न; विशिष्टविधौ विशेषणविधेराक्षिप्तत्वेन अस्यार्थवादस्य तच्छेषत्वसंभवात्, यथा "वायव्यं श्वेतमालभेत" इत्यत्र देवताविशिष्टकर्मविधावपि "वायुर्वै क्षेपिष्ठा" इत्यनेन देवतास्तुतिः, तद्वत् । कर्माणि गुप्तिश्च पशुवृत्तिज्ञानविषयतासामान्यज्ञानशून्यत्वम् । अस्य विशिष्टविधिरूपत्वात् गुप्तिः क्रत्वर्था । तस्यैव 'प्राकट्यान्निरयः' इति निन्दारूपा स्तुतिः । यथा—"यद् ग्राम्याणां पशूनां चर्मणा संभरेद् ग्राम्यान् पशूञ्छुचाऽर्पयेत्" इति निन्दारूप; सन् "कृष्णाजिनेन संभरति" इति स्तुतिशेषः, तथा तेन दैवात् प्राकट्ये क्रत्वङ्गलोपजनितं प्रायश्चित्तं, न नरकनिरासाय अन्यत् प्रायश्चित्तम् ॥

प्राकट्यात् गुप्तिविपरीतात् । हेतौ पञ्चमी । निरयः नरकः इत्यर्थः ॥

श्रीभासुरानन्दनाथपादास्तु—"दीक्षाऽन्तरवतां स्वधर्मप्रकटने क्रतुवैगुण्यमात्रं, इह तु तद्वैगुण्ये नरकएव, तथा च भगवान् परशुरामः 'प्राकट्यान्निरयः'" इत्यूचुः । तन्मते वाक्यभेदः, प्रकृतहान्यप्रकृतपुरुषार्थत्वकल्पनादिदोषपरिहारोपायमल्पमतिरहं न जाने ॥ १२ ॥

### उपासकधर्माः—भावनादार्ढ्यम्

एवमुपासनामुक्त्वा उपासकधर्मान् प्राह—

## भावनादार्ढ्यादाज्ञासिद्धिः ॥ १३ ॥

'अहमिदं जानामि' इत्येतादृशवृत्तिषु इदंपदार्थापेक्षया अहंतया भासमानं श्रेष्ठमिति विवेचनम्—सर्ववृत्तिषु इदमेव भावनापदार्थ; । तस्य दार्ढ्यं अशिथिलता । अनेन आज्ञासिद्धिः निग्रहानुग्रहसामर्थ्यं भवतीति शेषः । भावनादार्ढ्यस्तुत्या सर्वदा ईदृश-भावनाविधिरुन्नेयः ॥ १३ ॥

### सर्वदर्शनानिन्दा[1]

उपासकस्य नियमान्तरमाह—

---

१. नानिन्दनम्—अ
इतोभगवतस्तान्त्रिकशासनगौरव-मननीयतरम्-

## सर्वदर्शनानिन्दा ॥ १४ ॥

इतरदेवतोपासनाविधायकानि यानि दर्शनानि शास्त्राणि तेषां निन्दा न कर्तव्येत्यर्थः। तन्निन्दने तदधिकारिणां संशयोत्पत्त्या स्वावलम्बितदर्शनेष्वनाश्वासः। अस्मिन् शास्त्रे अनधिकारात् उभयभ्रष्टः छिन्नाभ्रमिव नश्येत्। इममेवार्थं श्रीकृष्णोऽप्याह——

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ॥ इति ॥

" लोकान्न निन्द्यात् " इतिश्रुतिरपि ॥

ननु परेषां बुद्धिभ्रंशजनितप्रत्यवायाभावोऽस्य फलमिति सिद्धम्। अयं पुरुषार्थः। कथम् उपासकधर्माणां क्रतुसाद्गुण्यजनकानां मध्ये पाठइति चेत्—उच्यते। अयमपि उपासनाजन्यसर्वात्मभावे उपयुज्यते। कथम्? इति चेत् इत्थं—यदि छिन्नाभ्रवत् परेषां नाशे स्वस्योपेक्षा तदैव निन्दायां प्रवृत्तिः। तथा च परनाशे उपेक्षायां आत्मवत् सर्वभूतदर्शनं नागतं इति सर्वात्मतायाः असिद्ध्या उपासनाजन्मफलासिद्धिः। प्रयाजादिषु क्रत्वर्थत्वम् इदमेव क्रतुसाध्यापूर्वसाधकत्वम्। प्रकृते उक्तरीत्या क्रत्वर्थत्वं सिद्धमिति न कोऽपि दोषः ॥ १४ ॥

### कस्याप्यगणनम्

तृतीयं धर्ममाह—

## अगणनं कस्यापि ॥ १५ ॥

स्वशास्त्रविरुद्धं यदि गीर्वाणगुरुर्वदेत्तर्हि स गुरुरिति गणनं न कर्तव्यम्। अतएव श्रुतिरपि—" न गणयेत् कमपि " इति ॥ १५ ॥

### सच्छिष्ये रहस्यकथनम्

चतुर्थमाह——

## सच्छिष्ये रहस्यकथनम् ॥ १६ ॥

कर्तव्यमिति शेषः। परिसंख्याविधिरयम्। " आत्मरहस्यं न वदेत् " इति निषेधस्यापवादोयं, न तु गुप्त्याऽर्चनं इत्यस्यापवादः, तथा सति शिष्यातिरिक्तेषु सामयिकेषु पूजाप्राकट्यानापत्तेः। अतः इदमात्मरहस्यं स्वसिद्धान्तरूपं सामायिकेषु शिष्यभिन्नेषु न कथयेत्। सच्छिष्ये कथयेदित्यर्थः। शिष्ये सत्त्वं प्रतिपादितं तन्त्रराजे——

सुन्दरः सुमुखः स्वच्छःश्रद्धावान् सुस्थिराशयः ।
अलुब्धः स्थिरगात्रश्च प्रेक्ष्यकारी जितेन्द्रियः ॥
आस्तिकोदृढभक्तिश्च गुरौ मन्त्रेऽथ दैवते ।
एवंविधोभवेच्छिष्यः इतरोदुःखकृद्गुरोः ॥ इति ॥

आत्मपुराणेऽपि--

ब्रह्मविद्याऽतिसंखिन्ना ब्रह्मिष्ठं ब्राह्मणं ययौ ।
गोपाय मां सदैव त्वं कुलजामिव योषितम् ॥

इत्यारभ्य--

एवमाद्या येषु दोषास्तेभ्योवर्जय मां सदा ।
एवं हि कुर्वतोनित्यं कामधेनुरिवास्मि ते ॥ इति ॥

असत्त्वलक्षणानि शिष्यदोषाः कुलार्णवात् विस्तरेण ज्ञेयाः[1] ॥ १६ ॥

### सदा विद्याऽनुसंधानम्

पञ्चमं धर्ममाह--

## सदा विद्याऽनुसंहतिः ॥ १७ ॥

सदा सर्वकालं पूजादिविहितनित्यकर्मानुष्ठानकालव्यतिरिक्ते सर्वदेत्यर्थः । विद्यायाः स्वोपास्यदेवतावाचकमन्त्रस्य अनुसंहतिः तत्प्रतिपादितार्थस्य अनुसंधानं, कर्तव्यमिति शेषः ।

यद्वा--सदा अनुसंहतिः मनसा जपः कार्यः इत्यर्थः । न च आसनादिनियमरहितस्य जपोयुक्तः इति शङ्कनीयम्, मानसे कस्यापि नियमस्याभावात । तदुक्तं परमानन्दतन्त्रे--

मानसेऽनन्तगुणितं नियमस्तत्र नैव तु ।
गच्छन् शयानआसीनोभुक्तोवा यत्र कुत्रचित् ।
अस्नातश्चापवित्रश्च न दोषस्तत्रविद्यते ॥

बृहद्वामकेश्वरतन्त्रेऽपि--

सर्वकालं जपेद्विद्यां मनसा यस्तु केवलम् ।
नियतोवाऽप्यनियतोऽप्यथ कुर्वंश्च नित्यकम् ।
तथाऽपि तस्य शुद्धस्य तरसा संप्रसीदति ॥ इति ॥

---

१, अनर्हशिष्यलक्षणज्ञानाय-द्वि० परिशिष्टे ६ वि, द्रष्टव्यः—

यदि सदापदस्य संकोचोन स्यात्तर्हि नित्यकर्मानुष्ठानलोपापत्तिः । अतः “ सर्वे ह्यर्योजनं लिप्सन्ति ” इत्यत्रेव संकोचः आवश्यकः ॥ १७ ॥

**सततं शिवतासमावेशः**

षष्ठं धर्ममाह—

**सततं शिवतासमावेशः ॥ १८ ॥**

सततम् अस्याप्यर्थः पूर्वसूत्रस्थसदाशब्दवत् । शिवतायाः समावेशः आविर्भावः, कर्तव्य इति शेषः । नित्यकर्मानुष्ठानव्यतिरिक्तकाले शिवोऽहमस्मीति भावयेत् इति तात्पर्यम् ॥

वस्तुतस्तु--पूर्वधर्मेण सहायं विकल्प्यते, अन्यथा उभयोर्भावनयोः युगपत्संपादनासंभवात् । पूजाऽऽदिव्यतिरिक्तकाले अन्यतरस्यानुष्ठानमितिभावः[1] ॥

यद्वा--पूर्वधर्मोमन्दाधिकारिणः अयं मुख्याधिकारिणः ॥ १८ ॥

**कामादीनां वर्जनम्**

सप्तममाह--

**कामक्रोधलोभमोहमदमात्सर्याविहितहिंसास्तेय-[2]लोकविद्विष्टवर्जनम् ॥ १९ ॥**

कामः वैषयिकी इच्छा इदं मे भूयात् इत्याकारिका । क्रोधः तमसउद्रेकेण जनितोऽसौ अन्तःकरणधर्मः । लोभः, द्रव्यादिनिष्ठस्वत्वत्यागप्रतिबन्धकोऽत्यन्तमनुरागविशेषः । मोहः, कार्याकार्याविचारणम् । मदः, गर्वः । मात्सर्यं, द्वेषजनितोगुणिनि दोषारोपः । अविहितहिंसा, रागेण भक्षणार्थं पश्वादिवधः । स्तेयं, परानुमत्या परद्रव्यहरणम् । लोकविद्विष्टं, मातृबुद्ध्याऽपि एकान्ते परस्त्रीसंलापादि । एतेषां वर्जनं त्यागः, कर्तव्य इति शेषः ॥ १९ ॥

**एकगुरूपास्तिः**

अष्टमं धर्ममाह--

**[3]एकगुरूपास्तिरसंशयः ॥ २० ॥**

---

१. अर्थादन्तःस्थमात्मानं पूजनाय मूर्त्यादौ बहिरपि संभाव्य संपूज्यानन्तरं सएवाहं देवः आत्मा, वेति, वेदान्तसिद्धान्ताविरुद्धभावनाविर्भावोस्तु भक्तानामिति तात्पर्यम्

२. लोकविरुद्धस्त्रीविद्वि--अ

३. एतत्सूत्रभाष्यसमाप्त्यवधि-एकगुरूकरणाद्युपदेशोऽस्ति-

न विद्यते संशयोयत्रेति विग्रहेण असंशयः इत्येकगुरूपास्तिविशेषणम् । भिन्नलिङ्गत्वमार्षम् ॥

अयंभावः——अनेकगुरूपास्तौ पूर्वगुरूक्तविरूद्धं यदि वदेत् तर्हि संशयोभवेदेव।

एकगुरूपास्तौ न संशयोभवेत् । अतः एकगुरूपास्तिः कार्येति भावः ' गुरूपास्तेः " संप्रदायविश्वासाभ्याम् " इति पूर्वसूत्रेणैव प्राप्तौ पुनर्विधानम् एकं गुरूमाश्रित्य न गुर्वन्तरमाश्रयेत् इति इतरगुर्वाश्रयनिवृत्तिफलकेयं परिसंख्या ॥

एकगुरूपास्तिविध्यर्थविचारः

ननु——न परिसंख्याऽऽश्रयणं युक्तं, [1]दोषत्रयापत्तेः । किं तु उपास्यगुरु-मनूद्यैकत्वमात्रं विधीयते, इतरनिवृत्तिस्तु अङ्गलोपभिया, एकत्वस्य अङ्गत्वेन, इतर-गुरूपास्तौ तल्लोपापत्तेः । न च गुरूद्वयाद्याश्रयणेऽपि प्रत्येकं गुरूषु प्रत्येकमेकत्वमस्तीति कथमङ्गलोपः इति वाच्यम्; एकत्वं हि न संख्यारूपं विधीयते, तस्य वस्तुमात्रसाधारण्येन अव्यावर्तकत्वात्, किंतु सजातीयद्वितीयरहितत्वं, गुर्वन्तराश्रयणे तल्लोपस्त्वनिवार्यः । अतोन गुर्वन्तराश्रयणमिति एकत्वविधिरेव श्रेष्ठः इति चेत्—

आस्तां वा एकत्वविधिः । इममेवार्थं श्रीशिवः तन्त्रेषु भङ्ग्यन्तरेण प्रकटितवान् । रुद्रयामळे——

न देयं परशिष्येभ्योदेयं शिष्येभ्यएव च ॥ इति ॥

कुलार्णवे—

लब्ध्वा कुलगुरुं सम्यक् न गुर्वन्तरमाश्रयेत् ॥

योगिनीतन्त्रेऽपि—

न देयं परशिष्येभ्योनास्तिकाय कुलेश्वरि ॥ इति ॥

उपनिषद्यपि —" गुरुरेकः " इति । क्वचिच्छिष्यधर्मे इममेवार्थं प्राह । क्वचिद्गुरुधर्मे ' परशिष्याय न वदेत् ' इति भङ्ग्यन्तरेण । द्वयोः एकगुरूपास्तिरूपफले एव पर्यवसानं भवति । अयमभिप्रायः एषां वचनानां प्रतिभाति—पूर्वोक्तरुद्रयामळकुलार्णवयोगिनीतन्त्रेषु स्वसंशयच्छेत्तरि गुरौ सतीत्यध्याहार्यम् । अन्यथा——

---

१. अत्रोक्तपरिसंख्यायामुक्तं लौगाक्षिभास्करप्रणीतार्थसंग्रहे ९५ पत्रे परिसङ्ख्याविवेचनायांयथा, श्रुतार्थस्यपरित्यागादश्रुतार्थप्रकल्पनात् ॥ प्राप्तस्यबाधादित्येवं परिसङ्ख्या त्रिदूषणा । अत्रैतच्छ्लोकार्थोपिसुखावगम्यः—

मधुलुब्धोयथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्योगुरोर्गुर्वन्तरं व्रजेत् ॥ इति ॥

तन्त्रान्तरे, शक्तिरहस्येऽपि—"कौलिके गुरवोऽनन्ताः" इति वचनानां, निरवकाशताऽऽपत्तेः। एतेन पूर्वगुरुः असर्वज्ञः स्वसंशयच्छेदनेऽसमर्थः, यद्वा समर्थः स्वस्य संशयमच्छित्त्वा मृतः, तादृशशिष्यः "मधुलुब्धः" इति वचनानुसारेण गुर्वन्तरमाश्रयेत् । तत्राप्यल्पज्ञेऽपि गुरौ जीवति तदनुमत्या गृह्णीयादन्योक्तम् । तदप्युक्तं कुलार्णवे—

मन्त्रागमादि चान्यत्र श्रुतं नाथे निवेदयेत् ॥
गुर्वाज्ञया तद्गृह्णीयात् तदनिष्टं विवर्जयेत् ॥ इति ॥

गुरावल्पतातारतम्यं निर्णेतुं स्वयमसमर्थश्चेत् यं परिगृह्णाति तन्मार्गेत्यागोन कार्यः। तादृशनिर्णयसमर्थश्चेत् तस्मिन् सोपपत्तिकमर्थं रहसि संबोध्य तदनुमत्या यथाशास्त्रमर्थं गृह्णीयात् । यदि जीवन्नपि गुरुः असूयाऽऽदिना नानुजानाति तमुलंघ्य शास्त्रीयं सप्रमाणं मार्गमनुसरेत् । तदुक्तं स्पष्टं त्रिपुरारहस्ये—

गुरूक्तं शास्त्रसंशुद्धं समालोच्य धिया बुधः ।
कुर्वीतोपासनं सम्यगन्यथा परिहीयते ॥ इति ॥

एतेऽर्थाः सर्वेऽपि "मधुलुब्धः" इति वचनेन ज्ञापिताः । "एकगुरूपास्तिः" इत्यस्य सूत्रस्य अस्मिन्नेवार्थे तात्पर्यमुक्तयुक्तिगणवशाद्वर्णनीयम् ॥

ये च श्रीभास्कररायाणाम् "अन्यायोन्यायः" इति कौलोपनिषच्छ्रुतिभाष्ये गुरुसंप्रदायः असाधुश्चेदपि ग्राह्यः इति लेखनाभिप्रायं वर्णयन्ति, ते तदभिप्रायतत्त्वं न विदुः। कोऽयमभिप्रायः इति चेत्—उच्यते । कौलिकाचारमध्ये स्वसिद्धान्तविरुद्धं यद्याचरेत् स्वगुरुः, अन्यश्च कौलिकोदयापरवशः सन् बोधयेच्चेत् गुरौ निवेद्य जीवति गृह्णीयात् । यदि वावदूकोऽन्यः कौलमार्गं दूषयितुं प्रवृत्तः स्यात् स्वयं तत्खण्डने अपटुरपि तत्र प्रामाण्यबुद्धिं न त्यजेत् । अतएव कौलिकाचारं [ न ? ] दूषयेत् इत्येव लिखितम् । एवं गुरौ स्वस्य किंचिज्ज्ञत्वशंशयोनास्ति, किंतु बहुतन्त्रवेत्तृत्वं निश्चितं चिरवासेन । स च न जीवति । तदाचारविरुद्धं यदि तन्त्रे क्वचिदुपलब्धं वचनं, तदा आचारस्य दुर्बलत्वात्, तन्मूलभूत-प्रमाणोपलब्धिपर्यन्तं तस्याननुष्ठानरूपमप्रामाण्यं श्रौतस्मार्तानुष्ठाने पूर्वमीमांसानुसारेण । कौलिके तु पूर्वोक्तनिश्चयदशायां शास्त्रविरुद्धोऽप्यनुष्ठेय एवेति विशेषः । न तु गुरौ मन्दमतित्वनिश्चये । तथा ईदृशोऽभिप्रायः तत्रैव 'सद्गुरुसंप्रदायैकलभ्यत्वेन' इत्यत्र गुरौ

सत्त्वविशेषणेन ज्ञापितः । इदं तत्त्वं—गुरौ असर्वज्ञत्वानुमापकोहेतुः प्रभूतशास्त्रविरुद्धाचारवत्त्वं, सर्वज्ञत्वानुमापकश्च सर्वांशेन शास्त्रानुमतत्वे सति तद्विरुद्धकाचित्कत्वम् ॥

ननु " सुन्दरः सुमुखः स्वच्छः [1]सुलक्षो बहुतन्त्रवित् " इति कादिमते गुरुलक्षणस्योक्तत्वात् बहुशः तन्त्रविरुद्धानुष्ठातारं कथं गुरुं शिष्यः कुर्यात् । न हि सेवार्थं वत्सरोषितस्य विदुषः अज्ञानं संभवति । कथमीदृशमुदाहरणं संभवद्युक्तिकमिति चेत्—न, पूर्वमज्ञतादशायां केवलश्रद्धोद्रेकेण दीक्षितस्य तादृशगुरुं स्वीकृतवतः पश्चादध्ययनादिसंपादित ज्ञानस्य पूर्वोक्तहेतुना अनुमानसंभवात् । तादृशेन पूर्वाचारः

त्याज्यएव । यद्युत्पथं दैवात् प्रतिपन्नः तदा सद्गुरोरपि संप्रदाय उत्पथप्रतिपत्त्युत्तरकालीनः त्याज्यएव, अशास्त्रीयत्वनिर्णयात् । इत्यलं पल्लवितेन ॥

अमृतानन्दनाथास्तु——योगिनीतन्त्रव्याख्याने " न देयं परशिष्येभ्यः " इत्यस्य ये विद्याऽन्तरेषु पारंपर्यक्रमेण अधिगताशेषरहस्याशेषपरमार्थाः संप्राप्तपूर्णाभिषेकाश्च ते परशिष्याः । तेभ्योन देयम् । कुलार्णववचनं चैतत्परम् । एतद्भिन्नेषु देयं, " मधुलुब्धोयथा भृङ्गः " इति वचनात् । ईदृशव्यवस्थायां मानं च पूर्णाभिषेककर्ता योगुरुः तस्यैव पादुकेत्याहुः ॥

तन्न । पूर्णाभिषेककर्तरि गुरुत्वस्यैव ज्ञापकमिदं वचनम् । तर्हि " तस्यैव पादुका " इति भागोव्यर्थः । यदि गुरुत्वं गुरुपादुकामन्त्रे तन्नाम च विधीयते तदा योदीक्षाकर्ता स गुरुः इत्येकं, तस्य नाम पादुकायां योज्यम्—इत्यपरं वाक्यम् । तथा च वाक्यभेदः स इत्यस्य अध्याहारः गुरुत्वमात्रविधौ वचनान्तरेण गुरुनामपादुकामन्त्रे योज्यमित्यनेनैव सिद्धौ शेषवैय्यर्थ्यं दुर्वारं च । तस्मात् " मधुलुब्धः " इति वचनेन नानागुरुषु सिद्धेषु पादुकामन्त्रे सर्वेषां नाम्नां पक्षे प्राप्तौ नियामकमिदम् । तथा सति न परसमीहितासिद्धिः । प्रत्युत अनेन वचनेन नानागुरुप्राप्तिरेव ज्ञाप्यते । तस्मात् अस्मदुक्ता सरणिरेव साधीयसी ॥

दृश्यते चाधुनिकानां शास्त्रविरुद्धानामाचाराणां प्रामाण्यं पूर्वमीमांसाविदामपि, यथा आन्ध्राणां मातुलकन्यापरिणयः । तथा द्राविडसुवासिनीषु कञ्चुकधारणाभावः,

सकञ्चुकयतिं दृष्ट्वा अकञ्चुकसुवासिनीम् ।
सकेशां विधवां दृष्ट्वा सचेलस्नानमाचरेत् ॥

इत्याङ्गिरसवचनविरुद्धः । अतोन किंचिद्बाधकम् ॥

---

१. सुलभः—इति क्वचित्

यदि केवलं गुरौ विश्वसेच्चेत् तर्हि स तिष्ठन्नेव मूत्रपुरीषोत्सर्गं कुर्यात् चेत् तदा स्वस्यापि करणापत्तिः। यदि च बहुतन्त्रविदुषि क्वचिद्वचनं तद्विरुद्धं दृष्ट्वा तदाचारे अप्रामाण्यग्रहः स किं तावदंशे स्वीक्रियते, उत सर्वांशे; । नाद्यः, लोके क्वचिच्चैत्रादावज्ञातप्रामाण्यग्रहाचारे कदाचिदप्रामाण्यग्रहे सर्वत्र अप्रामाण्यशङ्कया न विश्वसन्तीति दृष्टं लोके। तद्वदत्रापि सकृद्व्यभिचारे सर्वत्र शङ्कया अननुष्ठानापत्तिः। सा च शङ्का सर्वत्र मूलदर्शनमन्तरा नापैति। सर्वत्र मूलशोधनार्थे उद्युक्तश्चेत् तत्र संप्रदायानुसरणविधिः व्यर्थः स्यात्। न च यत्र पक्षद्वयरूपोविकल्पः तत्र स्वगुरुसंप्रदायाचरणविधिः सार्थकः स्यात् इति वाच्यम्; एवमधिकारिभेदेन यदि पक्षद्वयं व्यवस्थितं तदा तन्त्रशास्त्रे विकल्पविषय वं सर्वथा न स्यात्। यथा विशेषार्घ्यपात्राधारे त्रिपदं चतुष्पदम् अपदं वेति पक्षास्तत्र गुरुणा त्रिपदमेवानुष्ठितं, तथैव शिष्येणाप्यनुष्ठितम्। कदाचित् त्रिपदं गतं—चतुष्पदंलब्धं, तेन अनुष्ठानं न स्यात्, गुरुणा अननुष्ठितत्वात्। विकल्पस्य उच्छेद एव न स्यात्। एकपुरुषकर्तृके कर्मणि प्रयोगभेदेन पक्षद्वयसमावेश एव हि विकल्पः॥

किंच—गुरुवाक्ये विश्वासविधिर्व्यर्थः। शङ्कानिवृत्त्यर्थे मूलान्वेषणार्थमुद्युक्तस्य कथंकिमिति गुरुवाक्ये, अतिविश्वासः। तस्मात् गुरोर्योग्यतामनुमाय[1] च सद्गुरुवाक्यं विश्वसेत्॥

उमाऽऽनन्दनाथास्तु "एकगुरूपास्तिः" इतिवाक्यं समाप्य "असंशयस्सर्वत्र" इति योजयित्वा गुरुवाक्ये शास्त्रादौ सर्वत्र असंशयः इति व्याचक्रुः। तन्न; "संप्रदायविश्वासाभ्यां सर्वसिद्धिः", "विश्वासभूयिष्ठं प्रामाण्यम्", इत्याभ्यामेव अस्यार्थस्य प्राप्तत्वेन पुनरुक्त्यापत्तेः॥ २०॥

## सर्वत्र निष्परिग्रहता

नवमं धर्ममाह—

## सर्वत्र निष्परिग्रहता॥ २१॥

सर्वत्र मपञ्चकादिषु निष्परिग्रहता निर्गतः परिग्रहः इच्छा यस्य सः निष्परिग्रहः तस्य भावः तत्ता "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः। अत्रादानस्य परिग्रहस्य मूलम्—इच्छैव। एतादृशकोशानुसारेण परिग्रहशब्दः इच्छावाचकः। मपञ्चकं मे भूयात् इतीच्छया न स्वीकार्यमित्यर्थः। अयमेवार्थोभागवते स्पष्टं प्रतिपादितः—

---

१. अत्रोक्तगुरुः कीदृशश्चिकीर्षितस्तज्ज्ञानार्थं द्विपरिशिष्टे ६ वि. दृश्यः

यद् घ्राणभक्षोविहितस्सुरायास्तथा पशोरालभनं न हिंसा ।
एवं व्यवायः प्रजया न रत्यै इमं विशुद्धं नु विदुः स्वधर्मम् ॥
येत्वनेवंविदः पुंसस्तब्धाः सदभिमानिनः ।
पशून् द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान् ॥

इति घ्राणभक्षः शास्त्रेण कथितं कर्तव्यमिति भक्षणम्, आलभनं देवतोद्देशेन त्यागबुद्ध्या पश्वादिहननम् ॥

यद्वा—सर्वत्र वस्तुमात्रे निष्परिग्रहता स्वीयबुद्धित्यागः, संपादनीयः । सर्वत्र ममता त्याज्येति यावत् ॥

यच्च नित्योत्सवनिबन्धे स्वभोगबुद्ध्या धनं न संपादनीयमित्यर्थकथनं, तच्चतुर्थाध्याये द्रव्यार्जनं क्रत्वर्थमिति पूर्वपक्षीकृत्य द्रव्यार्जनं केवलपुरुषार्थं इति जैमिनिसिद्धान्तविरुद्धम् ॥२१॥

### फलत्यागपूर्वककर्म

दशमं धर्ममाह—

## फलं त्यक्त्वा कर्मकरणम् ॥ २२ ॥

फलं पूर्वोक्तं कृत्रिमं तत्साधनं च धर्मार्थकामा इति यावत् । फलविषयिणी इच्छा फलपदस्यार्थः । तं त्यक्त्वा कर्मणः विहितस्य करणं भवतीति शेषः । काम्यं कर्म न कर्तव्यमित्यर्थः । काम्यं कर्म न कर्तव्यम् इति वक्तव्ये फलं त्यक्त्वा कर्तव्यमिति कथनात् काम्यानामपि कर्मणामीश्वरार्पणबुद्ध्या अनुष्ठानं कर्तव्यमिति ज्ञायते ॥

ननु भगवद्गीतायां

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तोजिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥

इति सकामोपासना भगवता प्रतिपादिता, तद्विरोध इति चेत्—न "चतुर्विधा भजन्ते मां" इत्यनेन लोकस्वभावोदर्शितः । काम्यं कर्म न कर्तव्यम्—इति जगौ । अतएव

यश्च कर्मफलत्यागी स त्यागी त्यभिधीयते ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥

इति कामरहितकर्मणः स्तुतिः ॥ २२ ॥

नित्यकर्मालोपः

एकादशं धर्ममाह—

**अनित्यकर्मलोपः ॥ २३ ॥**

नित्यं च तत्कर्म च नित्यकर्म, स्नानसन्ध्यापूजाऽऽदि, तस्य लोपः अननुष्ठानं नित्यकर्मलोपः, न विद्यते नित्यकर्मलोपोयस्मिन्नुपासके सः अनित्यकर्मलोपः। भवेदिति शेषः। नित्यकर्म अवश्यं कर्तव्यमित्यर्थः। नित्यकर्म कर्तव्यमिति वक्तव्ये व्यतिरेकमुखेन कथनं त्यागे न केवलं क्रतुवैगुण्यं, प्रत्यवायोनिरयश्चेति ज्ञापयति ॥ २३ ॥

ननु नित्यकर्मसाधनीभूतमपञ्चकालाभे कथं कार्यमित्याशङ्कायामाह—

**मपञ्चकालाभेऽपि नित्यक्रमप्रत्यवमृष्टिः ॥ २४ ॥**

मपञ्चकालाभे मुख्यं नास्तीति न कर्मलोपः। किं तु प्रतिनिधिनाऽपि नित्यक्रमः नित्यपूजा तस्याः प्रत्यवमृष्टिः अनुष्ठानं कर्तव्यमिति शेषः ॥

ननु षष्ठाध्याये दर्शपूर्णमासे व्रीहीणामभावे कर्मलोपइति पूर्वपक्षं कृत्वा तेषां दृष्टपुरोडाशनिष्पत्तिफलकत्वेन नीवारैरपि तत्संभवात् नित्यकर्मणि व्रीहिनियमलोपेऽपि नित्यकर्मणः किंचिदङ्गलोपसहिष्णुत्वात् नित्यनैमित्तिके प्रतिनिधिनाऽपि कार्ये इति सिद्धान्तितम्। तादृशन्यायमूलकतया श्रौतस्मार्तकर्मसु प्रतिनिधिप्रचारोऽपि दृश्यते अत्रापि तादृशयुक्त्यैव प्रतिनिधिसिद्धौ वचनं व्यर्थमिति चेत्—

न। नित्यवन्न्यायेन नैमित्तिकेऽपि प्राप्तौ तत्र प्रतिनिधिना नैमित्तिकक्रमनिर्वृत्तिर्मा भवतु, एतदर्थकत्वात्। नचैवं सति अलाभे नित्यातिरिक्तं न कार्यमित्यायातम्। तथा सति श्रौतपरिसंख्यारूपत्वेन[1] स्वार्थत्यागः, परार्थकल्पना, प्राप्तबाधः, इति दोषत्रयापत्तिः इति वाच्यम्; तन्त्ररत्ने पार्थसारथिना अभ्युदयेष्ट्यधिकरणे "त्रेधा तण्डुलान् विभजेत्" इति वाक्यवैय्यर्थ्यभिया प्रत्युद्देशं वाक्यपरिसमाप्तिरूपोवाक्यभेदोऽङ्गीकृतः। किमु तादृशभीत्या दोषत्रयाङ्गीकारे। अतएव[2] अस्मत्परमगुरुभिः उत्तरचतुश्शतीसेतुबन्धे द्विशतोत्तरद्वितीयश्लोके नैमित्तिकप्रकरणे "चक्रपूजां विशेषेण योगिनीनां समाचरेत्" इति मूलस्थविशेषेणेतिपदस्य नित्यपूजामपेक्ष्य योगिनीवीराधिक्यभक्ष्यभोज्याद्याधिक्यादिनेति प्रथमं व्याख्याय, तत्रापरितोषेण

---

१. अत्रैवखण्डेऽनुगत२०सूत्रभाष्ये टिप्पण्यां कारिका द्रष्टव्या—

२. विज्ञायेतावतैतद्भाष्यकृतः श्रीपूज्यपादपं.भास्कररायपादाः परमगुरव—इति

"विशेषद्रव्येण वेत्यर्थः । तेन नित्यपूजायां विशेषद्रव्यालाभेऽपि प्रतिनिधिना निर्वाहः सूचितः इति नित्यपूजायामेव अभ्यनुज्ञा, नत्वन्यत्र" इति व्याख्याय अस्मिन्नर्थे साधकत्वेन इदमेव वाक्यं दर्शितम् ॥ २४ ॥

### सर्वत्र निर्भयता

द्वादशं गुणमाह--

**निर्भयता [1]सर्वत्र ॥ २५ ॥**

सर्वत्र सर्वतः मपञ्चकस्वीकारे कौलमार्गावलम्बने च नरकादिप्रतिपादकानि यानि शास्त्राणि तेभ्यः सर्वेभ्यः निर्गतं भयं यस्मात् सः निर्भयः तस्य भावः तत्ता, संपादनीयेति शेषः । तानि सर्वाणि शास्त्राणि रागिणं भीषयन्ति, कामं भीषयन्तु, अहन्तु न रागी, किंतु शास्त्रेण प्रवर्तितो न मे भीतिरिति निर्धारणेन निर्भयता संपादनीयेति भावः ॥ २५ ॥

### सर्वसारभूतोधर्मः स्वस्य शिवाग्नौ होमः

सकलसिद्धान्तसारभूतं धर्ममाह—

**सर्वं वेद्यं हव्यम् इन्द्रियाणि स्रुचः शक्तयोज्वालाः**
**स्वात्मा शिवः पावकः स्वयमेव होता[2] ॥ २६ ॥**

इति भावयेदिति शेषः । [3]अन्तःकरणवृत्तिभिरिति वेद्यमित्यस्यादौ पूरणीयम् । अन्तःकरणवृत्तिवेद्यं सर्वं हविष्ट्वेन भावयेत् । यथा अग्नौ प्रक्षिप्तं हविः तदाकारं भवति, एवं वृत्तिवेद्यानां सर्वेषां शिवरूपेऽग्नौ होमे सति शिवाकारसंपत्तेः तेषु हविष्ट्वेन भावनं युक्तम् ॥

तादृशहविषः आधारभूतहोमसाधनीभूतजुहुरेव स्रुक्पदेन गृह्यते, न ध्रुवाऽऽदयः, तेषां स्रुक्पदवाच्यत्वेऽपि होमसाधनत्वाभावेन होमभावनाप्रकरणे ध्रुवाऽऽदीनामयोग्यत्वात्[4] । न च स्रुचः एकत्वेन बहुवचनमनुपपन्नमिति वाच्यम्; इन्द्रियाणामनेकत्वेन तद्विशेषणस्य तत्समानवचनकत्वार्थं बहुवचनम् । न च आरोप्यारोपस्थले न समानवचनत्वनियमः, अत एव नैषधे--

---

१. सर्वतः–ब.
२. एतत्सूत्रादितान्त्रिकग्रन्थानां, श्रीब्रह्मभावनागौरवंद्वयमत्र–
३. एतत्सूत्रस्थवेद्यादिपदानामर्थोऽधस्तनभाष्ये सुस्फुटोऽस्ति–
४. इतोऽग्रतन–अप्रकृतविचारेण–इत्यन्तभाष्यग्रन्थेन–विशेषणीभूतैकपदनिष्ठैकवचनबहुवचनयोः स्वल्पः–शास्त्रार्थोऽस्ति–

अत्रैवकारेण—कर्मान्तरे स्वस्यानुष्ठानासामर्थ्ये पुत्रप्रियादीन् कर्तृप्रतिनिधित्वेन योजयन्ति तेन च तत्कर्मजं फलं भवतीति शास्त्रसिद्धम्। अस्मिन् यज्ञे प्रतिनिधिना अनुष्ठिते कर्मजन्यफलं स्वस्य न भवतीति सूचितम् ॥ २६ ॥

### भावनाफलम् आत्मलाभः

एवमनुष्ठितभावनायाः फलमाह--

**निर्विषयचिद्विमृष्टिः फलम् ॥ २७ ॥**

निर्विषयायाः निर्विकल्परूपायाः चितः विमृष्टिः फलम्। [१]पूर्वोक्तभावनाया इति शेषः ॥ २७ ॥

ननु किमीदृशफललाभेनेत्यतआह--

**आत्मलाभान्न परं विद्यते ॥ २८ ॥**

आत्मलाभात् स्वरूपलाभात् परं श्रेष्ठं, फलम्--इति पूर्वसूत्रस्थम् अनुषज्यते, न विद्यते नास्तीत्यर्थः। " पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः " इति " तमेवं विद्वानमृतइह भवति " इति च श्रुतिः--इममर्थं प्रतिपादयति। मोक्षः परमपुरुषार्थः इत्यत्र न कोऽपि विवादं करोति। अतस्तादृशभावनया परमपुरुषार्थलाभः इतिभावः। [२]पूर्वं " स्वविमर्शः पुरुषार्थः " इत्यनेन पुरुषार्थस्वरूपं प्रतिपादितं, अत्र स्तुतिरिति न पौनरुक्त्यम् ॥

एतावत्पर्यन्तं[३] पञ्चाम्नायसिद्धान्तरूपश्रीपरशुरामोक्तयोविचार्य विख्याताः। केशवशर्मा कश्चित् तदभिप्रायज्ञानासमर्थः ता दूषयामि इति केवलेर्ष्यया युक्तिशून्यान् प्रलापानभाणीत् सुधियां तद्दर्शनेनैव युक्तिरहितत्वज्ञानं भविष्यति। मन्दधियां शङ्कानिवृत्त्यर्थं मयैव तद्युक्तिषु केवलप्रलापरूपत्वं दर्शितं मत्कृतसिद्धान्तशिरोमणौ। ग्रन्थविस्तरभयान्नेह लिख्यते। ये तद्बुभुत्सवः ते ततएव जानन्तु ॥ २८ ॥

### सिद्धान्तोपसंहारः

" अत्रायं सिद्धान्तः " इत्यारभ्य प्रकान्तमर्थम् उपसंहरति--

**सैषा शास्त्रशैली ॥ २९ ॥**

सैषा पूर्वोक्ता शास्त्रशैली, शास्तीति शास्त्रं पञ्चाम्नायरूपं तस्य शैली रीतिः भवतीति शेषः ॥ २९ ॥

---

१–पाश्चात्य–३०–पत्रस्थ १३ सूत्रादेतत् २७–सूत्रान्तोक्तसद्भावनायाः इत्यर्थः

२–पूर्वनाम–१–खण्डे २६–पत्रे ६ सूत्रे–इत्यर्थः–

३–एतत्पञ्चाम्नायानां नामार्थमाहात्म्यादिकृते द्वि.–प–४ वि.–द्रष्टव्यः

एषा विद्या अतिगुप्ता

एतादृशं शास्त्रं श्रोतृप्रवृत्तये प्रशंसति--

**वेश्या इव प्रकटावेदादिविद्याः**
**सर्वेषु दर्शनेषु गुप्तेयं विद्या ॥ ३० ॥**

वेश्याइव प्रकटाः सुलभाः वेदादिविद्याः । आदिना स्मृत्यादिः । वेश्योपभोगोद्रव्यादिव्ययेन यथा सुलभः एवं वेदादिविद्यालाभः द्रव्यादिदानेन सुलभः इत्यर्थः । अध्ययनस्य लोभमूलता शास्त्रेणैव प्रतिपादिता "षण्णां तु कर्मणां मध्ये त्रीणि कर्माणि जीविका" इति । अस्याः मोक्षसाधनीभूतब्रह्मविद्यायास्तु न कोटिकनकव्ययेनापि लाभः, किंतु गुरुकृपैकलभ्यत्वम् ॥

ननु अधिकद्रव्यव्यये गुरुः कृपां किमिति न कुर्यादिति चेत्—न कुर्यादेव । येन गुरुणा ब्रह्मविद्या प्राप्ता तस्य कोटिसुवर्णं तृणादपि तुच्छतरम् । तस्मिन् लोभः कथं भवेत् ॥

ननु लोभेन प्रवृत्तिमान् भवतु, तथाऽपि परेच्छया विद्यादाने प्रवृत्तौ स्वस्य हान्यभावात् प्रवर्तताम्, तथा च पूर्वविद्या द्रव्यवतैव लभ्या, इयं तु निर्धनेनापि लब्धुं शक्येति प्रकटतरेति चेत्—न । विद्वान् परेच्छया प्रवर्तमानः स्वप्रवर्तितवस्तुनि कार्यसिद्धिं दृष्ट्वैव प्रवर्तेत, न विफले । प्रकृते इयं ब्रह्मविद्या मलिनान्तःकरणेषु प्रवर्तिता न केवलं विफला, प्रत्युत गुरोरपि विद्यां नाशयति । उदाहृता एतद्विषये यास्केन श्रुतिः—

विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मां ब्रूयावीर्यवती तथा स्याम् ।

इति । अस्यार्थः सुस्पष्टः ॥

ब्रह्मविद्याऽतिसंखिन्ना ब्रह्मिष्ठं ब्राह्मणं ययौ ।
गोपाय मां सदैव त्वं कुलजामिव योषितम् ।
शेवधिस्त्वक्षयस्तेऽहम् इह लोके परत्र च ।

इत्यारभ्य—

एवमाद्यायेषुदोषास्तेभ्योवर्जय मां सदा ।
एवं हि कुर्वतोनित्यं कामधेनुरिवास्मि ते ।
वन्ध्याऽन्यथा भविष्यामि लतेव फलवर्जिता ॥

इत्येवमादिवचनैः गुरोरेव अपात्रे विद्यादाने स्वविद्यानाशः श्रूयते । स कथं अपात्रे केवलपरेच्छया विद्यामुपदिशेत् । तादृशोपदेशपात्रं दुर्लभम् ॥

अतः सर्वदर्शनेषु मध्ये—इति निर्धारणे सप्तमी—इयम् उक्ता विद्या गुप्ता दुर्लभेत्यर्थः।

इदानींतनगुरवस्तु ब्रह्मविद्यायाः वणिग्वद्विक्रेतारः। तत्र न गुरुत्वं, न वा शिष्यस्य सन्तापहानिः। प्रत्युत सोऽपि द्रव्यसेवनरागप्रवृत्तः पतत्येव। इत्थं च द्वावपि पतनसाधनमेव कुरुतः, न मोक्षसाधनम्। तदुक्तं [1]कुलार्णवे

गुरवोबहवः सन्ति शिष्यवित्तापहारकाः।
[2]दुर्लभोऽयं गुरुर्देवि शिष्यसन्तापहारकः॥

इत्यलं भूयसा॥ ३०॥

### दीक्षाविधिः

एतावत्पर्यन्तं [3]सिद्धान्तमनूद्य[4] उपासकेन प्रथमं कर्तव्यां क्रियामाह—

**तत्र सर्वथा मतिमान् दीक्षेत॥ ३१॥**

सप्तमी षष्ठ्यर्थे, प्रकृत्यर्थः श्रीविद्योपास्तिः, षष्ठ्यर्थः संबंधः तदव्यवहितपूर्ववृत्तित्वं, तस्य दीक्षापदार्थे आश्रयतया अन्वयः, तस्य करणत्वसंबन्धेन भावनायामन्वयः, तथा च श्रीविद्योपासनाऽव्यवहितपूर्ववृत्तिदीक्षया इष्टं भावयेत् इति विशिष्टबोधः।अतएवोत्पत्तिविधिः। सर्वथा अवश्यं मतिमान् पूर्वोक्तभूमिका[5]मारूढः। एतत्पदस्वारस्यादेव अयमधिकारविधिरपि। तादृशभूमिकाम्[6] आरूढस्यैव अधिकारोनान्यस्य इति सिद्धम्॥

ननु एकस्मिन्नेव विधौ उत्पत्तिविधित्वं अधिकारविधित्वम् उभयं कथमिति चेत्—न, "चित्रया यजेत पशुकामः" इत्यादौ तथा दृष्टत्वात्। न च उपासनायामेव तादृशभूमिका[7]ऽऽरूढस्याधिकारइति पूर्वं व्यवस्थितम्। न हि दीक्षा उपासना, कथमत्रापि तादृशाधिकारापेक्षा। यच्च उपासनायां दीक्षायाअङ्गत्वेन यः प्रधाने अधिक्रियते सोऽङ्ग[8] इति न्यायप्राप्तार्थस्य अनुवादएव मतिमान् इत्यनेन कृतइति समाधानम्, तन्न मनोरमम्, अनुवादस्य फलाभावेन वैय्यर्थ्यापत्तेः, दीक्षायाः स्वतन्त्रफलवत्त्वेन अनङ्गत्वाच्चेति। अनेनैव

---

१ प्रबोधचन्द्रोदये—ब, ब १.
२ गुरुस्तु विरलोलोके—ब, ब १.
३ नाम ३० सूत्रान्तम्
४ तत्तदेवतोपासनामन्त्रादिसिद्धान्तमित्यर्थः
५ मारुरुक्षुः—अ.
६ आरुरुक्षोरेव—अ.
७ रुरुक्षोरधि—अ.
८. सोङ्गम्—इति साधीयान्पाठः

तादृशभूमिकाऽऽरूढस्य[1] दीक्षाऽधिकारोविधीयते । उपासनायां दीक्षितस्यैव अधिकारः इत्यग्रे वक्ष्यति । तथा सति उपासनायां पूर्वोक्तभूमिकाऽऽरूढत्वमार्थिकम्[2] ॥

### दीक्षास्वरूपतत्फलनिरूपणम्

ननु दीक्षात्वं किम् ? न तावदुपास्तियोग्यताजनकक्रियात्वम्, उपास्तियोग्यताजनकत्वस्य सत्त्वे प्रमाणाभावात् । न तावत् प्रत्यक्षम् अलौकिके संभवति । नाप्यनुमानं,लिङ्गाभावात् । नापि " दर्शपूर्णमासाभ्यां स्वर्गकामोयजेत " इतिवच्छ्रुतिरस्ति यतस्तन्निरूपितंकारणत्वं स्यात् । न च " विनोपनयनं यद्वद्द्विजानां सर्वकर्मसु । न योग्यता तथाऽत्रापि विना दीक्षां भृगूद्वह ॥ " इति त्रिपुरारहस्ये व्यतिरेकव्याप्तेः दण्डाभावे घटाभावः इतिवत् प्रतिपादनात् व्यतिरेकव्याप्तिमूलः कार्यकारणभावः सिध्यति इति वाच्यम्; दीक्षितउपासीत इत्युपासनाऽधिकारिस्तावकत्वात् ।

तर्हि दीक्षायाः फलं किमिति चेत्—उच्यते। अनन्तकोटिजन्मसंचितं यत् पापरूपं मलं तन्नाशः । तदुक्तं[3]निशाटनाख्यागमव्याख्याने तन्त्रालोके—

दीक्षया गळितेऽप्यन्तरज्ञाने पौरुषात्मनि ।
धीगतस्यानिवृत्तत्वाद्विकल्पोऽपि हि संभवेत् ॥
देहान्तएव मोक्षः स्यात् पौरुषाज्ञानहानितः ।
बौद्धाज्ञाननिवृत्तौ तु विकल्पोन्मूलनात् ध्रुवम् ॥
तदैव मोक्षइत्युक्तं धात्रा श्रीमन्निशाटने ॥ इति ॥

अस्यार्थः—पौरुषं बौद्धं चेति ज्ञानं द्विविधम् । तत्र पौरुषं ज्ञानं स्वस्वरूपात्मकम् । बौद्धं च यन्महावाक्यजन्यं चरमवृत्तिरूपं तत्त्वज्ञानमित्युच्यते । एतदावरणरूपमज्ञानमपि द्विविधम् । तत्र पौरुषम् पुरुषनिष्ठपातकम् । बौद्धं भेदबुद्धिः । तत्र दीक्षया पौरुषाज्ञाननाशेऽपि बौद्धमलस्य शास्त्रज्ञानेनैव नाश्यत्वात् दीक्षाऽनन्तरमागमसिद्धान्तज्ञानसंपादने तदैव मोक्षः । यदि शास्त्रज्ञानं न संपादितं, केवलदीक्षैव जाता तस्य देहान्ते मुक्तिरिति । न च बौद्ध-मलसत्त्वे देहान्ते कथं मुक्तिरिति शङ्कनीयम्, त्रिपुरारहस्ये

दीक्षावन्तस्तु देहान्ते प्राप्य लोकं परात् परम् ।
सदाशिवेन ते सम्यक् प्रबुद्धाः शिवरूपिणा ॥

इति तादृशशङ्कायाः निरस्तत्वात् । एवं श्रौताग्निष्टोमादिदीक्षाऽर्थवादेऽपि " पाप्मनोऽपहत्यै " इति श्रूयते । एवं पूर्वमीमांसायामपि दीक्षायायागजन्यापूर्वोत्पत्तौ सस्याद्युत्पत्तौ कर्षणमिव

---

१ रुरुक्षोः–अ.
२ रुरुक्षुत्व–अ.
३ तन्त्रालोकव्याख्याने निशाटनाम्नि–अ.

स्थलस्य आत्मनः शोधकत्वमित्येव सिद्धान्तितम् । ब्रह्मोत्तरखण्डे प्रथमाध्याये—" राज्ञः पञ्चाक्षरमन्त्रस्य कर्णप्रवेशमात्रेण तच्छरीरादनन्ताः काकाः निर्गताः " इति लिङ्गं च । एवं परमानन्दतन्त्वे दीक्षानामनिरुक्तौ—

दीयतेशिवसायुज्यं [1]दीर्यते पाशबन्धनम् ।
अतोदीक्षेति कथिता ....………

इति च । एवं बहुप्रमाणानुसारेण व्यतिरेकव्याप्तिप्रतिपादकवचनस्य अर्थवादरूपत्वात् । तथाचास्य लक्षणस्यासंभवएव स्यात् ॥

एतेन सौभाग्यानन्दसन्दोहे द्वादशोल्लासस्यावतरणं "अधुना तस्याः साङ्गोपासनयोग्यताप्रतिपादकदीक्षां पृच्छति " इति, तन्मुख्यार्थमनुसृत्य समर्थनमशक्यमेव इति चेत्—न; मुक्तिसाधनीभूतपौरुषमलनिवृत्त्यर्थक्रियात्वस्यैवादुष्टलक्षणत्वात् ॥

न च प्रकृतलक्षणविचारस्य तदुपजीव्यकैमर्थ्यविचारस्य चानुष्ठानेऽनुपयोगात् केवलपाण्डित्यप्रकटिनी काकदन्तपरीक्षेयमिति वाच्यम्; अस्त्यनुष्ठाने वैषम्यं,—यदि पूर्वोक्तयोग्यताजनकं तर्हि दीक्षासंकल्पे योग्यतासिद्ध्यर्थमिति, इतरपक्षे पापक्षयार्थमिति ॥

### [2]दीक्षासंकल्पप्रकारविचारः

यच्च नित्योत्सवनिबन्धे "श्रेयस्कामोऽहममुकविद्याग्रहणार्थममुकगुरोर्दीक्षां ग्रहीष्यामि" इति, तदत्यन्तानवधानलिखितम् । तथाहि—यच्च श्रेयस्कामइति पदं तदास्तां, कथंचित्पापनाशस्यापि श्रेयोरूपत्वात् । यच्च " अमुकविद्याग्रहणार्थम् " इति तदत्यन्तमशुद्धं, दीक्षायाः पापक्षयैकसाधनत्वस्य व्यवस्थापितत्वात् । आस्तां वा वन्ध्यापुत्रवत् विद्याग्रहणार्थत्वं, तथाऽपि श्रेयस्कामइत्यनेनैव तल्लाभे इदं पदं व्यर्थमेव । न च श्रेयोविद्याग्रहणमुभयं फलम्, अतः द्वयोरुल्लेखः इति वाच्यम्; " सर्वेभ्योदर्शपूर्णमासौ " इत्यत्र तयोः सर्वफलसाधनत्वेऽपि प्रयोगभेदेनैव भिन्नफलं नैकप्रयोगेण फलद्वयमिति चातुर्थिकन्यायविरुद्धस्य अनादरणीयत्वात् । अतएव, तन्त्ररत्ने—" एकस्यैकजातीयव्यापारेण नियतैकजातीयैकफलजनकत्वं लोके दृष्टम् । तत्रैकजातीयजनकत्वं सर्वेभ्यइति वचनेन बाध्यतां, एकफलजनकत्वं केन बाध्यताम् " इति पार्थसारथिनोक्तम् । किंच दीक्षापदार्थः शक्तिप्रवशचरणविन्यासमन्त्रोपदेशरूपः । तादृश्याः दीक्षायाः फलसाधनत्वं वा, तद्ग्रहणस्य वा । आद्ये संकल्पे फलसाधनीभूतक्रियामुत्पादयामीत्यर्थके फलासाधनक्रियावाचकं ग्रहीष्यामीति पदं व्यर्थम् । द्वितीये ग्रहणस्य साधनत्वं

---

१ क्षीयते—ब.

२ इतः शिष्यस्य दीक्षाग्रहणसङ्कल्पायावसरस्तद्विचारश्चास्ति—
अन्यच्च, सर्वसङ्कल्पविषयकज्ञानाय द्वि.परि०—१० वि०—द्रश्यः ॥

निर्मूलं, पूर्ववचनविरोधश्च । किंच—अमुकगुरोः इत्युच्चारणफलं दृष्टमदृष्टं वा तिथ्याद्युच्चारणवत् । नाद्यः, अयं मम गुरुर्भवतु इति स्वेच्छाप्रकाशादन्यत् दृष्टं फलं दुर्वचम् । तच्च तल्लिखितवरणेनैव भवितुमर्हति, किमेतदुच्चारणेन । नान्त्यः, " देशकालौ संकीर्त्य " इति वचनात् तेषाम् अपूर्वजनकत्वम् । न हि गुरुनामोच्चार्य इति वचनमस्ति, येनादृष्टं तेन भवेत् ।

किंच—तदभिमतं श्रेयोविद्याग्रहणरूपफलं स्वनिष्ठम् । तथा सति ग्रहीष्यामि इति परस्मैपदान्तप्रयोगः " स्वरितञितः कर्त्रभिप्राये क्रियाफले " इति पाणिन्यनुशासनविरुद्धः । एवं अनेकदोषग्रस्तत्वात् एवंसंकल्पस्त्वनादरणीयः । किंतु " पौरुषाज्ञाननिवृत्तये श्रीविद्यया दीक्षिष्ये " इति संकल्पएव श्रेयान् ॥

**तान्त्रिकसंकल्पाङ्गभूतः अष्टाङ्गोल्लेखः**[1]

[2]शिष्यसंकल्पे नाष्टाङ्गोल्लेखः, दीक्षाहीनत्वेन तान्त्रिकेऽनधिकारात् । अग्रे गुरुसंकल्पे तदुल्लेखआवश्यकः, शिष्यस्यापि दीक्षाऽनन्तरभाविकर्मण्युल्लेखः ॥

ननु अष्टाङ्गस्य सूत्रे अनुक्तत्वात् किमिति तद्ग्रहणमिति चेत्—सत्यम् । यद्यपि नास्ति ग्रहणं, तथाऽपि श्रौतस्मार्तादिनिखिलकर्मसु आदौ संकल्पः, अव्यभिचरितोदृष्टः । प्रकृतेऽपि तद्वत् संकल्पआवश्यकः । संकल्पस्यावश्यकता मूले अधिकतरं गाणनायकीयसपर्यायामुच्यते । संकल्पोनाम विद्यमानदेशकालोल्लेखनपूर्वकफलोल्लेखनसहितप्रकृतकर्मानुष्ठानविषयिणी प्रतिज्ञा । तदुक्तं रहस्यार्णवे—

यत्र देशे साधकस्तु स्थितस्तद्देशमुच्चरन् ।
उल्लिख्य तत्कालमपि प्रतिज्ञा कर्मणस्तु या ।
फलमुद्दिश्याहमिति संकल्पोजलहस्ततः ॥ इति ॥

तत्र कालस्य पञ्चाङ्गतः अष्टाङ्गस्य अश्वप्रतिग्रहन्यायेन संनिकृष्टत्वात् अष्टाङ्गोल्लेखनं सूत्रानुयायिनामावश्यकम् । अतः अष्टाङ्गं तत्साधनप्रकारश्च उच्यते ॥

तत्र अष्टाङ्गानि—१—युगं, २—परिवृत्तिः, ३—वर्षः, ४—मासः, ५—दिवसः, ६—नित्या, ७—वारः, ८—घटिकोदयः, इति । तन्त्रशास्त्रे युगानि ३६, एकस्य युगस्य परिवृत्तयः ३६, एकस्याः परिवृत्तेः वर्षाः ३६, एकवर्षस्य मासाः १६, एकमासस्य दिवसाः ३६, नित्याः ३०, वाराः ९, घटिकोदयः ५, । एवमष्टाङ्गसिद्धावुपायः कथ्यते ॥

---

१ अष्टाङ्गनिरूपणमिदं केषुचिदाकरेषु नोपलभ्यते.

२ इदं सौभाग्यकल्पद्रुमनाम्नि, प्राक्तनतन्त्रे, सुस्फुटंविस्तृतंचेति विशिष्टजिज्ञासवोजानन्तु—

**तत्रादौ शालीवाहनशकसाधनोपायः कथ्यते ।**

इभाक्षिः २८, षष्टि६०, गणितः १६८०, इभाग्न्यङ्केन ३८ संयुतः ।

नर्मदोत्तरभागेऽथ तस्यादक्षिणभागके ।
अङ्कवेद ४८ युतः कार्यइभाक्षिः षष्टिभिर्हतः ॥
प्रभवादिगताब्दानां संख्यया योजयेत् पुनः ।
वर्तमाना शालिवाहशकसंख्या समीरिता ॥
प्रभवाद्यक्षयान्तानां भवेत् परिवृतिस्तु या ।
वर्तमाना तदीयेयं संख्याऽष्टाविंशतिः स्मृता ॥

इतः परिवृतिसंख्यां दृष्ट्वा च तां गुणेत् । षष्टिभिस्तु शके ज्ञाते न यतदीदृशश्रीर्मे[1] वर्तमानशालिवाहनशकसंख्या नन्दाद्रिक्ष्माग्नि–३१७९–संयुक्ता गतकल्यब्दगणः यथा शके–१७५५ अस्मिन् ३१७९ एतद्योगे गतकल्यब्दगणः–४९३४ । एवंगत-कल्यब्दगणं साधयित्वा तस्मात् अहर्गणसिद्ध्यर्थम् उपायः क्रियते ।

गतकल्यब्दगणे नगनवेभवेदैः–४८९७ ऊनिते

शिष्यते योऽङ्कः एकादिदशान्तः तत्संख्याकम् अङ्कजालं ध्रुवकाङ्कजाले विघट्यादिदिनान्ते योजयेत् । एकादशशेषे प्रथमदशमाङ्कजालद्वयं ध्रुवके योजयेत् । एकविंशतिशेषे प्रथमं विंशं च ध्रुवके योजयेत् । एवमेकत्रिंशतमारभ्य एकोनषष्टिपर्यन्तं ज्ञेयम् । तद्रहस्यमित्थम्——नगन-वेभवेदैरूनिते कल्यब्दगणे यः शेषः तस्मिन् षष्ट्या भक्ते शेषाङ्कैः लेखनसमये यदि द्वौ तर्हि तत्समसंख्याकम् अङ्कजालं ध्रुवके योजयित्वा विघटिकादिषष्ट्या भक्त लब्धमुपर्युपरि योजयेत् । सच तद्वर्षसंबन्धिमेषसंक्रान्त्यहर्गणः । एवंगतकल्यब्दगणेऽनेनोनितैकोनपञ्चाशच्छेषपर्यन्तं षष्ट्या भागोनास्तीति यदा गतकल्यब्दः एतत्संख्याकस्तदा नगनवेभवेदन्यूने षष्टिसंख्या शिष्टा षष्ट्या भक्ते शेषः शून्यं तदा शून्याङ्कजालं ध्रुवके योजयेत् । सःमेषसंक्रान्त्यहर्गणः । योज्यानि अङ्कजालानि लिखन्ति । प्रथमं द्वितीयं तृतीयं चतुर्थं पञ्चमं षष्ठं सप्तमं अष्टमं नवमं दशमं विंशं त्रिंशं चत्वारिंशं [2]पञ्चाशत् शून्यं ध्रुवकाङ्कजालम् इति सिद्धान्तजालानि । यदा गतकल्यब्दगणः इभबाणाङ्कवेदसंख्याकोभवति तदा वर्षगणः शैलाङ्केभवेदैरूनितः कार्यः । ततोयच्छेषं षष्ट्या भक्ते यल्लब्धं तेन गुणितं यच्छून्याङ्कजालं तत्पूर्वध्रुवकाङ्कजाले योजयित्वा ध्रुवकं संस्कृत्य पश्चात प्रथमाद्यङ्कजालं पूर्ववद्योजयित्वा अहर्गणं साधयेत् । इभेष्वङ्कवेदन्यूने गतकल्यब्दगणे उक्तध्रुवक-संस्कारोनास्ति । एवमहर्गणं साधयित्वा गणं नवभिर्विभज्य शेषोऽतीतवासरः तस्य यल्लब्धं

१ इयं शङ्किताक्षरापङ्क्तिः

२ पञ्चाशत्–इत्येतन्नास्ति–अ.

तच्चतुर्भिर्विभज्य तल्लब्धं पृथक् संस्थाप्य तच्छेषं नवभिर्विगुण्य तत्र गतवारसंख्यां योजयेत् एवं सति सा संख्या गतदिवसस्य ज्ञेया। पूर्वस्थापितलब्धे षोडशभिर्भक्ते शेषोगतमाससंख्या भवति। तल्लब्धे षट्त्रिंशता विभक्ते शेषोगतवत्सरसंख्या। तल्लब्धं पञ्चाशद्युतं षट्त्रिंशद्भक्तं शेषं गतपरिवृत्तिसंख्या। लब्धं गतयुगसंख्या। एवं मेषसंक्रान्तिकालीनाहर्गणे साधिते तदुत्तरं मध्ये यदाकदाचिदहर्गणसाधनेच्छायां तदुपायउच्यते। तत्र मेषमारभ्य यस्मिन् दिने अहर्गणनेच्छा तदव्यवहितपूर्वं संक्रान्तिः या तदीयां वक्ष्यमाणां संख्यम् अहर्गणे योजयित्वा तत्संक्रान्तिमारभ्य इष्टदिनपर्यन्तमतिक्रान्तायावन्तोदिवसाः तावत्संख्यां योजयेत्। इष्टदिनाहर्गणं भवति। तत्र-वृषे, मिथुने, कर्के, सिंहे, कन्यायां, तुलायां, वृश्चिके, धनुषि, मकरे, कुंभे, मीने। इतः परं युगादिघटिकान्तानां नामोच्यते। युगपरिवृत्तिवर्षाणां षट्त्रिंशतां क्रमेण आदिक्षान्तानां वर्णानां नामानि यथा प्रथमम् अकारात्मकयुगं अयुगं कयुगं द्वितीयम् एवमग्रेऽपि परिवृत्तिवर्षेषु ज्ञेयम्। मासानां षोडशानां क्रमेण षोडशस्वराः नामानि। षट्त्रिंशद्दिवसेषु युगपत् षट्त्रिंशदकारादिक्षकारान्ताः वर्णाः सानुस्वाराः शिवाद्यवनिपर्यन्तं षट्त्रिंशत्तत्त्वानि च मिलित्वा क्रमेण नामानि। यथा—अं शिवतत्त्वदिवसइति। चरमस्वररहिताअकाराद्यनुस्वारान्ताः अनुलोमविलोमेन त्रिंशद्वर्णाः। कामेश्वर्यादिचित्रान्ताः पञ्चदश नित्याः अनुलोमविलोमाश्च मिलित्वा त्रिंशत्। नित्यानाम यथा–अं कामेश्वरीनित्यायामिति। वाराणां नवानां क्रमेण अ क च ट त प-य श षाः इति वर्णाः नव। प्रकाशानन्दनाथ-विमर्शानन्दनाथ-आनन्दानन्दनाथ-ज्ञानानन्दनाथ-सत्यानन्दनाथ-पूर्णानन्दनाथ-स्वभावानन्दनाथ-प्रतिभानन्दनाथ-सुभगानन्दनाथेति नवनाथाः। वारवर्णाये नव तद्युक्तनवनाथाः क्रमेण नववाराः। यथा—अं प्रकाशानन्दनाथवासर इति।

उदयघटिकानां पञ्चानां नाम क्रमेण—अ ए च त य इति पञ्च वर्णाः ज्ञेयाः। एवमष्टाङ्गोल्लेखः तान्त्रिककर्मादावावश्यकः। देशस्य तन्त्रे अनुक्तत्वात् स्मार्तस्यैवोल्लेखः॥

केचित्तु तान्त्रिकोऽष्टाङ्गोन सहजइति शास्त्रप्रसिद्धकालस्य समुच्चयमिच्छन्ति "देशकालौ समुल्लिख्य चाष्टाङ्गस्थितिमेव च" इति परमानन्दतन्त्रानुसारेण। तन्न; देशकालावित्यत्र कालः कीदृशः इत्याकांक्षापूरकं तन्त्रस्थाष्टाङ्गपदं, न तु समुच्चयविधायकम्, एवकारस्वारस्यात्॥

एवमग्रे अमुकगोत्रोअमुकशाखाऽध्यायी अमुकशर्मादिरहं चतुर्विधपुरुषार्थसिद्ध्यर्थं स्वेष्टानुग्रहाय अमुकगोत्रं अमुकशाखाऽध्यायिनं अमुकशर्माणं त्वां गुरुत्वेन वृणे इति संकल्पः किं कल्पसूत्रानुसारेण—

बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतोभवेत्॥

इतिवचनमनुसृत्य तन्त्रान्तरानुपसंहारेण अयं प्रयोगः, किं सर्वतन्त्रमुपसंहृत्य, किं स्वेच्छया। नाद्यः, सूत्रे वरणस्य अनुक्तत्वात्। द्वितीये तन्त्रान्तरे प्रतिमाब्रह्मादिवरणचरुनिर्माणतद्भक्षणादित्यागोऽनुचितः। तृतीयश्च स्वकपोलकल्पितोऽश्रद्धेयएव। किंच तन्त्रान्तरे—

कर्तुं कारयितुं चैव दीक्षाकर्म महेश्वरि।
आचार्यत्वेन त्वां वृणे इति पादसमीपतः॥

इति वरणे करिष्यमाणेऽपि दीक्षाकर्मणि आचार्यं वृणे इत्येव वक्तव्यमिति वदति। सर्वत्र श्रौते स्मार्ते च ऋत्विग्वरणे—"अस्मिन्नग्न्याधानेऽध्वर्युं त्वां वृणे", "अस्मिन्नुद्यापनाख्ये कर्मणि आचार्यं त्वामहं वृणे", इत्याचारोदृश्यते। इह तु कर्मनाम त्यक्त्वा फलवाचकं पुरुषार्थसिद्ध्यर्थम्–अनुग्रहार्थं चेति वरणवाक्ये लिखितम्। तदतीव चित्रम्। तस्मात् सूत्रानुसारिभिः वरणं न कार्यम्। न च वरणाभावे गुरुणा अवृतेन कर्म कथं कार्यम्–इति वाच्यम्; त्वं मम दीक्षां कुरु इति लौकिकवरणेनापि तत्संभवात्। न हि वयं सर्वथा निराकुर्मोवरणं, कर्माङ्गमित्येव ब्रूमः॥

एवमेव पुण्याहवाचननान्दीश्राद्धे न कार्ये, अनुक्तत्वात्। न च तन्त्रान्तरोपसंहारोमा भवतु, तथाऽपि स्मृतिप्राप्त पुण्याहवाचनं नान्दीश्राद्धं च अनिवार्यम्, अन्यथा—"क्षुते आचामेत्" इति प्राप्ताचमनमपि न स्यात् इति वाच्यम्; यदि पुण्याहवाचननान्दीश्राद्धे तान्त्रिके स्मृतिप्राप्ते एवानुवर्तेते, तर्हि तन्त्रान्तरे—

गणेशं पूज्य पुण्याहं वाच्य नान्दीमुखान् यजेत्।

इति विधिः व्यर्थएव स्यात्। तस्मात् स्मार्तपुण्याहादिधर्माः कर्माङ्गत्वेन नायान्ति इत्यत्र इदमेव ज्ञापकम्। यच्च "क्षुते आचामेत्", "न कलञ्जं भक्षयेत्", इति पुरुषार्थं तच्च प्राप्तमपरिहार्यम्॥

न च एवं शिष्यगुरुलक्षणधर्माणामपि प्राप्तिः न स्यात् इति वाच्यम्; अस्ति तस्य प्राप्त्यवकाशः। तत्र येन विना आकांक्षा न पूर्यते तच्च तन्त्रान्तरस्थमपि गृहीत्वा आकांक्षां पूरयेत्। शाब्दबोधे आकांक्षा द्विविधा, उत्थिता उत्थाप्या चेति। यथा आद्या, पचतीत्युक्ते कं पचति केन पचति कः पचतीति। द्वितीया, स्तोकं पचतीति। तत्र स्तोकपदस्य वैय्यर्थ्यभिया कथं पचति इत्याकांक्षा उत्थाप्या। प्रथमस्थले स्वतउत्थितायाः शाब्दाकांक्षायाः शब्दमन्तराऽनिवृत्तेः अध्याहृतस्य स्थलान्तरस्थस्य वा शब्दस्य पूरणमावश्यकम्। तत्र अध्याहारात् वरं तन्त्रान्तरस्थशब्देनैव आकांक्षापूरणम्। एवंसति "[1]मतिमान् दीक्षेत" इत्युक्ते मतिमत्त्वस्य केवलस्य अव्यावर्तकतया कीदृशं मतिमत्त्वम्–इत्याकांक्षा अवश्यमुदेति।

१ इदमनुगत–४३–पत्रस्थं ३१ सूत्रम्।

उदिताकांक्षापूरकं तन्त्रान्तरोक्तशिष्यलक्षणवत्त्वमेव मतिमत्त्वं कल्प्यते। एवं गुरौ "[१]सद्गुरुः क्रमं प्रवर्त्य" इत्यग्रिमसूत्रे उक्तत्वात्, सत्त्वं किम्—इत्याकांक्षापूरकतया गुरुलक्षणानि च योज्यानि। अतएव बौधायनाचार्याः—" तान्न मिथः संसादयेत्" इत्याहुः। अत्र भवस्वामी "तान् शालिकीशाखोक्तान् पक्षान् तदन्यशाखी न संसादयेत् एकप्रयोगे मेलनं न कुर्यात्। ब्राह्मणानां बहुत्वात् शाखानामनन्तत्वात् तदर्थस्य चासर्वज्ञेन उपसंहर्तुमशक्यत्वात् तावन्मात्रं सुखं बुद्ध्वा अनुष्ठाय सर्वे कर्मफलं प्राप्नुयुः इति कल्पसूत्राण्यारब्धानि आचार्यैः" इति।

अस्यापवादस्तत्रैव " अविशेषोक्तैः विशेषोक्ताश्च शेषत्वेन संबध्यन्ते" इति। अत्र भवस्वामी—" अविशेषोक्तैः विशेषोक्ताः सामान्यतउक्तस्य गुणविशेषाः अन्यसूत्रोक्ताअपि शेषत्वेन अङ्गत्वेन संबध्यन्तइति"। " तान्न मिथः संसादयेत्" इत्यस्योदाहरणं यथा बौधायने सोमाभिषवार्थं केवलवसतीवरीग्रहणम्। सूत्रान्तरे वसतीवरीणां एकधानानामपि समुच्चयः। तदनुसारेण बौधायनानामेकधानाप्राप्तौ तान्न मिथः संसादयेत् इति। एवं बौधायने केवलं शाखाछेदनमात्रमुक्तम्। अन्यसूत्रे शाखाछेदनमाहरणं च समन्त्रकम्। तानपि न संसादयेत्। अनया दिशा अन्यान्यप्युदाहार्याणि। एतदपवादोदाहरणं यथा बौधायने पलाशशाखैव सान्नाय्ये विहिता, तस्यास्तत्सूत्रिणामलाभे सूत्रान्तरोक्तशमीशाखा ग्राह्येति। तत्र मूलम्—उक्तालाभे कीदृशी शाखा ग्राह्येति उत्थिताकांक्षावत्त्वात् तत्पूरकं सूत्रान्तरं शमीशाखाविधायकम्। एवं बौधायने—" अग्नीनन्वादधाति" इत्यविशेषेण विहितम्। कथमन्वाधानं कर्तव्यमिति विशेषाकांक्षायाम—" अपरेण गार्हपत्यमुपस्थं कृत्वा" इति "[२]ऊर्ध्वज्ञुरासीनोऽन्वाहार्यपचनम्—" इति सूत्रान्तरोक्तधर्माः शेषत्वेनान्वेतुमर्हन्ति। न तथा पूर्वोक्तैकधानाऽऽकांक्षाऽस्ति। अतोन समुच्चयः।

एतेन एतत्सूत्रानुसारिभिरपि तन्त्रान्तरोक्तं पात्रत्रयं पात्रचतुष्टयं वासादनीयमिति यदब्रुवन् तदसाध्विति स्फुटम्। यद्यविशेषेण पात्रासादनं कुर्यादित्येव स्यात् तदा कति पात्राणि कथमासादयेत् इति विशेषाकांक्षा उदेति। तदा तदपवादशास्त्रप्रवृत्तिरपि स्यात्। नचैवमिहास्ति येन तथा स्यात्।

एतेन निबन्धे सामयिकानां स्वस्य च तत्त्वशोधनार्थं देव्याः पश्चाद्भागे लौकिकं कलशं संस्थाप्य संस्कृतद्रव्यं किंचित् क्षिपेत् इति लेखोऽपि निर्मूलः, " शिष्टैः सार्धं चिदग्नौ हविःशेषं हुत्वा" इति विशेषार्घ्यशेषस्यैव प्रतिपत्तिकथनात्।

१ इदमप्यग्रे—५३—पत्रस्थ ३४ सूत्रम्।

२ अत्राध्वर्यु—इति संभाव्येत—

अतएव बौधायनाचार्याः शास्त्रसङ्करं न कुर्यादित्युक्त्वा सङ्करकरणे प्रत्यवायमप्याहुः—

स्वशास्त्रे वर्तमानो यः परशास्त्रेण वर्तते ।
भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यतः ॥ इति ॥

नचैवं पूर्वोक्तरीत्या अनुष्ठितिरुदासीनस्थले भवतु, यस्याकरणे शास्त्रान्तरे निन्दा बह्वी तस्यानुष्ठानं सर्वैः कार्यम् इति वाच्यम्; आतञ्चनप्रकरणे "[1]तद्यत्कलैः राक्षसम्" इति कलनिन्दां कृत्वा "दध्नाऽऽतनक्ति" इति शाखाऽन्तरे विहितम्। तदन्यशाखायां "औषधयः पूतिकाः कलाः" इति कलैः आतञ्चनं विहितम्। एवं [2]पत्नीसंयाजासमिष्ट-यजुरनुष्ठाने बहुनिन्दा क्वचिच्छ्रूयते। बौधायनैर्निन्दा न कृता। तावतैव परनिन्दामनादृत्य समिष्टयजुरनुष्ठानं बौधायनानुयायिनः कुर्वन्ति शिष्टाः । तस्मात् परशास्त्रे निन्दा अकिञ्चित्करा ।

न च त्रिपुरारहस्ये——

तन्त्रानुक्तं सूचितं तु तथाऽन्येष्वपि दूषितम् ।
अकृतं यत्कर्म[3]राम विकल्पेन विवर्जितम् ।
तदन्यस्मादुपादेयमेषशास्त्रस्य निर्णयः ॥

इत्यस्याः गतिविरहइति वाच्यम्; यस्याननुष्ठाने परशास्त्रे निन्दा स्वशास्त्रे च विकल्पः तस्य तत्र निन्दा यद्विषये परशास्त्रे तदादर्तव्यं, तावता स्वशास्त्रहानिविरहात्। यथा आपस्त-म्बसूत्रे वाजपेये अग्निचयननिन्दा, बौधायने न निन्दा कृता, किंतु चोदकशास्त्रेण उत्तरवेद्या सह विकल्पितम्। तत्र स्वशास्त्रस्य उत्तरवेद्यनुष्ठानेऽपि हान्यभावात् निषेधोऽप्यनुग्राह्यः—— उत्तरवेदिरेवानुष्ठेया न चयनमिति ॥

तथा अत्रापि तादृशस्थले अनुष्ठानार्थम् इदं वचनम्, न नित्यवच्छ्रुतस्य शास्त्रस्य बाधार्थम्। एतद्वचनस्य गत्यन्तरं श्रीविद्याप्रकरणे विस्तरेण वक्ष्यामः ॥

अस्तु वा[4]——

निषिद्धं वर्जयेत्तन्त्रान्तरे किंचिन्महेश्वरि ।
यतस्तदेकशास्त्रं वै मन्त्रैक्याद्देवतैक्यतः ।
तस्मात् स्वशास्त्रे यत्किंचिन्निषिद्धं परिवर्जयेत् ।

१ तद्व—अ.
२ पित्र्यायां समि—ब, ब १.
३ डामरिवि—अ, अ १.
४ अस्याधस्तनभाष्यगतफलाधिक्यम्–इत्यनेनान्वयः–

अन्यत्स्वतन्त्रानुक्तं तु समर्थउपसंहरेत् ।
स्वतन्त्रेणाविरुद्धं तु यावदन्यत् समाचरेत् ।
तावदभ्युदयाधिक्यं भवेत्तस्य तु निश्चितम् ।
आकांक्षितं चाप्यन्यस्मादाहरेदेव किंचन ॥

इति तन्त्रान्तरवचनानुसारेण पुण्याहवाचनादीनाम् उपसंहारे फलाधिक्यम्। अननुष्ठाने अवैगुण्यमिति रहस्यम् ।

पात्राधिक्यं च स्वशास्त्रविरुद्धं हेयमेव,वस्तुतोलिखिततन्त्रवचसाम् अग्रे[१] पात्रासादनप्रकरणे वक्ष्यमाणरीत्या गतिसंभवात् अनुपपत्तिलेशाभावात् । एकप्रयोगे यत्सूचितम् आकांक्षितं कर्मसामान्ये अव्यभिचरितसंबन्धं च [तत्] अन्यस्मात् ग्राह्यं नान्यदिति राद्धान्तः । एतद्वितत्याग्रे स्पष्टीकरिष्यामः ।

इत्थं च यः पुरुषः सर्वतन्त्राण्युपसंहृत्य यावदङ्गेष्वियत्तां संपाद्य एकरूपं प्रयोगविधिं निर्माय अनुष्ठातुं समर्थः तस्य सर्वज्ञस्य तादृशकर्मणः श्रेयोऽधिक्यं भविष्यत्येव । यस्त्वेतादृशेऽसमर्थः सः त्वाकांक्षितादिमात्रं तन्त्रान्तरात् गृहीत्वा स्वशास्त्रमात्रानुष्ठानेन कृतार्थोभविष्यत्येव । न तु तन्त्रान्तरस्थानां केषां चिदुपसंहारः केषां चिदनुपसंहारः इत्यर्धजरतीयन्यायोयुक्तः। निबन्धकारोन्यायगन्धमजानन् स्वेच्छया कानिचिदुपसंहरन् कानिचित् परित्यजन् देवानांप्रियइति मन्तव्यइत्यलमतिलेखनेन ॥

[२]सर्वथेत्यनेन दीक्षां विना नात्यन्तिकी मुक्तिः इति सूचितम् । तत्र स्पष्टं प्रमाणं त्रिपुरारहस्यस्थं पूर्वमेव लिखितम् ॥ ३१ ॥

### दीक्षात्रयम्

एवं दीक्षां विधाय तत्र अवान्तरभेदवतीषु तासु एककालसंबन्धं विधातुम् आदौ तां विभज्य विभागप्रयोजकं धर्मं च प्रदर्श्य तासु तिसृष्वपि एककालसंबन्धरूपं गुणं विधत्ते—

**दीक्षास्तिस्रः शाक्ती शांभवी मान्त्री चेति ।**
**तत्र शाक्ती शक्तिप्रवेशनात् शाम्भवी चरणविन्यासात्**
**मान्त्री मन्त्रोपदिष्टया सर्वाश्च कुर्यात् ॥ ३२ ॥**

चेतीत्यन्तेन विभागं कृत्वा तासां नामकथनम् । तत्र तासु मध्ये शाक्तीत्यस्यार्थं विवृणोति शक्तिप्रवेशनात् । जातेति शेषः । यद्वा—शक्तिप्रवेशनात् इति हेतौ पञ्चमी ।

---

१ अग्रेनाम-आगामिनि ३ खण्डस्थ श्रीक्रमीये ३१ सूत्रभाष्यान्तग्रन्थे-

२ एतत्प्रचलदेकत्रिंशसूत्रस्थः सर्वथा शब्दोऽत्रबोध्यः-

शक्तिप्रवेशनाद्या दीक्षा शक्तिप्रवेशहेतुकीत्यर्थः । एवमेवाग्रेऽपि । प्रवेशनादिति स्वार्थे ल्युट् । शक्तिप्रवेशनं नाम[1]अग्रे ' तदमृतक्षाळितम् ' इत्यारभ्य ' पाशान् दग्ध्वा ' इत्यन्तप्रतिपादिता क्रिया । चरणविन्यासोनाम शिष्यशिरसि गुरुकर्तृकं कामेश्वरीकामेश्वरयोः रक्तशुक्लचरण-भावनम् । मन्त्रोपदेशस्तु स्पष्टः, शिष्यमात्रश्रावणविषयगुरुकर्तृकशब्दोच्चारणरूपः । सर्वाः पूर्वोक्ताः । तिस्रश्चेत्यनेन एककालसंबन्धः तासु बोध्यते । च शब्दः साहित्यवाची । साहित्यं च एककालसंबद्धत्वरूपम् । तथा च सर्वाः दीक्षाः सह कुर्यादिति फलितोऽर्थः ॥ ३२ ॥

परेषां मतमाह--

**एकैकां वेत्येके ॥ ३३ ॥**

वीप्सया त्रयाणां समुच्चयः, कालभेदमात्रमिति ज्ञापितम् । वा कारेण मध्ये चिरकालव्यवधानं कार्यं, न तु दिवसत्रयइति सूचितम् ॥ ३३ ॥

इतः परं गुरुकर्तृकां क्रियामाह--

**[2]सद्गुरुः क्रमं प्रवर्त्य साङ्गं हुत्वा तरुणोल्लासवान् शिष्यमाहूय वाससा मुखं बद्ध्वा गणपतिललिताश्यामावार्ताळीपरापात्रबिन्दु-भिस्तमवोक्ष्य सिद्धान्तं श्रावयित्वा ॥ ३४ ॥**

साङ्गम् अङ्गैःसहितं क्रमं प्रधानदेवतापूजां प्रवर्त्य कृत्वा । अत्र अङ्गानि गणपतिश्यामा-वार्ताळीपराः । प्रधानं च ललिता । अत्र अङ्गपदेन अङ्गक्रमोलक्ष्यते । अङ्गक्रमसहितं प्रधानक्रममित्यर्थः ॥

ननु इदं कथं ज्ञातमिति चेत्—श्रृणु । अत्रैव द्वितीयखण्डारम्भे " इत्थं[3] सद्गुरोराहित-दीक्षः महाविद्याऽऽराधनप्रत्यूहापोहाय गाणनायकीं पद्धतिमामृशेत् " इत्यत्र विघ्नापोहाय यत्क्रियते तत्प्रधानम् [अङ्गं] लोके दृष्टम् । यथा राजदर्शनार्थमुद्युक्तस्य मध्ये द्वारपालैः निरोधे कृते सति तदुपासनं राजदर्शनाङ्गमिति । न च प्राणिमात्रस्य विघ्नशंकासत्त्वात्, विघ्ननाशकोगण-पतिरिति घण्टाघोषात्, विघ्नपरिहारार्थं यथा कर्ममात्रे गणपत्याराधनं तथा अत्रापि प्राप्तमेवेति, इदं वचनं व्यर्थमिति वाच्यम् ; विनायकस्तवपाठेनापि क्वचिद्विघ्ननाशप्रतिपादनात् आराधनस्य पक्षे प्राप्तौ श्रीविद्योपास्तिविघ्ननिरासोऽनेनैव कार्यइति नियमविधिसंभवात् । एवं तृतीय-खण्डादौ " एवं गणपतिमिष्ट्वा विधूतसमस्तविघ्नव्यतिकरः शक्तिचक्रैकनायिकायाः श्रीललि-

---

१ अग्रेनामात्रैवदीक्षाविधौ–३५–३६ सुत्रयोरित्यर्थः–

२ इतोगुरुर्दीक्षादानविधिमारभते–

३ द्वितीयखण्डस्य प्रथमसूत्रे इत्थंसदित्यादि. १ सूत्रमस्ति–

तायाः क्रममारभेत " इति क्त्वाप्रत्ययेनापि " अग्निं चित्वा सौत्रामण्या यजेत " इतिवत् ललितोपास्त्यङ्गत्वं स्पष्टम् । न च अग्निं चित्वेति वाक्ये पूर्वकर्मणः प्रधानत्वम्, उत्तरकर्मणोऽङ्गत्वं, तद्वदत्रोत्तरमनुष्ठीयमानललितोपास्तेः गणपत्याराधनाङ्गत्वापत्तिः इति वाच्यम् ; न हि क्त्वाप्रत्ययेनैव पूर्ववर्तिनः चयनस्य प्राधान्यनिर्णयः किं तु " प्रजाकामश्चिन्वीत, " " पशुकामश्चिन्वीत " इति फलवत्त्वात् चितेः प्रधानत्वं, तत्सन्निधौ अफलसौत्रामणेः " फलवत्सन्निधावफलं तदङ्गम् " इति न्यायेन सौत्रामण्या अङ्गत्वम् । तथा ललितोपास्तेः मुक्तिफलकत्वश्रुत्या विघ्नोपास्तिद्वारा श्रीललितोपासनायाः यत्फलं तदेव तस्येत्यङ्गत्वं कॢप्तम् । अतएव " रेवतीषु वारवन्तीयं साम कृत्वा पशुकामोह्येतेन यजेत " इत्यत्र वारवन्तीयसाम्नोन प्राधान्यम् । न च " दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत " इतिवत् केवलपौर्वापर्यविधिरेव किं न स्यात् इति वाच्यम् । तत्र " सोमेन यजेत " इत्यनेन सोमस्य, दर्शपूर्णमासयोः यदाग्नेयादिवाक्यैः उत्पन्नत्वात् केवलक्रममात्रविधायकत्वम् , प्रकृते च ललिताक्रमोत्पत्तिवाक्यान्तराभावात् क्रमविशिष्टकर्मविधानात् । किंच तत्र द्वयोः स्वतन्त्रफलवत्त्वेन अत्र तथात्वाभावाच्च न क्रममात्रविधायकत्वं न वा अङ्गाङ्गिभावहानिः ॥

एतेन "[१]इत्थं सङ्गीतमातृकामिष्ट्वा कोलमुखीं विधिवद् वरिवस्येत " इत्यत्रापि परस्पराङ्गाङ्गीभावापत्तिरिति निरस्ता, उभयोरपि राजदर्शनरूपफलकत्वेन स्वतन्त्रफलाभावात् ॥

न च एवं सति सौत्रामणिवत् प्रतिप्रयोगमावृत्त्यापत्तिः इति वाच्यम् । न हि वयं प्रधानाङ्गमिति ब्रूमः, किंतु ललिताक्रमारम्भाङ्गं अन्वारम्भणीयावत् । अतएव तस्मिन् वाक्ये ' ललिताक्रममारभेत ' इति श्रुतम् । स्वकर्तृकोपास्तिक्रियाध्वंसानधिकरणक्षणसंबन्धिक्रमं निर्वर्तयिष्यइति संकल्पएव आरंभपदार्थः । अयं सकृदेव । अतोनावृत्त्यापत्तिः ॥

एतेन ब्राह्मे मुहूर्ते गणपत्युपासनाङ्गत्वेन हृदयकमले गणेशध्यानं ललितोपास्तौ तस्याध्यानं चैककाले प्राप्तं विरुद्धमितिशंकाऽपि निरस्ता ॥

एवं श्यामायाअप्यङ्गत्वं श्यामोपास्तिखण्डे " तस्याः प्रधानसचिवपदं श्यामा " इत्यनेन, कोलमुख्याश्च तत्सपर्याखण्डे " महाराज्ञ्याः दण्डनायिकास्थानीया " इत्यनेन, परायाश्च " सिंहासनविद्यायाः हृदयं " इत्यनेन च सुस्पष्टम् ॥

तस्मादिमाअङ्गदेवताः । तासां क्रमसहितं प्रधानदेवतायाः क्रमं कृत्वा इत्यर्थः फलितः ॥

---

१ इदं ७ खण्डे श्रीवाराहीक्रमे-१ सूत्रस्थम् ।

यद्यपि प्रधानदेवतोपास्तौ इमाः अङ्गदेवताइति अङ्गपदेन व्यवहारोभवतु। प्रकृत-पूजायां [१]पञ्चापि समप्रधानानि। अन्यत्र कॢप्ताङ्गत्वं गृहीत्वा तेनैव रूपेण गणपत्यादीन् बोधयित्वा सहशब्देन सर्वेषां तन्त्रानुष्ठानमात्रं विधीयते। तन्त्रे सति देवताक्रमः पाठक्रम एव।

अग्रे वक्ष्यमाणयावदङ्गकलापोनामातिदेशेन प्राप्तः। तत्राङ्गानां येषां तन्त्रं संभवति तेषां तथैवानुष्ठानम्। येषां विरुद्धधर्माणां न संभवति तेषां पदार्थानुसमयेन[२]। येषां च पदार्थानुसमयोन संभवति तेषां काण्डानुसमयेन। यथायथं बुद्धिमता हि कार्यं, ग्रन्थ-विस्तरभयान्नेह लिख्यते ॥

[३]क्रमं प्रवर्त्येत्यनेनैव होमस्य प्राप्तौ हुत्वा[४] इति होमोत्तरकालस्य शिष्याह्वानाङ्गता सिद्ध्यर्थम् ॥

यद्यप्यग्रे क्रमावसरे होमस्य वैकल्पिकत्वात् अत्रापि विकल्पेन प्राप्तौ नित्यत्वद्योतनाय हुत्वेत्यपि वक्तुं शक्यम्; तथाऽपि अग्रे "गणपति-ललिता-श्यामा-वार्ताळी-परा-पात्रबिन्दुभिः तमवोक्ष्य" इति वचनात् क्रमसमाप्तिर्नास्तीति सिद्धम्। तर्हि कदा शिष्याह्वानं कार्यमिति कालाकांक्षासत्त्वात् तद्विधानमेवोचितं, न तूभयविधिः वाक्यभेदप्रसङ्गात्। होमस्याकरण-पक्षेऽपि तदुपलक्षितकालोत्तरत्वं संभवति, "वत्सैरमावास्यायाम्" इतिवत्

एतेन निबन्धे विशेषपात्रविसर्जनान्ते शिष्यमाहूयेति निरस्तः। सर्वेषां विशेषार्घ्य-पात्रोद्वासनेन तच्छेषाभावेन पात्रपञ्चकसामान्यार्घ्योदकबिन्दुभिः तमवोक्ष्येति स्वलेखनस्यैव सन्दर्भविरुद्धत्वाच्च ॥

वस्तुतस्तु हुत्वेति स्वात्मनि हविश्शेषं हुत्वेत्यर्थः स्वरसः। अतएव तादृशाहुतिजनित तरुणोल्लासवान् इति वक्ष्यमाणः स्वरसः तरुणोल्लासोऽवस्थाविशेषः। तस्य विवरणं चरणखण्डव्याख्याने [५]स्पष्टम् ॥

शिष्यमाहूय इत्यनेन तावत्पर्यन्तं शिष्यस्यान्तःप्रवेशोनास्तीति ज्ञापितम्। तन्नाम संबुद्ध्यन्तमुच्चार्य एहीति वदेत्। यथा प्रवर्ग्ये गवामाह्वानं कर्माङ्गम् इदमपि तथा कर्माङ्गम्। तेनोपायान्तरेण आगमनविषयं स्वाभिप्रायं न प्रकटयेत् इत्यर्थः ॥

---

१ अत्र पञ्चशब्देन, गणपति, ललिता, श्यामा, वार्ताली, परेति पञ्चकं-ज्ञेयम्-

२ इदं पदार्थानुसमयकाण्डानुसमयलक्षणं-द्वि. परिशिष्टे ८-विषयेद्रष्टव्यम—

३ क्रमं प्रवर्त्य-इत्यादि, अनुगत ५३-पत्रस्थ-३४-सूत्रस्थं पदम्-

४ इदमप्यधस्ताद्द्रष्टव्यम्-

५ इदं-१०-खण्डे-८२-सूत्रे-१८-खण्डे-१८-सूत्रेच, किञ्चित् किञ्चित्-

एतेन निबन्धे वरणानन्तरं तदैव सशिष्योविविक्तं दीक्षाप्रदेशमासाद्येति लेखः परास्तः ; समीपवर्तिशिष्यस्य आह्वानासंभवात् नच अदृष्टार्थम् आह्वानम् इति वाच्यम् ; दृष्टे संभवति अदृष्टकल्पनायाअन्याय्यत्वात् ॥

शेषं स्पष्टम् ॥

अत्र पात्रपदेन[१] विशेषार्घ्यपात्रं ग्राह्यम् । कथमेतदिति चेत्--इत्थम् । यदि सामान्यार्घ्यपात्रमेव स्यात् तस्य प्रणीतावत् तन्त्रसिद्धेः तस्य सर्वसंबन्धिनएकत्वात् सामान्यार्घ्यबिन्दुभिरिति लघु सूत्रितं स्यात् । नच त्वत्पक्षेऽपि विशेषार्घ्यपात्राणां बिन्दुभिरिति लघुसूत्रसंभवात् गणपतिललितेत्यादिप्रयासोव्यर्थइति वाच्यम् ; एवं सति विधेयसंख्यावाचकबहुत्वस्य त्रित्वे कपिञ्जलाधिकरणन्यायेन पर्यवसानात् पञ्चपात्राणामलाभएव । न च एवमपि पञ्चविशेषार्घ्यपात्रैरिति लघुसूत्रं संभवति इति वाच्यम् ; न वयं सूत्रे अक्षराधिक्यं न्यूनत्वं वा हेतुत्वेनोपदिशामः, किं तु सामान्यार्घपक्षे तस्यैकत्वात् पराऽऽन्तं व्यर्थम् । विशेषार्घ्यपक्षे पञ्चपात्रलाभायेति सार्थकम् । अक्षराधिक्यं च स्वतन्त्रेच्छेषु नियन्तुमशक्यम ॥

वस्तुतस्तु न प्रणीतावत्तन्त्रं, सामान्यपात्रस्य गणपतिललिताऽऽदिषु सामान्यार्घ्यसंस्कारस्य एकरूपत्वाभावात् , भिन्नधर्मयोः तन्त्रासंभवात् । न च भिन्नधर्माणां प्रधानानां कथं तन्त्रमिति शंक्यम् । प्रधानानां सहानुष्ठानं तन्त्रं, न तु सकृदनुष्ठानम् । इह तु सकृदनुष्ठानमुक्तम् अयुक्तमेव, सहानुष्ठानं तु भवत्येव । अतोनेदं गमकं पात्रपदेन विशेषार्घ्यग्रहणे, किंतु हुत्वा तरुणोल्लासवानित्युक्त्वा पश्चात् पात्रबिन्दुभिरित्युक्तत्वात् होमसाधनीभूतद्रव्यं बुद्धिस्थं पात्रपदेन लक्ष्यते, नत्वबुद्धिस्थं सामान्यार्घ्यद्रव्यम् । किंच बिन्दुशब्दोमुख्यद्रव्ये तान्त्रिकाणां संकेतसिद्धः, " बिन्दुतर्पणसंतुष्टा " इति ललितासहस्रनाम्नि व्यवहारात् । अतएव बिन्दुशब्दोऽपि गमकः । इत्थं च विशेषार्घ्यग्रहणे इदमेव ज्ञापकम् ॥

तं शिष्यम् अवोक्ष्य प्रोक्ष्य । इदं शिष्यसंस्काररूपत्वात् गुरुकर्म । शेषं सुगमम् ॥

एतेन निबन्धे गणपत्यादिमूलमुच्चारयन् पात्रपंचकसामान्यार्घ्योदकबिन्दुभिः तमवोक्ष्य इति या पङ्क्तिः तत्र मूलमुच्चारयन्निति स्वकपोलकल्पिता सर्वा निर्मूला ॥

सिद्धान्तं सिद्धांतप्रतिपादकवाक्यसमूहं पूर्वोक्तं[२] श्रावयित्वा । इदं श्रावणम् अदृष्टार्थं " कृप्तीर्वाचयति " इतिवत्, नाऽर्थज्ञानार्थम् अतिगहनस्यार्थस्य तावता कालेन बोधासंभवात् । तस्मात् पूर्वोक्त[२]वाक्यानि दीक्षाऽपूर्वसहकार्यपूर्वजनकत्वेन श्रावयेत् ॥ ३४

१ पात्रशब्देनात्रानुगत ५३-पत्रस्थ-३४-सूत्रस्थ-पात्रबिन्दुभिरित्येतत्पदस्थ, पात्रशब्दोत्रग्राह्यः
२ पूर्वोक्तशब्देन अनुगत-३-सूत्रतः-३१-सत्रान्तोक्तज्ञानशिक्षादिवाक्यानीत्यर्थः-

शाम्भवी दीक्षा

अथ शाम्भवीदीक्षामाह--

**तच्छिरसि रक्तशुक्लचरणं भावयित्वा तदमृतक्षालितं सर्वशरीरमलङ्कुर्यात् ॥ ३५ ॥**

तच्छिरसि शिष्यस्य शिरसि । रक्तशुक्लचरणं—रक्तं कामेश्वर्याः रजस्स्वभावात् । तदुक्तं—"रक्तचरणां ध्यायेत् परामम्बिकाम्" इति । श्यामारहस्येऽपि—

रक्तं तु चरणं देव्यारजोरूपं प्रकीर्तितम् ।
शुक्लं च तदधिष्ठानचरणं सात्त्विकं भवेत् ॥ इति ॥

एतेन शुक्लचरणमपि व्याख्यातम् । प्राण्यङ्गत्वादेकवद्भावः भावयित्वा ध्यात्वा तदमृतं चरणसंबन्धि यदमृतम् उदकं तेन क्षालितं नाशितं सर्वपातकं यस्य । ईदृशं शिष्यं कुर्यादित्यर्थः । यद्यप्यन्यपदार्थस्य शिष्यस्य करणं न संभवति, तथाऽपि "सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामतः" इति न्यायेन शिष्यविशेषणस्य पापनाशस्य करणं संभवतीति भावः । तस्य सर्वं यावच्छरीरं गन्धवस्त्रभूषणकुसुमादिभिः गुरुः अलङ्कुर्यात् भूषयेत् ॥ ३५ ॥

शाक्ती दीक्षा

शाक्तीं दीक्षामाह--

**तस्यामूलमाब्रह्मबिलं प्रज्वलन्तीं प्रकाशलहरीं ज्वलदनलनिभां ध्यात्वा तद्रश्मिभिस्तस्य पापपाशान् दग्ध्वा ॥ ३६ ॥**

तस्य शिष्यस्य मूलं पायूपस्थमध्यवर्तिचतुर्दलकमलाधारदेशः तन्मर्यादति आमूलम् । एवम्—अधोमर्यादामुक्त्वा ऊर्ध्वमर्यादामाह—ब्रह्मबिलं सहस्रदलकमलाधारभूतं मर्यादा अस्येति आब्रह्मबिलं प्रज्वलन्तीम्, अतएव प्रकाशानां लहर्यः ऊर्मयोयस्यां तादृशीम्, अतएव ज्वालायुक्तोयोऽनलोऽग्निः तन्निभां तदुपमां ध्यात्वा, संविदमिति शेषः । ज्वलदनलनिभत्वादेव पापपाशदाहकत्वमुपपन्नम् । पापपाशस्य दाहएव न भावनम्—अतएव दग्ध्वेति ॥

यद्यपि अत्रत्यपाठक्रममनुसृत्य आदौ शाम्भवी ततः शाक्तीति प्रतिभाति, तथाऽप्युपक्रमे दीक्षाविभागवेलायां शाक्ती शाम्भवी मान्त्री चेति चोक्तत्वात् उपक्रमानुसारेण उपसंहारोऽन्यथा नेयः वेदोपक्रमाधिकरणन्यायेन । अतएव तत्पाशदाहानन्तरं तद्भस्मरूपमलस्य

सत्त्वात् चरणनिर्गतजलेन तत्क्षालनरूपार्थवत्त्वादर्थक्रमोऽप्युपपन्नः। तथाचादौ शाक्तीं दीक्षां संपाद्य पश्चाच्छाम्भवीं कुर्यादिति सिद्धम्॥

"गुरुः क्रमं प्रवक्ष्ये" इत्यारभ्य "सिद्धान्तं श्रावयित्वा" इत्येतदन्तोऽङ्गकलापोऽनयोरेव प्रकरणसन्निधिभ्यां, शुन्धनमन्त्रस्येव साम्नाय्ये, इति केचित्। तन्न। तथा सति तृतीयायां दीक्षायाम्—उत्तरत्र "प्रथमसिक्तान् द्वितीयखण्डाग्रान् ग्रासयित्वा" इति विहितं, तदनुपपन्नम्, साङ्गक्रमविधेः तदनङ्गत्वेन तत्र क्रमप्राप्त्यभावेन प्रथमद्वितीययोरभावात्। न च असंस्कृतं लौकिकं ग्रहीतुं शक्यम्। तस्मात् लिङ्गेन सन्निधिं बाधित्वा त्रयाणाम् अङ्गम्। इत्थं च यदा एकैकां वेति पक्षानुसरणं तदा तृतीयदीक्षायां पूर्वोक्तान्यङ्गान्यनुष्ठेयानि॥

एतेन निबन्धे "अमृतक्षरणेन बाह्यमाभ्यन्तरं च मलं दूरीकुर्यात्, अथ शिष्यस्यामूलाधारमित्यारभ्य तत्किरणैः[1] तस्य पाशान् दहेत्" इत्यस्य द्वितीयत्वं लिखितं निरस्तम्। पूर्वदीक्षयैव बाह्याभ्यन्तरमलदूरीकरणे आस्मिन् मलस्याभावेन उत्तरदीक्षया दाहासंभवाच्च। न च पूर्वदीक्षया दूरीकृतं मलं बहिस्तिष्ठति तस्योत्तरदीक्षया दाहइति वाच्यम्; शरीरे विभाविताग्निना शरीरस्थमलस्यैव नाशोभवेत् न दूरीकृतस्य। तस्मादस्मत्सरणिरेव साध्वीति युक्तमुत्पश्यामः॥ ३६॥

### मान्त्री दीक्षा

मान्त्रीदीक्षाप्रयोगं वक्तुमुपक्रमते—

**त्रिकटु[1]त्रिफला[2]चतुर्जात[3]तक्कोल[4]मदयन्ती[5]सहदेवी[6]दूर्वा[7]भस्म[8]मृत्तिका[9]-चन्दन[10]कुङ्कुम[11]रोचना[12]कर्पूर[13]वासितजलपूर्णं वस्त्रयुग[2]वेष्टितं नूतनकलशं बालाषडङ्गेनाभ्यर्च्य श्रीश्यामावार्तालीचक्राणि निक्षिप्य तिसृणामावरणमन्त्रैरभ्यर्च्य संरक्ष्यास्त्रेण[3] प्रदर्श्य धेनुयोनी॥ ३७॥**

त्रिकटुः पिप्पलीशुण्ठीमरीच्यः। त्रिफलाः हरीतकीधात्रीविभीतक्यः। तदुक्तं वैद्यसारे—

शुण्ठीमरीचिपिप्पल्यः प्रोक्तास्त्रिकटुसंज्ञकाः।
त्रिफलेति समाख्याता पथ्याधात्रीविभीतकैः॥ इति॥

चतुर्जातं उशीरैलालवङ्गनागकेसराणि। तदुक्तं मदनमहार्णवे—

---

१. तस्याः प्रकाशलहर्याः किरणैरित्यर्थः—

२ नवीनवासो—अ. श्री.

३ अस्त्रधेनुयोनिप्रभृत्यनेकमुद्रोद्धारज्ञानाय. द्वि. परिशिष्ट–१५ विषयः स्वतन्त्रोदश्यः

लवङ्गमेलोशीरं च त्रिसुगन्धं प्रकीर्तितम् ।
नागकेसरसंयुक्तं चतुर्जातं प्रचक्षते ॥ इति ॥

[1]तक्कोलः——मरीचिसदृशः ताम्बूलेन सह भक्ष्यः शैत्योपचारहेतुः वस्तुविशेषः । मदयन्ती सहदेवी वैद्यके प्रसिद्धे आरण्यके । दूर्वा भस्म मृत्तिकाः प्रसिद्धाः ॥

यत्तु मृत्तिकापदेन निबन्धे सप्तमृत्तिकाग्रहणं तन्निर्मूलम् । यदि मृत्तिकापदेन सर्वत्र सप्तमृत्तिकाग्रहणं, तर्हि मूलनक्षत्रजननशान्तौ—"सप्तमृद्भिः समायुक्तं पञ्चपल्लवसंयुतम्" इत्यत्र सप्तग्रहणं व्यर्थम् । एवं "स्नानार्थं मृदमाहरेत्" इत्यत्रापि तथाऽऽपत्तिश्च ॥

एतैर्युक्तमिति जलेनसाकं मध्यमपदलोपसमासः, वासितमित्यनेन दूर्वाऽऽदीनामन्वयासम्भवात् । चन्दनं प्रसिद्धम् । कुङ्कुमं काश्मीरम् । रोचना गोरोचनम् । कर्पूरं प्रसिद्धम् । एतैर्वासितं यज्जलं तेन पूर्णं, वस्त्रयुगेन वेष्टितं नूतनम्—अभुक्तं कलशं बालाषडङ्गेन,[2] ऐं हृदयाय नमः इति क्रमेण बीजत्रयद्विरावृत्त्या अग्रे[3] वक्ष्यमाणरीत्या अग्नीशासुरवायुकोणेषु मध्ये पूर्वादिदिक्षु च क्रमेण । अत्र षडङ्गनाम्ना उक्तधर्मातिदेशः । श्रीश्च श्यामा च बार्ताली चेति तासां चक्राणि निक्षिप्य स्थापयित्वेत्यर्थः । कुत्रेत्याकांक्षायां समीपवर्तित्वात् कलशे एव । तत्रापि न पूर्णपात्राद्युपरि, निक्षिप्येति स्वारस्यात्, किं तु [4]जले एव ॥

यद्यपि उद्धरणस्यानुक्तत्वात् योग्यताबलाच्च कलशसमीपदेशे इत्यपि वक्तुं शक्यम्; तथाऽपि पूजायां भूमौ चक्रस्थापनंविना पूजाऽसंभवेनार्थापत्त्याऽतिदेशेन वा स्थापनस्य प्राप्तत्वेन क्षिप्त्वेत्यस्य वैय्यर्थ्यभिया जले प्रक्षेपआवश्यकः ॥

न च यत्र क्वचन स्थापनम्——अर्थापत्त्यादिना प्राप्तं न कलशसमीपदेशे, तदर्थं तत् इति वाच्यम्; कलशसमीपदेशापेक्षया कलशस्यैव आधारत्वकल्पने लाघवात् ॥

किं च कलशसमीपस्थचक्रपूजा न कलशसंस्कारोभवितुमर्हति, तदसंयुक्तत्वात् । अत्र पूर्वं षडङ्गैरभ्यर्च्येति कलशसंस्कारः । संरक्ष्यास्त्रेणेत्यादिरपि तथा । उभयतः सन्दष्टं कथं तत्संस्कारभिन्नं विजातीयं भवेत् । ततोजलएव चक्राणां क्षेपः, तत्रैव पूजनं, पूजाऽऽरम्भसमयएव जले प्रक्षेपः । तेन आवाहनोत्तरं कथं चक्रचालनमिति शङ्काऽनवकाशः ॥

---

१ तक्कोलः गुर्जरदेशे-चिनीकबाला-इति नाम्ना-सुविदितः अत्र च प्रायः कङ्कोलशब्दोत्रधेयः

२ एतच्छ्रीश्रीबालात्र्यक्षरीमन्त्रषडङ्गन्यासप्रात्यक्ष्यतद्देवतामन्त्रोद्धारणर्षिच्छन्दोविषयादिज्ञानाय, द्वि. परिशिष्टे-९-वि. दृश्यः

३ अग्रेनाम, मन्त्रनिर्देशमन्तरा, षडङ्गन्यासकरणेतिकर्तव्यतामात्रं त्वग्रे-३-खण्डे श्रीक्रमे १९ सूत्रे तद्भाष्ये चास्तीत्यतोऽवगम्यम्-प्रत्यक्षंतु-द्वि-प-शि. ९-विषये विद्यते—

४ अत्र जले एव नाम-कलशस्थजले एवेति बोध्यम्-

यद्वा—कलशे क्षिप्त्वेति वचनं "विसर्जनपर्यन्तं न चालयेत्" इत्यस्य बाधकं भवितुमर्हति। युक्तश्चायमेव पक्षः। अन्यथा साङ्गं क्रमं निर्वर्त्येत्यस्य समीपएव कलशे निक्षिप्येति वदेत्॥

तिसृणां[1] ललिताऽऽदीनाम् आवरणमन्त्रैरित्यनेन केवलपञ्चोपचारपूजाव्यावृत्तिः। अभ्यर्च्य पूजयित्वा॥

इदं पूजनम् अपूर्वम् अनेन विधीयते। पूजनोत्तरम् उद्धरणम् आर्थिकम्। पूजनं तु कुलद्रव्येणैव तत्तद्विशेषार्घ्यपात्रस्थेन कुसुमाक्षतैश्च, अपूर्वपूजामात्रविधानात्। तावन्मात्रं कृत्वा चक्रोद्धरणं कार्यम्। जलादुद्धृतचक्राणामुपरि गन्धपुष्पाक्षतनिक्षेपोन्यायसिद्धः॥

[2]अस्त्रेण फट् इति मन्त्रेण संरक्ष्य रक्षोभूतपिशाचानां दुराधर्षं कृत्वा। धेनुयोनिमुद्रे प्रसिद्धे, ते प्रदर्श्य तदुपरि कृत्वा॥ ३७॥

### मातृकायन्त्रम्

[3]मातृकायन्त्रमाह—

**शिवयुक्सौवर्णकर्णिके स्वरद्वन्द्वजुष्टकिञ्जल्काष्टके**
**क च ट त प य श ळाक्षरवर्गाष्टयुक्ताष्टदले**
**दिगष्टकस्थित ठं वं चतुरश्रे मातृकायन्त्रे[4] शिष्यं निवेश्य**
**तेन कुम्भाम्भसा तिसृभिः विद्याभिः स्नपयेत्॥ ३८॥**

शिवोहकारः तेन युक्तः सौवर्णः सौ—इति वर्णः सः कर्णिकायां कमलमध्यदेशे यस्य एतादृशे। अत्र पूर्वोक्तवर्णोपरि विसर्गोऽपि योजनीयः, "व्योमेन्द्वौरसनार्णकर्णिकम्—" इति श्रीशङ्करभगवत्पादैः उक्तत्वात्[5]। इमानि सर्वाणि कमलविशेषणानि। स्वराः अकारादि-विसर्गान्ताः षोडश तेषां द्वंद्वं द्वयं द्वयं तेन जुष्टं युक्तं किञ्जल्काष्टकं पत्रयुगमध्यवर्तिदेश-विशेषः यस्येति बहुव्रीहिः। कश्च चश्च टश्च तश्च पश्च यश्च शश्च ळश्च इति द्वन्द्वः, द्वन्द्वान्ते श्रूयमाणं प्रत्येकं संबध्यते इति न्यायेन वर्गपदं सर्वैः सम्बध्यते। तथा च कवर्ग-

१ इमाः श्रीललितादयास्तिस्रोदेव्यः—अनुगते—५३—पत्रे ३४ सूत्रोक्ताः श्रीललिताश्यामावार्ताह्यः-इति-ज्ञेयाः—

२ एतदस्त्रमुद्रार्थं तत्पुरतःस्थधेनुयोनिमुद्रार्थंच. द्वि. प. शि. $\frac{१५\text{-}७}{१४}$ $\frac{१५\text{-}८}{१\text{-}२}$ $\frac{१५\text{-}८}{२}$ वि. दृश्याः

३ तदनन्तरकृत्यमाह—अ, श्री.

४ अग्रस्तनभाष्यावलोकनेनेदं, मातृकाचक्रं-सुविदितमेव-स्यात्—

५ एवंच-हसौः—इति, निष्पन्नं-ज्ञेयम्—

मारभ्य पवर्गपर्यन्तं पञ्च पञ्च वर्णाः यवर्गश्चत्वारः शवर्गोऽपि तथा ळक्ष इति ळवर्गः एवम्—अष्ट-वर्गैर्युक्तानि अष्टदलानि यस्येति बहुव्रीहिः। एकैकदले एकैकं वर्गं लिखेत् इति फलितार्थः॥

केसरेषु दलेषु च वर्णलेखने क्रमाकांक्षायां प्राच्यादिक्रमएव धर्तव्यः। यद्यपि दल-केसरयोः द्वयोरपि प्राची न संभवति, तथाऽपि पद्मकुण्डलेखनप्रकारेण लेखने कर्णिकायाः प्राची, तदनुसारेणैव दलेषु वर्णलेखनक्रमोऽनुसन्धेयः॥

दिशां यदष्टकं प्राच्यादीशानदिगन्तं तेषु स्थितौ वकारठकारौ यस्मिन् ईदृशं चतुरश्र यस्मिन्निति बहुव्रीहिः। ईदृशे मातृकासंज्ञके यन्त्रे शिष्यं निवेश्य स्थापयित्वा॥

तदित्थं—पद्मकुण्डवदष्टदलं पद्मं विलिख्य तद्बहिर्द्वाररहितं चतुरश्रं विलिख्य कर्णिकायां ह्सौः इति विलिख्य प्रागादिकेसरेषु अ आ इति क्रमेण स्वरद्वयमेकैककेसरे स्वरमेकं विलिख्य पत्रान्तः पूर्वोक्तस्थाने[२] काद्यष्टवर्गान् प्रत्येकम्—एकैकस्यान्तः एकैकं वर्गं विलिख्य तद्बहिश्चतुरश्रे[१] प्रागादिदिगष्टके वं ठं—इति लिखेदिति समुदितार्थः। तदुक्तं भगवत्पादैः—

व्योमेन्द्वौरसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्केसरं
पत्रान्तर्गतपञ्चवर्गयशळार्णादित्रिवर्गं क्रमात्।
आशास्वश्रिषु लान्तलाङ्गलियुजा क्षोणीपुरेणावृतं
वर्णाब्जं शिरसि स्थितं विषगदप्रध्वंसि मृत्युञ्जयम्॥ इति॥

व्योम हकारः, इन्दुः सकारः, औ स्वरूपं, रसनार्णं विसर्गः, लान्तोवकारः, लाङ्गलिः ठकारः, शेषं स्पष्टम्॥

तिसृभिः श्रीश्यामावा[३]र्तालीविद्याभिः स्नपयेत्, सर्वाङ्गे जलसंयोगोयथा भवति तथा कुर्यात्। तेनेतिविशेषणात् उदकान्तरमपर्याप्तौ न ग्राह्यमिति सूचितम्। अयमेव पूर्णा-भिषेकइत्युच्यते॥ ३८॥

मान्त्रींदीक्षामुपसंहरति—

**सदुकूलं सालेपं साभरणं समालं सुप्रसन्नं शिष्यं पार्श्वे निवेश्य मातृकां तदङ्गे विन्यस्य विमुक्तमुखकर्पटस्य तस्य हस्ते त्रीन् प्रथमसिक्तान् चन्दनोक्षितान् द्वितीयखण्डान् पुष्पखण्डान्निक्षिप्य तत्त्वमन्त्रैर्ग्रास-यित्वा दक्षिणकर्णे बालामुपदिश्य पश्चादिष्टमनुं वदेत्॥ ३९॥**

---

१ अत्रागामिग्रन्थेच अस्रशब्दोदन्त्यसकारान्तोज्ञेयः

२ पूर्वादिदिक्स्थपत्रमध्यविभागाश्रयेणेति ज्ञेयम्—

३ अत्र वार्तालीशब्देन-वाराही-ज्ञेया—। विद्याशब्देन च-तासां तिसृणां मूलमन्त्राज्ञेयाः—

सदुकूलमित्यादि पार्श्वे निवेश्येत्यन्तः स्पष्टार्थः । [1]बहिर्मातृकान्यासः स्वाङ्गे तन्त्रान्तरोक्तोयथा क्रियते तद्वच्छिष्याङ्गे विन्यस्य विमुक्तमुखकर्पटस्य पूर्वं मुखं येन बद्धं विमुक्तं मुखवस्त्रं यस्य तस्य हस्ते ॥

इदं दीक्षात्रयस्य तन्त्रपक्षे । केचिन्मतानुसारेण क्रमिकदीक्षापक्षे तत्तद्दीक्षाऽन्ते विसर्गः ॥ यद्वा—सूत्रकारस्य तन्त्रदीक्षायाएव अभिमतत्वात् तन्त्रपक्षे एव मुखबन्धनम् ॥

प्रथमसिक्तान् अत्र प्रथमम्–असंस्कृतम्–, " आज्येन यूपमनक्ति " इतिवत् । एवमेव द्वितीयं, " जाघन्या पत्नीः संयाजयन्ति " इतिवत् ॥

वस्तुतस्तु—क्रमस्य पूर्वं विधानात् तच्छेषस्य संस्कृतस्य विद्यमानत्वात्, प्रायणीयस्य निष्कासे उदयनीयमभिनिर्वपति इतिवत् उपयोक्ष्यमाणसंस्कारार्थं तावत्कालं पात्रविसर्जनमकृत्वा स्थापितत्वात् संस्कृतप्रथमसिक्तद्वितीयखण्डानामेव दानं, न त्वसंस्कृतस्य ॥

बहुवचनेनैव कपिञ्जलन्यायेन त्रित्वलाभे त्रीनिति पुनर्विशेषणात् सकृदेव त्रयाणां न निक्षेपः, किन्त्वेकैकमिति, " द्वौ परिधी परिदधाति " इतिवत् ॥

तत्त्वमन्त्रैः आत्मतत्त्वं शोधयामि नमः स्वाहा, विद्यातत्त्वं शोधयामि नमः स्वाहा, शिवतत्त्वं शोधयामि नमः स्वाहा, इति त्रिभिः । ग्रासयित्वेति णिजन्तश्रवणात् आचार्यानुज्ञाऽनन्तरं भक्षणम् । बालां त्र्यक्षरीम् । उपदिश्येत्यन्तमङ्गम् । इष्टमनुं पञ्चदशीषोडशीरूपं वदेत्, उपदिशेदित्यर्थः[2] ॥

ननु नायं षोडश्याउपदेशविधिः, मनुम्—इत्येकवचनेन केवलपञ्चदश्याएव विधिः । न च वैपरीत्ये किं विनिगमकम्—इति वाच्यम् ; बालोपदेशानन्तरं पञ्चदश्याएव प्रसक्तत्वेन एकवचनेन तस्यैव ग्रहणात्[3] । किं च अस्मिन् तन्त्रे यदि षोडश्युपदेशोऽभिमतः स्यात् तर्हि तदुद्धारं कुर्यात् । यतोऽस्मिन्ननुद्धारः अतएवानभिमतइति चेत्–न । [4]न हि सर्वत्र विधेयविशेषणानां संख्यावाचकानां विवक्षायामपि प्रकृत्यर्थएवान्वयः इति नियमः, तदवच्छेदकेनाप्यन्वयस्य दृष्टत्वात् । तथा च जात्यन्वितमेकवचनमुपपन्नम् । तथा सति कथं तदनुसारेण षोडशीनिवृत्तिः । अन्यथा " ब्राह्मणं न हन्यात् " इत्यत्र ब्राह्मणद्वयहननिषेधः न स्यात् । अस्तु वैकवचनविवक्षा । तथाऽपि न षोडशीनिवृत्तिः, वचनानुसारेण वरिष्ठायाः

---

१ अयंन्यासोमहानिर्वाणतन्त्राद्यनेकतन्त्रग्रन्थस्थएवग्राह्योनाधुनिकपुस्तकात्–

२ इतएतत् ३९ सूत्रटीकान्तं दीक्षाविधौ, पञ्चदशीषोडश्युभयग्रहणकः शास्त्रार्थः–

३ ' न विनिगमनाविरहः ' इत्यधिकः—ब २.

४ " नहि एकवचनानुसारेण तदसिद्धिः " इत्यधिकः–ब २.

एकस्याः षोडश्याउपदेशानन्तरं पश्चात् श्यामारश्मिमालाऽऽदिविद्योपदेशावसरे पञ्चदश्युपदेशे बाधकाभावात् । अनुद्धारादग्रहणमिति यत् तदपि न । पञ्चदश्याअपि अनुद्धारेण तस्याः अप्युपदेशोन स्यात् ॥

न च मूलाधारे विभावनीयरश्मिपञ्चकमध्ये मादनशक्तीत्यनेन सोद्धृतेति वाच्यम्; सा पञ्चदशी न सर्वसाधारण्येनोद्धृता, किंतु[1] रश्मिपञ्चकावयवरूपा । अतएव तत्र तस्याः महाविद्येत्युक्तम् । अन्यथा तस्याइत्यस्य सार्थक्यं ब्रह्मणाऽपि दुरुपपादम् । अतः पूर्वप्रतिपादिताङ्गोपाङ्गप्रत्यङ्गपादुकासहितविद्या एका । तदवयवभूता विद्या कथं प्रधानभूता भवेत् ॥

किं च--स्वतन्त्रे अनुद्धृतं न ग्राह्यम्—इति किं सूत्रकाराभिप्रायोनिष्कास्यते, अथवा स्वतन्त्रे अनुद्धृतं न ग्राह्यम्—इति वचनान्तरेण निष्कास्यते ?

नाद्यः, एतादृशाभिप्रायनिष्कासकलिङ्गस्य सूत्रे अभावात् । किंच--बालामन्त्रस्त्र्यक्षरोन कुत्राप्युद्धृतः स्वयं च बालामुपदिश्येति वदति । एतेनानुद्धृतोऽपि ग्राह्यइति सूत्रकाराभिप्रायः सुस्पष्टः । न च [2]रश्मिमालासु श्रियोऽङ्गत्वेन नवार्णबालायाउद्धृतत्वेन बालामुपदिश्येत्युक्ते सैव ग्राह्या इति वाच्यम् । यदि नवाक्षरीविद्या बालापदेन विवक्षिता तर्हि अग्रे [3]पञ्चदशनित्यामन्त्रोद्धारे " कुमारी कुलसुन्दरी " इति कुलसुन्दरीमन्त्रे कुमारीवर्णसादृश्यविधानेन तत्रापि नवार्णत्वप्रसङ्गः । इष्टापत्तौ दूषणं कुलसुन्दरीमन्त्रोद्धारे वक्ष्यामः । एवं श्रीविद्यान्यासप्रकरणे बालाद्विरावृत्त्या कॢप्तषडङ्गइत्यत्र नवार्णाद्विरावृत्त्या षडङ्गन्यासस्तु सर्वसंप्रदायविरुद्धः । तस्मान्न नवार्णोऽत्र बाला, किं तु त्र्यक्षर्येव । अतएव रश्मिमालायां नवार्णमन्त्रे श्रियोऽङ्गं बालेत्येवोक्तं न तु बालेति । इतोऽप्यधिकयुक्तिकलापं रश्मिमालामन्त्रोद्धारे वक्ष्यामः[4] । अतः स्यात् त्र्यक्षरी । त्र्यक्षरी बाला तु न क्वचनोद्धृता, किं तु तन्त्रान्तरे कॢप्तं गृहीत्वैवोपदिश्येति व्यवहृतम् । अपि च तत्त्वमन्त्रैः ग्रासयित्वेति सूत्रितम् । मन्त्राश्च नोद्धृताः । एवं वाराहीप्रकरणे त्रयोगुणमन्त्राः इत्यादयोनोद्धृताः । तेन न सूत्रकारस्यायमभिप्रायइति सिद्धान्तः ॥

न द्वितीयः, तादृशशास्त्रस्य कुत्राप्यनुपलब्धेः ॥

किंच—एतद्दीक्षाऽवसाने शिष्योऽपि पूर्णतां भावयित्वेति विदितवेदितव्यइति अशेषमन्त्राधिकारीति शिष्यविशेषणत्रयं श्रूयते । तत्र पूर्णत्वं गुरोर्ग्राह्यशेषरहितत्वम् । यदि

---

१ इदं रश्मिमालापञ्चकं-१०-खण्डीय-९-सूत्रतः २८ सूत्रान्तग्रन्थेस्ति ॥

२ अग्रे-१०-खण्डीयसर्वसाधारणक्रमे-२९-सूत्रे-इत्यर्थः-

३ ॥ ४- ॥ ललिता-॥ ९-सूत्रे बालाएव-कुलसुन्दरी-वा-कुमारी-वा उक्ता-

४ दशमखण्डस्थ०९सूत्रादारभ्य, पञ्चेमा-इत्यादि-२८-सूत्रान्तेन अथवा-५०-सूत्रान्तेन ग्रन्थेन वक्ष्यामइति सम्बन्धोज्ञेयः-

पञ्चदश्यैव अशेषदीक्षापरिपूर्तिः तर्हि शेषस्य षोडशीग्रहणस्य सत्त्वात् पूर्णताभावनाविधानं कथम्। एवमेव विदितवेदितव्यत्वमनुपपन्नम्॥

न च पञ्चदश्यैव सूत्रकारमते कृतार्थता पूर्णताऽस्तु तेनैव मोक्षसिद्धिरस्तु इति न काऽप्यनुपपत्तिः इति वाच्यम्; एवमप्यशेषमन्त्राधिकारीत्यत्र किं पञ्चदश्युपदेशेन षोडश्या मप्यधिकारः स्वीक्रियते, अथवा अशेषपदस्य षोडशीभिन्ने सङ्कोचः क्रियते। नाद्यः, पञ्चदश्यपेक्षया षोडश्याः अल्पफलजनकत्वापत्तेः। योगुरुकार्ये अधिकृतः सः लघुकार्ये अधिकृतोभवति। यथा योगङ्गातरणे अधिकृतः स कुल्यातरणे अधिकृतः। नतु विपरीतं लोके दृष्टम्। न द्वितीयः, सङ्कोचे मानाभावात्॥

तस्मात् एवं निष्पक्षपातेन विचार्यमाणे इष्टमन्त्रपदेन पञ्चदशीषोडश्योः ग्रहणे न किमपि बाधकं पश्यामः॥

अस्तु वा परसंतोषाय पञ्चदशीदीक्षामात्रं सूत्रकाराभिप्रेतम्। तथाऽपि तद्दीक्षावान् अल्पदीक्षावान्, तन्मण्डले षोडशीदीक्षावता तन्त्रान्तरानुयायिना न प्रवेष्टव्यं सेवकगृहे राजप्रवेशवत् इति महेश्वरानन्दनाथा आहुः। तन्न। तथाहि—दीक्षायामल्पत्वम् अल्पाक्षरमन्त्रत्वं वा किमल्पफलसाधनमन्त्रत्वम्। आद्ये श्रीविद्यादीक्षातोवाराह्याः, ततोऽपि श्यामादीक्षायाः वरिष्ठत्वापत्तिः। द्वितीये तन्त्रान्तरे षोडशीदीक्षायाः यत्फलं तदेव अस्यापि फलं श्रूयते, कृतकृत्योविदितनिखिलवेदितव्योजीवन्मुक्तोभवतीत्यादिपदैः[1] प्रतीयते। तथाच तुल्यत्वान्न न्यूनदीक्षावत्त्वम्॥

ननु तर्हि तन्त्रान्तरे पञ्चदशीदीक्षा न्यूनदीक्षा भवतीति श्रूयते। तस्य का गतिः इति चेत्—न; यस्मिन् तन्त्रे षोडशीपञ्चदश्योः समुच्चयः तस्मित् तन्त्रे पञ्चदश्याः अपरिपूर्णफलत्वात् षोडशीदीक्षायास्तथात्वात्। तन्त्रानुसारिणावुभौ, तत्रैकः पञ्चदश्या दीक्षितः, एकः षोडश्या दीक्षितः, तस्याग्रे कर्तव्यशेषसत्त्वादपरिपूर्णइति तस्य मण्डले गुरुर्दीक्षितेन न गन्तव्यमिति युक्तम्। इह तु तुल्यफलं प्रमाणेन सिद्धं, कथं गुरुत्वं लघुत्वम्। विचारयन्त्वनाग्रहेण॥

न च कारणलाघवगौरवेण फललाघवगौरवमस्त्येव इति वाच्यम्; तथा सति केवलवह्न्यर्थिनौ द्वौ। तत्रैकेन लोहपाषाणसम्बन्धेन वह्निर्निर्मितः। एकेन अरणिनिर्मथनेन निर्मितः। तत्र पूर्वापेक्षया परस्य वह्निनिर्माणे कालाधिक्यं पुरुषाधिक्यं श्रमाधिक्यमिति बहुकारणगौरवमिति तदीयवह्नेरधिकदाहजनकत्वं स्यात्। एवं बौधायनसूत्रानुसारिदर्शपूर्णमासप्रयोगा-

१ नाम, तत्तत्खण्डसमाप्तिस्थसूत्रस्थपदैरित्यर्थः—

पेक्षया आपस्तम्बप्रयोगस्य द्विगुणत्वेन आपस्तम्बसूत्रानुयायिनां द्विगुणस्वर्गोत्पत्त्यापत्तिः। आपस्तम्बसूत्रानुसारिणोबौधायनसूत्रानुयायितोगुरुतरत्वापत्तिः । तस्मादधिकफलजनकत्वातिरिक्तं गुरुत्वं दीक्षायां दुर्वचम् ॥

प्रकृते तदभावात् कथं लघुदीक्षावत्त्वं सूत्रानुयायिनः, गुरुसाधने तुल्यफलत्वेऽपि प्रवृत्तिः। स्वपूर्वगुरुपरम्पराऽऽगतसाधनमन्तरा तदधिकारिणः फलं न भवतीति शास्त्रेणैव, न फलाधिक्येच्छया । " अतिरात्रे षोडशिनं गृह्णाति ", " नातिरात्रे षोडशिनं गृह्णाति ", इत्यादौ फलतारतम्यव्यवस्थापनं च तादृशशास्त्राभावादधिकारिभेदेन व्यवस्थासंभवाद्युक्तम् । तस्मादत्र न न्यूनाधिकदीक्षाभावइति । सुधीभिः शेषमूह्यम् ॥

अयं पक्षः परतुष्टये अंगीकृत्य चालितः । वस्तुतस्तु इष्टमन्त्रपदेन षोडशीग्रहणे बाधकाभावउक्तः प्राक् ॥

न च उषःकालक्रियायां कादिं हादिं वा मूलविद्यां मनसा दशवारमावर्त्येत्यत्र कादिं हादिं वेति विद्याविशेषणं अत्र षोडश्यभावे लिङ्गम् इति वाच्यम्; ताभ्यां विशेषणाभ्यां उषःकालक्रियासन्निधौ पठिताभ्यां तदङ्गत्वेन षोडशी निवर्ततां कामं, तथाऽपि सर्वत्र षोडशीं निवर्तयितुं तयोः का शक्तिः । आरामगमनकाले अश्वमानय इति राज्ञोवाक्येन आरामगमनसाधनशिबिकाऽऽदियानबाधेऽपि अश्वपदघटितं वाक्यं सदा यानान्तरं न बाधितुं समर्थं भवति ॥

तस्मात् षोडश्युपदेशः आवश्यकः सूत्रानुयायिनामपि । इतोऽप्यधिकं सुधीभिराग्रहं परित्यज्य विचार्यम् । धर्मतत्त्वविवेचने स्वमतपक्षपातोनरकायैव भवेत् इत्यलं भूयसा ॥३९॥

### शिष्यनामनिर्देशः

गुरुकर्तृकं कर्मशेषं वदति—

**ततस्तस्य शिरसि स्वचरणं निक्षिप्य सर्वान् मन्त्रान् सकृद्वा क्रमेण वा यथाऽधिकारमुपदिश्य स्वाङ्गेषु किमप्यङ्गं शिष्यं स्पर्शयित्वा तदङ्गमातृकावर्णादि द्व्यक्षरं त्र्यक्षरं चतुरक्षरं वा आनन्दनाथशब्दान्तं तस्य नाम दिशेत् ॥ ४० ॥**

ततः इत्यनेन वक्ष्यमाणानां धर्माणाम् उत्तराङ्गत्वं सूचितम् । स्वस्य गुरोः चरणम् "अनादेशे दक्षिणं प्रतीयात् " इति परिभाषया दक्षिणचरणमेव न्यसेत् । सर्वान् मन्त्रान् प्रकरणेन सर्वपदसङ्कोचे " सर्वे हारियोजनं लिप्सन्ति " इतिवत् श्रीविद्याऽङ्गभूतान् गणपति-श्यामा-

वार्तालीं-परा-पञ्चदशी-नित्या-रश्मिमाला-मन्त्रादीन् सर्वान्[1] । सकृद्वा इत्यत्र वाकारः एवकारार्थः । तदानीमेवेत्यर्थः । क्रमेण वा तत्तदुपासनवेलायां वा । यथाऽधिकारम् इत्यनेन व्यवस्थितविकल्पः सूचितः । भक्तिश्रद्धाऽऽधिक्यवतः तदानीमेव, किंचिन्न्यूनतद्वतः क्रमेणेति । स्वाङ्गेषु इत्यत्र अङ्गपदं शरीरावयवपरम् । स्पर्शं कुर्वित्याज्ञां दद्यात् । ततः शिष्योयमवयवं स्पृशेत् तत्र मातृकान्यासे योवर्णः स आदिः यस्मिन् ईदृशम् । इदं नामाविशेषणम् । यथा शिरस्स्पर्शे तत्र मातृकावर्णः अकारः सः आदिर्यस्य अमृतानन्दनाथ इति । एवमेव सर्वत्र योज्यम् । द्व्यक्षरं वेत्यादिः स्पष्टार्थः । आनन्दनाथशब्दान्तं स्पष्टम् । तस्य शिष्यस्य नाम दिशेत् स्थापयेत् ॥ ४० ॥

### गुरुपादुकामन्त्रदानम्

विस्मृतं पुनराह—

**बालोपदिष्टेः पूर्वमात्मनः पादुकां षट्तारयुक्तां दद्यात् ॥ ४१ ॥**

द्वितीयशकलग्रासानन्तरं बालोपदिष्टेः पूर्वम् आत्मनः पादुकाम् आत्मनः गुरोः दीक्षाकाले दत्तं यन्नाम तद्घटितपादुकाऽन्तं मन्त्रं षट्तारयुक्तं तस्मै उपदिशेत् । षट् ताराश्च कुलार्णवे—

वाग्भवं च परा श्रीश्च कालीबीजं ततः प्रिये ।
भुवनेशी मन्मथं च षट् ताराश्च प्रकीर्तिताः ॥ इति ॥

अमुकानन्दनाथश्रीपादुकां पूजयामीति ॥

एतेन निबन्धस्थपादुकामन्त्रः सूत्रानवलोकनकल्पितः परास्तः ॥

यद्यप्यत्र पाठक्रमेण अत्रैवोपदेशः प्राप्तः, तथाऽपि " आश्विनोदशमोगृह्यते " इतिवत् श्रौतक्रमेण तस्य बाधोयुक्तः ॥ ४१ ॥

### आचारानुशासनादि

**आचाराननुशिष्य, हार्दचैतन्यमामृश्य, विद्यात्रयेण तदङ्गं त्रिः परिमृज्य परिरभ्य मूर्धन्यवघ्राय स्वात्मरूपं कुर्यात् ॥ ४२ ॥**

आचारान् दशमखण्डे [2]वक्ष्यमाणान् अनुशिष्य शिक्षयित्वा हार्दं हृदयाकाशसंबन्धि चैतन्यं, तमिति शेषः, शिष्यम् आमृश्य ध्यात्वा, स्वहृदयस्थचैतन्याभिन्नं शिष्यं भावयित्वेत्यर्थः । विद्यात्रयेण श्री-श्यामा-वार्तालीविद्याभिः । विद्यात्रयं एकदा पठित्वा परिमार्जनं प्रथमं, ततोद्विः तूष्णीं, त्रिः प्रोक्षति इतिवत्, न तु त्रिभिस्त्रिवारम् । तथा सति तिसृभिर्विद्याभिरित्येव

१ अतः परं वक्ष्यमाणानित्यर्थः–

२ अग्रे दशमखण्डस्थ,सर्वभूतैरविरोधः-इति-५७-सूत्रात्–८० सूत्रैवक्ष्यमाणानित्यर्थः–

वदेत् । विद्यात्रयेणेतिकरणे एकत्ववैशिष्ट्यं प्रतीयते । तस्मान्न तथा । परिमार्जनं नाम स्वहस्तेन शिष्यस्य सर्वशरीरस्पर्शः । परिरभ्य आलिङ्ग्य, मूर्धन्यवघ्राय स्वात्मरूपं कुर्यात्, स्वस्य यथा आत्मा मोक्षप्रतिबन्धकपौरुषमलरहितः तथा तं कुर्यात् ॥ ४२ ॥

**शिष्यस्य अशेषमन्त्राधिकारित्वम्**

सद्गुरुरित्यारभ्य [1]एतदन्तं गुरुकर्तृकं कर्म, इतः परं शिष्यकर्तृकक्रिया भवति—

**शिष्योऽपि पूर्णतां भावयित्वा कृतार्थस्तं गुरुं यथाशक्तिवित्तै रुपचर्य विदितवेदितव्योऽशेषमन्त्राधिकारी भवेदिति शिवम् ॥ ४३ ॥**

**इति श्रीरेणुकागर्भसंभूत-दुष्टक्षत्रियकुलान्तक-श्रीभार्गवोपाध्याय-जामदग्न्य महादेव-प्रधानशिष्य-महाकौलाचार्य-श्रीमत्परशुरामकृतौ कल्पसूत्रे दीक्षाविधिर्नाम प्रथमः खण्डः**

पूर्णता पूर्वमेव व्याख्याता । अतएव कृतोऽर्थोमोक्षसाधनं येन सः तादृशः । तम् इति कालवाची, तं कालम्, अस्मिन्नेव कालइत्यर्थः, गुरुविशेषणत्वे वैय्यर्थ्यात् । यद्वा—"गुरोर्गुरौ समीपस्थे प्रगुरोरेव पूजनम्" इति वचनेन कदाचित् सपर्याया अन्ययोगप्राप्तौ तन्माभूत् इति ज्ञापयितुं तमिति । यथाशक्तिवित्तैः "लक्षं लक्षपतिर्दद्याद्दरिद्रस्तु वराटिकाम्" इति रीत्या उपचर्य सन्तोष्य । विदितं ज्ञातं वेदितव्यं ज्ञातुं योग्यं येन सः सर्वज्ञः इत्यर्थः । अशेषमन्त्राणां सौरवैष्णवादिसप्तकोटिमन्त्रेषु अधिकारी भवेत् इति । एतेन एतदुपदेशेन सर्वमन्त्रोपदेशोजातः, पुस्तकादिवाचननिषेधोनास्तीत्यर्थः । तदुक्तं तन्त्रान्तरे—

यस्य नो पश्चिमं जन्म [2]तुष्टोयेन च सद्गुरुः ।
तेनैव लभ्यते विद्या [3]साक्षाच्छ्रीषोडशाक्षरी ॥
अत्र सर्वे महामन्त्राः बीजान्तर्वृक्षगात्रवत् ।
संस्थितास्तु महेशानि तस्माच्छ्रेष्ठतरा भवेत् ॥ इति ॥

यच्चोपक्रान्तं दीक्षाप्रक[4]रणं तत्समाप्तम् इतिज्ञापकः । शिव-शब्दः ॥ ४३ ॥

इति श्रीरामेश्वररचितायां सौभाग्योदयनाम्न्यां परशुरामसूत्रवृत्तौ प्रथमखण्डात्मकं दीक्षाप्रकरणं समाप्तम्

---

**सूत्रस्यपुनरावृत्तौ शोध्यं सूचयितव्यकम् ।**
**परिशिष्टस्थलंचैव पूर्णमाद्याप्रसादतः ॥ इति प्रथमः [5]खण्डः**

---

१ पाश्चात्य पत्रस्थ ३४ सूत्रारम्भतः एतत्सूत्रभाष्यावधीत्यर्थः

२ यदि वा शंकरः स्वयम्—अ.

३ श्रीमत्पञ्चदशाक्षरी—अ.

४ नाम, पाश्चात्य२पत्रस्थात्-अथातोदीक्षां व्याख्यास्यामः-इति-१-सूत्रादारभ्य, एतत्६७-पत्र-पर्यन्तमित्यर्थः-

५ इतोऽप्यधिकतरस्फुटप्रयोगोदीक्षायाः-श्रीमहानिर्वाणादितन्त्रेषु, दीक्षोल्लास-दीक्षाप्रकाश-तान्त्रिकस्व तन्त्रपद्धतिष्वप्यस्ति-परंचायमुक्तप्रयोगोऽपि श्रीभगवन्मुखनिर्गतसूत्रोक्तइति साधीयानेव-

## श्रीद्वितीयः खण्डः—गणनायकपद्धतिः

### श्रीगणनायकोपास्तिविधिः

पूर्वखण्डे दीक्षाविधिं परिसमाप्य श्रीललितोपास्तिप्रकरणं विवक्षुः तदुपास्तेः पूर्वाङ्गभूतां श्रीमहागणपत्युपास्तिं वक्तुं प्रक्रमते—

**इत्थं सद्गुरोराहितदीक्षः महाविद्याऽऽराधनप्रत्यूहापोहाय गाणनायकीं पद्धतिमामृशेत् ॥ १ ॥**

इत्थं पूर्वोक्तप्रकारेण सद्गुरोः शास्त्रोक्तलक्षणसहितगुरोः सकाशात् आहिता प्राप्ता दीक्षा येन ईदृशः । एतेन ईदृशदीक्षावतएव श्रीविद्योपास्तावधिकारोनान्यस्य इति सूचितम् । महाविद्या पञ्चदशी षोडशी वा । तस्याआराधनं जपः । यद्वा——महाविद्या श्रीललिता, महाविद्यावाच्यत्वात्, वाच्यवाचकयोरभेदात्, तस्याआराधनं फलप्राप्त्यन्तं पूजनं, तदुत्पत्तिप्रतिबन्धकीभूताः ये प्रत्यूहाः विघ्नाः——" विघ्नोऽन्तरायः प्रत्यूहः " इत्यमरः—तेषाम् अपोहाय नाशाय गाणनायकीं गणेशसंबन्धिनीं पद्धतिं मार्गं——"सरणिः पद्धतिः पद्या वर्तन्येकपदीति च " इत्यमरः—— उपासनासरणिमित्यर्थः । आमृशेत् स्वीकुर्यात् । अस्याः श्रीललितोपास्त्यङ्गत्वं यथा स्यात् तथोक्तं [1]प्राक् ॥ १ ॥

### प्रातःकृत्यं ध्यानादि तर्पणान्तम्

[2]एवं गणनायकोपास्तेः आवश्यकतामुक्त्वा तदुपासनाप्रकारं प्रपञ्चयति——

**ब्राह्मे मुहूर्ते[3] उत्थाय द्वादशान्ते सहस्रदलकमलकर्णिकामध्यनिविष्टगुरुचरणयुगलविगलदमृतरसविसरपरिप्लुताखिलाङ्गो हृदयकमलमध्ये ज्वलन्तमुद्यदरुणकोटिपाटलमशेषदोषनिर्वेषभूतमनेकपाननं नियमितपवनमनोगतिर्ध्यात्वा तत्प्रभापटलपाटलीकृततनुः बहिर्निर्गत्य मुक्तमलमूत्रो दन्तधावनस्नानवस्त्रपरिधानसूर्यार्घ्यदानानि विधाय उद्यदादित्य[4]वर्तिने महागणपतये तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ॥ तन्नोदन्ती प्रचोदयात् इत्यर्घ्यं दत्वा नित्यकृत्यं विधाय चतुरावृत्तितर्पणं कुर्यात्[5] ।**

---

१ प्राक्—नाम—१-खण्डे-५३-पत्रे-३४-सूत्रभाष्ये-इत्यर्थोज्ञेयः—

२ एवं नाम, उपरितन १ सुत्रानुसारेण—गणपतिर्ललितादेव्याअङ्गदेवता—इत्यादिहेतोः—

३ र्ते चोत्था—ब.

४ मण्डलव—अ.

५ एतच्चतुरावृत्तितर्पणज्ञानमेतत्सूत्रागामि २ सूत्रोभयटीकायां सुस्पष्टम्—

**आयुरारोग्यमैश्वर्यं बलं पुष्टिर्महद्यशः।**
**कवित्वं भुक्तिमुक्ती च चतुरावृत्तितर्पणात्॥ २॥**

ब्राह्मे मुहूर्ते उषःकाले उत्थाय, शयनादिति शेषः। [1]द्वादशान्ते——ललाटोर्ध्वे कपालोर्ध्वावसानं द्वादशान्तपदवाच्यं, तस्मिन्। तदुक्तं स्वच्छन्दसंग्रहे——

**द्वादशान्तं ललाटोर्ध्वे ललाटोर्ध्वावसानकम्॥ इति॥**

यद्वा——द्वादशान्ते स्थूलशरीरे सुषुम्णानाडीमाश्रित्य द्वात्रिंशत्पद्मानि सन्ति। तेषु सहस्रदळकमले द्वे, सर्वाधः अकुलनामकमेकमूर्ध्वमुखं सर्वोर्ध्वे द्वादशान्तनामकमधोमुखमपरम्। अत्र प्रमाणं सविस्तरं योगिनीतन्त्रस्योत्तरचतुश्शतीव्याख्याने सेतुबन्धे अस्मत्परमगुरुकृते द्रष्टव्यम्। ग्रन्थविस्तरभयान्नेह लिखितम्। [2]इदं च कमले विशेषणम् अभेदसंबन्धेन। यद्यपि द्वादशान्तइति सप्तम्यन्तस्य समासघटकीभूतकमलेन साकम् अन्वयोन संभवति समासघटकपदसापेक्षत्वरूपासामर्थ्यात् कमलस्य समासप्रयोजकसामर्थ्याभावेन समासानुपपत्तेः। अन्यथा, ऋद्धस्य राजमातङ्गाइति प्रयोगापत्तेः। तथाऽपि द्वादशान्तइत्यपि समासान्तम्, ऋद्धराजमातङ्गाइतिवत्। सप्तमीलोपाभावः छान्दसः। द्वादशान्तसंज्ञकं यत्कमलं तत्कर्णिकामध्यनिविष्टगुरुचरणयुगलं द्वन्द्वं तस्मात् विगळत् स्रवद्यत् अमृतं तस्य रसस्य योविसरः विस्तारः तेन परिप्लुतं क्लिन्नम् अखिलाङ्गं यस्य, एवं भूत्वेति शेषः। भूत्वेति पूर्वोक्तम् नियमितपवनमनोगतिरिति च ध्यानकर्तृविशेषणं, कर्तृपरिच्छेदकतया ध्यानाङ्गम्, "अभिक्रामं "जुहोति" इतिवत्। नियमिता पवनमनसोर्गतिः येन, प्राणान् मनश्चाचलं कृत्वेत्यर्थः। मनःपवननिरोधमन्तरा ऐकाग्र्यं न संभवति। ऐकाग्र्यमन्तरा ध्यानं च न संभवति। अतस्तयोरावश्यकतेति भावः। हृदयकमलमध्ये अनाहते[3] ज्वलन्तमित्यनेन स्वशरीरस्थपापदाहकर्तृत्वं सूचितम्। उद्यदरुणकोटिपाटलमित्यनेन अभूतोपमानेन ब्रह्माण्डमध्ये एतदुपममन्यन्नास्तीति सूचितम्। अशेषदोषनिर्वेषमशेषाणां स्वकीयदोषाणां निर्वेषः—निर्गतोवेषः स्वरूपं येषां ते निर्वेषाः स्वरूपशून्याः नष्टाः इत्यर्थः, भावप्रधानोनिर्देशः, इत्थं च——निर्वेषत्वं ध्वंसोयस्मादिति व्युत्पत्त्या स्वशरीरस्थनिखिलदोषनाशकमिति फलितोऽर्थः। अनेकपोद्विपः गजः तस्य आननं यस्येति ईदृशं ध्यात्वा तस्य देवस्य प्रभायाः पटलेन समूहेन पाटलीकृतः। अभूततद्भावे च्विः। श्वेतरक्तत्वं संपादिता तनुः स्वकीयशरीरं येन। "श्वेतरक्तस्तु पाटलः" इत्यमरः। एतेन स्वतनौ यावत्पर्यन्तं पाटलत्वं संभवति तावत्पर्यन्तं ध्यायेदित्यर्थः।

---

१ एतदादि 'यद्वा' इत्यन्तं ब. कोशे नास्ति.

२ इदम् इत्यनेन द्वादशान्ते–इतिएतत्सूत्रस्थंपदं–ज्ञेयम्–

३ अनाहतं-नाम-तन्नामकं हृदयस्थं चक्रम्–

[1]एतावत्पर्यन्तं शयनस्थलकृत्यम्, अग्रे बहिर्निर्गत्येत्युक्तत्वात् । इदं बहिर्निर्गमनं स्मृतिप्राप्तम् । मलमूत्रविसर्गश्चानेन अनूद्यते । अत्र दन्तधावनं विधायेति सामान्यविधौ [2]सत्यां कथं विधानम् इत्याकाङ्क्षायाः, स्मार्तापेक्षया तान्त्रिकधर्माणां अश्वप्रतिग्रहन्यायेन सन्निकृष्टत्वात्, तन्त्रान्तरोक्तानामेव धर्माणां ग्रहणं न तु स्मार्तानाम् । स्नानादिसूर्यार्घ्यान्तानां तन्त्रान्तरात् श्रीक्रमस्य सन्निकृष्टत्वात् ततएव कथंभावाकाङ्क्षा पूरणीया ॥

निबन्धकारास्तु गणपतिपद्धतौ मन्त्रेषु त्रितारीयोगे कर्तव्ये श्रीमायाकामबीजानां योगमुक्त्वा तत्र प्रमाणं श्रीविद्याऽर्णवतन्त्रं दर्शयामासुः । तच्चिन्त्यम् । तथा हि श्रीक्रमे सर्वत्र मन्त्रादौ त्रितारीति श्यामाक्रमे मन्त्राणामादौ कुमारीयोगइति वाराहीक्रमे वाचमुच्चार्य ग्लौम् इति च पद्धतावस्यां सर्वे मनवोजप्याइति पराक्रमे सर्वेऽपि पराक्रममनवः सौवर्णपूर्विकाः कार्याः इति सूत्रे पठितत्वात् गणपतिक्रमे अपठिष्यतः सूत्रकारस्य अत्र मन्त्रेषु बीजयोगएव नास्तीति सुस्पष्टं प्रतीयते । तथासति कथं विद्याऽर्णवतन्त्रानुसरणम् । अथवा श्रीक्रमे, वाङ्मायाकमलानां योगस्य वक्ष्यमाणत्वेन श्येनयागे द्रुतनवनीतवत् तस्य सर्वाङ्गत्वात् अस्यापि श्रीविद्याऽङ्गत्वेन प्राप्तौ तं बाधित्वा तन्त्रान्तरानुसरणस्य निर्युक्तिकत्वात् ।

स्वशास्त्रे वर्तमानो यः परशास्त्रेण वर्तते ।
भ्रूणहत्यासमं तस्य स्वशास्त्र[3]मवमन्यतः ॥

इति स्मृतेश्च ॥

उद्यदादित्यवर्तिने महागणपतये इति दत्वा इत्यस्य संप्रदानत्वेनान्वेति । उद्यदादित्यवर्तिने इत्यनेन तादृशसूर्ये [4]ध्यानं [5]अग्रे सपर्याप्रकरणे वक्ष्यमाणरीत्या कार्यमिति सूचितम् ॥

निबन्धे त्रिरर्घ्यदानमुक्तम् । तत्र मूलं मृग्यम् । अर्घ्यमित्येकवचनान्तेन विधेयपदेनैकत्वस्य स्पष्टत्वात् । नाप्यभ्यासः, तद्बोधकपदाभावात् । नापि श्रीक्रमोक्तस्यातिदेशः, सूर्यार्घ्यान्तस्यैव वचनेनातिदिष्टत्वात् , तदग्रिमधर्माणामतिदेशे प्रमाणाभावात् ॥

नित्यकृत्यं अग्निहोत्रहोमादि विधाय । एतेन अग्रे वक्ष्यमाणचतुरावृत्तितर्पणं सन्निधानादर्घ्याङ्गमिति भ्रमोनिरस्तः । प्रकरणेनोपास्त्यङ्गमेवेति सूचितम् ॥

अयं चतुरावृत्तितर्पणोत्पत्तिविधिः । तत्र चतुरावृत्तितर्पणमिति कर्मनामधेयं, नतु गुणविधिः, चतुरावृत्तेरग्रे[6] वक्ष्यमाणत्वात् । तथा च "अग्निहोत्रं जुहोति" इत्यत्रेव विभक्ति-

---

१ एतावत्पर्यन्तं नाम-उपरितनमूलसूत्रस्थं तरप्रभापटलपाटलीकृततनुरितिक्रियान्तमित्यर्थः-
२ सतीतिसाधीयान् पाठः-
३ मतिवर्ततः-अ, श्री.
४ अर्घ्यदानं-अ, श्री.
५ अग्रे, ७२ पत्रस्थ ४ सूत्रस्थसिद्धलक्ष्मीत्यादितोविघ्नेश्वरं ध्यात्वेत्यन्तसूत्रोक्तरीत्येत्यर्थः-
६ अग्रेनामआगामिनि-३ सूत्रेतद्भाष्येचेतिज्ञेयम्-

विपरिणामेन तृतीयान्तार्थत्वं लक्षणया, तस्य धात्वर्थे भावनायां करणत्वेन अन्वयः। चतस्रः आवृत्तयोऽभ्यासायाद्दशक्रियाऽवयवक्रियासु तच्चतुरावृत्तितर्पणम्। यद्यपि प्रथमतर्पणे द्वादशावृत्तिरस्ति न चतुरावृत्तिः, तथाऽपि सृष्टिन्यायेन भूमात्वमनुसृत्य अचतुरावृत्तितर्पणेऽपि चतुरावृत्तितर्पणमिति व्यवहारः। अत्र साध्याकाङ्क्षायां कमियोगाभावात् नायुरारोग्यादि साध्यत्वेनान्वेति। किंतु श्रीगणपत्युपास्त्युपकारएव। अन्यथा "समिधोयजत्यस्मिन् लोके प्रतितिष्ठति" इति श्रुत्या प्रयाजानामपि प्रतिष्ठाऽऽदिफलापत्तेः। अतः आयुरारोग्यमित्यर्थवादः॥

तथा च आयुरारोग्यादिप्राप्तये इति न लिखित्वा गणपतिप्रीतये इति संकल्पं निबन्धकारोयल्लिलेख तत् साधु। परं तु नद्यादावित्यारभ्य पञ्चोपचारानाचर्य इत्यन्तप्रापकं प्रमाणं मृग्यम्। स्वबुद्धिरचितमश्रद्धेयमेवेति दिक्॥ २॥

तदेव स्पष्टं विशिनष्टि—

**प्रथमं द्वादशवारं मूलमन्त्रेण तर्पयित्वा मन्त्राष्टाविंशतिवर्णान् स्वाहाऽन्तानेकैकं चतुर्वारं मूलं च चतुर्वारं तर्पयित्वा पुनः श्रीश्रीपतिगिरिजागिरिजापतिरतिरतिपतिमहीमहीपतिमहालक्ष्मीमहालक्ष्मीपति[1]ऋद्ध्यामोदसमृद्धिप्रमोदकान्तिसुमुखमदनावतीदुर्मुखमदद्रवाऽविघ्नद्राविणीविघ्नकर्तृवसुधाराशङ्खनिधिवसुमतीपद्मनिधित्रयोदशमिथुनेष्वेकैकां देवतां चतुर्वारं मूलं चतुर्वारं च तर्पयेत्, एवं चतुश्चत्वारिंशदधिकचतुश्शततर्पणानि भवन्ति॥ ३॥**

मूलमुच्चार्य तर्पयामि इति मन्त्रेण तर्पणम्। एवमेव अग्रे सर्वत्र मूलस्थले संयोज्यम्। चतुरावृत्तितर्पणमित्यत्र न क्रियाऽऽवृत्तिः विधीयते, किं तु मन्त्रावृत्तिरेव। यद्यपि द्वादशवारमिति द्वितीयाऽन्तं स्तोकं पचतीतिवत् क्रियाविशेषणं भवितुमर्हति, तथाच क्रियाऽभ्यासएव सिद्धः, तथाऽप्यस्मिन्नग्रे चतुश्चत्वारिंशदधिकचतुश्शततर्पणानि भवन्ति इति सूत्रस्थसंख्यया कर्मभेदे सिद्धे न क्रियाऽभ्यासोभवितुमर्हति। अतः द्वादशवारमित्यनन्तरम् आवृत्तेनेति पूरणीयम्। अतएवाग्रे मूलं चतुर्वारम् एकैकं चतुर्वारमित्यनेन मन्त्राभ्यासएव स्पष्टः श्रूयते। यदि क्रियाऽभ्यासः स्यात् तदा सकृदेव मन्त्रपठनं प्रसज्येत। तच्च अग्रिमसंख्याऽनुरोधेन निरस्तम्। यद्वा—द्रव्यपृथक्त्वेन क्रियाऽऽवृत्तावपि मन्त्रावृत्तिर्भविष्यति, तथाप्यग्रे मन्त्रावृत्तेः स्पष्टत्वात् तत्सहचरिते अत्रापि मन्त्रावृत्तिरेव। चतुर्वारमित्यनन्तरम् उच्चार्येति शेषः। स्वाहाऽन्तइत्यनेन प्रतिवर्णमन्त्रे स्वाहाकारघटकत्वं सूचितम्। अवयविनोविशिष्टमन्त्रस्य

1 अत्रासन्धिरार्षः

गणपतिदेवताकत्वे तदवयवानामपि तद्देवताकत्वं स्पष्टम्। अतः स्वाहाऽन्ते तर्पयामीत्यपि योज्यम्। तथा च मूलस्यैकवर्णः, तत्र बिन्दुयोगोऽपि शिष्टसंप्रदायात्, ततः स्वाहाकारः, ततस्तर्पयामीति पूर्वोक्तम्। एवं चतुर्वारं, ततोमूलेन चतुर्वारम्। एवं सर्वेषु वर्णेषूह्यम्। पूर्वं द्वादशवारं तर्पयित्वेति एकोगणः सूचितः। तदुत्तरं चतुर्वारं तर्पयित्वेत्यन्ततर्पणम् एकोगणः सूचितः। अस्मिन् सूत्रे पुनरित्यनेन त्रयोदशमिथुनतर्पणम् अन्योगणः सूचितः। गणत्रयसूचनफलं च—एकैकगणस्य एकैकापूर्वजनकत्वात् तन्मध्ये एकस्य विस्मरणे पुनः तद्गणमारभ्यैव अनुष्ठानं न सकलादिमारभ्य।

यथा मन्त्रैकदेशे वर्णलोपे तन्मन्त्रस्यादिमारभ्यावर्तनं तद्वत्। श्रीश्रीपतीत्येकं, गिरिजागिरिजापतीत्येकं मिथुनम्, एवंरीत्या एकं स्त्रीलिङ्गान्तम् एकं पुल्लिङ्गान्तं मिथुनं ज्ञेयम्। मदद्रवोत्तरं न विद्यन्ते विघ्नाः यस्येति व्युत्पत्त्या अविघ्नइति पुल्लिङ्गः। शेषं स्पष्टम्। एवं त्रयोदशमिथुनेषु एकैकां देवतां द्वितीयान्तमुच्चार्य तर्पयामीति योजयेत्। इत्थं चोक्तरीत्या एकदेवतायाश्चतुर्वारं तर्पणं, ततोमूलेन चतुर्वारं कार्यं पूर्ववत्। एवमुक्तप्रकारेण क्रमेण निरुक्तसंख्याकानि तर्पणानि भवन्ति। तदित्थं मूलतर्पणानि २२८ वर्णतर्पणानि ११२ मिथुनतर्पणानि १०४ आहत्य पूर्वोक्तसंख्याकानि ४४४ चतुश्चत्वारिंशदुत्तरचतुश्शततर्पणानि भवन्तीत्यर्थः॥ ३॥

### यागगृहप्रवेशादि विघ्नेश्वरध्यानान्तम्

एवंतर्पणक्रममुक्त्वा पूजाविधिं वक्तुमुपक्रमते—

**अथयागविधिः—गृहमागत्य स्थण्डिलमुपलिप्य द्वारदेशउभयपार्श्वयोर्भद्रकाल्यै भैरवाय—द्वारोर्ध्वे लम्बोदराय नमःइति अन्तःप्रविश्य आसनमन्त्रेण आसने स्थित्वा प्राणानायम्य षडङ्गानि विन्यस्य मूलेन व्यापकं कृत्वा स्वात्मनि देवं सिद्धलक्ष्मीसमाश्लिष्टपार्श्वम् अर्धेन्दुशेखरमारक्तवर्णं मातुलुङ्गगदापुण्ड्रेक्षुकार्मुकशूलसुदर्शनशङ्खपाशोत्पलधान्यमञ्जरीनिजदन्ताञ्चलरत्नकलशपरिष्कृतपाण्येकादशकं प्रभिन्नकटमानन्दपूर्णमशेषविघ्नध्वंसनिघ्नं विघ्नेश्वरं ध्यात्वा॥ ४॥**

अथ—अधिकारान्तरवाक्यमिदम्। एतेन तर्पणप्रकरणं समाप्तम्। तथाच प्रकरणेन तर्पणोपासनयोः अङ्गाङ्गीभावः सूचितः। तेन दीक्षाऽङ्गक्रमे तर्पणस्य नातिदेशः। उच्यते इति शेषः। गृहमागत्येत्यनेन तर्पणं नद्यादौ गृहाद्बहिः कार्यमिति सूचितम्। स्थण्डिलं यागदेशम् उपलिप्य गोमयेनेति शेषः॥

स्थलशुद्धिः प्रमाणान्तरप्राप्ता अनूद्यते । अनेन क्रमोन विवक्षितः । यदि चानुवादे फलाभावात् वैय्यर्थ्यभिया क्रमप्राप्त्यर्थमत्र पाठः इत्युच्यते, तदा द्वारपूजाऽव्यवहितप्रागेवोपलेपः कार्यः ।

उभयपार्श्वयोरित्यत्रानादेशाद्दक्षिणं प्रथमं पश्चाद्वामम् । दक्षवामौ द्वाराद्बहिर्निर्गमनवेळायां यौ तौ ग्राह्यौ, तत्रैव तथा व्यवहारात् , नतु प्रवेशवेळायाम् । नमः इत्युत्तरं यजेदिति शेषः । मन्त्रालिङ्गावगता देवता । अन्तः प्रविश्येत्यनेनैव द्वारपूजा बहिः स्थित्वैव कार्या इति सिद्धम् । आसनमन्त्रेणेत्यनेन[1] श्यामाप्रकरणपठितोमन्त्रोज्ञेयः, सन्निकृष्टत्वात् । अतएव न तन्त्रान्तरस्थं ग्राह्यम् ॥

## निबन्धोक्तनिर्मूलधर्मप्रदर्शनम्

यत्तु निबन्धे दीपानभितः प्रज्वाल्येति, ताम्बूलभक्षणं [2]बालातृतीयबीजेनासनप्रोक्षणं लिखितं तं प्रति अयं प्रश्नः—एतत्प्रापकं प्रमाणं तन्त्रान्तरे किं वा एतत्तन्त्रे दीपप्रज्वलनादिकमग्रे[3] श्रीक्रमे ऊक्तं, बालातृतीयबीजेनासनप्रोक्षणं [4]परापद्धतावुक्तं, तेषां सर्वेषां प्रापकमतिदेशशास्त्रं वा । नाद्यः, तस्य पूर्वमेव निरस्तत्वात् । द्वितीये, अतिदेशस्त्रिविधः—वचनातिदेशः, नामातिदेशः, आकाङ्क्षया आनुमानिकातिदेशः । तन्मध्ये कीदृशोऽतिदेशः । न वचनं—"समानमितरच्छ्येनेन" इतिवत् 'शेषं श्रीक्रमेण समम्' इतिवचनम् अस्ति । अतोनाद्यः । एवं "मासमग्निहोत्रं जुहोति" इतिवत् "श्रीक्रमं कुर्यात्" इति तन्नाम्ना व्यवहारोन ह्यस्ति । अतोन द्वितीयः । तृतीयोऽतिदेशोयथा—"सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः" इत्युक्ते कर्मयोगात् ब्रह्मवर्चसं किं कुर्यादिति कर्माकाङ्क्षापूरकम् । ततः केन कुर्यात् इत्याकाङ्क्षायां धात्वर्थः करणत्वेन अन्वेति । कथं कर्यात् इत्याकाङ्क्षापरिपूरकतया अङ्गकलापोन पठितः । ततआकाङ्क्षामकम् ओषधीद्रव्यकत्वेन व्यक्तलिङ्गकत्वेन सादृश्यात् दर्शपूर्णमासवदिति पदं कल्प्यते—सौर्यं चरुं दर्शपूर्णमासवत् निर्वपेत् इति वाक्यम् । ततश्च दर्शपूर्णमासधर्माः प्राप्नुवन्ति । नह्यत्र तथाऽऽकाङ्क्षाऽस्ति, साङ्गप्रधानस्यात्र पाठात् ॥

किं च—यद्यतिदेशेनैव धर्मप्राप्तिः तर्हि श्रीक्रमे "पीठमनुना आसने समुपविष्टः" इति वचनेन आसनमन्त्रस्य कॢप्तत्वात् अतिदेशेनैव प्राप्तौ पुनर्विधानं व्यर्थं सत् गृहमेधीया-

---

१ अयमासनमन्त्रोऽग्रे-श्यामाक्रमीय-६-खण्डे-६ सूत्रे, आधारशक्तिकमलासनाय नमइति वक्ष्यमाणोज्ञेयः-

२ बालातृतीयं-सौः-इति बीजम् ॥

३ अग्रे, श्रीक्रमे, नाम-३-खण्डे-११-सूत्रे-दीपानभितोदत्वा-इति सूत्रे इत्यर्थः-

४ अग्रे-पराक्रमे-८-खण्डे-६-सूत्रे-भाष्येचेदमस्ति-

ज्यभागन्यायेन यावदुक्तं कर्तव्यं नातोऽधिकमिति स्पष्टीकरोति। इत्थं च कथमेतदतिरिक्तानां प्राप्तिर्भवेत्। किंच—श्रीक्रमाद्धर्मप्राप्तिरतिदेशेन भवति, तत् किं यावदङ्गानां भवतीत्युच्यते, आहोस्वित् यत्किंचिद्धर्माणाम्। आद्यं चतुर्नवतिमन्त्रैः अभिमन्त्रणाभावः केन सिद्धः। न हि "नार्षेयं वृणीते न होतारम्" इतिवत् सूत्रे चतुर्नवतिमन्त्रैरभिमन्त्रणं न कर्तव्य-मित्यस्ति, येन तन्निवार्यते। [1]यश्च यत्किंचिद्धर्मातिदेशइति पक्षः सच देवानांप्रियाणामेव प्रियोभवितुमर्हति न पण्डितानाम्॥

तस्मात् पूर्वोक्तधर्मप्रापकं सर्षपमात्रमपि प्रमाणं न पश्यामः। एवमत्रत्याः केचन निर्मूलं श्रीक्रमे लिखिताः। एवं श्यामाक्रमोक्ताः निष्प्रमाणाः श्रीक्रमे अन्यत्र च प्रक्षिप्ताः। न हि प्रमाणरहितोधर्मोभवितुमर्हति। अतोमीमांसागन्धानभिज्ञेन केवलसंस्कृतभाषाऽभिज्ञेन स्वेच्छया साङ्कर्यं प्रापितोयोनिबन्धः तमाश्रित्य सुधियोऽप्यनुतिष्ठन्ति। अत्र केऽपि परि-शोधनं न कुर्वन्ति। अत्र कलियुगशक्तिरेव बीजं नान्यदिति युक्तमुत्पश्यामः। तस्मात् तत्रत्यानि नानुष्ठेयानि। यावदुक्तं कर्तव्यम् यत्रान्यतोग्राह्यं सूचितं यथाऽऽसनमन्त्रेणेति तद् ग्राह्यं, न केनचिदविचार्य लिखितं प्रमाणम्। प्रमाणाभावात् तदनुष्ठाने नापूर्वं भवेत्। यदि भवेत् तर्हि अग्निहोत्रे दर्शपूर्णमासधर्मातिदेशः, दर्शपूर्णमासयोः ज्योतिष्टोमधर्मातिदेशोऽपि भवेत्। तस्मादप्रमाणं स्वेच्छया सङ्कीर्णोनिबन्धोऽश्रद्धेयः इत्यलमतिविस्तरेण॥

किं च—एकक्रियायाः प्रकृतिरेका शास्त्रे दृष्टा, न हि नानाप्रकृतिका एका विकृतिर्दृष्टा श्रुतपूर्वा वा आसीत्। अयं निबन्धकारः कांश्चिद्धर्मान् पराप्रकरणस्थान् सौरित्यनेन आसनप्रोक्षणादिरूपान् ताम्बूलभक्षणादिरूपान् [2]श्रीविद्याप्रकरणस्थांश्च, इत्येवं नानाप्रकरण-स्थान् एकत्र अतिदिशन् कथं धर्मतत्त्वज्ञोभवेत्॥

न च यथा ज्योतिष्टोमस्य ये धर्माः तेषां द्वादशाहे अतिदेशः, ततः अतिदिष्टतत्प्रक-रणस्थधर्मयोर्द्वयोः यथा द्विरात्रादावतिदेशः, तद्वत् मूलप्रकृतिः श्रीविद्या, ततोऽतिदेशेन प्राप्ताः परायां ताम्बूलादयः, तत्सहितः योऽसावासनप्रोक्षणरूपोविशेषधर्मः स सर्वोऽपि द्वि-रात्रादिस्थानापन्ने गणपतावतिदिश्यताम्। तथा सति न नानाप्रकृतिकत्वम् इति वाच्यम्। यदि श्रीप्रकृतिका परा, तर्हि भूषणधारणस्य अतिदेशेनैव प्राप्तौ तत्प्रकरणे भूषितविग्रहइति व्यर्थम्। एवं वामपार्ष्णिघातादिकं बहुतरं व्यर्थम्। अतोन प्रकृतिविकृतिभावस्तयोः संभवति। अतोयेषां प्रत्यक्षवचनमस्ति यथाऽत्रैव सूर्यार्घ्यान्तविधिः, एवं पराप्रकरणे श्यामावत सामान्य-

१ मन्मते तु, प्रकृतिविकृतिभावाभावात् यावदुक्तं कर्तव्यमिति, अत्र तदुक्त्यभावात् चतुर्नवतिमन्त्रै रनभिमन्त्रणं युक्तम्। तव मते संदर्भविरुद्धम्" इत्यधिकः पाठः—ब. २.

२ 'तन्त्रान्तरे' इत्यधिकः—ब.

विशेषार्घ्ये साध(द?)येदित्यादि, यत्र चाकाङ्क्षाऽपरिपूर्तिः सर्वथा, तादृशस्थलएव अन्यधर्मस्पर्शः, अन्यत्र [1]न युक्तमिति राद्धान्तः । अनयैव दिशा निबन्धे निर्मूलसंकीर्णधर्माणां परित्यागोऽन्यत्र द्रष्टव्यः ॥

प्राणायामः श्वासनिरोधः, तं कुम्भकरेचकादियुक्तं विधाय । प्राणायामे मन्त्रोमूलम् ॥

[2]संकल्पावश्यकता

ततः संकल्पमपि सामान्यशास्त्रेण प्राप्तं कुर्यात् । श्रीविद्योपास्तौ निर्विघ्नतासिद्ध्यर्थं महागणपतिक्रमं निर्वर्तयिष्ये इति सङ्कल्पः । न च सङ्कल्पस्य सूत्रे अनुक्तत्वात् कथं ग्रहणम् इति शङ्कनीयम् । शुचित्वमुपवीतम् अव्यभिचारेण यथा कर्मसामान्येन सम्बद्धम् एवमेव सङ्कल्पोऽपि । एतदनुगुणानि वचनानि च सन्ति । यथा—

अनाचम्य कृतं यच्च यच्च सङ्कल्पवर्जितम् ।
राक्षसं तद्भवेत् कर्म . . . . . . . ॥

इति दानधर्मे महाभारतवचनम् ।

आदौ सङ्कल्पउद्दिष्टः पश्चात्तस्य समर्पणम् ।
अकुर्वन् साधकः कर्मफलं प्राप्नोत्यनिश्चितम् ॥

इति रुद्रयामळवचनाच्च । तथैव शिष्टाचारोऽपि । अतः सः आवश्यकः इति गाणनायक्याः सपर्यायाअपि श्रीविद्याऽङ्गत्वादावश्यकएव सङ्कल्पः । अष्टाङ्गोल्लेखनं च—

अवश्यं तान्त्रिकं कालमुल्लिखेदन्यथा शिवे ।
बहिर्मुखं तु तत्कर्म भवेद्भस्महुतं यथा ॥

इति यामळवचनादष्टाङ्गोल्लेखनमावश्यकम्[3] । एवमेव श्यामाऽऽदौ ज्ञेयम् ॥

ततः षडङ्गानि मूलमन्त्रषडङ्गानि हृदयादिस्थानेषु विन्यस्य स्थापयित्वा सकलमूलेन करतलाभ्यां सर्वाङ्गे विन्यसेत् । इदमेव व्यापककरणम् । तदुक्तं परमानन्दतन्त्रे—

तलाभ्यां निखिलाङ्गस्य स्पर्शनं व्यापकं भवेत् ॥

अत्र निबन्धोक्तं "रक्तद्वादशशक्तियुक्ताय[4]" इत्यारभ्य "मातृकान्यासं विदध्यात्" इत्यन्तम् अश्रद्धेयम् ॥

---

१ यावदुक्तं कर्तव्यमिति रा—ब२.

२ सर्वसङ्कल्पविषयकज्ञानाय द्वि–प–शि. १०–वि. दृश्यः

३ इदमष्टाङ्गोल्लेखनमनुगत–१–खण्डीय–३१–सूत्रभाष्ये ४५ पत्रेऽस्ति. द्वि–प–शि–१० विषयेचाप्यस्ति–

४ नाथाय–ब.

स्वात्मनि स्वहृदये । आत्मशब्दो मनसि प्रसिद्धः । मनोहृदययोरैक्यात् तदर्थत्वम् । आद्यविशेषणचतुष्टयार्थः स्पष्टः । मातुलुङ्गं फलविशेषः । गदा आयुधविशेषः । पुण्ड्रेक्षुः नानारेखायुक्तेक्षुः, [1]अनेकवर्णइति यावत् । तद्रूपकार्मुकश्चापः । शूलः आयुधविशेषः । सुदर्शनं चक्रम् । शङ्खपाशौ प्रसिद्धौ । उत्पलं कमलम् । शेषाणि प्रसिद्धानि । एवं मातुलुङ्गादिरत्नकलशान्तैः परिष्कृतं पाण्येकादशकं यस्येदृशम् ॥

यद्यपि श्रीमहागणपतिमूर्तेः दश भुजाः प्रसिद्धाः, अत्रैकादशेति विरुद्धं, तथाऽपि पाणिपदेन शुण्डादण्डोऽप्यत्र ग्राह्यः, तत्र पाण्यपरपर्यायेण करः हस्तः इति व्यवहारात्, करी हस्तीति सर्वलोकप्रसिद्धेः । इत्थं च दश भुजाः, एकादशः शुण्डादण्डः इति तदभिप्रायेण सूत्रकृता भगवता पाण्येकादशकमित्युक्तम् ॥

### आयुधस्थाननियमः

अत्र आयुधानां दक्षवामादिनियमोनोक्तः, तथाऽपि सामान्यपरिभाषया आयुधस्थानानि योज्यानि । तदुक्तं रुद्रयामळे—

आयुधानां तु ते ध्यानं ब्रवीमि श्रृणु शाङ्करि ।
[2]खड्गबाणाङ्कुशगदाज्ञानशूलभुशुण्डिकाः ॥
भल्लोदण्डोवज्रशक्ती परिघप्रासतोमराः ।
मालामुसलपरशुमुखादक्षकरस्थिताः ॥
[3]पाशशङ्खं चापफलं चर्मखट्वाङ्गपुस्तकम् ।
घण्टाडमरुमुण्डं च वामहस्ते सुसंस्थितम् ॥
वराभये शङ्खचक्रं पुष्पपात्रं द्वयस्थितम् ।
[4]अनुक्ते[5] वामदक्षेधःप्रादक्षिण्यक्रमान्नरैः ॥
योज्यानि सर्वायुधानि ज्ञेयानि परमेश्वरि ।
[6]चक्रशङ्खौ तथाऽभीतिवरौ संमुखसंस्थितौ ॥ इति ॥

---

१ अनेकरूप इति–ब२.
२ खड्गादारभ्य, उपरितन व्यदङ्काङ्कचिह्नान्ताइत्यर्थः–
३ उपरितन–३–अङ्कादारभ्यमुण्डान्ताइत्यर्थः–
४ अनुक्तेषु वामदक्षप्रादक्षिण्येतरक्रमैः । युक्त्या सर्वत्रायुधानि–अ, ब १.
५ आयुधदानज्ञानायापरमपिप्रकारं पुरस्तन ४ खण्डगत–५–सूत्रभाष्येपश्यत–
६ " पाशाङ्कुशौ धनुर्बाणखड्गचर्माणि शङ्करि " इत्यधिकः ब. कोशे.

अस्यार्थः—

आयुधस्थानानुक्तौ खड्गादिपरश्वन्तोदक्षकरे नियताः। पाशादिमुण्डान्ताः वामे नियताः। शङ्खादिपात्रान्ताः इच्छया उभयत्रापि। पाशाङ्कुशादियुग्मपञ्चकं संमुखे। यत्सङ्ख्याकदक्षकरे युग्मान्यतरं तत्सङ्ख्याकवामकरएवापरम्। वामोर्ध्वादारभ्य दक्षोर्ध्वक्रमे प्रदक्षिणक्रमः, विपरीते त्वप्रदक्षिणक्रमः। द्वयोर्विकल्पइत्यर्थः। प्रकृते गणपत्यायुधे न प्रदक्षिणाप्रदक्षिणक्रमौ संभवतः। तथा हि—मातुलुङ्गचापशङ्खधान्यमञ्जरीणां उक्तवचनानुसारेण वामकरसंबन्धआवश्यकः। गदाशूलचक्रोत्पलदन्तानां दक्षसंबन्धस्तथा। अतः सूत्रपाठक्रमानुरोधेन रुद्रयामळवचनानुरोधेन च वक्ष्यमाणद्वन्द्वानां संमुखतैव युक्ता। मातुलुङ्गगदे चापशूलौ शङ्खचक्रे पाशोत्पले धान्यमञ्जरी निजदन्तौ, अमीषां द्वन्द्वानां मध्ये प्रथमं प्रथमं वामोर्ध्वकरे द्वितीयं दक्षोर्ध्वकरे। अनेन क्रमेण अधोऽधोयोज्यम्। एवं युग्मपञ्चकैः दशभुजेषु व्यावृत्तेषु कलशं परिशिष्टे शुण्डादण्डे ज्ञेयम्। यद्यपि यामळवचने दन्तस्थानं नोक्तं, तथाऽपि परिशेषात् दक्षाधः। धान्यमञ्जरी फलान्तर्भूता, अतोवामभागनियमः॥

प्रभिन्नः प्रस्रवन् कटोगण्डोयस्य तम्। " गण्डः कटोमदोदानम् " इत्यमरः। आनन्दपूर्णं पूर्णानन्दम् इत्यर्थः। अशेषाये विघ्नजनिताः ध्वंसाः अनिष्टकलापाः तेषां निघ्नं नाशकं विघ्नेश्वरम् उक्तगुणविशिष्टं ध्यायेत्॥ ४॥

### अर्घ्यस्थापनम्

एवं ध्यानान्तमुक्त्वा ततोऽर्घ्यस्थापनविधिं वक्तुमारभते—

**[1]पुरतोमूलसप्ताभिमन्त्रितेन[2] गन्धाक्षतपुष्पपूजितेन शुद्धेन वारिणा त्रिकोणषट्कोणवृत्तचतुरश्राणि विधाय तस्मिन् पुष्पाणि विकीर्य वह्नीशासुरवायुषु मध्ये दिक्षु च षडङ्गानि विन्यस्य अग्निमण्डलाय दशकलाऽऽत्मने अर्घ्यपात्राधाराय नमः सूर्यमण्डलाय द्वादशकलाऽऽत्मने अर्घ्यपात्राय नमः सोममण्डलाय षोडशकलाऽऽत्मने अर्घ्यामृताय नमः इति शुद्धजलमापूर्य [2]अस्त्रेण संरक्ष्य कवचेनावकुण्ठ्य [3]धेनुयोनिमुद्रां[4]प्रदर्शयेत्॥ ५॥**

---

१ पूरणीयजलं मूलमन्त्रेण सप्तधा अभिमन्त्रयेत्यर्थः

२ एतदस्त्रादिमुद्राधारार्थं द्वि. प. $\frac{१५-७}{१४}$ $\frac{१५-८}{१-२}$ $\frac{१५-८}{२}$ वि० द्रष्टव्याः॥

३ धेनुमुद्रां प्रदर्श्य यो–अ, श्री

४ मुद्रे–ब १.

पुरतइत्यस्य कस्येत्याकाङ्क्षायां योग्यत्वात् स्वस्येति शेषः । एतेन दक्षवामभागयोः व्यत्यासः । मूलेन सप्तत्वं आवृत्त्या संपादनीयम् तैः अभिमन्त्रितेन गन्धपुष्पाक्षतैः पूजितेन शुद्धेन पवित्रेण [१]पटपूतेन वारिणा त्रिकोणषट्कोणवृत्तचतुरश्राणि विधाय निर्माय तस्मिन् निर्मितत्रिकोणादिसङ्घात्मके मण्डले विकीर्य क्षिप्त्वा । वह्न्यादिशब्दाः तत्तद्दिग्लक्षणाः । मध्ये पूर्वादिदिक्षु च षडङ्गानि मूलषडङ्गानि । विदिक्ष्विति लघुसूत्रे कर्तव्ये वह्नीशेति गुरुसूत्रं क्रमविशेषलाभार्थम् । अत्र यद्यपि वाक्येन अग्निमण्डलाय नमः इत्यारभ्य शुद्धजलमापूर्ये त्यन्तेन[२] आपूरणशेषत्वं सर्वस्य प्रतीयते, तथाऽपि " सूक्तवाकेन प्रस्तरं प्रहरति " इतिवत् लिङ्गेन विभज्यैव मन्त्राणां त्रयाणाम् आधाराय नमः पात्राय नमः अमृताय नमः इत्यन्तानां आधारस्थापनपात्रस्थापनजलपूरणेषु प्रत्येकं शेषत्वं वाच्यम्; वाक्यात् लिङ्गस्य प्रबलत्वात् । वस्तुतस्तु—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् " इति जैमिनिसूत्रोक्तवाक्य-लक्षणाभावात् न वाक्यविरोधोऽपि । क्वचित् पुस्तके अर्घ्यपात्राय नमः इत्येतदुत्तरम् " इत्या-धारपात्रे धृत्वा " इति पाठः । तदा न विवादः । शुद्धजलं पूर्वोक्तम् । अत्र द्वितीया तृतीयाऽर्थे, सक्तुवत्, दृष्टफलसंभवात् । यद्वा—" स्रुचः संमार्ष्टि " इतिवत् गुणकर्म, आपूरणक्रियया जलं संस्कुर्यादिति । तथा च अस्मिन् पक्षे द्वितीयैव यथाश्रुता । अस्त्रेण[३] अस्त्रमुद्रया संरक्ष्य रक्षोभूतादियागविघ्नकर्तृदुराधर्षं कृत्वा । यद्वा—[३]अस्त्रेण फट् इतिमन्त्रेण पूर्ववत् कृत्वा । [३]कवचेन हुं–इति मन्त्रेण [३]अवकुण्ठ्य अन्यत्र गमनशक्तिरहितं कृत्वा ॥

निबन्धकारस्तु मन्त्रमुद्राद्वयं अस्त्रपदेनोवाच । तन्न, " सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति " इति न्यायात्, आवृत्तौ वाक्यभेदप्रसङ्गात् ॥

अतएव पूर्वविलक्षणत्वात् [३]धेनुं[३]योनिमुद्रां प्रदर्शयेत् इत्युक्तम् । एतेन न ते मुद्रे पूर्वतने, मन्त्रइति स्पष्टम् । मुद्राम् इत्येकवचनमार्षम् । धेनुसहितयोनिरिति मध्यमपदलोपी समासोवा कार्यः ॥ ५ ॥

**अर्घ्यसंस्कार**

एवं मुद्राप्रदर्शनान्तमुक्त्वा सूत्रान्तरेण संस्कारशेषानाह—

**[४]सप्तवारमभिमन्त्र्य तज्जलविप्रुड्भिरात्मानं पूजोपकरणानि च संप्रोक्ष्य तज्जलेन पूर्वोक्तं मण्डलं परिकल्प्य तद्वदादिमं [५]संयोज्य तत्रो-**

१ सुगन्धपुष्पादिद्रव्योद्वासितेनेत्यर्थः ॥

२ मूलसूत्रस्थवाक्येनेत्यर्थः ।

३ इतआरभ्य अधस्तात् तत्रतत्र व्यङ्कसङ्केतितमुद्राणामन्यासांचात्रोक्तात्युपयुक्तानुक्तमुद्राणामुद्धार सम्बोधार्थं द्वितीयपरिशिष्ट–१५–विषयोदयः ॥

४ मूलेनस–श्री.

५ संशोध्य–अ.

**पादिमं [1]मध्यमं च निक्षिप्य वह्न्यर्केन्दुकलाः अभ्यर्च्य वक्रतुण्डगायत्र्या गणानांत्वेत्यनया ऋचा चाभिमन्त्र्य अस्त्रादिरक्षणं कृत्वा तद्बिन्दुभिस्त्रिशः शिरसि गुरुपादुकामाराधयेत् ॥ ६ ॥**

मूलेनेति सप्तवारमित्यस्यादिः। क्वचित्तथैव पाठः। तज्जलेन सामान्यार्घ्योदकेन [2]पूर्वोक्तं त्रिकोणादिरूपं मण्डलं संस्कृतदेशविशेषम्। तद्वत् सामान्यार्घ्योदकवत्। आदिमं प्रथमं संयोज्येत्यनेन तदन्ता क्रिया तद्वदित्यतिदिश्यते। तेन आधारपात्रस्थापनयोरपि लाभः। क्वचित् संशोध्येति पाठः। [3]चकारेण चतुर्थपञ्चमयोर्ग्रहणम्। पूर्वस्मादत्र योविशेषस्तमाह—वह्नीति। आधारे [4]वह्निकलाः धूम्रार्चिरादयः, पात्रे सूर्यकलाः तपिन्यादयः, अमृते अमृतादयश्चन्द्रकलाः चतुर्थ्यन्ततत्तन्नामभिः प्रागादिप्रादक्षिण्येन वृत्ताकारं यजेत्। दिङ्नियमोवृत्ताकारनियमश्च यः तन्मूलं परमानन्दतन्त्रे अष्टमोल्लासे द्रष्टव्यम्। आधारस्थापनोत्तरं तत्र दशवह्निकलाः संपूज्य ततः पात्रं स्थापयेत्। एवमन्यत्रापि। वक्रतुण्डगायत्र्या—“तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नोदन्ती प्रचोदयात्।” इत्यनया। “गणानांत्वा” इतीयमृक् प्रसिद्धा। क्वचित्पाठे समग्रपाठोऽपि दृश्यते। अभिमन्त्रणं नाम मन्त्रपठनकाले संस्कार्यद्रव्यस्पर्शः। अस्त्रादीत्यादिपदेन [5]कवचम्। ते उभे पूर्वं व्याख्याते। रक्षणमिति अवकुण्ठनस्याप्युपलक्षणम्। तथाच [5]अस्त्रमन्त्रेण संरक्ष्य[5], [5]अवकुण्ठ्य, कवचमन्त्रेणेत्यर्थः। यद्यपि “तद्वदादिमं संयोज्य” इत्यनेनैव अस्त्रादीनां प्राप्तिसंभवे पुनर्विधानं व्यर्थम्; तथाऽपि पूर्वं धेनुयोनिमुद्रे स्थिते तन्निवृत्त्यर्थं पुनःकथनं ज्ञेयम्। तद्बिन्दुभिः संस्कृतप्रथमबिन्दुभिः त्रिशः त्रिवारं शिरसि विधिविले गुरुपादुकामाराधयेत्। आराधनं नाम गुरुपादुकोद्देशेन द्रव्यत्यागः। तस्याहवनीयादिवत् देशनियमः शिरसि। बिन्दुभिरित्यनेन द्रव्यमाननियमः सावरणगणपतिपूजायामपि नियमोऽनेन क्रियते ॥ ६ ॥

### पीठशक्ति-धर्माद्यष्टक-महागणपति-पञ्चावरण-पूजाविधिः

पीठनियमपूर्वकं यन्त्रोद्धारादिकमाह—

---

१ ‘मध्यमम्’ इति नास्ति–ब २.

२ पूर्वोक्तं–नाम, उपरितन–५–सूत्रोक्तरीत्या–इति ज्ञेयम्–

३ आदिमोपादिमयोरेव ग्रहणात् अत्र चतुर्थपञ्चमयोर्निवृत्तिः। यद्वा–“योग्यैः सह मपञ्चकमुररीकृत्य” इति अग्रे (एतत्खण्डीयान्तिमे–१०–सूत्रे) मपञ्चकस्वीकारलिङ्गात् चकारेण आवश्यकम्। युक्तश्चायमेव पक्षः।–इति ब२ कोशे.

४ इमावह्निसूर्यविधुकलाः प्रत्यक्षनाम्ना–अग्रे–६–खण्डे–श्यामाक्रमे–१८–सूत्रे–मूले–एव सन्ति, ततोग्राह्याः–

५ एतदादिमुद्रोध्धारज्ञानार्थं–द्वि. प. शि.–१५–वि. दृश्यः–

६ या देशनि–ब,

**पुरतोरक्तचन्दननिर्मिते पीठे महागणपतिप्रतिमायां वा चतुरस्राष्टदळषट्कोणत्रिकोणमये चक्रे वा तीव्रायै ज्वालिन्यै नन्दायै भोगदायै कामरूपिण्यै उग्रायै तेजोवत्यै सत्यायै विघ्ननाशिन्यै ॠं धर्माय ॠं ज्ञानाय ऌं वैराग्याय ॡं ऐश्वर्याय ॠं अधर्माय ॠं अज्ञानाय ऌं अवैराग्याय ॡं अनैश्वर्याय नमइति पीठशक्तीर्धर्माद्यष्टकं चाभ्यर्च्य मूलमुच्चार्य महागणपतिमावाहयामीत्यावाह्य पञ्चधोपचर्य [1]दशधा संतर्प्य मूलेन मिथुनाङ्गब्राह्म्यादीन्द्रादिरूपपञ्चावरणपूजां कुर्यात्॥ ७॥**

पुरतइति पीठे इत्यन्तं मूर्त्याधारनियामकम्। वाकारद्वयं समविकल्पद्योतकम्। चतुरश्रं सर्वस्मात् बहिः तदन्तः अष्टदलं तदन्तः षट्कोणं तदन्तः त्रिकोणम् इति क्रमोज्ञेयः। तीव्रादिषु पीठशक्तिरिति सङ्केतात् आसां श्रीगणपत्याधारभूतपीठे रक्तचन्दननिर्मिते पूजनमिति ज्ञायते। तत्र क्रमानुक्तौ प्रागादिष्वष्टदिक्षु मध्ये च नवशक्तयः पूज्याः। धर्मादीनां चतुष्टयं वायव्यादिविदिक्षु अधर्मादिचतुष्टयं पश्चिमादिप्रादक्षिण्येन पीठएव समर्चयेत्, पीठशक्तीः धर्माद्यष्टकं चेति द्वयोरेकदेशस्य श्रुतत्वात्। धर्मादीनां दिङ्नियमः वायुकोणतः। परमानन्दतन्त्रे—

धर्मं ज्ञानं च वैराग्यमैश्वर्यं पश्चिमादितः।
अधर्मादिचतुष्कं च.... ....... ॥ इति ॥

पञ्चधा पञ्चप्रकारैः गन्धपुष्पधूपदीपनैवेद्यरूपैः उपचर्य पूजयित्वा। अत्र मन्त्राः—लं पृथिव्यात्मने गन्धं कल्पयामि, हं आकाशात्मने पुष्पं कल्पयामि, यं वाय्वात्मने धूपं कल्पयामि, रं अग्न्यात्मने दीपं कल्पयामि, वं अमृतात्मने अमृतनैवेद्यं कल्पयामि। अत्र प्रमाणं परमानन्दतन्त्रे—

[2]गन्धं पुष्पं च धूपं च दीपं नैवेद्यकं प्रिये।
भूतपञ्चकबीजेन पृथिव्याद्यात्मकं परम्।
क्रमेण पञ्चभिर्देवि मानसे त्वेवमर्चयेत्॥ इति॥

मूलेन दशधा दशवारम्। सन्तर्प्येत्यत्र तर्पणसाधनद्रव्यं विशेषार्घ्यपात्रस्थम्। तत्प्रकारश्च कथं कार्यमित्याकाङ्क्षितत्वात् सन्निकृष्टत्वात् श्यामाक्रमे वक्ष्यमाणधर्म[3]एव ग्राह्यः एवमावरण-

---

१ दशधोपतर्प्य–ब२.

२. एतदुपचारविषये विशेषः द्वि. प. शि. ७ वि. द्रश्यः।

३. अग्रे–६ खण्डेश्यामाक्रमीय २२ सूत्रोक्तः इति ज्ञेयम्।

पूजायामपि इतिकर्तव्यताऽऽकाङ्क्षायां ततएव ग्राह्यम् । [1]तर्पणे तु मूलमुक्त्वा श्रीमहागणपतिं तर्पयामीति मन्त्रशेषः । प्रतितर्पणं मन्त्रावृत्तिः, द्रव्यपृथक्त्वात् । अतएव हिरण्यकेशिसूत्रे " द्रव्यपृथक्त्वेऽभ्यावर्तते " इति ॥

यत्तु निबन्धे तर्पणमन्त्रे पूजयामीति मन्त्रशेषलेखनं तदशुद्धम् । यदि तर्पणपूजनयोरभेदः तर्ह्यग्रेऽपि पञ्चावरणतर्पणं कुर्यादित्येव वदेत्, न पूजां कुर्यादिति वदेत् । यतोधातुभेदेनोच्चारणम् अतोऽर्थभेदोऽप्यावश्यकः । अर्थभेदे पूजालिङ्गकमन्त्रस्य तर्पणानङ्गत्वं स्पष्टम् । एवं निबन्धे प्रधानदेवपूजोत्तरं षडङ्गौघत्रयपूजा चोक्ता । तत्र मूलं यदि तन्त्रान्तरं तस्यात्र प्रवेशोनास्तीति पूर्वमेवोक्तम् । अतस्तन्न कार्यम् ॥

मिथुनानां आवरणद्वयम्, अङ्गदेवताः तृतीयावरणं, ब्राह्म्याद्याः चतुर्थावरणम्, इन्द्राद्याः पञ्चमावरणम्, एवं पञ्चावरणपूजां कुर्यात् ॥ ७ ॥

**पञ्चावरणीपूजा**

तत्र प्रधानदेवतातर्पणदेशमाह—( तदेवसविस्तरं प्रपञ्चयति )

**त्रिकोणे देवः तस्य षडस्रस्यान्तराले श्रीश्रीपत्यादिचतुर्मिथुनानि अङ्गानि च ऋद्ध्यामोदादिषण्मिथुनानि षडस्रे मिथुनद्वयं षडस्रोभयपार्श्वयोस्तत्सन्धिष्वङ्गानि ब्राह्म्याद्याअष्टदळे चतुरस्राष्टादिक्ष्विन्द्राद्याः पूज्याः सर्वत्र देवतानामसु श्रीपूर्वं पादुकामुच्चार्य पूजयामीत्यष्टाक्षरीं योजयेत् ॥ ८ ॥**

त्रिकोणे देवः तर्प्यः इति शेषः । तत् त्रिकोणं षडस्रं च तयोरन्तराळे अनुक्तत्वात् प्रागादिदिक्षु चतुरावृत्तितर्पणपाठक्रमानुरोधेन श्रीश्रीपतिप्रभृति मिथुनचतुष्टयं पूज्यम् । एतावत् प्रथमावरणम् । ऋद्ध्यामोदमिथुनमारभ्य षण्मिथुनानि षडस्रकोणेषु । एतदुत्तरवृत्ति मिथुनद्वयं षडस्रपार्श्वद्वये इति द्वितीयावरणम् । षट्कोणयन्त्रे रेखोपरि रेखा यत्र गच्छति स तत्सन्धिः । तत्र ईदृशाः सन्धयः षट्सन्ति, तादृशसन्धिषु । क्रमस्यानुक्तत्वात् अग्नीशासुरवायुकोणक्रमस्योक्तस्यासम्भवात्, प्रागपवर्गता उत्तरापवर्गता यथा स्यात् तथा, क्रममनादृत्य,

---

१. एतदादिसर्वत्रावरणपूजायां तत्तदेवतातर्पणे गृह्यमाणविशेषार्घादिपात्रस्थबिन्द्वक्षतादि वस्तु कयाङ्गुल्या ग्राह्यं; तत्र विवेकउक्तः श्री कुलार्णवतन्त्रे-६ उल्लास समाप्तौ-६० पत्रे श्री शिवेन भगवता यथा-

॥ अन्तःशक्तिमनुस्मृत्य तर्पयेद्वीरदेवताः । अङ्गुष्ठोभैरवोदेवः अनामा चण्डिका प्रिये ॥
अनामाङ्गुष्ठयोगेन तत्तत् कुलजसन्ततिम् । अङ्गुष्ठानामिकाभ्याञ्च वश्यकर्मणि तर्पयेत् ॥
तर्जन्यङ्गुष्ठयोगेन तर्पयेदभिचारके । कनिष्ठाङ्गुष्ठयोगेन स्तम्भने तर्पयेत् प्रिये ॥
एवं सन्तर्प्य देवेशि कुलद्रव्यैर्यथाविधि--॥ इति ॥

॥ अन्यच्चात्रैव-६ खण्डे श्यामाक्रमे २२ सूत्रे तद्भाष्ये चापि द्रष्टव्यम्

षडङ्गानि यजेत् । इति तृतीयावरणम् । अष्टदले क्रमाकाङ्क्षायां श्रीविद्यार्णवोक्तः । आद्यचतसृणां पश्चिमादिप्रादक्षिण्येन अग्रिमाणां वायव्यादिविदिक्षु प्रादक्षिण्येन पूज्याः ब्राह्म्याद्यष्टमातरः इति चतुर्थावरणम् । चतुरस्रे प्रागाद्यष्टदिक्षु तत्तद्दिक्पतीन् यजेत् । अत्र मन्त्राकाङ्क्षत्वात् सन्निकृष्टश्यामाक्रमोक्तदिक्पालमन्त्राः[१] ग्राह्याः । अथवा—[२]वक्ष्यमाणाष्टाक्षरीयुक्तनाममन्त्रेणैव । इति पञ्चमावरणम् । अनुष्ठाने उपयुक्तां सर्वसाधारणीं कांचित् परिभाषामाह—सर्वत्रेति । सर्वत्र पूजासामान्ये देवतानामसु नाममन्त्रेषु । घटकत्वं सप्तम्यर्थः । श्रीपूर्वं प्रथमं श्रीपदमुच्चार्य ततः पादुकाम् इति ततः पूजयामि इति । तथा च श्रीपादुकां पूजयामीति योज्यमिति यावत् ॥ ८ ॥

**गणनाथस्य पुनरुपतर्पणादि**

**एवं पञ्चावरणीमिष्ट्वा पुनर्देवं गणनाथं दशधोपतर्प्य षोडशोपचारैरुपचर्य प्रणवमायाऽन्ते सर्वविघ्नकृद्भ्यः सर्वभूतेभ्योहुं स्वाहा-इति त्रिः पठित्वा बलिं दत्वा गणपतिबुद्ध्यैकं वटुकं सिद्धलक्ष्मीबुद्ध्यैकां शक्तिं चाहूय गन्धपुष्पाक्षतैरभ्यर्च्यादिमोपादिममध्यमान् दत्वा मम निर्विघ्नं मन्त्रसिद्धिर्भूयादित्यनुग्रहं कारयित्वा नमस्कृत्य यथाशक्ति जपेत् ॥ ९ ॥**

एवम् उक्तप्रकारेण पञ्चानामावरणानाम् आवरणदेवतानां समूहः पञ्चावरणी, "द्विगोः" इति ङीप्, ताम् इष्ट्वा पूजयित्वा । [३]पुनरित्यनेन पञ्चावरणान्तःपातित्वं सूचितम् । दशधा दशवारम् । तर्पणप्रकारश्च[४] पूर्वमेव व्याख्यातः । षोडशोपचाराश्च परमानन्दतन्त्रे परिगणिताः । यथा—

[५]पाद्यमर्घ्यं चाचमनं स्नानं वस्त्रं च भूषणम् ।
गन्धं पुष्पं धूपदीपौ नैवेद्यं चापि वीटिकाम् ।
नीराजनं चाञ्जलिं च परिक्रामं नतिं शिवे ।
गणयेदुपचारान् वै प्रत्येकं षोडशेश्वरि ॥ इति ॥

अग्रे सूत्रोक्तषोडशोपचारावा ॥

अत्र पूजाऽङ्गत्वेन पद्धतौ होमउक्तः, सः निर्मूलः ॥

---

१. अग्रे–६ खण्डेश्यामाक्रमे–१४ सूत्रे मूले १० दिक्पालमन्त्राः सन्ति–

२. अत्र अष्टाक्षरीमन्त्रः श्रीपादुकां पूजयामीति–नाममन्त्रश्च, ॐश्रीइन्द्रायनमः, इत्याद्यभिप्रेयम्–

३ पुनरित्यनेन यथापूर्वोक्तपञ्चावरणपूजायाइव एवं पञ्चावरणीमिष्ट्वेत्येव अनुवादः । तद्वत् अयमपि अनुवादएव । क्रममात्रविधिरिति भ्रमोनिरस्तः । दशधा—बर.

४ एतत्खण्डे ८०–८१–पत्रयोः ७ सूत्रभाष्यान्ते, इति ज्ञेयम् ।

५ एतदुपचारविषये–द्वि. प–शि–७–वि–दृश्यः–।

प्रणवः प्रसिद्धः, माया ह्रीम्, एतयोः अन्ते अग्रे, स्वाहाऽन्तं शेषं पठेत्। अयं बलिदान-मन्त्रः । इमं मन्त्रं त्रिः पठित्वा ततोबलिदानं कुर्यात् । बलिद्रव्यमाकाङ्क्षितं श्रीक्रमोक्तं ग्राह्यम् । देशाकाङ्क्षायां श्रीक्रमोक्तं स्ववामभागतः । गणपतिबुद्ध्या इत्यस्य अभ्यर्च्य इत्यनेनान्वयः । गणपतिस्वरूपं भावयित्वेति यावत् । पाठक्रमं बाधित्वा अर्थक्रमेण आदौ आवाहनं पश्चात् भावनं ततोऽर्चनं, एवमग्रेऽपि । अत्र द्वयोरप्याह्वानादिकं [1]पदार्थानुसमयेन नत्वञ्जनादिवत् काण्डानुसमयेन, तद्वत् अत्र बाधकाभावात् , सर्वेषां तुल्यप्रधानसन्निकर्ष-सम्भवाच्च । आदिमं स्पष्टं, उपादिमं द्वितीयं, मध्यमं तृतीयं च दत्वा। अयं प्रतिपत्तिसंस्कारः मध्यमानिति द्वितीयाश्रुतेः । दानेन द्रव्यं संस्कुर्यात् इति तदर्थः । तथा च आवरणपूजोत्तरं द्रव्यदोषे एतस्य निवृत्तिरेव । अनुग्रहं कारयित्वा तयोरनुग्रहोयथा भवेत् तथा तत्संतोषं स्वयं संपादयेत् इति भावः । नमः इत्यारभ्य जपेत् इत्यन्तः स्पष्टार्थः ॥

यच्च निबन्धे जपानन्तरं वटुकसुवासिनीपूजनकथनं तत्सूत्रविरुद्धमित्यनेन स्पष्टीकृतम् ॥९॥

### गणपत्युद्वासनम्

**यद्यग्निकार्यसंपत्तिः बलेः पूर्वं विधिवत् संस्कृतेऽग्नौ स्वाहाऽन्तैः श्रीश्रीपत्यादिविघ्नकर्तृपर्यन्तैः मन्त्रैर्हुत्वा पुनरागत्य देवं त्रिवारं संतर्प्य योग्यैस्सह मपञ्चकमुररीकृत्य महागणपतिमात्मन्युद्वास्य सिद्धसङ्कल्पः सुखी विहरेत् इति शिवम् ॥१०॥**

इति दुष्टक्षत्रियकुलान्तक–रेणुकागर्भसम्भूत–महादेवप्रधानशिष्य–परशुराम–श्रीभार्गव-महोपाध्याय–श्रीमत्कुलाचार्यविरचितकल्पसूत्रे गणपतिप्रकरणं द्वितीयखण्डात्मकं समाप्तम्

यदीत्यनेन होमस्य कृताकृतत्वं सूचितम् । बलेः पूर्वम्–इत्यनेन [2]क्रमशेषः सूचितः । विधिवत् इति— [3]अग्रे वक्ष्यमाणविधिनेत्यर्थः । श्रीश्रीपतिभ्यांस्वाहेति मन्त्रस्वरूपम् ॥

यच्च निबन्धे श्रियै स्वाहा श्रीपतये स्वाहा इति मन्त्रविभागं लिलेख तं प्रत्ययं प्रश्नः— मिथुनमेका देवता, उत देवताद्वयम् ? आद्ये मन्त्रद्वयविभागोऽनुचितः । द्वितीये आवरण-पूजायां श्रीश्रीपतिश्रीपादुकां पूजयामीति निबन्धे समष्टिमन्त्रलेखोऽनुचितः । तस्मात् सन्दर्भविरुद्धमुपेक्ष्यम् । न च तव मते चतुरावृत्तितर्पणेऽपि समष्टिमन्त्रापत्तिः इति वाच्यम्; तत्र मिथुनेष्वेकैकां देवतां चतुर्वारमिति वर्तते, न मिथुनानि तर्पयित्वेति । पूजाप्रकरणे केवलमिथुनानि पूजयेदित्येव । तेन मिथुनस्य देवतात्वं स्पष्टम् । एवं होम-

---

१ काण्डानुसमयपदार्थानुसमयविवेकाय–द्वि. प. शि. वि. ८ द्रश्यः ।

२ देशः सू—ब२.

३ अग्रतन ९–खण्डप्रतिपादितहोमविध्युक्तरीत्येत्यर्थः—

स्थलेऽपि श्रीश्रीपत्यादीत्यनेन मिथुनस्यैकदेवतात्वं स्पष्टम्। अन्यथा श्र्यादिविघ्नकर्तृपर्यन्तै रित्येव वदेत्, श्रीपतिग्रहणं व्यर्थम्। न च विघ्नकर्तृपर्यन्तैरित्यत्र एकदेवताग्रहणं प्रत्येकस्य देवतात्वे किमिति ज्ञापकं न भवेत् इति वाच्यम्। यदीदं मन्त्रस्वरूपज्ञापकं भवेत् अत्रापि विघ्नकर्त्रन्तैरित्यनेनैव श्रीश्रीपत्यादीनां लाभे श्रीश्रीपत्यादीति व्यर्थं सत् मन्त्रस्वरूपज्ञापकं सत् सार्थकम्। विघ्नकर्तृपर्यन्तैरिति अग्रिममिथुननिवर्तकं सत् सार्थकमिति सर्वं समञ्जसम्। तस्मात् चतुरावृत्तितर्पणे पूर्वोक्तयुक्त्या चतुश्चत्वारिंशदधिकचतुश्शततर्पणसङ्ख्यापरिपूर्त्यै च प्रत्येकं [1]देवतात्वम्। पूजायां होमे चोक्तज्ञापकेन व्यासज्यवृत्त्येव देवतात्वम्। अतोमन्त्र-स्वरूपमस्मदुक्तमेव। विघ्नकर्तृपर्यन्तैरित्यनेन अग्रिममिथुनपरिसंख्या॥

हुत्वा इत्यत्र द्रव्याकाङ्क्षायाम् "अनादिष्टआज्यं भवति" इति परिभाषया आज्यमेव। कामनाविशेषे तु द्रव्यविशेषोमोदकाऽऽदिः। पुनरागत्य इत्यनेन पूजाप्रदेशादन्योहोमप्रदेशः— इति सूचितम्। शेषं पूर्ववत्। योग्यैः संप्रदायाभिज्ञैः सह। एतद्विशेषणस्वरसार्थं वितत्य स्पष्टीकरिष्यामः उपरिष्टात् श्रीक्रमे[2]। मपञ्चकमुररीकृत्य स्वीकृत्य श्रीक्रमे वक्ष्यमाणेन विधिना। अत्र सहशब्दश्च न योग्याभावेऽप्यवश्यं संपादनीयमिति तदभावे अङ्गलोपजनितं प्रायश्चित्तं वा प्रापयति, किं तु विद्यमाने साहित्यं अविद्यमाने केवलं स्वयमेव, "सह शाखया प्रस्तरं प्रहरति" इतिवत्। अत्र गणपत्युपासनामर्यादाऽनुक्तेः श्यामाऽऽदिवत्। जपसङ्ख्यायाश्चानुक्तेः तन्त्रान्तरं शरणीकार्यम्। तत्र तन्त्रान्तरवचनं, तन्त्रसारे—

ध्यायेन्मन्त्रं जपेन्मन्त्रं चतुर्लक्षं समाहितः।
चतुस्सहस्रसंयुक्तं चत्वारिंशत्सहस्रकम्।
दशांशं जुहुयात् द्रव्यैरष्टभिर्मोदकादिभिः॥ इति॥

उद्वासनमुद्रया उद्वास्य। सिद्धसङ्कल्पः सिद्धकार्यः। [3]सुखीविहरेत् इति प्रतिपादितकर्मणः न केवलं प्रत्यूहनाशः, किन्त्विदमपि फलमिति दर्शितम्। एतेन श्रीविद्योपास्त्यनौपयिकानङ्ग-स्वतन्त्रगणनायकोपास्त्या यद्यदपेक्षितं तत् सिध्यतीति कृतसङ्कल्पेति पदेन सूचितम्[4]। शिवम् इति पूर्ववत् प्रकरणसमाप्तिद्योतकम्॥

इति श्रीरामेश्वरनिर्मितायां सौभाग्योदयनाम्न्यां परशुरामसूत्रवृत्तौ गणनायकपद्धतिर्नाम द्वितीयखण्डः समाप्तः॥

---

**सूत्रस्य पुनरावृत्तौ शोध्यं सूचयितव्यकम्।**
**परिशिष्टस्थलं चैव पूर्णमाद्याप्रसादतः॥ ( इति द्वितीयः खण्डः ) श्रीः**

---

१ देवतात्वेऽपि पूजायां०—ब२.
२—३ खण्ड ३० सूत्रभाष्यान्ते—संप्रति, इदानींतनाअजितेन्द्रिया, इत्यादिना—
३ इदमेतत्खण्डीयान्तिमसूत्रस्थपदं ज्ञेयम्—
४ एतच्छ्रीगणेशपूजापद्धत्यनुष्ठानविशेषज्ञानाय—श्रीप्रपञ्चसार, गणेशपुराण,शारदातिलक, मन्त्रमहोदध्या-दितान्त्रिकग्रन्थाद्रष्टव्याः—

# तृतीयः खण्डः—श्रीक्रमः

## ललिताऽधिकारः

नित्यौघत्रयमिलितामष्टावरणाङ्गषट्कसंवीताम् ।
चिन्तयतां तत्कृपया वाचोनिर्यान्त्ययत्नतोवदनात् ॥

एवं पूर्वखण्डेन श्रीललितोपास्त्यङ्गभूतं गणपत्युपासनमुक्त्वा श्रीपरदेवतायाः श्रीललितायाः क्रमं वक्तुमुपक्रमते—

**एवं गणपतिमिष्ट्वा विधूतसमस्तविघ्नव्यतिकरः शक्तिचक्रैकनायिकायाः श्रीललितायाः क्रममारभेत ॥ १ ॥**

एवमिति विघ्नव्यतिकरः—इत्यन्तेन ग्रन्थेन पूर्वं कंचित्कालं गणपत्याराधनं कृत्वा पश्चात् श्रीललितोपास्त्यारम्भइति सूचितम् । एवं पूर्वोक्तप्रकारेण इष्ट्वा उपास्य विधूतानिरस्ताः समस्ताः संपूर्णाः विघ्नानां व्यतिकराः सङ्घाताः येन ॥

### गणनायकोपास्तेः प्रधानकर्मत्वम्

इदम् अधिकारिविशेषणम् । अयम् उत्पत्तिविधिः । पूर्वविशेषणस्वारस्यात् अधिकारविधिरपि । यद्वा—नाधिकारिविशेषणमिदम्, तथा सति गणपतेरुपासनायाः अग्रिमोपासनाङ्गत्वापत्तेः । न चेष्टापत्तिः । तार्तीयश्रुतिलिङ्गादीनि अङ्गत्वसाधकानि षट् प्रमाणानि । तन्मध्ये तृतीयवाक्यप्रमाणसिद्धम् अङ्गत्वम्, तद्बाधकलिङ्गश्रुत्योरभावेन प्रमाणसिद्धाङ्गत्वापह्नवस्य कर्तुमशक्यत्वात् । किं तु गणपत्युपास्त्युत्तरवृत्तित्वरूपक्रमविशिष्टललितोपास्तिरनेन विधीयते । यद्वा—पूर्वोपास्तिरूपगुणविशिष्टक्रमविशेषविशिष्टोवा अयमारम्भः । तत्काललिलितोपास्तिः अनेन विधीयते । विधूतसमस्तविघ्नव्यतिकरइति पूर्वोक्तफलस्यानुवादकम् । एवं चारम्भोनाम सङ्कल्पविशेषः "दर्शपूर्णमासावारप्स्ये" इतिवत् । ललिताक्रममारभेत, इत्यनेन यावज्जीवं वर्तिष्ये इति सङ्कल्पः सिद्धः । तदङ्गं गणपत्याराधनम् । एतद्गुणकसङ्कल्पश्च श्रीललितोपास्तौ प्रयाजादिवदारादुपकारकः प्रधानकर्म, "यैस्तु द्रव्यं न चिकीर्ष्यते" इति जैमिनिसूत्रोक्तलक्षणसत्त्वात् । न च अधिकारिविशेषणत्वे संप्रत्युक्तविशिष्टविधिरूपत्वे वा अनुष्ठाने कोविशेषइति वाच्यम् । यद्यधिकारिविशेषणं तर्हि प्रमादादिना गणपत्युपास्तिमकृत्वा ललितोपास्त्यारम्भे अनधिकारिणा अन्धादिना अनुष्ठितदर्शपूर्णमासवत् तावत्पर्यन्तकृतस्य कर्मणोऽफलत्वेन यदा सावधानता तदा ललितोपास्तिं त्यक्त्वा गणपत्युपास्तिं संपाद्य संपन्नाधिकारः ततः श्रीविद्योपास्तिं कुर्यात् । विशिष्टविधिपक्षे गणपत्युपास्तेरारम्भाङ्गत्वेन आरम्भस्य च ललितो-

पास्त्यङ्गत्वेन विस्मृत्यारम्भे जाते सति अङ्गलोपजनितदोषपरिहाराय किंचिद्विहितं प्रायश्चित्तम्, नाङ्गानुसारेण प्रधानावृत्तिः। न च अत्यन्तमङ्गलोपाद्वरं तस्यानुष्ठानं प्रधानस्याङ्गाननुरोधित्वान्मा भवत्वावृत्तिः, अङ्गं तु केवलमनुष्ठीयताम् इति वाच्यम्। प्रधानपूर्वाङ्गानां यावतां प्रधानेन अपूर्वे जननीये सहकारित्वं, काम्ये प्रधानेनापूर्वे जननीये सहकारिणोऽभावात् अनन्तरं प्रधानस्य नष्टत्वेन केवलाङ्गानुष्ठाने तदपि व्यर्थम्। नित्ये तु यावज्जीवं कर्तव्यम् इत्यङ्गलोप-रहितं च कर्तव्यम् इत्युक्ते अशक्यानुष्ठानरूपत्वेन शास्त्रस्य अप्रामाण्यापत्तिभिया सकलाङ्गम् इत्यस्य यावच्छक्ययावज्ज्ञातसकलाङ्गमिति वाक्यसङ्कोचोयुक्तः। तथा च. यथाशक्तियावज्ज्ञातैरेवाङ्गैः सहितप्रधानेन अपूर्वोत्पत्तिः कल्प्यतइति कॢप्तं षष्ठे। तथा च ललितोपास्तेर्नित्यत्वेन अज्ञातयत्किंचिदङ्गलोपेऽपि प्रधानेनेतराङ्गसहितेन अपूर्वजननात् पुनरङ्गानुष्ठानस्य व्यर्थत्वात् न गणपत्युपास्तिरूपस्याङ्गस्याज्ञातस्य पुनरनुष्ठानम्। यदि विघ्ननिरासार्थं किंचिदनुष्ठेयं तर्हि विनायकस्तवपाठादिकं तन्मन्त्रजपएव वा कार्यः। एवंप्रकारानुष्ठानभेदोऽस्ति इति तद्विचारः कृतः। इतोऽधिकं सुधियोविचारयन्तु ॥

शक्तिचक्रैकनायिकायाः शक्तिचक्राणि श्रीचक्रावयवनवचक्राणां मध्ये त्रिकोणादीनि पञ्चचक्राणि। तदुक्तं ब्रह्माण्डपुराणे—

चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयो र्वपुः॥
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च॥ इति॥

तेषाम् एका मुख्या नायिका या तस्याः। यद्वा—शक्तयः सधवाः स्त्रियः, तासां चक्रं समूहः, तेषां मध्ये एका अद्वितीया चेयं [1]नायिका जगन्नियन्त्री। न च 'न निर्धारणे' इति षष्ठीसमासनिषेधात् कथमयमर्थः इति वाच्यम्; षष्ठीसमासनिषेधेऽपि पुरुषोत्तमः—इतिवत् सप्तमीसमासे बाधकाभावात्। यद्वा—तत्तद्वस्तुनिष्ठतत्तत्कार्यनिर्वाहिकाः शक्तयः, तासां समूहस्यैका अद्वितीया नायिका प्रेरिका। तदुक्तं श्रीदेवीभागवते—

शिवाद्यवनिपर्यन्ते शक्तयः कार्यसाधकाः।
मयैव प्रेरिताविद्धि ताः सर्वामुनिसत्तम॥ इति॥

यद्वा—शक्तयः श्यामावार्तालीप्रभृतयः ताएव चक्रं परिवारः, "चक्रं सेव्यं नृपः सेव्यः" इत्यभियुक्तप्रयोगात्। तासामेकनायिका अद्वितीयनियन्त्री इत्यर्थः। एतेन श्रीविद्यायाः प्राधान्यं सूचितम्। शक्तिचक्रैकनायिकेति ललितायागुणः। तथा च विशिष्टस्य देवतात्वं,

---

१ नाथा श्रेष्ठा। न च—ब.

उत्पत्तिवाक्ये श्रूयमाणगुणविशिष्टस्य देवतात्वात्, " यदग्नये पवमानाय-अग्नये पावकाय" इत्यादिवत् उत्पत्तिवाक्ये श्रुतदेवतायाः सर्वत्रोच्चारणमिति नियमात्। इत्थं च यत्र देवतानामकीर्तन मावश्यकं तत्र गुणविशिष्टस्यैव कीर्तनम्; यथा सन्ध्याजपादौ सन्ध्यापूजाऽऽदौ, शक्तिचक्रैक-नायिकायाः श्रीललितायाः प्रीतये अमुककर्म करिष्यइति। एवं निवेदने। अन्यथा पवमानेष्टौ " अग्नये जुष्टं निर्वपामि " इत्येव स्यात्। तस्मात् गुणविशिष्टदेवतायोजनं मन्त्रेष्वत्र कार्यम्। क्रमं पूजाम् उपासनां वा आरभेत॥

## ललितानामनिर्वचनम्

ललितानामनिर्वचनं पद्मपुराणे—

लोकानतीत्य ललते ललिता तेन चोच्यते। इति॥

अत्र चकारद्योत्यं निरुक्त्यन्तरं दर्शयामासुरस्मत्परमेष्ठिगुरवः सहस्रनामभाष्ये—ललितं शृङ्गारभावजन्यः क्रियाविशेषः, तद्वती ललिता। तेन शृङ्गाररसप्रधानेयं मूर्तिरिति ध्वनितम्॥ १ ॥

## ब्राह्ममूहूर्तकर्तव्यध्यानादि

[1]ततोगुरुध्यानादीनुपदिशति सूत्रद्वयेन—

**ब्राह्मे मुहूर्ते ब्राह्मणोमुक्तस्वापः पापविलापाय परमशिवरूपं गुरुमभिमृश्य॥ २॥**

ब्राह्मः मुहूर्तः—दिवसं षष्टिघटिकाऽऽत्मकं त्रिंशता विभज्य अष्टाविंशोमुहूर्तः सब्राह्मः। तदुक्तं देवीभागवते—

अष्टाविंशतिमोयश्च मुहूर्तोब्रह्मनामकः।
तस्मिन्नुत्थाय मतिमांश्चिन्तयेदात्मनो हितम्[2]॥ इति॥

तस्मिन् ब्राह्मणः मुक्तस्वापः निद्रां त्यक्त्वा। तस्मिन् समये निद्रात्यागस्य सामान्यतः स्मृतिप्राप्तत्वेऽपि क्रत्वर्थत्वेन अप्राप्तमनेन विधीयते। दर्शपूर्णमासप्रकरणे " नानृतं वदेत्" इतिवत् क्रत्वर्थत्वम्। तस्मिन्निद्राऽभावे प्राशस्त्यं च त्रिपुरारहस्ये—

द्विमुहूर्तावशेषे तु सूर्यस्योदयनं प्रति।
उषःकालः समाख्यातः साधकानां शुभावहः॥

---

१ " इतः परं ललितोपासकेन अनुदिनं कर्तव्याः क्रियाआह " इति ब. कोशे.

२ इतोऽन्यदपिपुराणप्रसिद्धं ब्राह्ममुहूर्त्तलक्षणं तत्र स्वापनिषेधोपि, विष्णुपुराणे, रत्नावल्यादिग्रन्थादौ च-यथा—
रात्रेः पश्चिमयामस्य मुहूर्तोयस्तृतीयकः—सब्राह्मइति विज्ञेयोविहितः सप्रबोधने॥
पञ्चपञ्चउषःकालाः सप्तपञ्चारुणोदयः। अष्टपञ्च भवेत्प्रातस्ततः सूर्योदयः स्मृतः॥
॥ तत्रफलं धन्वन्तरिः—धमार्थकामप्रीत्यर्थे सतां ग्रहणमुत्तमम् प्राप्नुयात्स्वर्गवासं च नित्यमेवं समाचरेत्॥
॥रत्नावल्यांच। ब्राह्मे मुहूर्ते या निद्रा सा, पुण्यक्षयकारिणी, तां करोति द्विजोमोहात्पादकृच्छ्रेण शुध्यतीति॥

तत्काले योयमर्थं वै चिन्तयेन्निश्चलान्तरः ।
तदस्य जायते राम कालवेलास्वभावतः ॥
यस्तु कल्पद्रुमप्रख्ये कालेऽस्मिन्नावबुध्यते ।
बुद्ध्वा वा स्वं हितं नैव चिन्तयत्यतिमूढधीः ॥
सर्वैः स्वार्थैः परिभ्रष्टः पङ्के गौरिव सीदति ॥ इति ॥

ईदृशे कालउत्थाय सर्वपापक्षयाय—तादर्थ्ये चतुर्थी । [1]शिवएव गुरुः न ततोऽन्यः इति अभिमृश्य मनसि ध्यात्वा ॥ २ ॥

**मूलादिविधिबिलपर्यन्तं तडित्कोटिकडारां तरुणदिवाकरपिञ्जरां ज्वलन्तीं मूलसंविदं ध्यात्वा तद्रश्मिनिहतकश्मलजालः कादिं हादिं वा मूलविद्यां मनसा दशवारमावर्त्य ॥ ३ ॥**

मूलम् आधारचक्रं तदादि तदारभ्य विधिबिलपर्यन्तम्, एतस्य ज्वलन्तीमित्यनेनान्वयः । तटित्कोट्योविद्युत्कोटयः तद्वत् कडारां कपिशां तरुणदिवाकरः नभोमध्यवर्ती सूर्यः तद्वत् पिञ्जराम् अतएव ज्वलन्तीं मूलसंविदं निर्विषयचितं ध्यात्वा तद्रश्मिभिः चिद्रूपज्वालारश्मिभिः निहतानि परिहृतानि कश्मलानां जालानि समूहाः येन ईदृशः सन् कादिं कामोपासितां हादिं लोपामुद्रोपासितां वा विद्यां पञ्चदशीं मनसा क्रमविशिष्टान् वर्णान् ध्यात्वा ॥

अत्र निबन्धे स्वगुरुपादुकोच्चारः पञ्चमुद्राभिः नमनम् अन्ये च स्वकपोलकल्पिताः श्लोकाश्च लिखिताः । ते सूत्रानभिमताअनादरणीयाः । एवं दन्तधावने मन्त्राः, विंशतिगण्डूषनियमः, सर्वेऽपि निष्प्रमाणास्त्याज्याः ॥ ३ ॥

### स्नानसन्ध्याकर्म

ततः स्नानसन्ध्ये वदति—

**स्नानकर्मणि प्राप्ते [2]मूलेन दत्वा त्रिः सलिलाञ्जलीन् त्रिस्तदभिमन्त्रिताः पीत्वाऽपस्त्रिस्सन्तर्प्य त्रिः प्रोक्ष्यात्मानं परिधाय [3]वाससी [4]ह्रां ह्रीं ह्रूं सः इत्युक्त्वा मार्ताण्डभैरवाय प्रकाशशक्तिसहिताय स्वाहेति त्रिस्सवित्रे दत्तार्घ्यः ॥ ४ ॥**

---

१. अत्र पूर्वतने ७ पत्रे १ सूत्रभाष्ये वृत्तिकृदुदाहृते. श्रुतिपथगलितानामित्यादिश्लोके श्रीसूतोपि श्रीशिवं भगवन्तं गुरुगुरुरित्याह-तथैवात्र स्थलेपि भगवानू श्रीजामदग्न्योरामोप्येनं परमे'ष्टिनं श्रीशिवपरमशिवं गुरुमित्याचचष्टेइदमेत्रातिशायि, नमस्यत्वं महादेवत्वं चेशस्य गुरुगुरोरिति–प.–क.–सू.–द्वितीयावृत्तिद्विपरिशिष्टकारः ॥

२. मूलेन मूर्धनि दत्वा–ब.

३. " मूलेन " इत्यधिकः–ब२.

४. गृहमागत्य दीर्घत्रयान्वितोहंसइत्युक्त्वा, इत्यधिकः त. कोशे.

स्नानकर्मणि प्राप्ते स्नानावसरे। एतेन वैदिकस्नानोत्तरत्वम् अस्य सूचितम्। अयमेवार्थः स्पष्टमुक्तः त्रिपुरार्णवे—

त्रैवर्णिकैर्वैदिकाऽन्ते तान्त्रिकं क्रियतेऽखिलम्॥ इति॥

अत्र प्रत्यञ्जलि मन्त्रावृत्तिः। अञ्जलीन् इति बहुवचनेन द्रव्यभेदे सिद्धे क्रियायाआवृत्तिरपि, द्रव्यभेदे मन्त्रावृत्तेरेकादशे व्यवस्थापितत्वात्। दत्वा इत्यस्य कुत्रेत्याकाङ्क्षायां स्नानरूपतया योग्यत्वात् स्वशिरसीति पूरणीयम्। मूलेन इति मूलमुच्चारयन्निति तदर्थः। त्रिः तदभिमन्त्रिताः मूलाभिमन्त्रिताः। त्रिरित्यस्य अभिमन्त्रिताइत्यनेनान्वयः सन्निहितत्वात्, न पीत्वेत्यनेन विप्रकृष्टत्वात्। तेन मूलत्रिवाराभिमन्त्रितानाम् अपाम् सकृदेव प्राशनम्। त्रिः सन्तर्प्य मूलमुच्चार्य शक्तिचक्रैकनायिकां श्रीललितां तर्पयामीति मन्त्रस्य सकृत्पाठः, क्रियाऽभ्यासरूपत्वात्। चतुरावृत्तितर्पणे तु मन्त्रावृत्तिरेव न क्रियाऽऽवृत्तिः इति पूर्वमेव व्यवस्थापितम्। न हि द्रव्यभेदप्रापकं शास्त्रमस्ति, तस्मात् सकृदेव मन्त्रः। प्रोक्षणेऽप्येवमेव। आत्मानम् इति शरीरवाचकं, मुख्यार्थस्य प्रोक्षणजनितसंस्कारासम्भवात्। तर्पणप्रोक्षणयोः मन्त्रानुक्तेः मूलेनेति योजयेत्। तदुक्तं त्रिपुरार्णवे—

मन्त्रानुक्तौ मूलमन्त्रं योजयेत् परमेश्वरि॥ इति॥

न 'मूलेन दत्वा' इत्यस्मादनुषङ्गः, तथा सति 'तदभिमन्त्रिताः' इत्यत्राप्यनुषङ्गे तत्पदवैयर्थ्यात्। अतोऽध्याहारएव। [1]वस्त्रपरिधानं स्मृतिप्राप्तमनूद्यते। तत्फलं स्नानकर्मपरिसमाप्तिज्ञानं ज्ञेयम्। [2]इत्युक्त्वा इत्येतावदपहाय स्वाहाऽन्तोऽर्घ्यदानमन्त्रः। यद्यपि मन्त्रलिङ्गेनैव देवतालाभे सवित्रइति व्यर्थम्। तथाऽपि दत्तार्घ्यइत्यत्र दानपदार्थः स्वस्वत्वध्वंसपूर्वकदेवतोद्देश्यकद्रव्यत्यागः। सच अमुकदेवतायाइदं न ममेति रूपः। तत्र मन्त्रलिङ्गेन मार्तण्डभैरवायेदं न ममेति सिद्धः। "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इतिवत् तं बाधितुं चतुर्थ्यन्तं सवित्रे इति। अत्रापि सकृद्दत्तद्रव्यस्य पुनर्दानासम्भवात् अपरार्घ्ये द्रव्यान्तरत्वं सिद्धम्। तथा च द्रव्यपृथक्त्वात् मन्त्रावृत्तिः; यथा नानाबीजेष्ववहननमन्त्रः॥ ४॥

ततः श्रीचक्रभावनं, सवितृमण्डले देव्यै अर्घ्यदानं च विधीयते—

**तन्मण्डलमध्ये नवयोनिचक्रमनुचिन्त्य[3] वाचमुच्चार्य त्रिपुरसुन्दरि विद्महे काममुच्चार्य पीठकामिनि धीमहि—शक्तिमुच्चार्य, तन्नः क्लिन्ना प्रचोदयादिति—त्रिर्महेश्यै दत्तार्घ्यः शतमष्टोत्तरमावृत्य मनुं मौनमालम्ब्य॥ ५॥**

---

१ 'मूलेन, मूलमुच्चारयन् इति तदर्थः' इत्यधिकः—ब २.

२ वैदिकसन्ध्योत्तरं तान्त्रिकसन्ध्यां करिष्ये इति सङ्कल्प्य—इत्यधिकः—ब. कोशे.

३ इयं श्रीत्रिपुरागायत्री स्पष्टा यथा—ऐं त्रिपुरसुन्दरि विद्महे क्लीं पीठकामिनि धीमहि। तन्नः क्लिन्ना प्रचोदयात्—

तस्य सवितृमण्डलस्य दृश्यमानवर्तुलाकारस्य मध्ये नवयोनयः चतस्रः पराङ्मुखाः पञ्च स्वाभिमुखायोनयोयस्मिन् तत् नवयोनिचक्रं श्रीचक्रमित्यर्थः। तदुक्तं कामिकागमे—"नवयोनिः श्रीचक्रमिति"। सुन्दरीहृदयेऽपि—"नवयोनिः श्रीचक्रं विश्वस्योत्पत्तिकारणं प्रोक्तम्" इति। शेषं स्पष्टम्। वाचं प्रथमकूटं, "श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा" इति प्रमाणात्। प्रथमकूटानन्तरं विद्महे इत्यन्तं पठेत्। ततः कामं मध्यकूटं, तदुक्तं चिद्गगनचन्द्रिकायाम्—

शक्तिवाग्भवयोर्मध्ये कामराजस्तु विश्रुतः।
रक्तशुक्लप्रभामिश्रः.............इति॥

तदुच्चार्य पीठकामिनि धीमहि, इति पठेत्। शक्तिं शक्तिकूटं तृतीयम् उच्चार्य पठित्वा, "शक्तिकूटैकताऽऽपन्नकट्यधोभागधारिणी" इति सहस्रनामपाठात्। ततः प्रचोदयादित्यन्तं पठेत। इदं त्रिपुरागायत्रीत्यप्युच्यते। शेषं पूर्ववत्। आमृश्य जपित्वा। शेषं स्पष्टम्॥

अत्र निबन्धकारोक्तं—स्नाने जले हस्तमात्रमण्डलकरणमारभ्य वम् इति बीजेन सप्तवारमभिमन्त्रणान्तं सन्ध्यायां त्रिरात्मानं प्रोक्ष्येत्यन्तं—तन्त्रान्तरस्थम् एतत्तन्त्रानुसारिणा न स्प्रष्टव्यम्। यदि स्पृश्यते तन्त्रान्तरं, तर्हि सन्ध्यात्रयं पारायणक्रमश्च केन हेतुना त्यक्तः;। तन्मूलं प्रामाणिकश्चेद्वदतु॥ ५॥

### यागमन्दिरप्रवेशादि

ततोयागमन्दिरप्रवेशादीन् वदति—

**यागमन्दिरं गत्वा कॢप्ताकल्पस्सङ्कल्पाकल्पोवा पीठमनुना आसने समुपविष्टः॥ ६॥**

यागमन्दिरं पूजास्थानं गत्वा। एतेन सन्ध्या बहिर्जले नद्यादाविति सिद्धम्। कॢप्ताः धृताः आकल्पाः भूषणानि येनेदृशः। इदं भूषणधारणं पूजाकर्तुरङ्गम्। अतोलोके पूजाकर्तुर्धार्याणि यानि भूषणानि तान्यवश्यं धार्याणि। इदं च श्रीमतां सम्भवति। एवं सति दरिद्रस्य अङ्गभूतभूषणासमर्थस्य अन्धादिवदनधिकारः प्रसक्तः। अतआह—सङ्कल्पाकल्पोवेति। सङ्कल्पेन मानसक्रियया कल्पितआकल्पोयेनेदृशोवा। मनसा निर्मितभूषणधारणकर्तेति यावत्। तथा च दरिद्रस्याप्यस्त्यधिकारइति भावः। भूषणानि पद्मरागप्रचुराणि भूषणविशेषनियमस्य तन्त्रान्तरस्थस्यापि ग्रहणमभिमतम्॥

यत्तु निबन्धे द्वारपूजायां ताम्बूलभक्षणमुक्तं तत् सूत्रकारानभिमतम् । यद्वा—यागमन्दिरे क्रियाविधानात् अर्थसिद्धे गमने पुनर्यागमन्दिरं गत्वेति व्यर्थं सत् गणपतिक्रमस्थान्तःप्रविश्ये-त्यर्थकशब्दकथनात् तदन्तधर्मातिदेशं ज्ञापयति । अतएव वाराहीक्रमे नायं शब्दः । तेन श्रीक्रमे श्यामाक्रमे द्वारपूजाऽस्तु । तथाऽपि श्रीक्रमे ताम्बूलभक्षणं निर्मूलमेव ॥

पीठमनुनेति पूर्वं व्याख्यातम् । समुपविष्टइत्यत्र समित्युपसर्गेण आ समाप्ति एकासनेन स्थेयम् इति ज्ञापयति । अतएव येनासनेन समाप्तिपर्यन्तमवस्थाने स्वस्य श्रमोन स्यात् तेन पद्माद्यन्यतमेनासनेन स्थेयमित्यर्थः ॥

निबन्धे बालातृतीयबीजेन द्वादशवारमभिमन्त्रणं मूलमन्त्रेण प्रोक्षणम् उक्तम् । तत् सूत्रानभिमतं ज्ञेयम् ॥ ६ ॥

एतत्सपर्योपयोगिनी त्रितारीमाह—

**त्रितारीमुच्चार्य रक्तद्वादशशक्तियुक्ताय दीपनाथाय नमइति भूमौ मुञ्चेत् पुष्पाञ्जलिम् ॥ ७ ॥**

त्रितारीं [1]वक्ष्यमाणामुक्त्वा नमइत्यन्तमुच्चरेत् । अयं दीपनाथार्हणमनुः । अनेन भूमौ पुष्पाञ्जलिं दद्यात् । पुष्पाणामञ्जलिगृहीतानां प्रचयः पुष्पाञ्जलिः । तदुक्तम् अगस्त्यसंहितायां सोमवारविधिप्रकरणे—

संश्लिष्टहस्तद्वयमध्यवर्ती प्रसूनपुञ्जः कुसुमाञ्जलिः स्यात् ॥ इति ॥ ॥ ७ ॥

### सर्वमन्त्रेषु त्रितारीसंयोगविधिः

सर्वमन्त्रोपयुक्तां कांचित् परिभाषामाह—

**सर्वेषां मन्त्राणामादौ त्रितारीसंयोगः । त्रितारी वाङ्मायाकमलाः ॥ ८ ॥**

अत्र सर्वशब्दस्य प्रकरणेन सङ्कोचं कृत्वा श्रीविद्योपास्त्यङ्गभूतानामेतदुत्तरपठितानाम् इत्यर्थः । तेनैतत्पूर्वमन्त्रेषु त्रितारीयोगोनास्तीति सिद्धम् । अतएव सेतुबन्धे—"यागमन्दिर-प्रवेशोत्तरं कल्पसूत्रे त्रितारीयोगपाठात् ततः प्राक् मन्त्रेषु न तद्योगइतिमन्तव्यम्" इति स्थितम् । आदावित्यनेन अन्तव्यावृत्तिः । योगइति वक्तव्ये समित्युपर्गेण त्रितार्युच्चारः स्पष्टमभूत् । ततोयत्किंचिदङ्गमन्त्रपाठसमये मध्ये यदि करणापाटवादिदोषेण एकोवर्णोलुप्तः तदा पुनर्मन्त्रः पठनीयः तत्रापि पुनः त्रितारीयोगः सूचितः । यद्वा—त्रितारीपाठा-नन्तरं केनचित् प्रतिबन्धेन मन्त्रपाठे यदि क्षणविलम्बः तादृशस्थले पुनस्त्रितार्युच्चारोऽविलम्बे-

---

१ अत्रैव, अधस्तने—' सूत्रे भाष्ये च '—इत्यर्थः—

नोच्चारणरूपोऽज्ञाप्यते । यद्यप्यनेनैव दीपनाथार्हणमन्त्रे त्रितारीयोगप्राप्तौ तत्र त्रितारीमुच्चार्येति व्यर्थम् । तथाऽपि तत्र त्रितारीमुक्त्वेति तन्मन्त्रघटकत्वं त्रितार्या ज्ञापयति । इयं परिभाषा च त्रितारीयोगेन मन्त्राणां संस्कारं वदति इति न वैय्यर्थ्यम् ॥

यत्तु निबन्धे दीपनाथार्हणोत्तरं गणपतिनमनं गुरुनमनम् अङ्गुष्ठादिकनिष्ठान्तव्यापकमिति प्राणप्रतिष्ठा च, तत्सर्वं तन्त्रान्तरस्थम् अन्यप्रकरणस्थं श्रीविद्याप्रयोगे न स्प्रष्टव्यम् ॥

अत्र त्रितारी केत्याकाङ्क्षायामाह—त्रितारीति । वाक् सबिन्दुः द्वादशस्वरः । माया तुरीयोष्मसहितद्वितीयान्तस्थोत्तरसबिन्दुस्तुर्यस्वरः । कमला प्रथमोष्मसहितद्वितीयान्तस्थोपरि सबिन्दुस्तुर्यस्वरः । एते त्रितारीपदवाच्याभवन्तीति [1]शेषः । वागादीनामुक्तार्थत्वे प्रमाणमग्रे वक्ष्यामः ॥ ८ ॥

## श्रीचक्रस्वरूपं तत्साधनद्रव्यं च

इतः परं श्रीचक्रस्वरूपं तत्साधनद्रव्यं चाह—

**पुरतः पञ्चशक्तिचतुःश्रीकण्ठमेलनरूपं भूसदनत्रयबलित्रयभूपपत्रदिक्पत्रभुवनारद्रुहिणारविधिकोणदिक्कोणत्रिकोणबिन्दुचक्रमयं महाचक्रराजं सिन्दूरकुङ्कुमैर्लिखितं चामीकरकलधौतपञ्चलोहरत्नस्फटिकाद्युत्कीर्णं वा निवेश्य ॥ ९ ॥**

पुरतइत्यस्य निवेश्येत्यनेन साकमन्वयः । पञ्चशक्तयः शक्तिचक्राणि, चतुःश्रीकण्ठाः चत्वारि शिवचक्राणि, एषां मेलनरूपम् अभिन्नस्वरूपम् । एतेन विशेषणेन एतादृशस्वरूपज्ञानं पूजाऽऽदावावश्यकमिति सूचितम् । एतन्मेलनप्रकारः, पूजाकाले ईदृशज्ञानस्यावश्यकता चोक्ता ब्रह्माण्डपुराणे—

त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।
दशारयोः षोडशारं भूगृहं भुवनास्रके ॥
शैवानामपि शाक्तानां चक्राणां च परस्परम् ।
अविनाभावसम्बन्धं योजानाति सचक्रवित् ॥
एवं विभागमज्ञात्वा श्रीचक्रं योऽर्चयेत् सकृत् ।
न तत्फलमवाप्नोति ललिताऽम्बा न तुष्यति ॥ इति ॥

---

१ ऐं ह्रीं श्रीं-इति-संभूय-त्रितारीमन्त्रः-

२ मिलितं—अ

३ इतः ९६ पत्रान्तग्रन्थेन-यन्त्रान्तिमभागलेख्यभूपुरस ङ यां शास्त्रार्थोऽस्ति-
ह्या

अयमेवार्थस्तन्त्रेषु बहु प्रतिपादितः । ग्रन्थविस्तरभयान्नेह तत्रत्यवचनानि लिखितानि । भूसदनत्रयं परितः चतुरस्ररेखात्रयम् । चतुरस्रे भूसदनशक्तिग्राहकं प्रमाणं तु—

तद्बाह्ये वृत्तमालिख्य तद्बाह्ये चतुरस्रकम् ।

इति तन्त्रान्तरवचनम् । अस्मत्परमेष्टिगुरुभिरपि सेतुबन्धे लिखितं "भूगृहं नाम चतुरस्रम्" इति ॥

श्रीचक्रे द्वाररहितचतुरस्रत्रयलेखनसमर्थनम्

ननु तन्त्रान्तरवचने चतुरस्रकमित्येकवचनेन एकमेव चतुरस्रमिति प्रतीयते, इह चतुरस्रत्रयमित्युक्तम्, द्वयोर्विरोधे कथमेतदिति चेत्—न; तत्तत्तन्त्रानुसारिपुरुषभेदेन व्यवस्थितविकल्पसम्भवात् । एवं सूत्रानुयायिनां श्रीचक्रे भूपुरं द्वाररहितम्, अनुक्तत्वात् ॥

ननु त्रिपुरार्णवे "वृत्तं ततोभूपुराणां त्रितयं द्वारशोभितम्" इत्युक्तत्वात्, एवं नित्यातन्त्रे "एवं त्रिभूसदनकं चतुर्द्वारविभूषितम्" इति, वामकेश्वरतन्त्रे "परिवेषं भूपुरं च चतुर्द्वारोपशोभितम्" इति, एवमादितन्त्रानुसारेण अत्रापि द्वारतात्पर्यं कल्प्यताम्—इति चेत्—न "वृत्तत्रयं च धरणीसदनत्रयं च श्रीचक्रमेतदुदितं परदेवतायाः" इति यामलवचने, एवमन्येष्वपि तन्त्रेषु, द्वाररहितभूपुरश्रवणेन विकल्पस्य दुर्निवारत्वात् । न चैवं द्वाररहित-भूपुरस्य केनापि निबन्धकारेणालिखितत्वादिदमश्रद्धेयम् इति वाच्यम्; सौन्दर्यलहर्यां "त्रय-श्चत्वारिंशत्" इति श्लोके द्वारानुक्तेः भगवत्पादानामस्मदुक्तपक्षस्यैवाभिमतत्वात् । एवं प्रपञ्चसारसङ्ग्रहे श्रीविद्यारण्यस्वामिभिरपि द्वाररहितमपि श्रीचक्रे चतुरस्रमुपलभ्यते क्वचि-दिति ग्रन्थेन अस्मदनुमतमेव लिखितम् । एवमतिचिरन्तनशिङ्गभूपालपद्धतावपि तथाऽस्ति । इदमन्वेषितुं प्रवृत्तौ अन्यान्यपि निबन्धान्तरवाक्यानि मिलिष्यन्ति । एतावदलमिति न विशेषयत्नः कृतः ॥

इत्थं चाहं सूत्रानुयायीति विशेषाभिमानवता नित्योत्सवनिबन्धकारेण श्रीचक्रलेखन-प्रकारकथनावसरे "चतुर्द्वारं भूपुरं समुद्भावयेत्" इति यतोलिखितम् अतएव तेन सूत्रं न परिशोधितम् । गतानुगतिकलोकानुसारेण लिखितमिति स्फुटम् ॥

किंच निबन्धकारः श्रीभास्कररायाणां शिष्यइति स्वनिबन्धएव लिलेख । श्रीभास्कर-रायोक्तसेतुबन्धे "प्रतिदिशं रेखात्रययुक्तं द्वारसामान्याभाववत्" इति तृतीयः पक्षः । कल्पसूत्रमस्मिन् पक्षे अनुकूलमिति लिखितम् ॥

किंच सर्वेषां मन्त्राणाम् आदौ त्रितारीसंयोगइति कल्पसूत्रस्य यागमन्दिरप्रवेशोत्तरमेव पाठात् ततः प्राक्तनमन्त्रेषु न तद्योगइति सेतुबन्धे स्थिते अयं मुषःकारी रश्मिमालामन्त्रेषु

सन्ध्यावन्दने च त्रितारीं योजयामास। तथा द्वारचतुष्टयं च योजयामास। एवं सति गुरुमतमपि यः अजानन् स्वेच्छया लिखति सकीदृशउपासकः, कीदृशोवा गुरुशिष्यभावः, तं न विद्मः ॥

यदि च सेतुबन्धे प्रथमं द्वारसामान्याभावं विलिख्य अग्रे तत्त्वं विचार्य अग्रे तत्रैव "द्वारसामान्याभावपक्षस्तु द्वारप्रतिषेधपर्युदासान्यतरमन्तरेण यामलकल्पसूत्रादौ द्वारानुक्तिमात्रेण कल्प्यमानः साहसमात्रम्" इति लिखितत्वात् कथं गुरुमतानभिज्ञतेत्युच्यते,—तदा आस्तां द्वारविषये गुरुमताभिज्ञता। रश्मिमालामन्त्रेषु सन्ध्यामन्त्रेषु च त्रितारीयोजने गुरुमतानभिज्ञता वज्रलेपायिता। एतेनायं निबन्धः सर्वतन्त्रस्वतन्त्रश्रीभास्कररायैः परिशोधितइत्यैतिह्यमपि निर्मूलमिति स्फुटं युक्तमुत्पश्यामः ॥

बलित्रयं [1]वृत्तत्रयम्। अत्र बहवः—षोडशदलस्य अष्टदलस्य द्वे कर्णिकावृत्ते, तयोर्बहिः एकं वृत्तं, एवंच वृत्तत्रयं, न पद्मद्वयस्य बहिर्वृत्तत्रयम्। यत्तु "वलित्रयम्" इति कल्पसूत्रम्, "वृत्तत्रयं च धरणीसदनत्रयं च" इति यामलवचनं, "ज्येष्ठारूपं चतुष्कोणं वामारूपं भ्रमित्रयम्" इति योगिनीतन्त्रवचनम्, सर्वम् उक्तवृत्तत्रयपरमेवेत्याहुः ॥

### श्रीचक्रे पञ्चवृत्तलेखनसमर्थनम्

अत्र अस्मत्परमेष्ठिगुरवः सेतुबन्धे वक्ष्यमाणप्रकारान्तरेण श्रीचक्रलेखनावसरे—

बहिः पद्मद्वयं कुर्यादष्टषोडशकच्छदम्।
गुणवृत्तं ततः कुर्याच्चतुरस्रं च तद्बहिः ॥

इति वामकेश्वरतन्त्रवचने ततःपदस्वारस्येन पद्मद्वयाद्बहिरेव त्रीणि वृत्तानि, तदनुसारेण परिशेषं भूपुरं चेति। अत्रैकवचनमविवक्षितम्। एवं च पञ्च वृत्तानि। अतएव [2]ज्ञानार्णवे—

एतद्बाह्ये महेशानि वृत्तं पूर्णेन्दुसंनिभम्।
तद्युतं कुरु मीनाक्षि वसुपत्रं मनोहरम् ॥
तथा षोडशपत्रं तु विलिखेत् सुरवन्दिते।
तद्बाह्ये देवदेवेशि त्रिवृत्तं मातृकाऽन्वितम् ॥

इत्यत्र तद्बाह्यइतिपदेन कर्णिकावृत्तादतिरिक्तं वृत्तत्रयं सुस्पष्टमुक्तम् ॥

तद्व्याख्यातारोऽन्ये आग्रहेण तद्बाह्ये इति श्लोकार्धं स्वपुस्तकउपरि लिखितत्वात् अक्षरलेखनप्रकारस्य कस्मिंश्चित्तन्त्रे अलेखनात् अकस्मान्मातृकाऽन्वितत्वोक्तेरसङ्गतत्वात् बहुषु

---

१ एतद्विषये-द्वि. प.-शि.-११-वि.-द्रष्टव्यः-

२ ज्ञानार्णवे-१० पटले-७२-७३-श्लोकाविमौ स्तः-

पुस्तकेषु अनुपलब्धेश्च प्रक्षिप्तमिति परमतमनूद्य तदुपरि यदि प्रक्षिप्तं तर्हि तृतीयवृत्तविधायकवचनाभावात् वृत्तद्वयापत्तेरिति दूषितत्वात् संहितायां तन्त्रान्तरे च बहिर्वृत्तत्रयं सुस्पष्टमस्तीति लिखितत्वात् पञ्चवृत्तानीति ( सेतुबन्धे ) व्यवस्थापयामासुः ॥

अत्र महेश्वरानन्दनाथाः—" तद्बाह्ये वृत्तमालिख्य तद्बाह्ये चतुरस्रकम् " इति परमानन्दतन्त्रे वृत्तमित्येकवचनात्, " वृत्तं ततोभूपुराणाम्" इति, " वृत्तं त्रिभूसदनकम् " इति, " परिवेषं भूपुरं च " इति, " सुवृत्तं परमेशानि " इति त्रिपुरार्णव–नित्यातन्त्र–वामकेश्वरतन्त्र–दक्षिणामूर्तिसंहितासु एकवचनबलात् कर्णिकावृत्तद्वयेनैव सह त्रिवृत्तमिति व्यवस्थाप्य ततः सेतुबन्धमतमनूद्य तद्दूषणे सेतुबन्धएव वामकेश्वरतन्त्रज्ञानार्णववचनयोः बहुषु पुस्तकेष्वनुपलम्भादिति श्रीभास्कररायलेखं हेतुत्वेनोपन्यस्य सेतुबन्धं दूषयामासुः ॥

अयं प्रकारोऽसिद्धः । सेतुबन्धे तैः सिद्धान्तावसरे बहुषु पुस्तकेष्वनुपलम्भादिति नोक्तः । किंतु वादिमतानुवादवेलायाम् उपन्यस्तः । सच वादिनोलेखः । तेन हेतुना श्रीभास्कररायमतं कथं निरस्तम् । रायैश्च प्रत्युत मत्पुस्तकमध्यलेखात् प्रमाणमेवेति प्रतिबन्द्युत्तरं वृत्तद्वयापत्तिश्चेति दूषणद्वयं दत्तम् । किंच वामकेश्वरतन्त्रवचने न कोऽपि विवादं लिलेख । एवंसति तत्रापि निर्मूलईदृशोदोषारोपः केवलं स्वपाण्डित्यप्रकटनार्थएव । अतोवामकेश्वरतन्त्रवचनस्य वृत्तत्रयप्रापकस्य ज्ञानार्णवस्य च गतिमकल्पयित्वा न वृत्तपञ्चकनिवृत्तिर्भविष्यति ॥

यदिच निरुक्तैकवचनबलादेव यामलकवचनेन अष्टदलषोडशदलेति पृथगुक्त्वा तदुत्तरं श्रूयमाणवृत्तत्रयेतिपदे त्रयमित्यस्य समुदायानुवादकत्वरूपवैय्यर्थ्यमङ्गीकृत्य, एवं वामारूपं भ्रमित्रयमित्यत्र अष्टदलषोडशदलावयवस्य भ्रमेरेव वामारूपत्वकल्पनायासः क्रियते । तर्हि तद्बाह्ये चतुरस्रकमित्यत्राप्येकवचनं तुल्यम् । तदुपोद्बलकानि वचनानि—वामकेश्वरतन्त्रे " परिवेषं भूपुरं च " इति, तत्रैव षष्ठपटले " वामारूपं चतुष्कोणम् " इति, पूर्वतन्त्रे च " गुणवृत्तं ततः कुर्याच्चतुरस्रं च तद्बहिः " इति, दक्षिणामूर्तिसंहितायाम्—" सुवृत्तं परमेशानि ततोभूबिम्बमालिखेत् " इत्यादिवचनानि । एवं वचनेषु सत्सु एकवचने निर्भरवतः अत्र परमानन्दतन्त्रटिप्पण्याम् " चतुरस्रं चतुरस्रत्रयम्[1] " इति महेश्वरानन्दनाथलेखः सन्दर्भविरुद्धएव ॥

यदिच " भूपुराणां त्रितयं द्वारशोभितम् " इत्यादितन्त्रवचनैरेकवचनं तत्रत्यमविवक्षितमित्युच्यते, तर्हि वृत्तमित्यत्रैकवचनेन कोऽपराधोऽनुष्ठितः । एवं बहुष्वेकवचनं लोके वेदे च प्रयुज्यमानं बहूपलभ्यते । लोके " गृहे धान्यमस्ति ", " संपन्नोव्रीहिः ", " इति

१ " तच्चतुरस्रत्रयं त्रिभिरङ्गुलैः " इत्यधिकः–ब२,

हेतुस्तदुद्भवे " इति ईदृशस्थले जात्येकवचनमिति वदन्ति शिष्टाः । " ब्राह्मणोमम दैवतम् " इति पुराणप्रयोगः । श्रुतौ बहुपत्नीकदर्शपूर्णमासे " पत्नीं संनह्य ", " गृहं संमार्ष्टि ", इत्येवमादीनि बहूनि सन्ति । तद्वदुपपत्तेः नैकवचनस्य सर्वथा गत्यभावः ॥

न च—उक्तस्थलेषु बाधकवशादेकवचनस्य लक्षणां बहुत्वे कल्पयित्वा एकवचनं निर्वाह्यम् । प्रकृतेऽपि तद्वत्पक्षाश्रयणे वामकेश्वरतन्त्रस्थस्य " गुणवृत्तं ततः " इत्यत्र ततइत्यस्यैव लक्षणायां तात्पर्यग्राहकता वाच्या । सा च न सम्भवति । ततःपदघटितवामकेश्वर-तन्त्रस्य " तद्बाह्ये वृत्तम् " इति परमानन्दतन्त्रस्यैकवचनघटितस्य तुल्यबलत्वेन एकवचनानु-सारेण ततइत्यस्यैव लक्षणापक्षं अविवक्षापक्षं वाऽऽश्रित्यैकवचनविवक्षैव किमिति न क्रियते । द्वयोर्मध्ये अन्यतरस्य अन्यथानयने कार्ये ततइति पदस्वारस्येनैकवचनमविवक्षितं न विपरी-तमित्यत्र नियामकाभावात्—इति वाच्यम् । प्रत्ययार्थप्रातिपदिकार्थयोर्मध्ये एकानुसारेण अपरस्यान्यथानयने प्राप्ते प्रातिपदिकस्य प्रबलत्वेन तदनुसारेण वचनप्रत्ययार्थस्यैवान्यथा नयनम् । तदुक्तं श्रीविद्यारण्यस्वामिभिः—

त्रिरनूक्तिर्ऋचोधर्मः स्थानधर्मोऽथ नाग्रिमः ।
स्त्रीलिङ्गत्वान्न तत्प्रातिपदिकप्रबलत्वतः ॥

इति प्रातिपदिकप्राबल्यसाधकयुक्तयोऽपि बह्व्यः सन्ति । ग्रन्थविस्तरभयादभियुक्तोक्तिकॢप्तैव लिखिता । तस्मात् प्रातिपदिकीभूतततइत्यनुसारेण एकवचनमेव अन्यथा नेयम् । तथा च सुधिया आग्रहं परित्यज्य केवलतत्त्वबुभुत्सुना विचार्यमाणे सर्वतन्त्रेष्वपि वचनमात्रस्याविवक्षां कृत्वा श्रीयन्त्रे पञ्चवृत्तान्यभिमतानीति सिध्येदिति । प्रकृतमनुसरामः ॥

भूपपत्रमिति—भूपाइति षोडशसङ्ख्यायाः सङ्केतः । षोडश पत्राणि यस्मिंस्तत् । दिक्पत्रं—दिगित्यष्टसङ्ख्यायाः संज्ञा, तावन्ति पत्राणि यस्मिंस्तत् । भुवनारं—भुवनमिति चतुर्दशसङ्ख्यायाः संज्ञा, तावदरं तावत्कोणम् । द्रुहिणारं द्रुहिणइति दशसङ्ख्यायाः संज्ञा, श्रीभागवतादौ सृष्टिनिमित्तानां दशप्रजापतीनां कर्दमादीनां प्रसिद्धत्वात् । तावदरं दशकोण-मित्यर्थः । एतेन विधिकोणमिति च व्याख्यातप्रायम् । दिक्पदं च व्याख्यातम् । त्रिकोणबिन्दू स्पष्टौ । मयमित्यनेन समष्ट्येकरूपत्वं ज्ञापितम् । महाचक्रराजं—चक्रराजमिति श्रीचक्रस्य नाम, तत्र महत्त्वं पूज्यत्वं, " मह पूजायां " इत्यनुशासनात् । तथा च ब्रह्मविष्णुरुद्रादि-सकलपूज्यमित्यर्थः । सिन्दूरं प्रसिद्धं, कुङ्कुमं काश्मीरम्, एतदन्यतरेण । यद्वा—द्वन्द्वसमासेन साहित्यप्रतीतेः सिन्दूरसहितकुङ्कुमेन लिखितम् ॥

नव्यास्तु—यदा भूमौ प्रस्तारोलिख्यते तदा कुङ्कुमरजोभिः पूरणं, मेरुप्रस्तारश्चेत् सिन्दूररजोभिरिति व्यवस्थामाहुः। तत्र मूलं चिन्त्यम् ॥

लेखनप्रकारस्य अस्मत्परमेष्ठिगुरुकृतसेतुबन्धे सविस्तरमुक्तत्वान्नात्र लिख्यते। एतावत्पर्यन्तं पूजासमये नित्ययन्त्रनिर्माणप्रकारः उक्तः।

इदानीं सिद्धयन्त्रेऽपि पूजाप्रकारं यन्त्रनिर्माणद्रव्यनियमं चाह—चामीकरेत्यादिना। चामीकरं सुवर्णं कलधौतं रौप्यम्। यद्यपि कलधौतपदं सुवर्णवाचकमपि भवति। "कलधौतं रौप्यहेम्नोः" इति कोशात्, तथाऽपि सुवर्णस्य पूर्वमुक्तत्वाद्रौप्यमेव। पञ्चलोहं, तल्लक्षणमुक्तं तन्त्रसारे बृहत्पाञ्चरात्रे च—

रौप्यं नृपगुणं प्रोक्तं दिक्सङ्ख्योहेमभागकः।
ताम्रं द्वादशभागः स्याल्लोहभागस्य पञ्चकम्।
आरकूटस्य षड्भागाः पञ्चलोहं प्रकीर्तितम् ॥ इति ॥

आरकूटं पित्तलं, शेषं स्पष्टम्। रत्नानि मरकतादीनि, तेषु उत्कीर्णं पूर्वोक्तशास्त्रेण निर्मितम्। आदिपदात् ताम्रदृषदादिकं परमानन्दतन्त्रोक्तं ग्राह्यम्। इदमपि पूर्वोक्तचक्रराजे विशेषणम्। ईदृशं चक्रराजं पुरतोनिवेश्य ॥

अत्र पूजनं मुख्यम्। एतस्यालाभे तन्त्रान्तरोक्तप्रतिनिधिस्वीकारोऽपि कार्यः। तदुक्तं परमानन्दतन्त्रे—

आदर्शे चैकगुणितं पुस्तके द्विगुणं फलम्।
प्रतिमायां चतुर्धा स्यात् शालिग्रामेषु षोडश ॥
शिवनाभे शतगुणं पूजनात् पुरुषार्थकम्।
सहस्रधा नार्मदे तु फलं देवि प्रचक्षते ॥
कुण्डल्यां लक्षगुणितं देवतादर्शनं भवेत्।
चक्रराजे तु या पूजा साऽनन्तफलदायिनी ॥ इति ॥

इमानि तु पठितक्रमे उत्तरोत्तराभावे पूर्वपूर्वं ग्राह्यम्। एतादृशार्थतात्पर्यग्राहकमेव फलतारतम्यश्रवणम्। कुण्डली शेषकुण्डली। पुस्तकं कुलशास्त्रपुस्तकम्। प्रतिमा ध्यानश्लोकस्थाकारा। शेषं स्पष्टम् ॥

यन्त्रप्रतिष्ठा सूत्रे अनुक्तत्वात् न कर्तव्या सूत्रानुयायिभिः। एवं प्राणप्रतिष्ठाऽपि न कार्या सूत्रानुयायिभिः, अनुक्तत्वात् अनाकाङ्क्षितत्वाच्च। वस्तुतस्तु—यन्त्रप्रतिष्ठायाः

पूजाप्रयोगबहिर्भूतत्वात् अधिकाभ्युदयेच्छायां तन्त्रान्तरोक्तमनुष्ठेयं[1], यथा सहस्रनामपाठादि। तत्करणे अभ्युदयः अकरणेऽपि न हानिः सूत्रानुयायिनाम्। यथा वा, यज्ञोपवीतसंस्कारः बौधायनसूत्रे पठितः। अन्यसूत्रापठितत्वात् "बह्वल्पं वा" इति सूत्रात् अननुष्ठाने न हानिरिति द्रविडान्ध्रदेशीयाः यज्ञोपवीतस्य न संस्कारं कुर्वन्ति। महाराष्ट्रदेशीयैस्तु करणे अभ्युदयं मत्वा संस्कारः क्रियते। तद्वत् चक्रराजे संस्कारे अभ्युदयः, अकरणे सूत्रानुयायिनां न हानिः ॥ ९ ॥

### मन्दिरार्चनम्

ततोमन्दिराद्यर्चनक्रममाह—

**तत्र महाचक्रे अमृताम्भोनिधये रत्नद्वीपाय नानावृक्षमहोद्यानाय [2]कल्पवृक्षवाटिकायै सन्तानवाटिकायै हरिचन्दनवाटिकायै मन्दारवाटिकायै पारिजातवाटिकायै कदम्बवाटिकायै पुष्यरागरत्नप्राकाराय पद्मरागरत्नप्राकाराय [3]गोमेधरत्नप्राकाराय वज्ररत्नप्राकाराय वैडूर्यरत्नप्राकाराय इन्द्रनीलरत्नप्राकाराय मुक्तारत्नप्राकाराय मरकतरत्नप्राकाराय विद्रुमरत्नप्राकाराय माणिक्यमण्डपाय सहस्रस्तम्भमण्डपाय अमृतवापिकायै आनन्दवापिकायै विमर्शवापिकायै बालातपोद्गाराय चन्द्रिकोद्गाराय महाशृङ्गारपरिघायै महापद्माटव्यै चिन्तामणिगृहराजाय पूर्वाम्नायमयपूर्वद्वाराय दक्षिणाम्नायमयदक्षिणद्वाराय पश्चिमाम्नायमयपश्चिमद्वारायोत्तराम्नायमयोत्तरद्वाराय रत्नप्रदीपवलयाय मणिमयमहासिंहासनाय ब्रह्ममयैकमञ्चपादाय विष्णुमयैकमञ्चपादाय रुद्रमयैकमञ्चपादाय ईश्वरमयैकमञ्चपादाय सदाशिवमयैकमञ्चफलकाय हंसतूलतल्पाय हंसतूलमहोपधानाय कौसुम्भास्तरणाय महावितानकाय महा[4]जवनिकायै नमः–इति चतुश्चत्वारिं[5]शन्मन्त्रैस्तत्तदखिलं भावयित्वा अर्चयित्वा ॥१०॥**

---

१ एतद्यन्त्रप्रतिष्ठाकरणाकरणविषये–द्वि० परिशिष्ट ११—वि. द्रश्यः–

२ कल्पवाटिका—ब२, श्री.

३ गोमेद—ब२.

४ एतत्पुस्तकेप्राक्तनोयवनिकायै–इतिपाठोलेखाशुद्धोभातीति–यमनिका–जवनिका–वात्र शब्दउचितश्चात्र प्र. अमरकोशे–२ काण्डे मनुष्यवर्गे–यथाः–
प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा–१२०–श्लोकः अत्र-टी-प्रतिसीरा-जवनिका–तिरस्करिणी–तिरस्कारिणीत्य–त्यलम्–

५ चतुश्चत्वारिंशन्मन्दिरमन्त्रैः—ब२.

तत्र यागमन्दिरे स्थिते इति शेषः। इदं च महाचक्रे—इत्यस्य विशेषणम्। यद्वा—तत्रेति लिखितार्थकं पूर्वसूत्रे, पुरतोनिवेश्येत्यन्वितम्। महाचक्रे—इति "भावयित्वा अर्चयित्वा" इति अग्रिमेणान्वितम्। अमृताम्भोनिधिः अमृतसमुद्रः। रत्नमयोद्वीपः वासयोग्यदेशः उन्नतभूमिरिति यावत्। उद्यानं क्रीडावनं, "पुमानाक्रीडउद्यानम्" इत्यमरः। वृक्षवाटिका उपवनं "गेहोपवने वृक्षवाटिका" इत्यमरः। कल्पादीनि सुरतरुनामानि।

पञ्चैते देवतरवोमन्दारः पारिजातकः।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥ इत्यमरः॥

कदम्बः प्रसिद्धः। पुष्परागादिविद्रुमान्ताः नवरत्नभेदाः तेषां प्राकारः परितः गृहाद्बहिर्निर्मिता भित्तिः। माणिक्यं पद्मरागं, तस्य मण्डपः। वापी दीर्घिका। उद्धारोलोहितवर्णे समाह्लादकं वस्तु। तदुक्तं त्र्यक्षरकोशे—"उद्धारोलोहिते वर्णे समाह्लादनवस्तुनि" इति। रत्नमयाः प्रदीपाः तेषां वलयम्। हंसतूलं पक्षिविशेषस्य पक्षाधःस्थितरोममालाऽऽकृतिसूक्ष्मपक्षाः महाराष्ट्रभाषायां परा—इति प्रसिद्धम्। महोपधानं महाराष्ट्रभाषायां लोड्ड—इति प्रसिद्धम्। कौसुम्भास्तरणं रक्तवर्णं तल्पोपरि तन्मालिन्याभावार्थं सूक्ष्मं वस्त्रं पात्यते। तत् महाराष्ट्रभाषायां पलंगपूस—इति प्रसिद्धम्। वितानम्, ऊर्ध्वदेशान्मृत्तिकादिपातप्रतिबन्धकमुपरि बध्यमानं वस्त्रम्। 'यवनिका महाराष्ट्रभाषायां पड्दा—इति प्रसिद्धम्। शेषं प्रसिद्धम्। एवं चतुर्थ्यन्तैः सर्वैः नमः—इति योगः, "या ते अग्नेऽयाशया" इतिवत्। एतैः चतुश्चत्वारिंशन्मन्त्रैः मन्त्रवाच्यानर्थान् आदौ श्रीचक्रे परिभाव्य तेषां पूजनं कुर्यात्। एकस्य ध्यानं ततोऽर्चनं, ततोऽपरस्य ध्यानं ततः तस्यार्चनमिति क्रमः तत्तदिति पदस्वारस्यात् लब्धः। अन्यथा न्यायतः पदार्थानुसमयेन ध्यानं पूजनं च प्राप्तं, तत्तदिति वीप्सया तद्बाधोज्ञेयः॥ १०॥

**दीपदानं चक्राभ्यर्चनं च**

गन्धपुष्पादिस्थापनस्थानादिकमाह—

**गन्धपुष्पाक्षतादींश्च दक्षिणभागे [२]दीपानभितोदत्वा मूलेन चक्रमभ्यर्च्य मूलत्रिखण्डैः प्रथमत्र्यस्रे॥ ११॥**

अक्षतादीत्यत्र आदिपदेन प्रथमद्वितीयादिग्रहणम्। एतस्य दत्वेत्यनेनान्वयः। तत्र दानं न यत्किंचिद्देवतोद्देशेन त्यागः। किंतु "यज्ञायुधानि सम्भरति" इतिवत् पूजासामग्र्याः एकत्र संपादनम्। एतस्य फलं तत्तदर्पणवेलायां तस्य तस्य शीघ्रलाभः। दीपानामभितः

१ अनुगते ९८ पत्रस्थे—४-५—चिह्नयोः टीप्पण्यौ द्रष्टव्ये—
२ अत्र, दीपविषये—द्वि. परिशिष्टे १३ वि. द्रष्टव्यः॥

पार्श्वद्वये दानं स्थापनमदृष्टार्थम्। दत्वेत्यस्य चकारेण आवृत्तिर्ज्ञापिता, प्रत्युद्देश्यं वाक्यपरिसमाप्त्यर्थमावृत्तेरावश्यकत्वात्। अतोन ददातेरर्थभेदोदोषजनकः। न च दाधातोरयमर्थः केन प्रमाणेनेति वाच्यम्, रजकस्य वस्त्रं ददाति, संवाहकस्य चरणौ ददाति, शत्रवे भयं ददाति, इत्यादौ योग्यतया अर्थकल्पनावत् अत्रापि योग्यार्थकल्पनात्। अभितः इत्यनेन एकस्मिन् पार्श्वे यावन्तोदीपाः तावन्तएव अपरपार्श्वे—इति ज्ञाप्यते। अस्य फलं अन्धकारनिवृत्तिः। एतेन पूजागृहे अन्धकारसामान्याभावः कार्यइत्यर्थः। एकस्मिन् पार्श्वे अधिकदीपस्थापने तत्पृष्ठतः तच्छायारूपान्धकारः पतिष्यति। अभितस्तुल्यप्रज्वालने न कुत्राप्यन्धकारइत्यर्थः। पार्श्वद्वयनियमोदृष्टार्थः। चक्रं नवचक्रात्मकं समष्टिचक्रं मूलेन पञ्चदश्या अभ्यर्च्य। अत्र पुष्पाक्षतक्षेपणमेवाभ्यर्चनम्। त्रिखण्डैः वाग्भवकामराजशक्तिभिः प्रथमं चक्रनिर्माणसमये प्रथमस्य चक्रस्य त्रीणि यान्यस्राणि तानि द्विगुत्वादेकवद्भावः। न बहुव्रीहिः। तत्पक्षे त्रिकोणात्मकैकचक्रे एकदेशे पूजने मन्त्रत्रयस्यानाकाङ्क्षितत्वात् "भगोवां विभजतु" इतिवद्विकल्पापत्तेः। न च "चतुर्भिरभ्रिमादत्ते" इतिवत् समुच्चयोऽस्त्विति वाच्यम्; तथाऽपि बहुव्रीहिपक्षे अन्यपदार्थे लक्षणाकल्पनं दोषः। द्विगुपक्षे तु कोणत्रये कूटत्रयं युक्तम्। अभ्यर्च्य इत्यस्य पूर्वस्मादनुवृत्तिः। क्रमस्यानुक्तत्वात् स्वाग्रादिप्रादक्षिण्येन ॥ ११ ॥

### आत्मशुद्धिहेतु शोषणादि

ततः शोषणादीनात्मशुद्धिहेतूनाह—

**वाय्वग्निसलिलवर्णयुक्प्राणायामैः शोषणं संदहनमाप्लावनं च विधाय ॥ १२ ॥**

वायुवर्णः यं,—अग्निवर्णः रं,—सलिलवर्णः वं—वायौ शोषकताशक्तिः लोकप्रसिद्धा अतस्तद्वर्णेऽपि साऽस्ति। अतः तेन शोषणं जलांशनाशनं, एवमेव अग्निवर्णेन संदहनं भस्मीकरणं, तथैव तद्भस्मनः उदकवर्णेन पिण्डीकरणम् आप्लावनं, विधाय कृत्वा। चकारात् तन्त्रान्तरोक्तं श्यामाप्रकरणस्थं वा लं—इति पार्थिवबीजेन काठिन्यसंपादनं शाम्भवशरीरोत्पत्तिश्च ग्राह्या। यद्वा—समीपवृत्तित्वात् श्यामाप्रकरणस्थमेव [1]ग्राह्यम्। शोषणादिक्रियाणां कर्माकाङ्क्षायां दृश्यमानं स्थूलशरीरं लिङ्गशरीरं वा कर्म तन्त्रान्तरप्रसिद्धं ग्राह्यम्। वर्णयुक्प्राणायामैरित्युक्त्या यमित्युच्चरन् प्राणानभितोनियच्छेत्, ततः शरीरशोषणं भावयेत्, यश्च श्यामाप्रकरणे "[1]वायुं पिङ्गलया आकृष्य" इत्यभ्यासः कृतः तस्यार्थस्य प्राणायामैरित्यनेन ज्ञापितत्वात्। एवमेवाग्रेऽपि ॥

१ अग्रे–६ खण्डे श्यामाक्रमे–९ सूत्रे मूले, भाष्ये च दृश्यम्–

यत्तु निबन्धे सङ्कोचशरीरं शोषयेदित्यादिवाराहीप्रकरणस्थामन्त्रालिखिताः ते निर्मूलाः हेयाः, असूत्रितत्वात्। परंतु श्यामाप्रकरणस्थं कठिनत्वसंपादनं शाम्भवशरीरोत्पत्तिः [1]चकार-सूचितार्थापत्तिप्रमाणसिद्धा अनुष्ठेया ॥ १२ ॥

### प्राणायामः

ततः प्राणायामविधिमाह—

**त्रिः प्राणानायम्य ॥ १३ ॥**

प्राणायामस्तु श्यामाप्रकरणे [2]वक्ष्यमाणप्रकारेण ज्ञेयः ॥ १३ ॥

### विघ्नकरभूतोत्सारणम्, वज्रकवचन्यासश्च

तदुत्तरं विघ्नकृद्भूतोत्सारणं कार्यमिति तदाह—

**अपसर्पन्तु ते भूताये भूताभुवि संस्थिताः। येभूताविघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया। इति वामपादपार्ष्णिघातकरास्फोटसमुदञ्चितवक्त्र-स्तालत्रयं दत्वा देव्यहम्भावयुक्तः स्वशरीरे वज्रकवचन्यासजालं विदधीत ॥ १४ ॥**

अपसर्पन्तु०—इति मन्त्रेण पार्ष्ण्या पादपृष्ठभागेन भुवोघातः ताडनं, करयोः आस्फोटः सङ्घर्षः, समुदञ्चितं तिर्यक्कृतं वक्त्रं मुखम्, एभिः सहेति शेषः। तालत्रयम् अधोमुखाभ्यां दक्षमध्यमातर्जनीभ्यां वामकरतले सशब्दं त्रिरभिघातः, तं दत्वा उत्पाद्य। अहम् उपास्यदेव्य-भिन्नइति भावयित्वा। स्वशरीरे इत्यनेन देवताशरीरव्यावृत्तिः। वज्रकवचम् अभेद्यकवचरूपं न्यासजालं न्याससमूहं वक्ष्यमाणं विदधीत कुर्यात् ॥ १४ ॥

### करशुद्धिन्यासः

किं तन्न्यासजालम् इत्याकाङ्क्षायाम् आदौ करशुद्धिन्यासमाह—

**बिन्दुयुक्श्रीकण्ठानन्ततातार्तीयैः मध्यमादितलपर्यन्तं कृतकरशुद्धिः ॥ १५ ॥**

श्रीकण्ठः शिवः अकारः योगिनीतन्त्रे पञ्चदश्यां श्रीकण्ठदशकमित्यवर्णगणनात्। अनन्तः दीर्घाकारः, तन्त्रसारे आंह्रींक्रों—इति मन्त्रस्य "अनन्तोबिन्दुसंयुक्तोमायाब्रह्माग्नि-तारवान्" इत्युद्धारात्। बिन्दुयुजौ च तौ श्रीकण्ठानन्तौ चेति समासः। तार्तीयः

---

१ सूत्रकार-श्री.

२-६ खण्ड-श्यामाक्रमे १० सूत्रे उक्तप्रकारेणेत्यर्थः-

बालातृतीयः सौः—इति। एवं च—अं आं सौः—अनेन मन्त्रेण मध्यमामारभ्य तलपर्यन्तं कृता करशुद्धिः येन। मध्यमाऽनामाकनिष्ठाङ्गुष्ठतर्जनीकरतलकरपृष्ठेषु न्यसेदित्यर्थः। अयं करशुद्धिन्यासः॥ १५॥

### आत्मरक्षान्यासः

आत्मरक्षान्यासमाह—

**[1]कुमारीमुच्चार्य महात्रिपुरसुन्दरीपदमा[2]त्मानं रक्ष रक्षेति हृदये अञ्जलिं दत्वा॥ १६॥**

कुमारीं बालां उच्चार्य पदमिति वर्णद्वयमपहाय रक्षरक्षेत्यन्तं पठन् हृदये अञ्जलिं दद्यात्। अयमात्मरक्षान्यासः॥ १६॥

### चतुरासनन्यासः

चतुरासनन्यासमाह—

**मायाकामशक्तीरुच्चार्य देव्यात्मासनाय नमः—इति स्वस्यासनं दत्वा॥ १७॥**

माया ह्रीं—इति स्पष्टं बहुस्थले प्रसिद्धम्। कामः क्लीमिति। तदुक्तं देवीभागवते——

क्लीबेति मुनिपुत्रस्तमाजुहाव तदन्तिके।
सुदर्शनस्तु तच्छ्रुत्वा दधाराद्याक्षरं स्फुटम्॥
अनुस्वारयुतं तच्च प्रोवाच च पुनः पुनः।
बीजं वै कामराजाख्यं गृहीतं मनसा तदा॥ इति॥

शक्तिः सौरिति, "शक्तिः परा तृतीया च" इति कोशात्। यद्यपि कामशक्तिपदेन त्रिपुरागायत्रीवत् पञ्चदशीद्वितीयतृतीयकूटग्रहणमपि ग्रहीतुं शक्यते, तदर्थेऽपि प्रमाणस्य दर्शितत्वात्। तथाऽपि

मादनं [3]शक्तिसंयुक्तं चतुर्थस्वरसंयुतम्।
ऊर्ध्वे मध्येन्दुबिन्द्वाढ्यं कामराजं समुद्धृतम्।
शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम्॥

इति योगिनीतन्त्रे एतन्मन्त्रोद्धारादयमेवार्थः। मादनं ककारः। [4]शक्तिः लकारः। चतुर्थस्वरः ईकारः। शान्तान्तम् सकारः। कादिर्विसर्गः। ऐकारान्तान्तमौकारः। उच्चार्येति त्यक्त्वा

---

१ अत्र कुमारीशब्देन—अग्रतनबालाशब्देन च—ऐं क्लीं सौः—इति त्र्यक्षरोबालामन्त्रोग्राह्यः—

२ ममृतचैतन्यमात्मानं—त.

३ शक्रसं—ब२.

४ शक्रः—ब२.

नमोन्तोमनुः। इत्थं च—ह्रीं क्लीं सौः—देव्यात्मासनाय नमः—इति मन्त्रेण स्वस्यासनं दत्वेति, आसने पुष्पाक्षतान् क्षिपेत् ॥ १७ ॥

ततः सूत्रद्वयेन चक्रासनादिमन्त्रानुद्धरति—

**शिवयुग्बालामुचार्य श्रीचक्रासनाय नमः—शिवभृगुयुग्बालामुचार्य सर्वमन्त्रासनाय—नमोभुवनामदनौ ब्लेमुचार्य साध्यसिद्धासनाय नमः—इति चक्रमन्त्रदेवताऽऽसनं त्रिभिर्मन्त्रैश्चक्रे कृत्वा ॥ १८ ॥**

शिवोहकारः, "हरिशिवोगगनं 'प्राणः" इति कोशात्। तेन युक्ता बाला। अत्र बालपदेन बालावर्णः, तेन बालावर्णमुद्दिश्य हवर्णयोगोविधीयते। तथा च बालावर्णाङ्गं हकार—इति सिद्धम्। एवं च "प्रतिप्रधानमङ्गावृत्तिः" इति न्यायात् वर्णत्रयेऽपि हकार-योगः। तत्रापि स्वरान्ते व्यञ्जनस्यादृष्टत्वादादावेव योज्यम्। इत्थं—हैं ह्क्लीं ह्सौः—श्रीचक्रा-सनाय नमः—इत्येकोमन्त्रः। शिवभृगुयुक्—शिवोहकारः, भृगुः सकारः, सकाराधिकारे "जगद्बीजं शक्तिनामा सोऽहं वेगवती भृगुः" इति नन्दनकोशात्। एतदुभययुक्ता बाला, ह्सैं ह्स्क्लीं ह्स्सौः—सर्वमन्त्रासनाय नमः—इति द्वितीयोमन्त्रः। भुवना भुवनेश्वरी, तस्यामन्त्रोमायाबीजरूपएवोद्धृतः, देवीभागवते—"शिवमायाऽग्निबिन्दुमान्" इतिवचनात्। शिवोहकारः। माया ईकारः। अग्निः रेफः। बिन्दुः प्रसिद्धः। एषां योगे ह्रीमिति भवति, "भुवनेशी च लज्जा च हृल्लेखा कुलदेवता" इति कोशात्। प्रकृतेऽपि सएव मदनोव्याख्यातः। तथा च—ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः—इति तृतीयोमन्त्रः। एवं त्रिभिर्मन्त्रैः क्रमेण चक्रमन्त्रदेवताऽऽसनानि चक्रे कल्पयित्वा। अयं चतुरासनन्यासइति कथ्यते ॥ १८ ॥

### बालाषडङ्गन्यासः

ततः बालाषडङ्गमाह—

**बालाद्विरावृत्त्या त्रिद्व्येकदशत्रिद्विसङ्ख्याऽङ्गुलिविन्यासैः क्लृप्तषडङ्गः ॥ १९ ॥**

बालाद्विरावृत्त्या षड्वर्णैः हृदयादिषडङ्गानि क्रमेण त्र्याद्यङ्गुलिभिः क्लृप्तानि विन्यस्तानि षडङ्गानि येन ईदृशः। अयमेवार्थः स्पष्टमुक्तोदक्षिणामूर्तिसंहितायाम्—

---

१ हंसः—ब२.

२ एतद्बालमन्त्रषडङ्गादिज्ञानाय द्वि.प.शि.वि.९—द्दयः—

कनिष्ठा ऽङ्गुष्ठरहितैः त्रिभिस्तु हृदि विन्यसेत् ।
मध्यमानामिकाभ्यां तु न्यसेच्छिरसि मन्त्रवित् ॥
शिखाऽङ्गुष्ठेन विन्यस्य दशभिः कवचं न्यसेत् ।
हृदुक्तैर्नेत्रविन्यासं विन्यसेत् परमेश्वरि ॥
तर्जनीमध्यमाभ्यां तु ततोऽस्त्रं विन्यसेत् प्रिये ॥ इति ॥

इति बालाषडङ्गन्यासः ॥ १९ ॥

### वशिन्यादियोगिनीन्यासः

अथ वशिन्यादियोगिनीन्यासमाह--

**सबिन्दूनचो[1]ब्लूंमुच्चार्य वशिनीवाग्देवतायै नमः-इति शिरसि । सर्वत्र वर्गाणां बिन्दुयोगः । कवर्गं [2]कलह्रीं च निगद्य कामेश्वरीवाग्देवतायै नमः-इति ललाटे-चुं गदित्वा न्व्लीं मोदिनीवाग्देवतायै नमः-इति भ्रूमध्ये-टुं भणित्वा य्लूं विमलावाग्देवतायै नमः-इति कण्ठे-तुं च प्रोच्य ज्म्रीं अरुणावाग्देवतायै नमः-इति हृदि-पुं च ह्स्ल्व्यूं-उच्चार्य जयिनीवाग्देवतायै नमः-इति नाभौ-यादिचतुष्कं झ्म्र्यूं-उच्चार्य सर्वेश्वरी वाग्देवतायै नमः-इति लिङ्गे-शादिषट्कं क्ष्म्रीं-आख्याय कौलिनीवाग्देवतायै नमः-इति मूले ॥ २० ॥**

सबिन्दूनचोबिन्दुयुक्ताः अकारादिविसर्गान्ताः तानुच्चार्य नमः-इत्यन्तोवशिनीमन्त्रः । तथा च-अं आं...अं अः ब्लूं वशिनीवाग्देवतायै नमः इति शिरसि न्यसेत् । नन्वेवं सर्वेषु बिन्दुयोगकथनादन्यत्र नेत्यतआह--सर्वत्रेति । स्पष्टोऽर्थः । कवर्गमिति । कवर्गः प्रसिद्धः सबिन्दुः । कलह्रीं इत्यत्र केवलव्यञ्जनमात्रग्रहणम् । "समुदायेषु विद्यमानावर्णाः तदवयवेषु दृश्यन्ते" इति न्यायात् । गृहीतश्चायं पक्षः सेतुबन्धे श्रीभास्कररायैः "अधस्तान्नाभसं बीजम्" इत्यस्य व्याख्यानावसरे "नाभसोहंससमुदायः तदेकदेशः केवलहकारएव ग्राह्यः" इति व्याख्यानपङ्क्तौ । अत्रापि तथा ग्रहणे बीजं "त्रयोविंशदक्षरोऽसौ कामेश्वरीमन्त्रः" इति सेतुबन्धलेखएव । ककारलकारयोरवर्णविशिष्टयोर्ग्रहणे द्वितारीयुक्तपादुकां पूजयामीति घटिते, ह्रीं श्रीं कं क्ल्ह्रीं कामेश्वरीवाग्देवताकामेश्वरीपादुकां पूजयामीति मन्त्रे पञ्चविंशतिवर्णत्वात् । तस्मात् केवलव्यञ्जनमात्रग्रहणम् । व्यञ्जनानां न वर्णत्वमिति विस्तारउक्तः, वरिवस्यारहस्ये पञ्चदशीवर्णपरिगणने । तथा च-कं खं गं घं ङं कल्ह्रीं कामेश्वरीवाग्देवतायै

---

१ अत्रस्थश्रीवशिन्याद्यष्टदेव्यभिधानादौ ग्राह्योच्चार्य,ब्लूं-इत्याद्यष्टबीजोद्धारज्ञानाय द्वि. प. शि. १३ वि. दृश्यः

२ अत्र क्ल्ह्रीमितिज्ञेयम्

नमः-इति ललाटे न्यसेत्। चुं चवर्गं—चुमित्यस्योदित्वात् तेन सवर्णग्रहणशास्त्रस्य "अणुदित्सवर्णस्य चाप्रत्ययः" इति शास्त्रस्य सत्त्वात् चवर्गग्रहणम्। चवर्गं नमः—इत्यन्तं मन्त्रं पठित्वा भ्रूमध्ये न्यसेत्। टुं टवर्गं पूर्ववत्। शेषं स्पष्टम्। हसलवर्णेषु व्यञ्जनमात्रग्रहणं पूर्ववत्। यः आदिः यस्य चतुष्कस्य इति तद्गुणसंविज्ञानबहुव्रीहिः। इत्थं च—यं रं लं वं—इति। शादिषट्कमित्यत्रापि समासः पूर्ववत्॥ २०॥

**मूलमन्त्रन्यासः**

एवं वशिन्यादियोगिनीन्यासमुक्त्वा मूलमन्त्रन्यासादीन् वदति—

**मूलविद्यापञ्चदशवर्णान् मूर्ध्नि मूले हृदि चक्षुस्त्रितये श्रुतिद्वयमुखभुजयुगलपृष्ठजानुयुगलनाभिषु विन्यस्य षोढा चक्रे न्यस्यान्यस्य वा॥ २१॥**

चक्षुस्त्रितयं भ्रूमध्येन सह ज्ञेयम्। श्रुतिद्वयं श्रोत्रद्वयम्। शेषस्थानानि स्पष्टानि। मूलपञ्चदशवर्णैः बिन्दुसहितैः नमोऽन्तैः क्रमेणोक्तपञ्चदशस्थानेषु न्यसेत्। षोढा षट्प्रकारः, गणेश—ग्रह—नक्षत्र—योगिनी—राशि—पीठभेदेन चक्रन्यासस्तन्त्रान्तरोक्तः। न्यस्यान्यस्य इत्यनेन कृताकृतत्वं सूचितम्॥ २१॥

**पात्रासादनम्, सामान्यार्घ्यविधानम्**

एवं देवीरूपत्वसिद्धये न्यासानुक्त्वा ततोऽर्चनाङ्गभूतपात्रस्थापनविधिमुपदिशति—

**शुद्धाम्भसा वामभागे त्रिकोणषट्कोणवृत्तचतुरश्रमण्डलं कृत्वा पुष्पैरभ्यर्च्य [1]साधारं शङ्खं [2]प्रतिष्ठाप्य शुद्धजलमापूर्य आदिमबिन्दुं दत्वा षडङ्गेनाभ्यर्च्य विद्यया अभिमन्त्र्य तज्जलविप्रुड्भिः आत्मानं पूजोपकरणानि च संप्रोक्ष्य॥ २२॥**

शुद्धाम्भसा इत्यनेन गणपतिपद्धतौ [3]कथितगन्धाक्षतकुसुमसमर्चितत्वं ज्ञापितम्। शुद्धेन पटपूतेनाम्भसा। स्ववामभागे त्रिकोणादिचतुरस्रान्तं नियमविधिरूपत्वात् आकाङ्क्षावत्त्वात् [4]श्यामाक्रमोक्तमत्स्यमुद्रया निर्गमनरीत्या कृत्वा पुष्पैरभ्यर्च्य। साधारमित्यस्य तत्रेत्यादिः॥

आधारशङ्खयोः प्रतिष्ठापने शुद्धजलपूरणे च मन्त्राकाङ्क्षायां सन्निहितत्वाविशेषात् गणपतिप्रकरणस्थं श्यामाप्रकरणस्थं वेच्छया ग्राह्यम्। न तु आधारादिषु पावकादिकलापूजनम्,

---

१ द्वि० प. शि. वि. १२—द्रष्टव्यः।

२ संस्थाप्य—श्री.

३ २—खण्डे ७७ पत्रे ५ सूत्रे मूले—कथितमिति ज्ञेयम्—

४—६ खण्डे—१८ सूत्रोक्तरीत्या—इत्यर्थः—

अनुक्तत्वात् असूचितत्वात् अत्रानाकाङ्क्षितत्वाच्च । वस्तुतस्तु—श्यामागणपत्यपेक्षया श्रीविद्याप्रकरणस्थविशेषार्घ्यपात्राधारादिमन्त्राणां सन्निहितत्वात् तएव ग्राह्याः । तत्रापि यावदाकाङ्क्षितं ग्राह्यम्, न त्वनाकाङ्क्षितम् " पयसा मैत्रावरुणं श्रीणाति " इतिवत् ॥

आदिमबिन्दुसंयोगः शङ्खजलसंस्कारः । बिन्दुमित्यत्र विधेयगतसङ्ख्या विवक्षिता । तेन बिन्दुद्वयदानेन नादृष्टोत्पत्तिः । न च बिन्दुमित्यत्र द्वितीयाविभक्तिश्रवणात् स एवोद्देश्यः किं न स्यादिति वाच्यम् । संस्कृतबिन्दोः विनियोगाकाङ्क्षायां विनियोगाश्रवणात् न बिन्दुसंस्कारः । किं तु जलसंस्कारः, जलस्याग्रे विनियोगश्रवणात् । तथा च संस्कार्यस्यैवोद्देश्यत्वनियमात् बिन्दुर्विधेयः । तद्गतसङ्ख्या विवक्षितैव । षडङ्गेन षडङ्गमन्त्रैः अग्नीशासुरवायुकोणेषु षडङ्गदेवताः अभ्यर्च्य । अङ्गेनेत्यत्र एकवचनमार्षं, बहुत्वलक्षकं वा पाशाधिकरणन्यायेन, षण्मन्त्रेषु एकत्वान्वयासम्भवात् ॥

वस्तुतस्तु—अङ्गमन्त्रवृत्तिसङ्ख्यायाः षट्पदेनैव बोधितत्वाद्वचनार्थोऽविवक्षितएव । तथा च औत्सर्गिकमेकवचनमेव युक्तम् । न च विशेषणवाचकषट्पदसमानवचनकत्वहानिरिति वाच्यम्, षट्पदेन साकं समासाङ्गीकारेण अनुपपत्त्यभावात् । अनेनापि जलसंस्कारएव ॥

यद्वा—षडङ्गमन्त्रैः षडङ्गदेवताः तस्मिन्नेव शङ्खोदके कूटत्रयद्विरावृत्त्या क्रमेण, हृदयाय नमः हृदयशक्तिश्रीपादुकां तर्पयामीत्यादिमन्त्रैस्तर्पयेत् । न च अभ्यर्च्येत्यस्य तर्पणार्थत्वे किं मानम्—इति वाच्यम् । " तर्पयेत्तत्र योगिनीः " इति वामकेश्वरतन्त्रात्, योगिनीपदस्य त्रिपुरसुन्दर्याः षडङ्गदेवता—इति सेतुबन्धे व्याख्यानात् ॥

विद्यया पञ्चदश्या अभिमन्त्र्य अभिमन्त्रणेन संस्कृत्य, तज्जलं संस्कृतजलं, तस्य ये विप्रुषः बिन्दवः तैः आत्मानं स्वशरीरं पूजोपकरणानि गन्धपुष्पप्रथमादीनि च संप्रोक्ष्य । अत्र कपिञ्जलाधिकरणन्यायेन विप्रुड्भिरित्यनेन प्रोक्षणसाधनं बिन्दुत्रयमेवेति प्राप्तं न्यायं बाधितुं समित्युपसर्गः । तथा च, यथा पूजोपकरणानि जलेन सम्यक् सिक्तानि तथा प्रोक्षयेदित्यर्थः ॥ २२ ॥

### विशेषार्घ्यविधिः (अर्घ्यशोधनम्)

एवं सामान्यार्घ्यैः[1] तृप्तिं विधाय विशेषार्घ्योत्पत्तिमाह—

**तज्जलेन त्रिकोणषट्कोणवृत्तचतुरस्रमण्डलं कृत्वा मध्यं विद्यया विद्याखण्डैस्त्रिकोणं [2]बीजावृत्त्या षडश्रं संपूज्य वाचमुच्चार्य अग्निमण्ड-**

१ र्घ्योत्पत्तिं विधाय विशेषार्घ्यविधिमाह—ब, ब२,

२ बीजद्विरावृत्त्या—ग.

**लाय दशकलाऽऽत्मने अर्घ्यपात्राधाराय नमः-इति प्रतिष्ठाप्य आधारं प्रपूज्य पावकीः कलाः ॥ २३ ॥**

तज्जलेन सामान्यार्घ्योदकेन । शेषं पूर्ववत् । मध्यं त्रिकोणमध्यं, विद्यया समष्टिविद्यया, संपूज्येति सर्वत्रानुषज्यते । विद्याखण्डैः कूटत्रयेण त्रिकोणं त्रिकोणकोणत्रयम् । अस्योपपत्ति-र्दर्शिता प्राक् । [1]बीजावृत्त्या कूटत्रयद्विरावृत्त्या । कूटस्य बीजरूपत्वं श्रीषोडशाक्षर्याः षोडशार्णे-त्वोपपत्तये एकैककूटस्यैकैकबीजरूपत्वं इति सप्रमाणं वरिवस्यारहस्ये अस्मत्परमेष्ठिगुरुभिः प्रपञ्चितम् । ग्रन्थविस्तरभयान्नेह लिख्यते । क्रमस्यानुक्तत्वात् प्रागादिप्रादक्षिण्येन स्वाग्रादि-प्रादक्षिण्येन वा । नमोऽन्तोमन्त्रः, " नमोन्तैः पादुकाऽन्तैर्वा " इति योगिनीतन्त्रवच-नात् । वाचं-ऐं-इति । तदुक्तं देवीभागवते—

[2]वाग्भवं कामराजं च मायाबीजं तृतीयकम् ।
चित्ते यस्य भवेत्तं तु न कश्चि द्बाधितुं क्षमः ॥

इत्युपक्रम्य वाग्भवं प्रथमबीजं स्तोतुं कथामुपक्रम्य,—

ऐ ऐ इति भयार्तेन दृष्ट्वा (ब) व्याघ्रादिकं वने ।
बिन्दुहीनमपि प्रोक्तं वाञ्छितं प्रददौ किल ॥ इति ॥

बिन्दुहीनस्य कैमुतिकन्यायेन फलहेतुत्वस्तुत्या सबिन्दुः ऐकारोवाग्भवइति सिध्यति । नित्यारहस्ये—" वाग्भवं प्रथमं देवि कामराजं द्वितीयकम् " इति बालामन्त्रोद्धाराच्च, रविस्वरोबिन्दुयुक्तोवाग्भवं बीजमीरितम् " इति बीजकोशाच्च । आधारं कीदृशम् इत्या-काङ्क्षासत्त्वात् [3]तन्त्रान्तरोक्तं त्रिपदादि ग्राह्यम् । [4]पावकीः वह्निसम्बन्धिनीः कलाः[5] चतुर्थ्यन्त-नमोऽन्तैः तत्तन्नामभिः प्रागादिवृत्तरूपं यजेत्, " प्रागादिवृत्तरूपेण " इति परमानन्द-तन्त्रवचनात् । सेतुबन्धे भास्कररायास्तु पश्चिमादिप्रादक्षिण्येन इत्यूचुः ॥ २३ ॥

**मदनादुपरि सूर्यमण्डलाय द्वादशकलाऽऽत्मने अर्घ्यपात्राय नमः इति संविधाय पात्रं संस्पृश्य कलाः [4]सौरीः सौः सोममण्डलाय षोडश-कलाऽऽत्मने अर्घ्यामृताय नमः-इति पूरयित्वा आदिमं दत्वोपादिम-मध्यमौ पूजयित्वा [4]विधोः कलाषोडशकम् ॥ २४ ॥**

---

१ इतः पूर्वतने-१०३-१०५-पत्रयोः-१९-२२-सूत्रयोरुक्तरीत्येत्यर्थः-

२ द्वि-प-शि-९-वि-दृश्यः ।

३ अत्राधारवस्तुनोज्ञानाय-द्वि० परिशिष्टे १२ विषयोऽवलोक्यः

४ एतासां पावकसूर्यचन्द्रकलानां नामानि, प्रत्यक्षाणि-पुरतोऽत्रैव श्रीश्यामाक्रमीये-६-खण्डे-१८-मूलसूत्रे एव सन्ति-ततोग्राह्याणि-

५ अत्र पात्रं कस्य वस्तुनः कीदृशाकारं च, ग्राह्यं; तदर्थं द्वि.-प.-शि.-वि.-१२-दृश्यः-

मदनस्तु चतुरासनन्यासे प्रपञ्चितः । शेषं स्पष्टम् । संस्पृश्येत्यस्मात् पूर्वं तत्रेत्यादिः तत्र पात्रे सौरीः कलाः तपिन्यादीः संस्पृश्य पूजयित्वा । यद्यपि स्पृशिधातोः न पूजनमर्थः, तथाऽपि ' संपूज्य पावकीः कलाः', ' पूजयित्वा विधोः कलाः ' इति वाक्यमध्यवृत्तित्वात्, " तत्र [1]पात्रं प्रतिष्ठाप्य तत्र सूर्यकलायजेत् " इति योगिनीतन्त्रवचनाच्च पूजायामेव तात्पर्यं कल्प्यम् । आदिमं प्रथमं पूरयित्वा उपादिमं द्वितीयं मध्यमं तृतीयं, इदं चतुर्थ-पञ्चमयोरप्युपलक्षणम् । सिद्धान्तग्रन्थे प्रथमखण्डे " पञ्च मकाराः तैरर्चनं गुप्त्या " इत्युक्तम् । तत्रैव दत्वा स्थापयित्वा । विधोः कलाषोडशकं अमृतादिपूर्णामृतान्तम् ॥ २४ ॥

**तत्र विलिख्य त्र्यस्रमकथादिमयरेखं हळक्षयुगान्तस्थितहंसभास्वरं वाक्कामशक्तियुक्तकोणं हंसेनाराध्य बहिर्वृत्तषट्कोणं कृत्वा षडस्रं षडङ्गेन पुरोभागाद्यभ्यर्च्य मूलेन सप्तधा अभिमन्त्र्य दत्तगन्धाक्षतपुष्पधूपदीपः तद्विप्रुड्भिः प्रोक्षितपूजाद्रव्यः सर्वं विद्यामयं कृत्वा तत्स्पृष्ट्वा चतुर्नवतिमन्त्रान् जपेत् ॥ २५ ॥**

तत्र प्रथमद्रव्ये पूर्वोक्तक्रमेण पूजयित्वा । अकारादिविसर्गान्तषोडशस्वरैः पश्चिमादीशा-नान्ताम् एकां रेखां कुर्यात् । ततईशानाद्याग्नेयान्तां कवर्गमारभ्य तान्तैः षोडशवर्णैः अपरां रेखां संपादयेत् । ततआग्नेयादिपश्चिमान्तां थादिसान्तैः षोडशभिः तृतीयरेखां संपादयेत् । एवं सति अश्च कश्च थश्च आदिर्येषां वर्णानां दीर्घाकारखकारदकारप्रभृतीनां तन्मयाः तदभिन्नाः रेखाः यस्मिन् त्रिकोणे तत् अकथादिमयरेखम् । इदं त्र्यस्रविशेषणम् । हश्च ळक्षयुगं च तयोः अन्तः मध्ये स्थितोयोहंसः—इति वर्णसमुदायः तेन भास्वरं—द्रव्ये स्वदक्षभागे हम्—इति विलिख्य तदुत्तरतोहं स—इति वर्णौ विलिख्य तदुत्तरतोळक्षेति विलिखेत् । एवं चोक्तरूपं भवति । एवं वाक्कामशक्तयः बालायाः [2]वर्णत्रयम् । यद्वा—मूलकूटत्रयम् । प्रमाणम् अर्थद्वयेऽपि पूर्वमेवोक्तम् । तद्युक्तानि कोणानि यस्मिंस्तत् । एतादृश-विशेषणत्रयविशिष्टं त्रिकोणं विलिख्य । हंसेन हंसइति मन्त्रेण आराध्य पुष्पादिभिः पूजयित्वा । बहिः त्रिकोणात् वृत्तं षट्कोणं च कृत्वा । षडस्रं षट्कोणानि मूलषडङ्गमन्त्रैः पुरोभागादि स्वाभिमुखाग्रादिप्रादक्षिण्येन अभ्यर्च्य । मूलेन सप्तधा सप्तवारमावृत्तेन । तस्मिन् द्रव्ये दत्ताः अर्पिताः गन्धाक्षतपुष्पधूपदीपाः येन ईदृशः पूजकोभवेदिति विशिष्टविधौ दानममीषां कार्यमिति विशेषणविधिरार्थिकः । विद्या परसंवित् तन्मयं तदभिन्नं कृत्वा भावयित्वा । तत् प्रथमादिकम् । चतुर्नवतिमन्त्रान् वक्ष्यमाणान् ॥ २५ ॥

---

१ अत्र पात्रं कस्य वस्तुनः कीदृशाकारं च, प्राह्यं; तदर्थं–द्वि.–प.–शि.–वि.–१२.–द्रष्टव्यः–

२ द्वि. प. शि. ९–विषये, इदं वर्णत्रयं प्रत्यक्षमस्ति–

तान् मन्त्रानाह—

त्रितारीनमस्संपुटिताः तेजस्त्रितयकलाअष्टत्रिंशत्। सृष्टिऋद्धिस्मृतिमेधाकान्तिलक्ष्मीद्युतिस्थिरास्थितिसिद्धयोब्रह्मकलादश। जरापालिनी शान्तिरीश्वरी रतिकामिके वरदाह्लादिनी प्रीतिर्दीर्घाविष्णुकलादश। तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुधा क्रोधिनी क्रियोद्गारीमृत्यवोरुद्रकलादश। पीता श्वेताऽरुणाऽसिताश्चतस्त्रईश्वरकलाः। निवृत्तिप्रतिष्ठाविद्याशान्तीन्धिकादीपिकारेचिकामोचिकापरासूक्ष्मासूक्ष्मामृताज्ञानाज्ञानामृताप्यायिनीव्यापिनीव्योमरूपाः षोडश सदाशिवकलाः॥ हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतं बृहत्॥ प्रतद्विष्णुस्तवते वीर्येण मृगोन भीमः कुचरोगिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानिविश्वा॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥ तद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्॥ तद्विप्रासोविपन्यवोजागृवाꣳसः समिन्धते। विष्णोर्यत् परमं पदम्॥ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा॥ इत्येते पञ्चमन्त्राः॥ मूलविद्या चाहत्य चतुर्नवतिमन्त्राः॥ २६॥

त्रितारी पूर्वोक्ता[3]। त्रितारी नमः इत्यनयोर्मध्ये चतुर्नवतिमन्त्रान् पठेत्। तथा च द्वाभ्यां संपुटितोभवति। यथा लोके संपुटे करण्डे अन्तः किंचित् क्षिप्त्वा आधारावयवोत्तरावयवमध्यवृत्तित्वं वस्तुनः संपाद्यते तद्वत् प्रथमं त्रितारी, पश्चाच्चतुर्नवतिमन्त्रेष्वेकोमन्त्रः, ततोनमः इति। एवं सति मन्त्रः द्वाभ्यां संपुटितोभवति। तेजस्त्रितयं वह्निसूर्यसोमाः तेषां कलाः

---

१. कुत्रचिदत्र उद्गारीस्थाने—उल्केत्युपात्तम्—

२. अत्र—पुष्करस्रजौ—एवं पाठोज्ञेयः—

३. त्रितार्युद्धारश्च अनुगत-९१-पत्रे-३-श्रीक्रमीयखण्डस्य-८ सूत्रेऽस्ति—प्रत्यक्षश्चात्रैबभाष्यैवस्तादस्ति—

धूम्राचिरादिपूर्णामृतान्ताः श्यामाक्रमे वक्ष्यमाणाअष्टत्रिंशत्[१]। मन्त्रस्वरूपं तु ऐं ह्रीं श्रीं [१]धूम्रार्चिषे नमः। एवं अग्रेऽपि ज्ञेयम्। सृष्टिऋद्धीत्यत्र सन्ध्यभावः आर्षः। यद्वा—"ऋत्यकः" इति पाक्षिकत्वादसन्धिः। शेषं स्पष्टम्। [१]वह्निकलाः— १०। [१]सूर्यकलाः— १२। [१]चन्द्रकलाः—१६। ब्रह्मकलाः— १०। विष्णुकलाः— १०। रुद्रकलाः— १०। ईश्वरकलाः—४ । सदाशिवकलाः—१६। इत्थं च, कलाः सर्वाः—८८। यद्यपि हंसश्शुचिषत्, इत्यारभ्य पुष्करस्रजावित्यन्तं सप्त ऋचः सन्ति, तथाऽपि 'इत्येते पञ्चमन्त्राः' इत्युक्त्या चतुर्थपञ्चमौ मिलित्वा एकोमन्त्रः, षष्ठसप्तमौ मिलित्वा एकोमन्त्रः। एकलिङ्गत्वा दुक्तयोरेवैक्यं युक्तं, नत्वन्यत्र। मूलविद्या पञ्चदशी। पूर्वकलाः ८८, उक्तमन्त्राः पञ्च, मूलविद्या च, आहत्य सर्वं मिलित्वा चतुर्नवतिमन्त्राः संपद्यन्ते। एतैरभिमन्त्रणेन द्रव्यं संस्कुर्यादिति फलितोऽर्थः ॥ २६ ॥

**अथ हैके पञ्चभिरखण्डाद्यैरभिमन्त्रणमामनन्ति ॥ २७ ॥**

अथेत्यनेन चतुर्नवतिमन्त्रोत्तरमेवेति क्रमविशेषः सूचितः। नात्र पाठक्रमः सम्भवति, स्वमताभावात्। अतः अथेत्यावश्यकम्। ह इति शब्दालङ्कारे। एके इत्यनेन पाक्षिकत्वं सूचितम्। अखण्डः आद्यः येषामिति तद्गुणसंविज्ञानबहुव्रीहिः ॥ २७ ॥

[२]अखण्डाद्याः के ? इत्याकाङ्क्षायामाह—

**अखण्डैकरसानन्दकरे परसुधाऽत्मनि।**
**स्वच्छन्दस्फुरणामत्र निधेह्यकुलनायिके ॥**
**अकुलस्थामृताकारे शुद्धज्ञानकरे परे।**
**अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ॥**
**तद्रूपिण्यैकरस्यत्वं कृत्वा ह्येतत्स्वरूपिणि।**
**भूत्वा परामृताकारा मयि चित्स्फुरणं कुरु ॥**
**इति तिस्रोऽनुष्टुभोविद्याः ॥ २८ ॥**

---

१. इमास्तिस्रोवह्निसूर्यचन्द्रकलाः–प्रत्यक्षनाम्ना-अग्रे-६-खण्डे श्रीश्यामाक्रमे-१८-सूत्रे, मूले एव वर्तन्ते–ततोग्राह्याः—

२. अत्र अखण्डाद्याः के; इत्यनेन, उपरितन–२७-सूत्रोक्ताखण्डाद्यैरितिपदोक्ताः, अखण्डशब्दाद्यामन्त्राः के-इत्यर्थोऽध्यवसेयः—

[1]वेदभाष्ये वैदिकमन्त्राणाम् अर्थस्य विवृतत्वात् [2]तान् परित्यज्य केवलतान्त्रिकसुबोधमन्त्राणां केषां चिदर्थं [3]प्रकटयामि । अखण्डेति—अखण्डेत्यादिमन्त्रत्रयं लिङ्गेन सुधादेवीप्रार्थनाङ्गं भवितुमर्हति । ततोऽपि [4]बलवता अभिमन्त्रणोत्तर[5]द्वितीयाश्रुत्या अभिमन्त्रणाङ्गम् । एतदनुसारेण परमानन्दतन्त्रे—"एतत्त्रयं त्रिबीजाढ्यं चतुर्धा तत्र वै जपेत्" इत्यत्र स्पृशन्-इत्यध्याहार्यम् । तथा च अभिमन्त्रणाङ्गत्वं सिद्धम् । एवं च परमानन्दटिप्पण्याम् अखण्डेत्यादि सुधादेवीप्रार्थनारूपमिति लेखः [6]प्रामादिकएव, लिङ्गाच्छ्रुतिबाधस्य केनाप्यनङ्गीकारात् । अत्र मन्त्रार्थस्तु—अकुलं नाम सहस्रदलकमलद्वयम् । सर्वकमलानामाधारभूतं ऊर्ध्वमुखमेकं पद्मं मूलाधारस्याधस्तिष्ठति, तदेकं अकुलपदवाच्यम् । "अकुले विषुसंज्ञे च" इति योगिनीतन्त्रश्लोकव्याख्यानावसरे सर्वाधःस्थितसहस्रदलकमलोपर्यष्टदलं तदुपरि षड्दलं तदुपरि मूलाधारादिचक्राणि तत्र मूलाधाराधःस्थितं षड्दलं कुलपद्मं तदधःस्थिते अष्टदलसहस्रदले अकुले—इति सेतुबन्धलेखात् । एवं ब्रह्मरन्ध्रस्थिताधोमुखसहस्रच्छदपद्ममपि अकुलम् । तदुक्तं त्रिपुरार्णवे—

सुषुम्नोर्ध्वे सुधारश्मिकोटिकान्तिसमप्रभम् ।
अधोमुखं गुरुस्थानं सहस्रदलशोभितम् ॥
अकुलं तद्विजानीयात्...............इति ॥

परमानन्दतन्त्रेऽपि—

साधकः प्रातरुत्थाय ब्रह्मरन्ध्रे निजं गुरुम् ।
पूर्वोक्ताकुलपद्मान्तर्द्वादशान्तसरोरुहे ॥ इति ॥

एवं द्वयोः सहस्रच्छदयोरकुलवाच्यत्वे सिद्धे प्रकृते ब्रह्मरन्ध्रस्थस्यैव ग्रहणम्, तस्यैवामृतस्राचित्वात् । प्रकृते अकुलं यद्ब्रह्मरन्ध्रस्थकमलं तस्य नायिका तदधिष्ठात्री तत्सम्बोधने हे अकुलनायिके[7] । अखण्डोऽविच्छिन्नः एकरसोदुःखासंभिन्नोयआनन्दः तं करोति व्यञ्जयतीति तादृशे । परा उत्कृष्टा या सुधा ब्रह्मरन्ध्रस्था अमरत्वकारिणी तदात्मनि तत्स्वरूपे अत्र द्रव्ये

---

१, दुरधिगम्यार्थान्–उपर्युक्तान्–अखण्डेत्यादिपञ्चमन्त्रान् सार्थान् विविनक्ति पण्डितः सूत्रभाष्यकारः—
२. तान् नाम, तादृग्विवृतार्थान्, वैदिकमन्त्रानित्यर्थः–
३. प्रकटयति–अ.
४. अत्र, बलवतेति, लिंगेनेत्यस्य विशेषणम्–
५. द्वितीयाश्रुत्या नाम–उपरितन–२७–सूत्रस्थ–आमनन्तीत्यस्य कर्मकारकीभूतम्, अभिमन्त्रणमिति, द्वितीयाश्रुत्येत्यर्थोत्रावधेयः—
६. चिन्त्यः -ब२.
७ अत्र मुले च अकुलनायिके, इतिपदमर्थश्चोपात्तः-महानिर्वाणतन्त्रे-६-उल्लासे ३८ श्लोके मूले टीकायां च कुलशब्दएवास्तीति श्रीशिवजामदग्न्योभयवचोऽविरोधं समन्वयनीयमित्याशासे–

स्वच्छन्दा स्वतन्त्रा या चित् तस्याः स्फुरणं प्रकाशशक्तिं निधेहि स्थापय। हे परे श्रेष्ठे क्लिन्न मार्द्ररूपं तदस्मिन्नस्ति इति क्लिन्नरूपिणि अस्मिन् वस्तुनि अमृतत्वं निधेहि संस्थापय संपादय। अकुलं व्याख्यातं तत्र विद्यमानं यत् अमृतं तस्य स्वरूपमिव स्वरूपं यस्याः द्रव्याभिमानिदेवतायाः। इदं परेत्यस्य विशेषणम्। शुद्धज्ञानकरे स्वरूपज्ञानाविर्भावकर्त्रि, इदमपि पराविशेषणम्। यत्तु सौभाग्यानन्दसन्दोहे परे इति सप्तम्यन्तं कृत्वा वस्तुविशेषणमित्युक्तम्, तन्न, दूरान्वयापत्तेः। तत् परब्रह्म तस्य यद्रूपं तद्वति परब्रह्मस्वरूपे इति यावत्। तद्रूपिणि विशेषार्घ्यरूपिणि मयि देहाभिमानिनि। परं यत् अमृतम् आनन्दः तदाकारा भूत्वा ऐकरस्यं चित्तस्यैकाकारतां कृत्वा संपाद्य चित्स्फुरणं स्वस्वरूपप्रकाशं कुर्विति मन्त्रत्रयार्थः। अनुष्टुभः अनुष्टुप्छन्दस्का इत्यर्थः, "द्वात्रिंशदक्षराऽनुष्टुप्" इति श्रुतेः। विद्याः मन्त्राः। इदं [1]विद्यात्रयं मिलित्वा एकापूर्वजनकं, पौर्णमासयागत्रिकवत्, अग्रिममन्त्रेषु अथो इति प्रक्रमान्तरसत्त्वात्, तन्त्रान्तरेऽपि एतत्त्रयमिति समष्टिविनियोगदर्शनाच्च। तेनैकमन्त्रलोपे पुनस्त्रितयपाठः, न तावन्मात्रम्[2] ॥ २८ ॥ २

चतुर्थं अमृतेशीमन्त्रमाह—

**अथो वाचं ब्लूं झ्रौमिति जूंसः—इति चोक्त्वा अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्त्रावय स्त्रावय स्वाहेति चतुर्थोमन्त्रः ॥ २९ ॥**

वाचम्—ऐं। इति द्वयं चोक्त्वेति च त्यक्त्वा शेषं मन्त्रस्वरूपम्। हे अमृते अस्मिन् द्रव्ये अमृतं स्त्रावय इति तदर्थः। शेषाण्यमृते इत्यस्य विशेषणानि। तदर्थः स्पष्टः ॥ २९ ॥

ततः पञ्चमं मन्त्रमुद्धरति—

**वाग्भवोवद वद ततोवाग्वादिनि वाङ्मदनक्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरुयुगलं मादनं शक्तिर्मोक्षं कुरु कुरु शब्दोहसचतुर्दशपञ्चदशपिण्डः सहचतुर्दशषोडशपिण्डश्चेति पञ्चमीयं विद्यैताभिः अभिमन्त्र्य ज्योतिर्मयं तदर्घ्यं विधाय ॥ ३० ॥**

वाग्भवः ऐं। वाक् ऐं। मदनः क्लीं। कुरुयुगलं द्विवारं कुर्वित्युच्चार्य। मादनं क्लीं। शक्तिः सौः। चतुर्दश अचां चतुर्दशः औ। पञ्चदशः अनुस्वारः। पिण्डः समुदायः। षोडशोविसर्गः। तथा च मन्त्रस्वरूपम्—ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय

---

१. विद्यात्रयं नामैतत्—२८सूत्रोक्ताखण्डेत्यादिश्लोकत्रयोक्ता—३—विद्यामिलित्वेत्यर्थः—

२. अत्राखण्डेत्यादिश्लोकत्रयभाष्यं पर्यवसन्नम्—

महाक्षोभं कुरुकुरु क्लीं सौः मोक्षं कुरुकुरु हसौं स्हौः । इतीयं पञ्चमी विद्या । एताभिः पञ्चभिः अभिमन्त्र्य । ज्योतिर्मयं निर्दोषं तदर्घ्यं विधाय । एतेन तन्त्रान्तरोक्तशापविमोचनादिकम् अनेनैव जातमिति सूचितम् ॥

ननु ज्योतिर्मयमित्यनेन, अयमभिप्रायः कथं निष्पादितइति चेत्—उच्यते । ज्योतिरिति प्रकाशापरपर्यायः । प्राचुर्यार्थे मयट् । यस्मिन् प्रकाशे मलमिश्रत्वं तत्र प्रकाशप्राचुर्यं न संभवति यथोपरक्तदिवाकरादौ । मलनिर्गमे सति तत्रैव प्रकाशप्राचुर्यमनुभूयते । एवमेवादर्शे मुखप्रकाशके । तद्वदत्रापि द्रव्ये नानाशापादिमलोपहते ज्योतिर्मयत्वं न संभवति । प्रोक्तैकोनशतमन्त्रैरभिमन्त्रणे सति निरस्तनिखिलमलं सत् ज्योतिर्मयं भवति । ततएव ज्योतिर्मयं कृत्वेत्युक्तम् । एतेन तन्त्रान्तरोक्तशापविमोचनस्यापि समुच्चयइति केषांचिदुक्तिः अश्रद्धेयैव ॥

### [1]द्विपात्रविधेः मुख्यत्वसमर्थनम्

एवं ये महेश्वरानन्दनाथप्रभृतयः तन्त्रान्तरे नित्यपूजायां " पूर्ववत्तु त्रिपात्रकम् " इति वचनात् सूत्रे न कर्तव्यमिति निषेधाभावात् सूत्रानुसारिभिरपि त्रिपात्रं कर्तव्यमित्यूचुः, तान् प्रति अयं प्रश्नः—सूत्रे न कर्तव्यमिति निषेधाभावेन त्रिपात्रत्वं साध्यते, उत तन्त्रान्तरे उक्तत्वात्, उत स्वसूत्रे निषेधाभावे सति तन्त्रान्तरे विद्यमानत्वेन वा, उत तन्त्रान्तरे द्विपात्रनिषेधश्रवणाद्वा; । नाद्यः, " व्रीहिभिर्यजेत " इत्यत्र न गोधूमैरिति निषेधाभावात् गोधूमयोगेनाप्यपूर्वं स्यात् । न द्वितीयः, तथा सति परशुरामसूत्रोक्तसङ्गीतमातृकावाराह्याद्युपास्तेः श्रीविद्याऽङ्गत्वेन सौभाग्यानन्दसन्दोहे परेषामपि ईदृशाङ्गत्यागस्य निर्युक्तिकत्वापत्तिः । एतेन तृतीयपक्षोऽपि निरस्तः । नापि चतुर्थः । तथा हि योऽयं " तस्मात् पात्रद्वयं देवि नैव कुर्यात् कदाचन " इति निषेधः, या च निन्दा—

आलस्येनान्यथा वाऽपि कृत्वा पात्रद्वयं शिवे ।
पूजाफलेन हीनस्तु विक्रियां लभते नरः ॥

इति, त्रिपात्रकमिति विधिशेषार्थवादः । अन्यथा त्रिपात्रविधिनैव द्विपात्रव्यावृत्तौ निषेधस्य निवृत्तिरूपफलाभावेन वैय्यर्थ्यापत्तेः । यदि च विधिना प्रवृत्तिमात्रं निषेधेन च तदितरनिवृत्तिरित्युच्यते तर्हि " एकादश प्रयाजान् यजति " इत्यत्र न द्वादश न दश इति वाक्याभावात् दशभिर्द्वादशभिश्च प्रयाजैरपूर्वं स्यात् । तस्माद्विधिनैव द्विपात्रनिवृत्तौ निषेधोऽव्यर्थः सन् तच्छेषोऽर्थवादएव । अर्थवादस्य स्तुतिमात्रे तात्पर्यम् । न तस्मिन्निषेधरूपत्वमस्ति । कथं निषेधेन हेतुना तन्त्रान्तरे त्रिपात्रत्वसाधनम् ॥

---

१ इतएतत् ३० सूत्रभाष्यसमाप्तिपत्रावधि–वृत्तिकृता द्विपात्रस्थापनं, मण्डितम्—१५ प.

किंच—एतत्तन्त्रे कति पात्राणि ? इत्याकाङ्क्षायां स्वसूत्रे विशेषाश्रवणात् तन्त्रान्तरस्थं ‘ पूर्ववत्तु त्रिपात्रकम् ’ इति वचनमेव आकाङ्क्षापूरकं सत् त्रिपात्रं साधयतीति परमतम् । तथा सति द्विपात्रप्राप्तेरेवाभावेन निषेधस्य दूरनिरस्तत्वात् ॥

न च अर्थवादइति वदतस्तव मते द्विपात्रप्राप्त्यभावेन न द्विपात्रं कुर्यादिति वाक्यस्य प्रामाण्यं कथं चिन्त्यते; इति वाच्यम् । अर्थवादघटकनिषेधस्य प्राप्तिपूर्वकत्वमिति न नियमः, तस्य स्वार्थे तात्पर्याभावात् । अतोऽप्राप्तार्थनिषेधोऽपि निर्वहति; यथा—“ नान्तरिक्षे न दिव्यग्निश्चेतव्यः ” इति, “ यदन्तरिक्षे चिन्वीत अन्तरिक्षꣳशुचाऽर्पयेत् ” इति । तादृशार्थस्य न स्वार्थे तात्पर्यम्, किं तु प्राशस्त्यमात्रे । तच्चाबाधितम् ॥

न वा तन्त्रयोः परस्परं प्रकृतिविकृतिभावः सप्रमाणः, यतोवा प्राप्तं निषिध्येत । न ह्यप्राप्तनिषेधः स्वप्नेऽपि श्रुतः ॥

किं च—परप्रीतये अर्थवादेऽपि आरोपितनिषेधत्वमस्तु । तथाऽपि न तेषां समीहितसिद्धिः । तथा हि कल्पसूत्रेण पात्रद्वयप्राप्तिः, परमानन्दतन्त्रेण तन्निषेधः, तथा सति तन्त्रयोः समबलत्वेन ग्रहणाग्रहणवद्विकल्पएव स्यात् । निषेधशास्त्रस्यैव स्वरुच्या प्राबल्याङ्गीकारे ग्रहणपक्षस्त्वत्यन्तं बाध्येत । विकल्पएव न स्यात् । द्विपात्रप्रयोगोऽशास्त्रीयः इति वदतां महेश्वरानन्दनाथादीनां विकल्पोन हीष्टः । सच दुष्परिहारः ॥

न च—परशुरामसूत्रे न कण्ठरवेण द्विपात्रं कर्तव्यमित्युक्तम्, किंतु पात्रद्वयप्रयोगस्थपाठानुसारेण कल्प्योविधिः । “ तस्मात् पात्रद्वयं देवि नैव कुर्यात् ” इति प्रत्यक्षोनिषेधः । तथा च प्रत्यक्षेणानुमानिकं बाध्यते । ग्रहणाग्रहणस्थले उभयं प्रत्यक्षमिति विकल्पोयुक्तः । प्रकृते न तथा, वैषम्यात्,—इति वाच्यम् । अग्नीषोमीयपशौ अध्रिगुप्रैषे “ षड्विꣳशतिरस्य वङ्क्रयः ” इति मन्त्रोऽस्ति । तत्र, वङ्क्रयः पार्श्वास्थीनि अस्य पशोः षड्विंशतिरिति तदर्थः । अयं मन्त्रः अश्वमेधे अग्नीषोमीयविकृतित्वात् अतिदेशेन प्राप्तः । तथा सति अश्वमेधे “ चतुस्त्रिꣳशद्वाजिनोदेवबन्धोः ” इति मन्त्रान्तरमस्ति । तेन मन्त्रलिङ्गेन अश्वस्य पार्श्वास्थीनि चतुस्त्रिंशत् इति सिद्धम् । तत्सिद्धौ “ षड्विꣳशतिरस्य वङ्क्रयः ” इति मन्त्रे षड्विंशलिङ्गविरोधे तत्स्थाने “ चतुस्त्रिꣳशदस्य वङ्क्रयः ” इत्यूहः प्राप्तः । एवं सति अश्वमेधप्रकरणे पुनरेवं श्रूयते—“ न चतुस्त्रिꣳशदिति ब्रूयात्, षड्विꣳशतिरित्येव ब्रूयात् ” इति । अत्र चतुस्त्रिंशदित्यूहशास्त्रस्यानुमानिकत्वात् तं बाधित्वा न चतुस्त्रिंशत् इति निषेधः—नित्यं प्रवर्तते इति पूर्वपक्षमुक्त्वा तदुत्तरं यत्रानुमानिकोविधिः निषेधश्च प्रत्यक्षः तत्र द्वयोरपि समबलत्वमङ्गीकार्यम् । तथा हि—प्रबलदुर्बलभावोहि न वस्तुनि

स्वाभाविकः कुत्र चिदस्ति, किं त्वाकाङ्क्षायां शीघ्रोपस्थितिविलम्बोपस्थितिप्रयुक्तः। यथा विकृतौ कर्मविशेषे प्रकृतितोवेद्यास्तरणं प्राप्तम्। तत्र केन वेद्यास्तरणं कार्यम्; इत्याकाङ्क्षायां साधनबोधकं पदं यदि न स्यात् तदा, प्राकृतवेद्यास्तरणसाधनं स्मृत्वा कुशान् बुद्धौ आरोप्य प्रश्चात् प्रकृतिवत् कुशैरास्तरणं कर्तव्यमिति आनुमानिकशब्दकल्पनया आकाङ्क्षा पूरणीया। ततोऽपि झटिति "शरमयं बर्हिर्भवति" इति प्रत्यक्षवाक्येनोपस्थितशरैः आकाङ्क्षाशान्तौ बोधकशास्त्रस्य तदंशे आकाङ्क्षाविरहात् दुर्बलत्वम्। प्रकृते "न चतुस्त्रिंशदिति ब्रूयात्" इति निषेधस्य प्राप्तिसापेक्षत्वात् "चतुस्त्रिंशद्वाजिनः" इति लिङ्गेन पूर्वं विधिकल्पनानन्तरं विधिमनुसृत्य प्रवृत्तं पुरुषं निवर्तयितुं निषेधः पश्चात् प्रवृत्तः। [1]न कुशशास्त्रात् पूर्वं शरशास्त्रमिव निषेधः विधिकल्पनात् पूर्वं प्रवृत्तिक्षमः। अतईदृशस्थले आनुमानिकविधिप्रत्यक्षनिषेधयोः तुल्यबलत्वाद्विकल्पएवेति नवमे तुरीयपादे सिद्धान्तितं जैमिनितन्त्रे। प्रकृतेऽपि तथा तुल्यबलत्वाद्विकल्पोदुष्परिहारः॥

यदि च सूत्रे पात्रद्वयेतिकर्तव्यतासहितस्थापनकथनेन प्रयोगविधौ द्विपात्रविधिर्न कल्प्यते, तन्त्रान्तरानुसारेण पात्रद्वयकथनं तृतीयस्याप्युपलक्षकमिति कल्प्यते, तदा सर्वेष्वपि तन्त्रेषु त्रिपात्रप्रयोगस्यैव तन्त्राभिमतत्वेन द्विपात्रप्रवर्तकाभावेन द्विपात्रविधेः शशशृङ्गसमत्वेन तन्निषेधस्यापि तादृशत्वेन तेन हेतुना कथं त्वत्समीहितसिद्धिः। सेयं उभयतःपाशा रज्जुः। तस्मात् कल्पसूत्रयोगिनीतन्त्रानुसारिभिः द्विपात्रप्रयोगोनिश्शङ्कमनुष्ठेयः॥

यत्तु परमानन्दतन्त्रटिप्पण्यां सौभाग्यानन्दसन्दोहसंज्ञिकायां एकोनविंशोल्लासे पञ्चदशश्लोकव्याख्यानावसरे—ननु परशुरामसूत्रवामकेश्वरादितन्त्रेषु प्रोक्तपात्रद्वयं विरुध्येत;—इति चेच्छृणु। अग्रिमोल्लासे अनुकल्पपूजायां पात्रद्वयस्य सुस्पष्टं वक्ष्यमाणत्वात् अनुकल्पपूजापरं परशुरामसूत्रादितन्त्रम्। अतएव तत्र शापमोचनमन्त्राणामभावइति सुवचम्। अथवा—आत्मयोगाभ्यासिपरम्—। अतएव त्रिपुरार्णवे "आत्मयोगपराणां तु [2]नाङ्गलोपेन हीयते" इति। अतएव श्रीभास्कररायैः एकपात्रादिसंक्षेपपूजनं अभ्यासशीलानामिति सेतुबन्धे निरूपितम्। अथवा

परमापत्पक्षोवा। तदुक्तं तन्त्रे—

प्रत्यक्षयुग्मपात्रं वै कृत्वा शापमवाप्नुयात्।
क्वचिन्मयैवोपदिष्टः परमापत्तिकालिकः॥

—इति महेश्वरानन्दनाथाः पक्षत्रयमूचुः, तच्चिन्त्यम्॥

---

१ अतः यमुपजीव्य प्रवृत्तः तमत्यन्तं बाधितुमसमर्थस्सन् पक्षे बाधते। अतईदृशस्थले-अ. श्री. ब२.

२ नाङ्गलोपोन बाधितः—श्री.

परशुरामसूत्रोक्तसरणिर्मुख्या न मिलति। तथा प्रतिनिधिस्वीकारपक्षइति प्रथमपक्षे "तस्याभिव्यञ्जकाः पञ्चमकाराः तैरर्चनं गुप्त्या" इति, "तद्वदादिमं संशोध्य" इति "आदिमबिन्दुं दत्वा" इति "पूरयित्वा आदिमम्" इति "मपञ्चकेन सन्तर्प्य" इतिप्रभृतीनां शतावधिवाक्यानां सूत्रस्थानां कुण्डलप्रक्षेपएव स्यात्। किं च—"मपञ्चकालाभेऽपि नित्यक्रमप्रत्यवमृष्टिः" इति सूत्रेण नित्यपूजायां मपञ्चकस्य मुख्यत्वं सुस्फुटम्। एवं सति सूत्रमनुकल्पपरमिति लेखः पूर्वोत्तरसूत्रापरिशोधनमूलः प्रामादिकइति हेयएव॥

किं च—एतत्पक्षस्य साधकतया शापमोचनाभावोहेतुत्वेनोपन्यस्तः। सतु अत्यन्तनिर्मूलकोऽसङ्गतश्च। तथाहि—शापविमोचनं नाम किं पूर्वं कृष्णं स्थितं यत् तस्यानन्तरक्रियया शुक्लत्वसंपादनरूपं दृष्टं फलं, किं वा संमार्गादिना सुक्ष्विवादृष्टं यागसाधनशरीरं उत्पद्यतइति; । नाद्यः, शापमोचकमन्त्रसहस्रावृत्त्याऽपि पूर्वरूपपरावृत्त्यदर्शनात्। न द्वितीयः,

क्वचित्तन्त्रेषु विस्तारः क्वचित्तन्त्रेषु संग्रहः।
एकं तन्त्रं समाश्रित्य सम्यक्कर्म कृतं तथा॥
सर्वं तेन कृतं [1]राम एतच्च श्रीगुरुमार्गतः॥

इति त्रिपुरारहस्यवचनेन

बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्तितम्।
तस्य तावति शास्त्रार्थे कृते [2]सर्वः कृतो भवेत्॥

इति बोधायनस्मृतिप्रमाणेन च आदिमद्रव्ये यावदुक्तसंस्कारैरेव यागजनकस्वरूपलाभे शापविमोचनमन्त्राणां तत्राप्रयोजकत्वात् कथमनेन हेतुना सूत्रं प्रतिनिधिपरं सिध्येत्। किं च—मुख्याभावे प्रतिनिधिस्वीकारे मुख्यधर्मायावन्तः प्रतिनिधौ प्रवर्तन्ते, यथा व्रीह्यभावे नीवारे यावद्व्रीहिधर्माः, यथा वा सोमाभावे पूतीकेषु यावत्सोमधर्माः, तत्र ऊहोऽपि नास्तीति साधितं जैमिनितन्त्रे। अनुतिष्ठन्ति च तथैव शिष्टाः। एवंसति प्रतिनिधौ शापविमोचनमन्त्राभावः केन वार्यते। इत्थं च वह्नावनुष्णत्ववदत्यन्तासिद्धहेतुं प्रयुञ्जानास्ते स्वाविद्वत्तां सुस्फुटं प्रकटयामासुः॥

नापि द्वितीयः पक्षः साधुः। तथा हि—दीक्षाऽद्यारभ्य निखिलपरशुरामसूत्रप्रतिपादितं कर्म योगाभ्यासिपरं, उत पूजामात्रम्;—नाद्यः, दीक्षातः प्राक् योगाभ्यासित्वं न संभवति। "अदीक्षितानां पुरतोनोच्चरेच्छिवपद्धतिम्" इति निषेधेन तान्त्रिकसिद्धान्तश्रवणाभावेन श्रवणमृते योगासंभवेन योगाभ्यासिनामियं दीक्षेति वक्तुमशक्यत्वात्। द्वितीये—ईदृशाभ्यासी एतत्तन्त्रविहितपूजाकर्ता किमेतत्तन्त्रोक्तदीक्षावान् उत तन्त्रान्तरेण दीक्षितस्य कालेन

१ राम—श्री, ब२.
२. सर्वं कृतं भवोदित्यपि-पाठान्तरम्-

स्वतन्त्रानुष्ठानेन परिपक्वचित्तस्यैव एतत्सूत्रोक्तपूजायामधिकारोवा;—नाद्यः, दीक्षाऽव्यवहितोत्तरक्षणे न भवदभिमतध्यानसिद्धिः । अयमनुभूयते सर्वैः । इत्थं च सूत्रानुसारेण दीक्षां संपाद्य अयोगित्वेनैतत्तन्त्रोक्तपूजानधिकारात् तन्त्रान्तराश्रयणं पूजाऽर्थं कर्तव्यम् । तर्हि—

स्वशास्त्रे वर्तमानो यः परशास्त्रं निषेवते ।
भ्रूणहत्यामवाप्नोति स्वशास्त्रमवमन्यते ॥

इति निषेधोल्लङ्घनम् । किं च—दीक्षोत्तरं महाविद्याऽऽराधनप्रत्यूहापोहाय गाणनायकीं पद्धतिमामृशेत् इति–सूत्रेण ललितोपास्तिविघ्ननाशसाधनत्वं गणपत्युपास्तेरुक्तम् । ललितोपास्त्यनन्तरं हि तत्साध्यश्चित्तपरिपाकः ततोनिरुक्तयोगः । तदनन्तरं द्विपात्रप्रयोगे अधिकारोवाच्यः । सन संभवति गणपत्युपास्तेः विघ्नसमानकालिकत्वेन तदानीं निरुक्तयोगाभावादपि गणपत्युपास्तौ द्विपात्रकथनात् तत्रावश्यं द्विपात्रप्रयोगोऽङ्गीकार्यः । इत्थं च तत्र व्यभिचरिताधिकारस्य अन्यत्रापि कल्पनं केन प्रतिबद्धम्, सकृद्व्यभिचरितायाः स्त्रियः किमपरत्र वस्त्रावगुण्ठनेनेति न्यायात् ।

न च—यश्चायोगी तेन गणपत्युपास्तिं त्यक्त्वा केवलललितोपास्तिरेव तन्त्रान्तरमनुसृत्य योगसिद्धिपर्यन्तं अनुष्ठेया न गणपत्युपास्तिः, अथवा गणपत्युपास्तावपि तन्त्रान्तरमाश्रीयताम्—इति वाच्यम् । तथा सति “ एवं गणपतिमिष्ट्वा विधूतसमस्तविघ्नव्यतिकरः शक्तिचक्रैकनायिकायाः श्रीललितायाः क्रममारभेत ” इति सूत्रेऽपि अप्रामाण्यं वक्तव्यं स्यात् । सूत्रे गणपत्युपास्तिपाठवैय्यर्थ्यम्—न ललितोपास्तेः पूर्वमनुष्ठानं अयोगित्वेन तस्य तदाऽनधिकारात् । ललितोपास्त्या फलसिद्ध्यनन्तरमपि अप्रयोजकत्वात् अननुष्ठेयम् । एवं च वैय्यर्थ्यं दुर्निवारम् ॥

न च—द्विपात्रनिषेधस्य ललिताप्रकरणस्थत्वात् तत्रैवायोगिनामनधिकारः । अन्यत्रास्त्येव द्विपात्रप्रयोगेऽधिकारः निषेधाभावात् इति वाच्यम्; श्रीललितायामहायागानुष्ठानावसरे निर्विघ्नतासिद्धये परशुरामसूत्रानुसारेग निखिलगणपत्युपास्तिं विधाय पात्रासादनकाले द्विपात्रप्रयोगं परित्यज्य त्रिपात्रप्रयोगमनुसरतां महेश्वरानन्दनाथानां एतत्पक्षस्याननुमतत्वात् । नापि तन्त्रान्तरेण दीक्षितस्य स्वतन्त्रानुष्ठानेन परिपक्वचित्तस्य सूत्रोक्तपूजायामधिकारइति द्वितीयः पक्षः । तथा सति सूत्रे दीक्षापाठवैय्यर्थ्यात् । एवमेतत्पक्षसाधकत्वेन त्रिपुरार्णववचनम् “ आत्मयोगपराणां तु नाङ्गलोपेन हीयते ” इत्यलिखत् । तदतीव मन्दम् । योगाभ्यासिना मङ्गलोपो न दोषायेति तदर्थः । योगिरूपाधिकारिविशेषम्–उद्दिश्य सूत्रोक्तद्विपात्रविधिरिति सिद्धान्तस्तदीयः । एवं च योगिप्रयोगे तृतीयपात्रस्य वैश्यकर्तृकदर्शपूर्णमाससम्बन्धिसामिधेन्यां पाञ्चदश्यस्येवानङ्गत्वादङ्गलोपएव नास्ति । एवं सत्यङ्गलोपे दोषोनास्तीति स्वमतसाधकत्वेन

हेतुकथनं वन्ध्यापुत्रस्य स्वकार्यसाधकत्वेन ग्रहणवदेव भवति । या चैतद्विषये एकपात्रादि-सङ्क्षेपपूजनमभ्यासशीलानामिति सेतुबन्धलेखसम्मतिर्दर्शिता, साऽप्यसिद्धा । सेतुबन्धे ईदृशी पङ्क्तिः न कुत्राप्यस्ति । प्रत्युत द्विपात्रप्रयोगएव व्यवस्थापितः । तथा हि—पूर्वचतुश्शतीसम्बन्धिनः

हेमादिपात्रे साधारे स्थापयेदर्घ्यमञ्जसा[1] ।
रोचनाचन्द्रकाश्मीरलघुकस्तूरिकायुतम् ॥

भावयेद्वह्निसूर्येन्दुभूतानि परमेश्वरि ।
जपेच्च दशवारं तत्तर्पयेत्तेन योगिनीः ॥

इति श्लोकद्वयस्य व्याख्यानावसरे इदं पूर्वतन्त्रस्थवचनं सामान्यार्घ्यपरं, उत्तरतन्त्रस्थं "श्रीचक्रस्यात्मनश्चैव मध्ये त्वर्घ्यं प्रतिष्ठयेत्" इति विशेषार्घ्यपरं, तदन्ते "तथैवार्घ्यं विशेषेण साधयेत् साधकोत्तमः" इति गुरुपात्रात्मपात्रान्यतरपरमिति प्राचीनव्याख्यां निरस्य पूर्वतन्त्रस्थवचनमेव विशेषार्घ्यपरमित्यपि मतान्तरं निरस्य पूर्वतन्त्रे सामान्यार्घ्यविधिः उत्तरतन्त्रस्थेन श्रीचक्रस्यात्मनश्चेति वचनेन तस्यैव देशकालविधिः "तथैवार्घ्यं विशेषेण" इति पूर्वधर्मातिदेशसहितविशेषार्घ्यविधिरिति व्यवस्थाप्योपसंहारसमये "तस्मादेतत्तन्त्रानुसारेण द्वयोरेव स्थापनमिष्टम्"—इति द्विपात्रव्यवस्थामात्रं श्रीभास्कररायाश्चक्रुः । (सा च अस्माकमनु गुणा परेषामननुगुणा च ) योगिनामेवायं प्रयोगः इति नोचुः ॥

यत्तु—सेतुबन्धे स्थलान्तरे तन्त्रान्तरेषु योगिनीतन्त्रस्योत्तरचतुश्शतीवदन्तर्याग-प्रपञ्चस्याभावात् तन्त्रराजस्याप्येतत्सापेक्षत्वादत्युत्तमम्— एतत्तन्त्रं, एतत्सापेक्षत्वं च तन्त्रराजे—"नित्याहृदयसंप्रोक्तस्फुटोपायेन भावयेत्" इति कथनात् । नित्याहृदयमे-तदुत्तरतन्त्रनाम । अत्र बहिर्यागाङ्गानामल्पानां कथनेऽपि अन्तरङ्गोपास्तिदार्ढ्यशीलानां तावतैव परिपूर्तिसंभवात् इति कल्प्यतइति लिखितत्वात् । मतद्वयखण्डनपूर्वकपूर्वलिखितैतत्तन्त्रानुसारेण द्वयोरेव स्थापनमिष्टम् इति वाक्ये एतत्पदं उत्तरचतुश्शतीपरम् । उत्तरचतुश्शत्यां तु शुद्धान्तःकरणस्यैवाधिकारात् तेषां प्रयोगएव पात्रद्वयमिति सिद्धान्तः समीहितः । एतदभिप्रायेणैवास्माकं सेतुबन्धसंमतिलेखोऽपीति—तदपि न । तथासति उत्ततन्त्रे सामान्यार्घ्योदकोत्पत्तिविध्यभावेन केवलमुत्तरचतुश्शतीतन्त्रेणैवानुतिष्ठतां विशेषार्घ्यपात्रस्यैवा-सादनं प्रसक्तं, न पात्रद्वयस्य । तथा चोपसंहारवाक्ये एतत्तन्त्रानुसारेण द्वयोः थापनमिष्टमिति वाक्यं विरुध्यतएव । तस्मादेतत्तन्त्रपदेन पूर्वोत्तरचतुश्शतीमेकीकृत्य समग्रतन्त्रानुयायिना-

१ मम्बुना—ब.

मित्येवाभिप्रायः। अतएव सामान्यार्घ्यस्य पूर्वचतुश्शत्यामुत्पन्नस्य विनियोगोऽष्टमपटले वक्ष्यतीति सेतुबन्धलेखश्च सङ्गच्छते। एतेन पूर्वोत्तरतन्त्रोक्तमेकमेवेति स्पष्टम्। ईदृशी पूजा अपरिपक्वचित्तस्यापि प्राप्ता, तदनुसारेण पात्रद्वयं दुर्निवारम्॥

यश्च बहिर्योगाङ्गानामल्पानां कथनेऽप्यन्तरङ्गोपास्तिशीलानां तावतैव परिपूर्तिरिति सेतुबन्धलेखः सः नैतत्तन्त्रानुसारिपरः। किं तु तन्त्रराजानुसारेण पूर्वमुपास्तिं कुर्वतः कालेन चित्तशुद्धिपूर्वकभावनायां संपन्नायाम् " इत्थं कुर्वन् हि सततं मुच्यते नात्र संशयः " इति वचने साङ्गबहिर्योगस्य सततमित्यनेन तदुत्तरमपि यावज्जीवं साङ्गोपास्तिप्राप्तौ तद्बाधकमिदं " नित्याहृदयसंप्रोक्तस्फुटोपायेन भावयेत् " इति। नित्याहृदयमुत्तरचतुश्शती, तत्र प्रोक्तः यः स्फुटः उपायः बहिर्यागानुष्ठानपूर्विका भावना, तां कुर्यादिति तदर्थः—तन्त्रराजे बहिर्यागाङ्गानां बहुत्वात् योगाभ्यासं चिकीर्षतां तदनुष्ठानपूर्वकयोगाभ्यासे कालाभावेन कानि हेयानि कानि संग्राह्याणि; इति विचिकित्सायां योगमभ्यसिषोः यावज्जीवप्राप्ततन्त्रराजोक्तयावदङ्गकलापानुष्ठानं न कर्तव्यम्, किं तु उत्तरचतुश्शत्युक्ताल्पाङ्गकलापेनैव बहिर्यागं संपाद्य भावनां कुर्यात्, तावतैव तस्य परिपूर्तिरिति कल्प्यतइति तन्त्रराजानुयायिनः उत्तरचतुश्शतीधर्मप्राप्त्यभिप्रायकः। नैतावता निखिलं तन्त्रं योगाभ्यासिपरमिति ब्रह्मापि साधयितुं शक्नोति। तथासति तन्त्रराजवचने नित्याहृदयेत्यनेन उत्तरचतुश्शत्याएव योगाभ्यासिपरत्वकथनात् पूर्वचतुश्शतीपाठवैयर्थ्यात्। अतस्तन्त्रराजवचनेन परिपक्वचित्तानां योगाभ्यासदक्षाणाम् उत्तरचतुश्शत्युक्तमेकं पात्रं विशेषार्घ्यरूपं समष्टिमन्त्रेण पूजनम्। अपरिपक्वचित्तानां योगिनीतन्त्रानुसारिणां पूर्वोत्तरचतुश्शतीमेकीकृत्य द्विपात्रप्रयोगइति सेतुबन्धाभिप्रायतत्त्वम्। एवमेव सूत्रानुयायिनामित्यलं पल्लवितेन॥

नापि परमापत्पक्षोवेति—तृतीयः पक्षः। तथा हि तृतीयपक्षसाधकं यद्वचनं—

प्रत्यक्षे युग्मपात्रं वै कृत्वा शापमवाप्नुयात्।
क्वचिन्मयैवोपदिष्टः परमापत्तिकालिकः॥

इति लिखित तत् किं " योपगुरेत्तं शतेन यातयात् " इतिवच्छापरूपानिष्टसाधनत्वं द्विपात्रे ज्ञापयति उत्तरार्धस्तच्छेषोऽर्थवादः, उत पूर्वार्धेनानिष्टसाधनत्वं उत्तरार्धेन आपत्तौ अभ्यनुज्ञा चेति द्वयमुच्यते, अथवा केवलमभ्यनुज्ञापरएव वा सर्वोऽपि श्लोकः। नाद्यः, उत्तरार्धस्य अर्थवादरूपस्य केवलस्तुतौ तात्पर्येणापत्तिकाले अभ्यनुज्ञापकत्वासंभवात् स्वोक्तपक्षासिद्धेः। किं च—द्विपात्रे अनिष्टसाधनत्वं प्रतिपादयन् द्विपात्रे प्रवृत्तं पुरुषं निवर्तयति इति वाच्यम्। तत्र द्विपात्रप्रयोगे प्रवृत्तिसाधनं रागोवा तन्त्रान्तरं वा; । नाद्यः, त्रिपात्रं कर्तव्यमिति

विधिसत्त्वे अङ्गलोपाद्भीतस्य श्रद्धावतः द्विपात्रे रागोन कदाऽपि संभवति । न द्वितीयः, विकल्पादुष्परिहारः इति प्रागेव दत्तोत्तरत्वात् । एतेन द्वितीयपक्षः प्रत्युक्तः । तस्मात्, अगत्या यस्मिंस्तन्त्रे इदं वचनं पठितं तत्र त्रिपात्रविधिः स्यादेव । तच्छेषः पूर्वार्धोऽर्थवादः । उत्तरार्धेन त्रिपात्रविधितन्त्रानुयायिनां परमापत्तौ स्वान्यतन्त्रोक्तद्विपात्रप्रयोगग्रहणमभ्यनुज्ञातम् ।

अनृतं न वदेद्विद्वाननृतं धर्मनाशनम् ।
प्राणसंशयआपन्ने त्वनृतं नैव दुष्यति ॥

इतिवत् तृतीयपक्षएव साधुः । अयमेवार्थः स्पष्टीकृतोबोधायनाचार्यैः—

स्वशास्त्रे विद्यमाने यः परशास्त्रेण वर्तते ।
भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यतः ॥
आर्षेयस्य स्वशास्त्रस्य प्रदेशास्तद्ग[परशास्त्रगु]णैस्सह ।
कर्मणां प्रविचारा[र्या]र्थमापत्सु च समाप्नुयात् ॥ इति ॥

अस्योदाहरणं भवस्वामिना दर्शितम् । यथा तृतीयसवने " सौम्यं तन्त्रं तूष्णीम्-" इति शालिकिशाखायाम्, " दर्शपूर्णमासवत् सर्वम् " इति शाखाऽन्तरे । स्वस्वशाखिभिः यथोक्त-मनुष्ठेयम् । आपत्तौ तु सर्वैरपि तूष्णीमिति । इत्थं च त्र्या[द्व्या]दिपात्राणामापत्काले अभ्यनुज्ञापकं शास्त्रं कथम् आ[अना]पन्नपरमिति व्यवस्थापयेत् । तस्मान्न किंचिदेतत् । परशुरामसूत्रयोगिनीतन्त्रानुसारिभिः निःशङ्कं द्विपात्रासादनमेव कर्तव्यम् ॥

ननु तन्त्रान्तरस्थद्विपात्रदूषकवचनानां विधिशेषार्थपरत्वं व्यवस्थाप्य सूत्रानुसारिभिः द्विपात्रप्रयोगएव कार्यः तन्त्रान्तरस्पर्शोन कार्यः इति प्रतिज्ञायां " तन्त्रानुक्तं सूचितं च तथाऽन्येष्वपि दूषितम् " अन्यतन्त्रात् ग्राह्यम् इति विध्युदाहरणं किमिति चेत्—शृणु । अस्यैव वचनस्याव्यवहितपूर्वम्,

क्वचित्तन्त्रेषु विस्तारः क्वचित्तन्त्रेषु संग्रहः ।
एकं तन्त्रं समाश्रित्य सम्यक्कर्मकृते तथा ।
सर्वं तेन कृतं राम तच्च श्रीगुरुमार्गतः ॥

इत्यनेन पूजाऽङ्गानां पूजाऽनङ्गभूतानां यावत्कर्मणां स्वतन्त्रानुक्तानां निवृत्तौ कथितायां " तन्त्रानुक्तं सूचितं च " इत्यनेन केषांचित्पूजाऽङ्गानां ग्रहणम्, " तथाऽन्येष्वपि दूषितम्" इत्यनेन पूजाऽनङ्गभूतानां केषांचिदकरणे अतिनिन्दा, श्रूयते । यथा सहस्रनामपाठः । तस्याननुष्ठाने—

अकीर्तयन्निदं स्तोत्रं कथं भक्तोभविष्यति ।
अपठन्नामसाहस्रं प्रीणयेद्योमहेश्वरीम् ॥
सचक्षुषा विना रूपं पश्येदेव विमूढधीः ।
रहस्यनामसाहस्रं मुक्त्वा यः सिद्धिकामुकः ॥
सभोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ।

इत्यादिवचनैः अपाठेऽपि निन्दा श्रूयते । तत्तन्त्रान्तरस्थमवश्यं ग्राह्यम् । अत्रैव त्रिपुरारहस्यवचनाभिप्रायः । "स्वतन्त्रेणाविरुद्धं तु यावदन्यत् समाचरेत्" इति पूर्वलिखिततन्त्रान्तरवचनस्याप्यत्रैव तात्पर्यम्, न तु एकप्रयोगाङ्गेषु तन्त्रान्तराश्रयणम् । प्रयोगाङ्गेषु सूचितं आकाङ्क्षितं च मुक्त्वा तन्त्रान्तरस्थस्य ईषदपि प्रवेशोनास्तीति परमसिद्धान्तः । अतएव श्रीभागवतेऽपि—

यस्त्विच्छया कृतः पुंभिराभासोह्याश्रमात् पृथक् ।
स्वभावविहितोधर्मः कस्य नेष्टः प्रशान्तये ॥

इति इममेवार्थमाह । अस्य श्लोकस्य "स्वधर्मानुष्ठानानन्तरं धर्मभूयस्त्वार्थमपि परधर्मोनानुष्ठेयः अनुपयोगादित्याह—स्वभावेति" इति श्रीधरस्वाम्यवतरणम् । एतेन श्लोकोव्याख्यातः ॥ ३० ॥

तत्पात्रस्थबिन्दुभिः करणीयकृत्यमाह—

**तद्बिन्दुभिस्त्रिशः शिरसि गुरुपादुकामिष्ट्वा आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि योऽहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि अहमेवाहं मां जुहोमि स्वाहेति तद्बिन्दुमात्मन कुण्डलिन्यां जुहुयात् ॥ ३१ ॥**

तद्बिन्दुभिः विशेषार्घ्यबिन्दुभिः त्रिशः त्रिवारं शिरसि द्वादशान्तस्थाने[२] गुरुपादुकामिष्ट्वा गुरुपादुकोद्देशेन द्रव्यदानं कृत्वा आर्द्रं ज्वलति इति स्वाहाऽन्तेन मन्त्रेण तद्बिन्दुं गुरुपादुकायागशेषबिन्दुमित्यर्थः, सर्वनाम्नां सन्निहितपरत्वेन पादुकादत्तशेषस्यैव सन्निहितत्वात्, "तदीयं शेषमादाय जपन् योगं समाचरेत्" इति योगिनीतन्त्रवचनाच्च । आत्मनः स्वस्य कुण्डलिन्यां चिद्वह्नौ । कुण्डलिनीस्वरूपमुक्तं तन्त्रान्तरे—

---

१ अत्रोक्तश्रीगुरुपादुकातन्त्रमन्त्रज्ञान.याग्रतनद्वि.परिशिष्टस्थाः ६-१०/१ ६/११ ६/१४ ६-१६/१ ६-१६/५ ६/१८ तः ६/२० एते विषयाद्दश्याः

२ द्वादशस्थाने, नाम ब्रह्मरन्ध्रे-इत्यर्थः-पाश्चात्य-२ खण्डे-श्रीगणपतिक्रमे-२ सूत्रभाष्ये-६९-पत्रे-स्फुटीकृतोस्याथः-

विशदे कर्णिकायां च ध्यात्वाऽऽधारेऽथ लोहिते ।
कर्णिकाकुलकुण्डान्तस्सार्धत्रिवलयाकृतिम् ॥
प्रसुप्तसर्पसदृशीं बिसतन्तुतनीयसीम् ।
ध्यात्वा कुण्डलिनीशक्तिम् ..........॥ इति ॥

जुहुयात् इत्यनेन अस्मिन् कर्मणि होमबुद्धिः दृढा कार्या, न तु पानबुद्धिरिति सूचिता । बिन्दुमित्यनेन होमद्रव्यस्यात्यल्पत्वं सूचितम् । बिन्दुमिति द्वितीयया प्रतिपत्तिसंस्कारोऽपि सूचितः । गुरुपादुकायै दत्तशेषं होमेन संस्कुर्यादित्यर्थः । तेन शेषाभावे न होमः ॥

### कुलद्रव्यस्वीकारविधिसमर्थनम्

[1]ननु सकलश्रुतिस्मृतिपुराणेषु सुरापानस्य [2]पञ्चमहापातकेषु गणितत्वात् कथं तन्त्रोक्त-द्रव्यसेवनं सुखाय भवितुमर्हति । एवं येषु तन्त्रेषु द्रव्यसेवनं विहितं तेष्वेव तन्त्रेषु निषेधोबहुलमुपलभ्यते । यथा कुलार्णवे—

सुरादर्शनमात्रेण कुर्यात् सूर्यावलोकनम् ।
तत्समाघ्राणमात्रेण प्राणायामत्रयं चरेत् ॥
आजानुभ्यां भवेत् स्नानमानाभ्युपवसेच्छिवे ।
ऊर्ध्वं नाभेस्त्रिरात्रं स्यान्मद्यस्य स्पर्शने विधिः ॥
सुरापाने कामकृते ज्वलन्तीं तां विनिक्षिपेत् ।
मुखे तया विनिर्दग्धः ततः शुद्धिमवाप्नुयात् ॥
मद्यपानजदोषस्य प्रायश्चित्तमितीरितम् ॥ इति ॥

त्रिपुरार्णवेऽपि—

कामान्मोहाद्यदि सुरां पिबेत् सकृदपि द्विजः ।
विद्वानपि च संत्याज्यः तन्त्रज्ञैरविचारितम् ॥ इति ॥

देवीयामलेऽपि—

आघ्राणं दर्शनं चैव सुरायास्संत्यजेद्बुधः ॥ इति ॥

---

१. इत आरभ्यैतत्–३१–सूत्रभाष्यान्तंयावत्–सुराग्रहणखण्डनं– क्वाचित्कं तन्मण्डनमप्यभ्यधायीत्यवगन्तव्यम्–

२. यथाह श्रीयाज्ञवल्क्यः–ब्रह्महा मद्यपः स्तेयी तथैव-गुरुतल्पगः । महापापानि चत्वारि तत्संसर्गी च पञ्चमः । प्रा. अ. ३-२१ श्लोकः ॥ मनुरपि–ब्रह्महत्या सुरापानं स्तेय गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह– ११ अ-५४-श्लोकः ।

दर्शनमेव त्यजेत् किमु पानत्यागे इति तदर्थः। एवं अन्यतन्त्रवचनान्यपि बहूनि सन्ति। ग्रन्थविस्तरभयान्नेह लिख्यन्ते। तस्मात् कुलद्रव्यस्वीकारशास्त्रमश्रद्धेयमिति चेत्—न, रागप्राप्तसुरापाननिवर्तकान्येव अमूनि वचनानि। क्रत्वर्थप्रवृत्तिरिष्टैव, अन्यथा "न ब्राह्मणंहन्यात्" इति निषेधेन "ब्रह्मणे ब्राह्मणमालभते" इति श्रुतेरप्रामाण्यापत्तेः। अयमेवार्थः स्पष्टमुक्तः श्रीभागवते—

यद्घ्राणभक्षोविहितः सुरायाः तथा पशोरालभनं न हिंसा।
एवं व्यवायः प्रजया न रत्यै इमं विशुद्धं नु विदुः स्वधर्मम्॥

ये त्वनेवंविदः पुंसः स्तब्धास्सदभिमानिनः।
पशून् द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान्॥

इति ग्रन्थेन। तस्मात् निरवकाशविशेषद्रव्यस्वीकारविधेः क्रत्वर्थत्वकल्पनात् निषेधस्य च केवलपुरुषार्थत्वेन एकार्थत्वाभावात्। अतएवैतदभिप्रायसूचकमेव कामादिति त्रिपुरार्णवे, कुलार्णवे च कामकृते इति, पदं पठितम्। एवं तन्त्रान्तरे—

दोषोऽन्यत्र वरारोहे यज्ञे दोषोन विद्यते।
अश्वमेधादियज्ञेषु वाजिहत्या यथा भवेत्॥

इति सदृष्टान्तमुक्तार्थमेव द्रढयति॥

अत्र ताराभक्तिसुधार्णवे "एवं च वीरस्यापि ब्राह्मणस्य क्षीरमेव अन्यस्य तदपि न" इति भावशोधनप्रकरणे उक्त्वा एवमेतदग्रे स्थलान्तरे उक्तायाएव प्रतिज्ञायाद्दढीकरणार्थं बहुविचारः कृतोनृसिंहाचार्यैः। तथा हि—

वीक्षणप्रोक्षणध्यानमन्त्रमुद्राविभूषितम्।
द्रव्यं तर्पणयोग्यं स्याद्देवताप्रीतिकारकम्॥

तर्पणमत्र पानमेव। इदं तु ब्राह्मणेतरविषयम्, ब्राह्मणस्य तदुपादाननिषेधात्॥

ननु—

ब्राह्मणैस्तु सदा पेयं क्षत्रियैस्तु रणागमे।
वैश्यैर्धनप्रयोगे च शूद्रैस्तु न कदाचन॥

इति कुलार्णवे,

सौत्रामण्यां कुलाचारे ब्राह्मणः प्रपिबेत् सुराम्।

इति समयाचारतन्त्रे,

सत्ये क्रमाच्चतुर्वर्णैः क्षीराज्यमधुपिष्टजैः ।
त्रेतायां पूजिता देवी घृतेन सर्वजातिभिः ॥
मधुभिः सर्ववर्णैस्तु पूजिता द्वापरे युगे ।
पूजनीया कलौ देवी केवलैरासवैः शुभैः ॥

इति यामले चोक्तत्वात् कथं ब्राह्मणस्यानधिकारइति चेत्—उच्यते । "विप्राः क्षोणिभुजा विशस्तदितरे क्षीराज्यमध्वासवैः" इति लघुस्तवे,

"वर्णानुक्रमभेदेन द्रव्यभेदाभवन्ति वै" इति ज्ञानार्णवे, "द्रव्येण सात्विकेनैव ब्राह्मणः पूजयेच्छिवाम्" इति तत्रैवोक्तम् । तथा आसवभेदमुक्त्वा

एवं दद्यात् क्षत्रियोऽपि पैष्टीं तु न कदाचन ।
नारिकेलोदकं कांस्ये ताम्रे गव्यं तथा मधु ॥
राजन्यवैश्ययोर्दानं[1] न द्विजस्य कदाचन ।
एवं प्रदानमात्रेण [2]हीनायूर्ब्राह्मणोभवेत् ॥

इति महाकालसंहितायाम्,

क्षीरेण ब्राह्मणैस्तर्प्या घृतेन नृपवंशजैः ।
माक्षिकैर्वैश्यवर्णैस्तु आसवैः शूद्रजातिभिः ॥

इति भैरवीतन्त्रे,

यत्रावश्यं विनिर्दिष्टं मदिरादानपूजनम् ।
ब्राह्मणस्ताम्रपात्रे तु मधु मद्यं प्रकल्पयेत् ॥

इति कुलचूडामणौ,

ब्राह्मणोमदिरां [3]दत्वा ब्राह्मण्यादेव हीयते ।
स्वगात्ररुधिरं दत्वा स्वात्महत्यामवाप्नुयात् ॥

इति हंसमाहेश्वरतन्त्रे, कलिधर्मप्रकरणे गृह्यपरिशिष्टे हरिनाथोपाध्यायैः सौत्रामण्यां सुराग्रहण-निषेधस्योक्तत्वात्, "ब्राह्मणैस्तु सदाऽपेया" इत्यकारप्रश्लेषात् ब्राह्मणस्य सदा निषेधः । क्षत्रियस्य सङ्ग्रामकाले, विकलस्य सङ्ग्रामासंभवात् । वैश्यस्य धनप्रयोगकाले, अन्यथा

१. देयं ब्राह्मणस्य —श्री.
२. हीनोभवति ब्राह्मणः—श्री.–एवंपाठान्तरे-ब्रा–इत्यस्यगुरुत्वाच्छन्दोभङ्गभयमत्र च–हीनायूरित्यादि-पाठपाठः सुसाधुः ( पुनरावृत्तिकृत्– )
३. पीत्वा—श्री.

विकलधिया विंशतिदाने कर्तव्ये शतादिदानापत्तेः । शूद्रैर्नैव कदाचन अपेया तेन सर्वैर्देव पेयेत्यर्थः । एवं च " पूजनीया कलौ देवि केवलैरासवैः " इत्यत्र अनुषज्यमानसर्ववर्ण-शब्दश्च ब्राह्मणेतरविषयइत्यवधातव्यम् ॥

अथ—

क्षीरं वृक्षसमुद्भूतमाज्यं वल्कलसंभवम् ।
मधु पुष्परसोद्भूतम् आसवं तण्डुलोद्भवम् ॥

इति भैरवीतन्त्रे क्षीरादिपदानां आसवविशेषपरिभाषणात् ब्राह्मणस्यापि तत्राधिकारः प्रतीयते इति चेत्—अत्र प्रतिभाति । क्षीरादीनां कथं भैरवकल्पमित्यत्रेदं वचनम् । तेन क्षीरं वृक्षसमुद्भूतं वार्क्षमैरेयमित्यर्थः । एवमग्रेऽपि । अन्यथा क्षीरवृक्षपदादेर्वैपरीत्येन प्रयोगापत्तेः, " अनुवादमनुक्त्वा तु न विधेयमुदीरयेत् " इति न्यायात् । तण्डुलोद्भवस्त्वोदनः । तेन शूद्रस्याप्योदनस्थाने आसवमेव तेन । पृथगोदनं, ब्राह्मणादिभिः आसवं च, न देयमित्यर्थः । लिखितवचनात् आमं, " शूद्रहस्तेन पक्वान्नं पक्वमुच्छिष्टमुच्यते " इत्यादिस्मृतेश्च ॥

न च—शुक्रशापस्य ब्राह्मणविषयत्वेन सुरायां तदुद्धारविधानानुपपत्तिः इति वाच्यम्, शूद्रमात्रस्य सदाऽधिकारे शास्त्रसिद्धे शुक्रशापविमोचनस्यादृष्टार्थत्वात् ॥

किं च—" ' ऐन्द्र्या गार्हपत्यमुपतिष्ठते ' इत्यादौ लिङ्गापेक्षया श्रुतेरिव शापविमो-चनकल्प्यमैरेयदानविधानापेक्षया ' ब्राह्मणोमदिरां दत्वा ' इत्यादिनिषेधविधेः श्रौतस्य बलवत्त्वं युक्तिसाम्यात् " इत्यन्तेन लेखेन ब्राह्मणेतरपरमिति प्रतिज्ञां दृढीचक्रुः नृसिंहपण्डिताः॥

तदतीव मन्दम् । तथाहि—द्रव्येण सात्विकेनेति ज्ञानार्णववचनं स्वसाधकत्वेन लिखितम् । तदत्यन्तमपरिशोधनमूलम् । सात्विकद्रव्यं नाम व्रीह्यादिवत् [न] लोकप्रसिद्धं किंचिदस्ति । अतः किं तत्सात्विकद्रव्यम्; इत्याकाङ्क्षायां प्रकृतिप्रत्यययोः व्याकरणस्मृतिवत् शास्त्रैकगम्या सात्विकपदशक्तिः । तच्छास्त्रं त्रिपुरार्णवे—

गौडी माध्वी च पैष्टी च त्रिविधं द्रव्यमीरितम् ।
ऐक्षवक्षौद्रजाताऽऽद्या गौडी स्यात् सात्विकी स्मृता ॥
मधूककुसुमद्राक्षातालवृक्षादिसंभवा ।
माध्वीति कीर्तिता तज्ज्ञैः राजसी सा भवेच्छिवे ॥
पिष्टतण्डुलजाता या तामसी पैष्टिकी स्मृता ।
सात्विकी ब्राह्मणे ख्याता राजसी नृपवैश्ययोः ॥ इति ॥

एवं सति शास्त्रे ब्राह्मणेतरपरमिति प्रतिज्ञा अज्ञानमूलेति ध्रुवं प्रतीमः। तथा महाकालसंहितास्थं जानीयात् "नारिकेलोदकं कांस्ये" इति। राजन्यवैश्यकर्तृकप्रयोगे मुख्यद्रव्यप्रतिनिधिनियमं विधाय ब्राह्मणकर्तृके प्रयोगे उक्तद्रव्यपरिसङ्ख्यां कृत्वा परिसङ्ख्याशेषत्वेन "एवं प्रदानमात्रेण हीनायूर्ब्राह्मणोभवेत्" इति निन्दया अर्थवादरूपया स्तौति। इदं वचनं भवत्साधकं कथं भवेत् ॥

न च—क्षत्रियादिकर्तृकत्वेनैव ब्राह्मणादिकर्तृकत्वनिवृत्तिः, यथा गोधूमनिवृत्तिर्व्रीहिनियमेन, तथा च कथं ब्राह्मणकर्तृकप्रयोगे तस्य प्राप्तिः तन्निवृत्त्यर्थो परिसङ्ख्या वा कथम्—इति वाच्यम्, दृष्टान्तवैषम्यात्। दर्शपूर्णमासयागः द्रव्यमन्तरा अनुपपन्नः, इत्याक्षेपेण इतरद्रव्यादिवत् पक्षे व्रीहिप्राप्तौ व्रीहयएवेति नियम्यते। तावता दर्शपूर्णमासे द्रव्यान्तराकाङ्क्षाविरहादार्थिकी इतरनिवृत्तिः। प्रकृतौ राजन्यवैश्यकर्तृके प्रयोगे प्रतिनिधिनियमेन द्रव्याकाङ्क्षायाः विरहेऽपि ब्राह्मणकर्तृके द्रव्याकाङ्क्षासत्त्वात् पक्षे अस्यापि प्राप्तौ परिसङ्ख्यायायुक्तत्वात्, तस्मात् अनेन प्रतिज्ञासिद्धिः षण्डेनेव पुत्रोत्पत्तिः ॥

यच्च "क्षीरेण ब्राह्मणैस्तर्प्या" इति भैरवीतन्त्रवचनं साधकत्वेन लिखितं तदपि बालप्रतारणामात्रं, भैरवीतन्त्रएव एतद्वचनसमीपे "क्षीरं वृक्षसमुद्भूतम्" इत्यनेन क्षीरादिपदार्थनिर्णयात्। यत्तु "क्षीरं वृक्षसमुद्भूतम्" इत्यस्य क्षीरं वृक्षसमुद्भूतकार्यकारीत्यर्थं कृत्वा वृक्षसमुद्भूतकार्यं तर्पणं क्षीरे प्रसिद्धे विधीयतइति,—तदशुद्धम्। वृक्षसमुद्भवादिपदत्रयस्य किं द्रव्यसामान्यमर्थः, किं द्रव्यविशेषः;। आद्ये वृक्षसमुद्भूतत्वरूपशक्यार्थप्रवृत्तिनिमित्तरूपस्य द्रव्यत्वावाच्छिन्ने बाधाद्विशेषार्थे शक्तस्य सामान्ये लक्षणा। तथासति श्रूयमाणशक्यार्थत्यागः वृक्षसमुद्भूतपदेनैव आज्यादिषु विधानसम्भवे एकार्थानां तत्फलसम्भवादिपदानां वैय्यर्थ्यं च। वृक्षसमुद्भवादिपदं द्रव्यविशेषपरमिति द्वितीयपक्षे द्रव्यविशेषस्य कार्यं क्षीरे विधीयते। तत्किं दृष्टं वा, किं वाऽदृष्टसाधनं शास्त्रीयं कार्यं विधीयते;। आद्ये विधानवैय्यर्थ्यं, लोकतएव ज्ञातुं शक्यत्वात्। द्वितीये यथा "खलेवाली यूपोभवति" इत्यत्र "यूपे पशुं नियुञ्जीत" इत्यनेन शास्त्रेण कृतं यत्कार्यं तत्खलेवाल्यां विधीयते। तथा शास्त्रान्तरप्राप्तं विधीयते उत शास्त्रान्तरेण अप्राप्तं विधीयते;। आद्ये क्षीरं वृक्षसमुद्भूतमित्यनेनैव वृक्षसमुद्भूतकार्यस्य क्षीरतर्पणादेर्लाभे क्षीरेण ब्राह्मणैस्तर्प्येति शास्त्रं व्यर्थम्। न हि "खलेवाली यूपोभवति" इति प्रोच्य "खलेवाल्यां पशुं नियुञ्जीत" इति पृथगुक्तम् अप्राप्तकार्यस्य विधानं, तद्वत् बन्ध्यापुत्रादेरपि दम्पतिकार्यत्वेन विधानापत्तेः। मन्मते तु क्षीरेण ब्राह्मणैस्तर्प्येति तर्पणसाधनद्रव्यविधिः क्षीरपदस्य प्रसिद्धार्थं बाधित्वा अर्थविशेषतात्पर्यग्राहकं "क्षीरं वृक्षसमुद्भूतम्" इति वचनमिति न कस्याऽपि वैय्यर्थ्यम्। अन्योऽपि नानुपपत्तिगन्धः। यद्यपि विधायकत्वा-

भावेन वैयर्थ्यं कल्प्यम् । तथाऽपि "यदाग्नेयमष्टाकपालं निर्वपति सौम्यं चरुम्" इत्यष्टौ हवींषि चातुर्मास्ये विधाय पुनः "वैश्वदेवेन यजेत्" इति समुदायस्य वैश्वदेव–इति सङ्केतः कृतः । तेन "वसन्ते वैश्वदेवेन यजेत" इत्यत्र यागेन विश्वेदेवयागस्यैव वसन्ते प्राप्तौ तं बाधित्वा नवीनसङ्केतेन अष्टानां यागानां संपत्तिं कुर्वन् सार्थकं तद्वाक्यम् इत्युक्तं जैमिनितन्त्रे । तथा सार्थकं भवितुमर्हति ॥

न च—स्वेनैव क्षीरपदमत्यन्तरूढं प्रयुज्य रूढिशक्तिं परित्यक्तुं व्याख्याऽन्तरं कृतम्, एवं न कुत्रापि दृष्टम् इति—वाच्यम् । काशीखण्डे—

अरुन्धतीं ध्रुवं चैव तथा सप्तर्षिमण्डलम् ।
आसन्नमृत्युर्नो पश्येत्........॥

इति प्रथममुक्त्वा "अरुन्धती नासिकाग्रं" इत्यादिना स्वेनैव व्याख्यातम् । एवं शतशः सन्ति, परंतु प्रयोजनाभावात् अधिकं न लिखितम् ॥

अस्मिन् वचने चतुर्थचरणे "आसवं तण्डुलोद्भवम्" इत्यत्र तण्डुलोद्भवमिति पिष्टोद्भवस्यापि उपलक्षकं बृहद्वामकेश्वरतन्त्रे—

क्षीरमाज्यं मधु तथा ह्यासवं च महेश्वरि ।
वृक्षत्वक्पुष्पपिष्टोत्थं क्रमात् ज्ञेयं विचक्षणैः ॥

इत्यत्र पैष्टेऽपि आसवसङ्केतस्य कृतत्वात् । एतेन परमते दण्डप्रक्षेपात्मकोहेतुः क्षीरवृक्षपदादेः वैपरीत्येन प्रयोगापत्तेः इति, तत्साधकतया अनुवाद्यमनुक्त्वेति, लेखः, सः सर्वोऽपि पराहतः, अर्थविशेषतात्पर्यग्राहकत्वेन वर्णनेन अत्र उद्देश्यविधेयभावगन्धस्याप्यभावात् । अतएव नामधेयपादे "उद्भिदा यजेत" इत्यत्र नामधेयस्याविधेयतया न स्वतः धर्मे प्रामाण्यम्, किं तु ऋत्विजां प्रयोगविधिस्मारकतया तद्वारेति स्थितमाकरे ॥

अस्तु वा, परप्रीतये अशास्त्रीयः वृक्षसमुद्भूतमुद्दिश्य क्षीरसंज्ञा विधीयते इत्यङ्गीकारः । तथाऽपि परप्रक्षिप्तदण्डः अस्मिन् मते असह्यः ।

यद्यत् प्रथमनिर्दिष्टम् इति व्याप्तिसिद्धमूलोहि दण्डप्रक्षेपः, सतु असिद्धः, "दध्ना जुहोति", "ये यजमानास्तऋत्विजः", "वायव्यं श्वेतमालभेत भूतिकामः", इत्यादौ शतशोऽव्यभिचारात् । तर्ह्यनुवाद्यमनुक्त्वेति प्रामाणिकोक्तेः का गतिरिति चेत्, असति बाधके प्रथमनिर्दिष्टमुद्देश्यं प्रायेण भवतीति तस्याभिप्रायः । प्रकृते क्षीरमुद्दिश्य वृक्षसमुद्भूतत्वविधाने वैयर्थ्यमेव बाधकम् । इदं कथं न ज्ञातं परेण । एवम् "आसवं तण्डुलोद्भवम्" इत्यत्र तण्डुलोद्भवशब्दस्य ओदनमर्थं ब्रूवन् तत्साधकतया "आमं शूद्रस्य पक्वान्नम्" इति च लिखन् बालानामप्युपहास्योबभूव । एतेन लघुस्तवरत्नस्य

साधकत्वलेखोदूरीकृतः, क्षीरादीनां साङ्केतिकशब्दानां तत्र गृहीतत्वात्। यत्तु शुक्रशापविमोचनलिङ्गापेक्षया "ब्राह्मणोमदिरां दत्वा" इति प्रत्यक्षश्रुतेः प्राबल्यमिति कथनं, तदपि तुच्छम्। न हि "ब्राह्मणोमदिरां दत्वा ब्राह्मण्यादेव हीयते" इत्यत्र निषेधार्थे नञ्श्रुतिः विधिप्रत्ययरूपाऽस्ति। किं तु मदिरादाननिन्दया कल्प्योविधिः। इत्थं च तस्य प्रत्यक्षश्रुतित्वं ब्रुवन् विद्वत्समाजे किमुत्तरं वदेदिति न विद्मः। इत्थं च शुक्रशापविमोचनसहितस्य "सौत्रामण्यां कुलाचारे ब्राह्मणः प्रपिबेत् सुराम्" इति कुलाचारस्थप्रत्यक्षस्वलिखितवचनस्य गतिम् अकल्पयित्वा मुखेन ब्राह्मणेतरपरमिति प्रतिज्ञामात्रेण परेषां[1] मोहमुत्पादयन् तान्त्रिकबहिष्कृतोमन्तव्यः॥

इत्थं च वचनानामियं व्यवस्था—'द्रव्येण सात्विकेन' इत्यत्र 'क्षीरेण ब्राह्मणैस्तर्प्या' इत्यस्य लघुस्तवस्थमहाकालसंहितावचनस्य व्यवस्था दर्शिता। तथा च यच्च भैरवीतन्त्रवचनं 'क्षीरेण ब्राह्मणैस्तर्प्या' इति, यच्च बृहद्वामकेश्वरतन्त्रे

"क्रमेण ब्राह्मणाद्यैस्तु क्षीराज्यमाक्षिकासवैः[2]" इति,

यच्च लघुस्तववचनं, तेषां सामान्यरूपत्वात् यामलवचने "सत्ये क्रमाच्चतुर्वर्णैः क्षीराज्यमधुपिष्टजैः" इत्यत्रोपसंहारः। इत्थं च क्षीरादीनां भैरव्यादितन्त्रैः अविशेषेण सदा प्राप्तौ कालविशेषे कर्तृविशेषे क्षीरादिद्रव्यविशेषइति सङ्कोचसम्पादकं यामलवचनम्। यत्तु ज्ञानार्णवस्थं "द्रव्येण सात्त्विकेनैव ब्राह्मणः पूजयेच्छिवाम्" इति, "ऐक्षवक्षौद्रजातायाः" सात्त्विकद्रव्यस्य क्षीरपदवाच्यतया यामलवचनेन सङ्कोचासम्भवात् युगचतुष्टये प्राप्नुवद्ब्राह्मणकर्तृकप्रयोगे विकल्पः प्राप्नोति। एवं "राजसी नृपवैश्ययोः" इत्यनेन क्षत्रियवैश्यकर्तृकप्रयोगे

मधूककुसुमद्राक्षातालवृक्षादिसम्भवा। माध्वीति कीर्तिता तज्ज्ञैः राजसी[3]॥

इति विवरणेन उक्तद्रव्यप्रकृतिकद्रव्यस्य सदा प्राप्तौ उक्तानाममीषां सङ्घाते क्षीरादिसंज्ञाया अप्रवृत्तेः सम्भवत्क्षत्रियस्य वल्कलप्रकृतिकद्रव्यस्य कृतयुगे प्राप्तौ एतद्[?]द्राक्षादिप्रकृतिकस्यापि प्राप्तौ विकल्पः। शूद्रस्य वचनद्वये एकरूपत्वात् कृते न विकल्पः। एवं त्रेताऽऽदिषु यथायथं स्वयमूह्यम्। कलियुगे ब्राह्मणस्य ज्ञानार्णवत्रिपुरार्णववचनाभ्यां ऐक्षवमधुप्रकृतिकं प्राप्तं "पूजनीया कलौ सर्ववर्णैः केवलमासवैः" इति। एवं सति—

कृते तु शूद्रैः संपूज्या प्रत्यक्षैरासवैः प्रिये।
त्रेतायां वैश्यशूद्राभ्यां नृपाद्यैः द्वापरे युगे।
कलौ युगे महादेवि ब्राह्मणाद्यैः प्रपूजिता॥

१. सर्वेषां—श्री.
२. मधुपिष्टजैः—श्री.
३. राजसी सा भवेच्छिवे–इति चतुर्थःपादोऽत्रावधेयः–

इति रहस्यार्णववचनं यद्युपतिष्ठते तदा कृतेतरवचनैः द्रव्येतरविशेषः सर्ववर्णेषु प्राप्तः, रहस्यार्णववचनेन शूद्रातिरिक्ते परिसङ्ख्याऽपि प्राप्ता, तथासति कृते त्रैवर्णिके विकल्पः प्रत्यक्षस्य द्रव्यस्य। यद्वा—रहस्यार्णवेऽपि कृतयुगसम्बन्धिशूद्रकर्तृकप्रयोगे प्रत्यक्षासवं तण्डुलप्रकृतिकं विधीयते। तेन तन्त्रान्तरेण शूद्रस्य आसवप्राप्तौ वैयर्थ्यभिया परिसङ्ख्यात्वकल्पनम् अश्रद्धेयम्। तथासति ब्राह्मणादिकर्तृकप्रयोगे द्रव्यस्य आकाङ्क्षितत्वात् अन्यस्मात् तन्त्रात् क्षीरादिकं ग्राह्यम्। न विकल्पः। एवमेव त्रेतायां रहस्यार्णववचनं शूद्रवैश्ययोरासवं विदधाति। तथा सति वैश्यस्य अनेन आसवं प्राप्तम्। यामलवचनेन घृतं प्राप्तम्। अत्र विकल्पः। एवं द्वापरे वैश्यक्षत्रिययोः आसवमधुविकल्पः उक्तवचनद्वयेन। कलियुगे तु उभयोः एकरूपतया विरोधाभावात् अविचारएव। युक्तश्चायमेव पक्षः, न परिसङ्ख्यापक्षः। इत्थं च "यत्रावश्यं विनिर्दिष्टम्" इति कुलचूडामणिवचनं तस्मिन् 'मुख्यालाभे' इति पूरणीयम्। मुख्यालाभे ब्राह्मणेन तत्स्थाने ताम्रपात्रे मधु योजयेत् इति तदर्थः। एवंसति "ताम्रे गव्यं तथा मधु। राजन्यवैश्ययोरेवं न द्विजस्य कदाचन" इति महाकालसंहितावचनेन विरुध्यते। तथा तुल्यबलत्वाद्विकल्पेन परिहार्यः परमतेऽपि॥

यदपि [1]हंसमाहेश्वरतन्त्रवचनं "ब्राह्मणोमदिरां दत्वा ब्राह्मण्यादेव हीयते" इति तत् यदि तत्तन्त्रे क्षत्रियादीनां कुलद्रव्यविधिसमीपे स्यात् तर्हि तच्छेषोऽर्थवादः "अपशवोवा अन्ये गोअश्वेभ्यः" इतिवत्। यदि तत्समीपे न स्यात् तर्हि अजितेन्द्रियब्राह्मणपरम्, तस्य द्रव्यदाननिषेधस्याग्रे वक्ष्यमाणत्वात्। यच्च कुलार्णववचनम् "ब्राह्मणैस्तु सदाऽपेयम्" इति तत्र अकारप्रश्लेषं कृत्वा योऽयं ब्राह्मणानां निषेधः कृतः सपुमर्थपरइति पराभिप्रायः। क्षत्रियस्य सङ्ग्रामकाले, विकलस्य सङ्ग्रामासम्भवात् इत्यादिनिषेधहेतुलेखात्। सचास्माकमिष्टएव।

क्रत्वर्थातिरिक्तद्रव्यस्वीकारोब्राह्मणस्य नास्तीति वयमपि ब्रूमः। यश्च हरिनाथोक्तः सौत्रामण्यां कलौ सुराग्रहनिषेधः सोऽप्यस्माकमनुमतः। न तावता कुलाचारेऽपि निषेधः सम्भवति। कलियुगसम्बन्धिसौत्रामणिग्रहत्वं सुरानिषेधोद्देश्यताऽवच्छेदकं, तदनाक्रान्तत्वात् कुलाचारस्य कैमुतिकन्यायप्रवेशे अतिप्रसङ्गात्। तस्मात् परोक्तानां ब्राह्मणविषये बाधकानां गन्धस्याप्यभावेन साधकसहस्रस्य दर्शितत्वेन तन्त्रप्रामाण्यमङ्गीकुर्वतः ब्राह्मणादिकर्तृकपूजायां प्रथमादरः शास्त्रप्राप्तः। सतु ब्रह्मणाऽपि त्यक्तुमशक्यः। इत्थं च—

विना द्रव्याधिवासेन न स्मरेन्न जपेत् प्रिये।
ये स्मरन्ति महादेवि तेषां दुःखं पदे पदे॥
नासवेन विना मन्त्रं न मन्त्रेण विनाऽऽसवम्॥

---

१. हंसपारमेश्वर—ब१.

इति कुलार्णवे,

विनाऽलिपिशिताभ्यां च पूजनं निष्फलं भवेत् ।

इति समयाचारे,

विना हेतुकमास्वाद्य क्षोभयुक्तोमहेश्वरि ।
न पूजां न जपं कुर्यान्न ध्यानं न च चिन्तनम् ॥

इति भावचूडामणौ,

विनाऽलिपिशिताभ्यां च यः कुर्यात् पूजनं मम ।
दुःखसन्धाकरोभूत्वा योगिनीनां पशुर्भवेत् ॥

इति कालिकापुराणे

यः कुर्यादादिमद्रव्यविहीनं तव पूजनम् ।
तव क्रोधेन दग्धः सन् भस्मीभवति नान्यथा ॥

इति समयाङ्कमातृकायां स्थितम्—ईदृशानि वचनान्यनुगृहीतानि भवन्ति । एवं च ब्राह्मणेतरपरमित्ययन्तमशुद्धमिति अकृत्रिमया स्वमत्या विचार्यमाणे प्रतिभाति । इतोऽधिकं निर्मत्सराः पण्डिताः विचारयन्तु । " इमां विज्ञाय सुधिया मदन्ति " इति त्रिपुरोपनिषत्सप्तममन्त्रभाष्येऽप्येवमेव स्थितम् ॥

यत्तु सौभाग्यानन्दसन्दोहे अस्मद्व्यवस्थापितार्थमेव प्रतिज्ञाय वैदिकमन्त्रैरभिमन्त्रणस्य वीहितत्वात् शूद्रपूजापरत्वे तत्र तस्यानवकाशाद्विधेरनवकाशापत्तिहेतुना ब्राह्मणाधिकारः साधितः, सतु अतिशिथिलः । " वर्षासु रथकारआदधीत " इत्यत्र रूढिशक्त्या योगं बाधित्वा सङ्करजातेराधानाधिकारसिद्धौ तदनन्तरं तदुपयुक्तवेदाध्ययनमपि कल्प्यतइति षाष्ठन्यायेन शूद्रस्य युक्त्या अधिकारसिद्धौ वेदमन्त्रपाठे यावदुपयुक्ते अधिकारस्यानिवार्यत्वेन अनेन हेतुना स्वेप्सितासिद्धेः ॥

एतावपर्यन्तं ब्राह्मणे अधिकारव्यवस्था कृता । व्यवस्थितोऽप्ययमधिकारोन सर्वस्य, किं जितेन्द्रियस्य कामादिरहितस्यैव । अतएव परमानन्दतन्त्रे—

अयं तु परमः कौलमार्गः सम्यङ्महेश्वरि ।
असिधाराव्रतसमोमनोनिग्रहहेतुकः ॥
स्थिरचित्तस्य सुलभः सफलस्तूर्णसिद्धिदः ।
अन्यस्य विफलोदुःखहेतुः स्यात् परमेश्वरि ॥ इति ॥

---

१. संपादको—श्री.

त्रिपुरार्णवेऽपि—

अयं सर्वोत्तमोधर्मः शिवोक्तः सुखसिद्धिदः ।
जितेन्द्रियस्य सुलभोनान्यस्यानन्तजन्मभिः ॥
यदूर्ध्वरेतसां सर्वत्यागिनामनिकेतिनाम् ।
क्षणेन स्मृतमात्रेण मोहमुत्पादयत्यलम् ॥
तदेवात्र हि संसिद्धौ कारणं सर्वमीरितम् ।
इतोमद्यमितोमांसं भक्ष्यमुच्चावचं तथा ॥
तरुण्यश्चारुवेषाढ्यामदघुर्णितलोचनाः ।
तत्र संयतचित्तत्वं सर्वथा ह्यतिदुष्करम् ॥
भक्तिश्रद्धाविहीनस्य कथं स्यादेतदीश्वरि ॥ इति ॥

भावचूडामणौ—

तन्त्राणामतिगूढत्वात्तद्भावोऽप्यतिगोपितः ।
ब्राह्मणोवेदशास्त्रार्थतत्त्वज्ञोबुद्धिमान् वशी ॥
गूढतन्त्रार्थभावस्य निर्मन्थ्योद्धरणक्षमः ।
कौलमार्गेऽधिकारी स्यादितरोदुःखभाक् भवेत् ॥ इति ॥

कुलार्णवे—

अहोभुक्तं तु यन्मद्यं मोहयेत् त्रिदशानपि ।
तन्मैरेयं शिवं पीत्वा योन विक्रियते नरः ॥
जपन् शिवपरोभूत्वा समुक्तः सच कौलिकः ॥ इति ॥

भगवता परशुरामेणापि कौलाचारे मुख्यधर्मत्वेन "[1]कामक्रोधलोभमोहमदमात्सर्याविहितहिंसास्तेयलोकविरुद्धलोकविद्विष्टवर्जनम्" इति प्रतिपादितम्। तेन यथा आज्यावेक्षणाद्यङ्गानुसारेण चक्षुष्मतएव दर्शपूर्णमासयोरधिकारः नान्धानां, तथा कामक्रोधादिवर्जनाद्यङ्गानुसारेण जितेन्द्रियस्यैव अधिकारोनान्यस्येति सूत्रकृदभिप्रायः । एवमन्येष्वपि तन्त्रेषु बहूनि वचनान्युपलभ्यन्ते । तानि अनतिप्रयोजनत्वात् ग्रन्थविस्तरभयाच्च न लिखितानि ॥

सम्प्रति इदानींतनाः अजितेन्द्रियाः चपलजिह्वाः शिश्नोदरपरायणाः रागान्धतया आरोपितकौलिकताकाः केवलद्रव्यमात्रलोलुपाः लिखितवचनान्यनादृत्य स्वाधिकारमविचार्यैव स्वाभिप्रायसाधनानि "पीत्वा पीत्वा पुनः पीत्वा" इति, "आगलान्तं पिबेत् द्रव्यम्" इत्यादिकुलार्णववचनान्येव पुरस्कृत्य तदभिप्रायमजानन्तोजानन्तोवा धूर्ताः सन्तः यथेच्छाऽऽचारं

१. इदं श्रीभगवदुक्तं सूत्रं पाश्चात्यैकखण्डे ३३ पत्रे–१९–संख्याकम् ।

कुर्वन्ति । इहामुत्र न कुत्रापि शर्म लभन्ते । प्रत्युत महापातकजनितयातनां श्रीधर्मराजशासनात् लभन्तएव । नात्र सन्देहः । तादृशाः पतिताः, तन्त्रगोष्ठीषु न स्मर्तव्याः । अतएवैतादृशकौलिकानामुपहासोऽपि विस्तरेण कृतः प्रबोधचन्द्रोदये । तस्मात् जितेन्द्रियाणां भक्तिश्रद्धावतां विदुषाम् आरम्भे प्रतिपादितभक्तिभूमिकामारूढानामेव अत्राधिकारः, अन्येषां पतनायैव इत्यलं विस्तरेण । उक्ताधिकारिभिन्नानां विष्णवाद्युपासनं केवलवैदिकमार्गेणेति तत्त्वम् ॥

**दक्षिणवामाचारविवेकः**

अजितेन्द्रियैः कुलमार्गं प्रविश्य केवलोदकादिना पूजा कार्या । अयं दक्षिणोमार्गः । जितेन्द्रियैः प्रोक्तद्रव्येण सपर्याऽनुष्ठेया । अयं वामाचारइति कश्चित् । तत्तुच्छम्, वामाचारपदार्थस्यैव तेनाज्ञातत्वात् । तथा च त्रिकूटारहस्ये—

वामाचारं प्रवक्ष्यामि श्रीविद्यासाधनं प्रिये ।
यं विधाय कलौ शीघ्रं मान्त्रिकः सिद्धिभाक् भवेत् ॥
माला नृदन्तसंभूता पात्रं मानुषमुण्डकम् ।
आसनं सिंहचर्मादि कङ्कणं स्त्रीकचोद्भवम् ॥

इत्याद्युपक्रम्य विस्तरेण वर्णितम् । तन्मध्ये मुख्यद्रव्यनामापि नास्ति । तद्विस्तरस्तु " सव्यापसव्यमार्गस्था " इति ललितानामव्याख्यानावसरे अस्मत्परमेष्ठिगुरुभिः विस्तरेण प्रपञ्चितः । विशेषजिज्ञासुभिः ततोऽवगन्तव्यम् । तथा कालिकापुराणादपि । ग्रन्थविस्तरभयान्नेह तनोमि ॥

**अजितेन्द्रियस्य कौलमार्गे अनधिकारः**

यदपि परमानन्दतन्त्रटिप्पण्यां अजितेन्द्रियाणां गन्धोदकेन पूजनमुक्तम्; तदसत्, " मुख्यालभे चानुकल्पोनान्यथा तु कदाचन " इति परमानन्दतन्त्रे विंशोल्लासवचनविरोधात्, मुख्येऽनधिकृतस्य प्रतिनिधावधिकारस्य शशविषाणतुल्यत्वात् । तस्मादजितेन्द्रियाणाम् आपाततः उपासनेच्छायाम्, अन्यमार्गेण अन्यदेवतोपासनं कृत्वा तेन परिपक्वान्तःकरणं दृढं विदित्वा पश्चात् कौलमाश्रयेत् । तदुक्तं कुलसारे—

अन्यासां देवतानां तु भूयोभूयोनिषेवणात् ।
परिपक्वमनाः कौले लब्धप्रामाण्यकोनरः ।
बाह्येन्द्रियाणि संयम्य प्रविशेदत्र नेतरः ॥ इति ॥

ब्रह्माण्डपुराणेऽपि—

यस्यान्यदेवतानामकीर्तनं जन्मकोटीषु ।
तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने ।

चरमे जन्मनि यथा श्रीविद्योपासकोभवेत् ।
नामसाहस्रपाठश्च तथा चरमजन्मनि ॥ इति ॥

वामलेऽपि--

श्रुतिस्मृतिप्रोक्तकर्मानुष्ठानाद्बहुजन्मसु ।
शोधितं च मनोज्ञात्वा श्रीविद्योपासकोभवेत् ॥ इति ॥

फेट्कारीतन्त्रेऽपि--

सर्वथा गोपनीयेयं विद्या स्यादजितेन्द्रिये ।
तेन वीर्यवती विद्या न विद्या स्यात् प्रकाशतः ॥
कुलपुष्पं कुलद्रव्यं कुलपूजां कुलं जपम् ।
नेदृशानां प्रवक्तव्यं यदीच्छेत् [1]प्रियमात्मनः ॥ इति ॥

अजितेन्द्रिये प्रवचनमपि निषिध्यते । किमु वक्तव्यं स्वीकारे । तस्मादजितेन्द्रियस्य कौलमार्गे नास्त्यधिकारइत्यलमतिविस्तरेण ॥ ३१ ॥

**एतदर्घ्यशोधनमिति शिवम् ॥ ३१ ॥**

**॥ इति...कल्पसूत्रे श्रीक्रमोनाम तृतीयः खण्डः ॥**

एतत् सामान्यार्घ्यशोधनोत्तरं " तज्जलेन " इति मण्डलादिकरणमुक्तम्, तदारभ्य ' कुण्डालिन्यां जुहुयात् ' इत्यन्तं कर्म अर्घ्यशोधनम् अर्घ्यसंस्कारः । यद्यपि पूर्वोक्तसूत्रे कर्मकलापविधानादेव अर्घ्यसंस्कारइति ज्ञातुं शक्यते; तथाऽपि शापविमोचनादिकतिपयसंस्कारः[2] पात्रान्तराणि च भ्रान्त्या केचन स्वीकुर्युः, तन्माभूत इत्येतदर्थं परशुरामः परमकारुणिकः भ्रान्तिनिरासाय इदं सूत्रं प्रणिनाय । एतत् उक्तं यत् तावदेव शोधनं नान्यदित्यर्थः । शिव मित्यनेन अर्घ्यप्रकरणसमाप्तिः सूचिता ॥

विशेषार्घ्यशोधने निबन्धे मण्डलपूजायां विद्यया मध्यपूजनं सूत्रे उक्तं तत्त्यक्तम् । अनुक्तं तुरीयस्वरलेखनं ह्रीं महालक्ष्मीश्वरीति मन्त्रे सुधादेवीपूजनादि गालिन्या पुष्पं दत्वेत्यन्तम् अनुक्तं संगृहीतम् । अत्र प्रमाणाभावात् केवलतद्बुद्ध्या रचितमसङ्ग्राह्यम् ॥ ३२ ॥

इति...कल्पसूत्रवृत्तौ श्रीक्रमोनाम तृतीयः खण्डः ॥

---

१. सिद्धि—श्री.
२. संस्कारान्–इतिपाठ उचितः प्रतिभाति–

**॥ सूत्रस्य पुनरावृत्तौ शोध्यं सूचयितव्यकम् ॥**
**॥ परिशिष्टस्थलं चैव पूर्णमाद्याप्रासादतः ॥ ( इति तृतीयः खण्डः— ) श्रीः— ॥**

## चतुर्थः खण्डः—ललिताक्रमः

### श्रीचक्रे परचित्याावाहनम्

हृदि स्थितायादेवतायाः श्रीचक्रे आवाहनप्रकारं दर्शयितुमुपक्रमते—

**अथ हृच्चक्रस्थितामन्तस्सुषुम्णापद्माटवीनिर्भेदनकुशलां निरस्तमोहतिमिरां शिवदीपदीप्तिमाद्यां संविदं वहन्नासापुटेन निर्गमय्य लीलाऽऽकलितवपुषं तां [1]त्रिखण्डमुद्राशिखण्डे कुसुमाञ्जलौ हस्ते समानीय ॥ १ ॥**

अथेति क्रमविशेषद्योतकम्, "अथ जिह्वायाअथ वक्षसः" इतिवत्। यद्वा—पूर्वप्रकरणविच्छेदद्योतकम्। हृच्चक्रम् अनाहतं, तदेव दह्रमित्यपि व्यवह्रियते। तत्र स्थितां। शास्त्रे देवतानिवासस्थानं तदेव प्रसिद्धम्। तथा च श्रुतिः—"तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति। स्कान्दपुराणेऽपि—"हृत्पुण्डरीकान्तरसन्निविष्टम्" इति। अतोदेवतायानिवासस्थानं हृच्चक्रम्। तत्र स्थितायाबाह्योपचारपूजनं न सम्भवति। अतः तत्र स्थानाद्बहिरानयनार्थं सार्वकालिकं स्थानं ज्ञापयितुमिदं विशेषणं ज्ञेयम्। सुषुम्णाऽपि मूलाधारादिब्रह्मरन्ध्रस्थसरोरुहान्तानां कमलानां गुम्फनाधारभूतदण्डाकृतिरेकोनाडीविशेषः। तदुक्तं विष्णुपुराणे—

मूलादिदेहचक्राणामाधाराऽसौ प्रकीर्तिता।
या सुषुम्णेति सर्वत्र गीयते परमर्षिभिः॥

इति। तस्यां यानि पद्मानि विशुद्ध्यादीनि तेषां अटवी दुर्गमं वर्त्म तस्य निर्भेदनं गमनागमनानुकूलवर्त्मसंपादनं तद्विषये कुशलाम्। अनेन विशेषणेन हृदयात् श्रीचक्रादौ आगमने पूजाऽनन्तरं पुनर्गमने प्रयासाभावः सूचितः। निरस्तेति—निरस्तः दूरीकृतः मोहोऽज्ञानं तदेव तिमिरं यया ताम्। एतद्विशेषणार्थं दृढीकर्तुं विशेषणान्तरमाह—शिवेति। शिवात्मकोयोदीपः तस्य दीप्तिं प्रकाशरूपाम्। एतेन प्रकाशरूपत्वकथनेन पूर्वविशेषणेन प्रतिपादितं अज्ञानतिमिरनाशनं सूपपादमिति ध्वनितम्। किंच—यथा दीपप्रभयोरविनाभावसम्बन्धः एवं शिवशक्त्योरप्यविनाभावः सूचितः। अयमेवार्थः स्पष्टमुक्तोब्रह्माण्डपुराणे—

त्रिकोणरूपिणी शक्तिः बिन्दुरूपः परः शिवः।
अविनाभावसम्बन्धः तस्माद्बिन्दुत्रिकोणयोः॥ इति॥

१. एतद्त्रिखण्डामुद्रोद्धारः द्वि. प. शि. १५ विषये द्रष्टव्यः—

श्रीदेवीभागवतेऽपि—

यस्मिन् धर्मिणि योधर्मोऽविनाभूतश्च तिष्ठति ।
सधर्मी शिवरूपः स्याद्धर्मश्शक्तिस्वरूपधृक् ॥ इति ॥

अनयोर्वस्तुनोरौपाधिकोभेदोन वास्तवइति तत्त्वनिरूपणे प्रपञ्चित्तं [1]प्रागेव । आद्यां संविदं अपरिच्छिन्नसंविदं वहन् नासापुटेन, येन नासापुटेन अप्रयत्नेन श्वासोनिर्गच्छति तेन मार्गेण निर्गमय्य, यथा निर्गमनं भवेत् तदनुकूलव्यापारं कुर्यात् । अत्र तादृशोव्यापारः हृदयस्थानात् उक्तमार्गेण निर्गमनभावनमेव । तदनन्तरव्यापारं विधत्ते—लीलेति । लीलया स्वेच्छामात्रेण आकलितं स्वीकृतं वपुः ध्यानश्लोकोक्तं यया । एतेन इतरशरीरवत् गर्भवासेन विना भक्तानुग्रहाय स्वीकृतमनोहरवपुष्ट्वं सूचितम् । उक्तं च गीतायाम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ इति[2] ॥

मार्कण्डेयपुराणेऽपि—

एवं यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदाऽवतीर्याहं करिष्याम्यरिसंक्षयम् ॥ इति[3] ॥

ताम्—अङ्गीकृतवपुषं [4]त्रिखण्डमुद्रा त्रिखण्डा त्रीन् जन्ममृत्युजराः, यद्वा, सत्वरजस्तमोगुणान्, खण्डयतीति त्रिखण्डा—केवलमोक्षप्रदेत्यर्थः । यद्वा—त्रीणि खण्डानि कलाः इच्छाज्ञान-क्रियाऽऽत्मिकाः तत्स्वरूपा त्रिखण्डा । तदुक्तं योगिनीतन्त्रे—

मुद्राऽऽख्या सा यदा संविदम्बिका त्रिकलामयी ।
त्रिखण्डारूपमापन्ना सदा सन्निधिकारिणी ।
सर्वस्य चक्रराजस्य व्यापिका परिकीर्तिता ॥ इति ॥

मुद्राशब्दार्थश्च विश्वस्य मोदनात् द्रावणाच्च मुद्रा । तदुक्तं योगिनीतन्त्रे—

चिदात्मभित्तौ विश्वस्य प्रकाशामर्शने यदा ।
करोति स्वेच्छया पूर्णविचिकीर्षासमन्विता ॥
क्रियाशक्तिस्तु विश्वस्य मोदनाद् द्रावणात्तथा ।
मुद्रेति कथिता देवी.........॥ इति ॥

---

१. प्रागेव नाम-अनुगते ३ खण्डे-९२ पत्रे-श्रीक्रमे-९ सूत्रभाष्ये-इत्यर्थः—
२. श्री भ. गी. अ. ४-७ श्लोकः—
३. श्री सप्तशती-१२ अ. अन्तिमः श्लोकः—
४. इयं त्रिखण्डा मुद्रा, द्वि.प.शि. १५ विषये दृश्या ।

अस्यार्थः——यदा चिच्छक्तिः स्वात्माभिन्नायां भित्तौ स्वेच्छया ईक्षणानन्तरं विकारान् पूर्णा-निच्छन्ती प्रकाशामर्शने करोति । अयंभावः—जगतः षड्भावविकाराः अस्ति जायते वर्धते विपरिणमते अपक्षीयते नश्यति इति । तेषु द्वितीयोविकारः प्रकाशः, स्फुटीभावइति तल्लक्षणात् । तृतीयोविकारः आमर्शनम्, इदंतया हृदयङ्गमीभावइति तल्लक्षणात् । इत्थं च त्रिपुरसुन्दर्याः स्वान्तस्स्थितसृष्टिसत्तापर्यालोचनोत्तरं विश्वस्य द्वितीयादिविकारविषयिणी इच्छो-त्पद्यते । सेयं विचिकीर्षा । ततोविश्वस्य उत्पत्त्यभिवृद्धिक्रमेण करोति । ते एवैते पूर्वोक्त-प्रकाशविमर्शने ईदृशेच्छाकृतिविशिष्टचित् क्रियाशक्तिरित्युच्यते । इयं क्रियाशक्तिः त्रिपुर-सुन्दर्या क्रियमाणोत्पत्त्यभिवृद्धी अनुमोदते द्रावयति चेति मुद्रा सा । अनुमोदनं नाम स्वभिन्न-कर्तृकक्रियानुकूल्यम् । द्रावणं नाम घनस्य सङ्कुचितस्य प्रशिथिलावयवताऽऽपादनात्मकः प्रसरः । ईदृशक्रियाशक्तिरेव स्ववृत्तिमुद्रात्वसामानाधिकरण्येन ईक्षणादेर्मेलनेन त्रिकलामयी त्रिखण्डा भवति इति परमरहस्यार्थः । अतः सर्वश्रेष्ठेयं व्यापिका मुद्रेति तस्याआवाहने विनियोगः कृतः । एतादृशी या मुद्रा तस्याअदृष्टस्वरूपं प्रतिपादितम् । दृष्टस्वरूपं तु अङ्गुलीप्रग्रथनरूपं नानाविधं तन्त्रभेदेन दृश्यते । अस्मिन् न दृश्यते । अतोगुरुसम्प्रदाया-वगतं तन्त्रार्थं चैकीकृत्याग्रे स्पष्टीक्रीयते । ईदृशं यत् त्रिखण्डात्मकं बाह्यस्वरूपं तेन शिखण्डितः ग्रथितः कुसुमयुक्तः अञ्जलिः यस्मिन् तस्मिन् हस्ते—समानीय गृहीत्वा ॥ १ ॥

**मायालक्ष्मीपराउच्चार्य देवीनाम चामृतचैतन्यमूर्तिं कल्पयामि नमः—इति कल्पयित्वा ॥ २ ॥**

माया ह्रीं, श्रीं—इति लक्ष्मीशब्दार्थः, परा सौः । एतद्विषये प्रमाणानि पूर्वमेव दर्शितानि । एवं बीजत्रयमुच्चार्य देवीनाम शक्तिचक्रैकनायिकायाः ललितायाः इति षष्ठयन्तं, योग्यत्वात् । ततोनमोऽन्तमविकृतं पठेत् । एवं च आदौ साधारणपरिभाषाप्राप्ता त्रितारी, ऐं ह्रीं श्रीं ह्रीं श्रीं सौः शक्तिचक्रैकनायिकायाः ललितायाः अमृतचैतन्यमूर्तिं कल्पयामि नमः इति त्रयस्त्रिंशद्वर्णोमन्त्रः । अनेन परदेवतायामूर्तिं कल्पयित्वा भावयित्वा ॥

अत्र पूर्वसूत्रे लीलाऽऽकलितवपुषः हस्ते आगतायाः पुनर्मूर्तिकल्पने वैय्यर्थ्यादतः प्रबलेनार्थक्रमेण पाठक्रमबाधः । तथाचायं क्रमः——प्रथमं केवलचितोमूर्तिकल्पनमनेन मन्त्रेण—ततोमूर्तेः कल्पितायाः नासापुटमार्गेण निर्गमनं—ततोहस्ते कुसुमगर्भेऽञ्जलौ समानय-नमितिविवेकः । २ ॥

**हसरयुजं वाचं हसयुक्तां कलरीं हसरचतुर्दशषोडशानप्युच्चार्य,**
**महापद्मवनान्तःस्थे कारणानन्दविग्रहे ।**
**सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥**
**इति बैन्दवचक्रे परचितिमावाह्य ॥ ३ ॥**

पूर्वं न्यासप्रकरणे उक्तेन समुदायग्रहणइति न्यायेन हसेत्यादिषु केवलव्यञ्जनमात्रग्रहण, सम्प्रदायात्। हश्च सश्च रश्च तैर्युतं वाचं ह्स्रैं—इति। हश्च सश्च आभ्यां युक्तोऽयं ककारलकाररेफेकारबिन्दुसमुदायः ह्स्क्ल्रीं—इति। तथा हश्च सश्च रश्च चतुर्दश औकारः सः च षोडशोविसर्गः सः च हसरचतुर्दशषोडशाः, ह्स्रौः—इति एतानुच्चार्य, परमेश्वरीत्यन्तं यथाश्रुतं पठित्वा, बिन्दुचक्रे परचितिमावाहयेत्। मन्त्रस्वरूपं तु प्रथमं त्रितारी ह्स्रैं ह्स्क्ल्रीं ह्स्रौः——

महापद्मवनान्तःस्थे कारणानन्दविग्रहे।
सर्वभूतहिते मातरेह्येहि परमेश्वरि॥

इत्यष्टत्रिंशद्वर्णोमन्त्रः। महापद्मवनस्य योऽन्तः प्रदेशः तत्रस्थे। महापद्मस्वरूपमुक्तं ब्रह्माण्डपुराणे——

पद्माटवीस्थलं वक्ष्ये सावधानोमुने शृणु।
समे सुरत्नखचिते तत्र षड्योजनान्तरे।
परितः स्थलपद्मानि महाकाण्डानि सन्ति वै॥

सेतुबन्धे तु——"महापद्मवनं सहस्रदलकमलसमुदायः" इत्युक्तम्। कारणानन्दः अपरिच्छिन्नानन्दः सएव विग्रहोयस्याः। यद्वा——कारणं प्रथमं, तस्मिन् जातः कारणः "तत्र जातः" इत्यण्। सचासावानन्दश्चेति। शेषं पूर्ववत्। शेषं स्पष्टम्।

यद्वा——चैतन्यमहसोबहिर्निस्सारणं कृत्वा मन्त्रेण परिच्छिन्नां मूर्तिं कल्पयित्वा हस्ते समानीय मन्त्रेण पीठनिवेशनान्तम् आवाहनपदार्थः, अवदानादिप्रदानान्तस्येव बह्वीनां क्रियाणाम् एकपदार्थत्वे बाधकाभावात्। तेन यत्र दीक्षाऽऽदौ नानादेवतानां तन्त्रेण पूजनं तत्र समुदायस्यैकपदार्थत्वात् काण्डानुसमयः तावतां सिद्धः। एतादृशावाहनैकदेशपीठनिवेशने साधनीभूतोऽयं मन्त्रः॥

निबन्धकारस्तु ज्ञानार्णवोक्तं अन्तर्यागक्रमं आवाहनादिमुद्राश्च दर्शयामास। तदनादरणीयं, प्रमाणाभावात्॥ ३॥

### चतुष्षष्ठ्युपचारविधिः

**चतुष्षष्ट्युपचारान् कुर्यात्। सर्वे उपचारमन्त्राः त्रितारीपूर्वाः कल्पयामि नमः—इत्यन्ताः कर्तव्याः॥ ४॥**

चतुष्षष्टीत्यनेन एतत्तन्त्रानुयायिनां तन्त्रान्तरोक्तषोडशाद्यन्यतमपूजाव्यावृत्तिः॥ ननु किमयं परिसङ्ख्याविधिः;—उत नियमविधिः उत अपूर्वविधिः;—नाद्यः, केनापि प्रमाणेन नित्यमप्राप्तेः। पक्षेऽपि प्राप्त्यभावेन न द्वितीयः। तर्हि तृतीयः स्यादिति चेदिष्टापत्तिः। तथाऽपि सर्वांशे नापूर्वविधिः, उपचारांशे अपूर्वः चतुष्षष्ट्यंशे नियमः। उपचारविधौ उपचाराणामनन्तत्वेन तत्र नानासङ्ख्याप्राप्तौ चतुष्षष्ठिसङ्ख्यायाअपि पक्षे प्राप्तत्वात्। न च—एव

मेकस्मिन्नियमापूर्वस्वीकारे विधिसाङ्कर्यम् इति वाच्यम्; इष्टापत्तेः, यदाग्नेयोऽष्टाकपालइति वाक्ये अग्निपुरोडाशयोः पक्षे प्राप्तौ तदंशे नियमः, यागांशे अपूर्वइति दृष्टत्वात्। न च—चतुष्षष्ठ्युपचारान् विधाय इत्यग्रिमसूत्रेण[1] परिसङ्ख्याविधिः अनेनोपचारविधिः—इति वाच्यम्; तथा सति अस्मिन् सूत्रे चतुष्षष्ठिपदवैयर्थ्यात्। न च—एवं सति चतुष्षष्ठीत्यग्रिमवाक्यं व्यर्थम् इति शङ्कनीयम्, चतुष्षष्ठ्युपचारानन्द्य क्रमविशेषविधानात्। सर्वथा नोपचारस्य सङ्ख्यायाविधायकं तत्। कुर्यादिति स्पष्टविध्यन्तम् इदमेव सङ्ख्याविशिष्टोपचारविधायकम्॥

यद्वा—पाठेनैव क्रमसिद्धौ अग्रिमेण चतुष्षष्ठ्युपचारान् विधाय—इत्यनेन क्रमविधानासम्भवात् विहितानामेव 'इति चतुष्षष्ठ्युपचारान् विधाय' इत्यनुवादकम् उपसंहाररूपम्। अस्य फलं तु तन्त्रान्तरे चतुष्षष्ठ्युपचारानन्तर्भूताः उक्तादन्ये केचन सन्ति, तैरर्चनं माभूत्, किंतु प्रतिनिधिं कल्पयित्वा मन्त्रे श्रुतद्रव्यनाम्नैवार्पणमेतदर्थम्। इत्थं चोक्तोपचारादधिकैः सम्भवे सति पूजनं कर्तव्यम्। अतएव त्रिपुरार्णवे—

उक्तोपचारादधिकैः सम्भवे सति पूजयेत्॥

इति वचनं उक्तन्यायगर्भमेव। नियमविधेरयोगव्यवच्छेदे तात्पर्यम्, नत्वन्ययोगव्यवच्छेदे। तेन चतुष्षष्ठ्युपचारमध्ये एकस्याप्ययोगोमा भवत्वित्यत्रैव तात्पर्यम्, न त्वधिकव्यवच्छेदे। तस्मात् इतोऽधिकानां शिबिकागजाश्वनृत्यादीनां यावतां सम्भवः तावत्कल्पनं सूत्राविरुद्धं मन्तव्यम्॥

अत्र उपचारपदार्थश्च कल्प्यमानद्रव्यजनितः सुखविशेषः तं कुर्यात् उत्पादयेत् इत्यर्थः॥

न च नित्यतृप्तायां देवतायां कल्प्यमानद्रव्येण कीदृशी सुखोत्पत्तिः—इति वाच्यम्। नित्यतृप्ते सुखोत्पत्तिः न भवतीति सत्यं, तथाऽपि परिच्छिन्नशरीरकल्पनवत्तच्छरीरे सुखकल्पनेन स्वात्मन्यदृष्टोत्पत्तिरेव, न तु कल्पितेन परदेवतायाः सुखोत्पत्तिः। अतएवोक्तं शिवमहिम्ने[2]—"न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति" इति। अतएवोपचारमन्त्रे कल्पयामीत्येव क्रियापदं योजितम्। शेषं सुस्पष्टम्॥ ४॥

**त्रितारीमुचार्य पाद्यं कल्पयामि नमः इति क्रमेण आभरणावरोपणं सुगन्धितैलाभ्यङ्गं मज्जनशालाप्रवेशनं मज्जनमण्डपमणिपीठोपवेशनं दिव्यस्नानीयोद्वर्तनम् उष्णोदकस्नानम् कनककलशच्युतसकलतीर्थाभि-**

---

१. पुरस्तादेवागामि—५—सूत्रोक्तवाक्येन—

२. अत्रमहिमनि—इति-पाठः सम्भाव्यताम्—

षेकं धौतवस्त्रपरिमार्जनम् अरुणदुकूलपरिधानम् अरुणकुचोत्तरीयमालेप-मण्डपप्रवेशनमालेपमण्डपमणिपीठोपवेशनं चन्दनागरुकुङ्कुम[2]सङ्कु-मृगमदकर्पूरकस्तूरीगोरोचनादिदिव्यगन्धसर्वाङ्गीणविलेपनं केशभरस्य कालागरुधूपं मल्लिकामालतीजातीचम्पकाशोकशतपत्रपूगकुड्मली-पुन्नागकल्हारमुख्यसर्वर्तुकुसुममालां भूषणमण्डपप्रवेशनं भूषणमण्डप-मणिपीठोपवेशनं नवमणिमकुटं चन्द्रशकलं सीमन्तसिन्दूरं तिलकरत्नं कालाञ्जनं [3]पालीयुगलं मणिकुण्डलयुगलं नासाभरणम् अधरयावकं प्रथमभूषणं कनकचिन्ताकं पदकं महापदकं मुक्तावलिम् एकावलिं छन्नवीरं केयूरयुगलचतुष्टयं वलयावलिम्–ऊर्मिकावलिं काञ्चीदाम कटिसूत्रं सौभाग्याभरणं पादकटकं रत्ननूपुरं पादाङ्गुलीयकम् एककरे पाशम् अन्यकरे अङ्कुशम् इतरकरे पुण्ड्रेक्षुचापम् अपरकरे पुष्पबाणान् श्रीमन्माणिक्यपादुके स्वसमानवेषाभिरावरणदेवताभिः सह महा-चक्राधिरोहणं कामेश्वराङ्कपर्यङ्कोपवेशनम् अमृतासवचषकम् आचमनीयं कर्पूरवीटिकाम् आनन्दोल्लासविलासहासं मङ्गलारार्तिकं छत्रं चामर-युगलं दर्पणं तालवृन्तं गन्धं पुष्पं धूपं दीपं नैवेद्यं कल्पयामि नमः–इति चतुष्षष्ट्युपचारान् विधाय ॥ ५ ॥

अत्र सामान्यपरिभाषयैव त्रितारीसिद्धौ पुनर्विधानं दीपनाथमन्त्रवत् तदवयवत्वं ज्ञापयति। शेषं स्पष्टम् । मन्त्रस्य स्वरूपं तु–ऐं ह्रीं श्रीं पाद्यं कल्पयामि नमः–इति । न ललितायाइति नामप्रवेशः, मानाभावात् ॥

निन्बधकारस्तु न्यायानभिज्ञः स्वेच्छाचारी च, तस्मात् नामप्रवेशं स्वेच्छया चक्रे । न च सम्प्रदानकारकस्याकाङ्क्षितत्वात् तद्वाचकपदाभावात् अबोधकत्वं स्यात्–इति वाच्यम् ; अध्याहारेणाकाङ्क्षाशान्तेः, अध्याहृतस्य पदस्य मन्त्रावयवत्वेन न्यायविद्भिरनङ्गीकारात्– अन्यथा "इषे त्वा छिनाद्मि, ऊर्जे त्वा उन्मार्ज्मि" इति प्रयोगकाले पाठापत्तेः । अतोयावच्छ्रुतोमन्त्रः । यदि नाममन्त्रत्वं मत्वा नामप्रवेशः, तर्हि नाममन्त्रस्य नमोऽन्तत्वं चतुर्थ्यन्तत्वं लक्षणम् । अत्र द्वितीयाऽन्तकल्पयामिभ्यां मध्ये व्यवधानान्न सम्भवतीति तत्त्वम्। किं च सर्वत्रोपचारमन्त्राणां कल्पयामि नमः–इत्यनेनैव निर्वाहे त्रितारीमुच्चार्येति सूत्रं व्यर्थं

१. दुकूलकु—श्री.
२. शिलारसमृग—श्री.
३. वाळी—श्री.

सत् मन्त्रस्वरूपं प्रतिपादयति । यावदुक्तं पठनीयम् । उत्पत्तिवाक्ये ललितापदप्रयोगादिति निर्मलललितापदप्रवेशे हेतुर्वक्तव्यः । तमजानन् केवलकाव्यपाठी निबन्धकारः सूत्रकारेण ललितापदस्य भूरिप्रयोगादिति हेतुविलेखनेन स्वीयमपाण्डित्यं प्रकाशितवान् ॥

क्रमेणेत्यनेन पाद्यमिति प्रातिपदिकस्थाने आभरणावरोपणादिपदोच्चारणं ज्ञापयति । स्नानीयोद्वर्तनं शरीरलग्नस्नेहवियोगसाधनं सुगन्धिचूर्णविशेषः । अत्र द्वितीयान्तानि सर्वाणि तत्तद्वस्तुजन्यसुखविशेषपराणि । कुचोत्तरीयं कञ्चुकम् । आलेपः सुगन्धिद्रव्यशरीरसंयोगः तज्जनकोमण्डपः स्थानविशेषः । कुङ्कुमं काश्मीरम् । सङ्कुः वृक्षविशेषः । तदुक्तं विश्वकोशे— "शङ्कुः कीले गरे शस्त्रे सङ्ख्याचापादपभेदयोः" इति सकारशकारयोर्नातिभदात् "एकदेश-विकृतमनन्यवत्" इति न्यायेन वृक्षविशेषः सुगन्धिः । मृगमदः कस्तूर्यवान्तरभेदः । यद्वा—ओतुविशेषावयवोमृगमदः महाराष्ट्रभाषया जव्वाजि—इति प्रसिद्धः । कस्तूरी मृगनाभिः । आदिपदेन अन्यानि लोकप्रसिद्धानि सुगन्धिद्रव्याणि । सर्वाङ्गीणं सर्वाङ्गसम्बन्धि । सर्वाङ्ग-शब्दात् सम्बन्धार्थे खप्रत्यये सर्वाङ्गीणम्—इति रूपं सिध्यति । तादृशं यत् विलेपनम् । अगरुः प्रसिद्धः । तन्मध्ये अत्युन्नतः कालागरुः । मल्लिका मालतीत्यादिना षड्तुसमुद्भवकुसुमानि । सीमन्तः केशपाशमध्यसरणिः तस्मिन् सिन्दूरम् । तिलकस्थाने रत्नम् । कालाञ्जनम् अति-कृष्णाञ्जनं सौविराञ्जनं वा । पाली कर्णभूषणं, महाराष्ट्रभाषया बाळी—इति प्रसिद्धम् । तस्याः युगलं युग्मम् । अधरे ओष्ठे यावकं लाक्षारसं रक्तत्वसंपादकम् । प्रथमभूषणं मङ्गलसूत्रम् । कनकचिन्ताकं आन्ध्रपुरन्ध्रीभिः धृतोभूषणविशेषः—कण्ठस्य आन्ध्रभाषया गोळकुत्तिकण्ठू—इति प्रसिद्धः । पदकं कण्ठभूषणं महाराष्ट्रभाषया तन्माणि—इति प्रसिद्धम् । महापदकं कण्ठभूषणविशेषः महाराष्ट्रभाषया, पेटया—इति प्रसिद्धः । मुक्तावलिं महाराष्ट्रभाषया कण्ठा इति प्रसिद्धम् । एकावलिं सप्तविंशतिमौक्तिकरचिता माला नक्षत्रमाला—इति प्रसिद्धा, "एकावल्येकयष्टिका सैव नक्षत्रमालास्यात्" इत्यमरः । छन्नवीरं उभयतोवैकक्ष्यदामात्मकं भूषणम्—इति निबन्धे स्थितम् । केयूराणाम् अङ्गदानां युगलं युग्मं तस्य चतुष्टयम् एकैकबाहौ द्वयं द्वयम् । वलयाः कङ्कणानि तेषामावलिं पङ्क्तिम् । ऊर्मिका अङ्गुलिभूषणं तस्य आवलिम् । कटिभूषणान्याह—काञ्चीति । सौभाग्याभरणम् अधरे जघनालम्बी भूषणविशेषइति निबन्धे स्थितम् । पादकटकरत्ननूपुरपादाङ्गुलीयोत्तरमेकवचनमविवक्षितम्, तदर्थस्य बाधात् । आयुधान्याह—एकेति । पुण्ड्रेक्षुः चित्रवर्णेक्षुः । पुष्पमयाः बाणाः पुष्पबाणाः तान् । आयुधक्रमउक्तोदक्षिणामूर्तिसंहितायाम्—

दक्षिणाधःकरे बाणान् वामाधस्तु शरासनम् ।
वामोर्ध्वे पाशमारक्तं दक्षोर्ध्वे तु सृणिं परम् ॥ इति ॥

महाचक्रं श्रीचक्रम्। कामेश्वराङ्कएव पर्यङ्कः, तत्रोपवेशनम्। अमृतरूपासवोमद्यं, तद्युक्त-चषकम्। आचमनीयं स्पष्टम्। कर्पूरवीटिका लक्षणमुक्तं तन्त्रान्तरे—

एलालवङ्गकर्पूरकस्तूरीकेसरादिभिः।
जातीफलदलैः पूगैः लाङ्गल्यूषणनागरैः।
चूर्णैः खदिरसारैश्च युक्ता कर्पूरवीटिका॥ इति॥

लाङ्गली नारिकेलम्। ऊषणा पिप्पली। नागरं शुण्ठी। खदिरसारं महाराष्ट्रभाषया "कात्" इति प्रसिद्धम्। आनन्दस्य उल्लासः उदयः तेन विलासः आविर्भावः यस्येदृशहासम्। लोकेऽपि आनन्दोदयज्ञापकोहासः। अतोयुक्तम् ईदृशं विशेषणम्। मङ्गलारार्तिलक्षणं परमानन्दतन्त्रे—

ततआरार्तिकं कुर्यात्तद्विधानं शृणु प्रिये।
लोहभिन्ने सुवर्णादिपात्रे सिन्दूररेणुभिः॥
नानाविधैर्वर्णकैश्चाप्यष्टपत्रं [1]सकर्णिकम्।
स्वस्तिकं वा प्रकल्प्याथ पिष्टजान् डमरुप्रभान्॥
घृतपक्वान्नवसप्तपञ्चत्रितयमेव वा।
सवर्तिकं घृतैः पूर्णं क्रमाद्विन्यस्य पात्रके॥
प्रज्वाल्य मायया पश्चान्नवरत्नैश्च मन्त्रयेत्।
चक्रमुद्रां प्रदर्श्याथ नवरत्नैश्च पूजयेत्॥
आमस्तकं तु तत्पात्रमुद्धरेत् स्वयमुत्थितः।
समस्तचक्रचक्रेशि युते देवि नवात्मिके॥
आरार्तिकमिदं दिव्यं गृहाण मम सिद्धये॥
इति घण्टां वादयन् वै देव्याआपादमस्तकम्॥
दक्षहस्तेन त्रिर्भ्राम्य पात्रं स्थाप्य नतिं चरेत्।
एवमारार्तिकं कुर्यात्................॥ इति॥

तालवृन्तं तालव्यजनम्। शेषं स्पष्टम्। चतुष्षष्ट्युपचारमध्ये उक्तस्य अलाभे प्रतिनिधिद्रव्य-नियमउक्तस्तन्त्रान्तरे—

तत्तद्द्रव्येणोपचारानभावे कुसुमाक्षतैः।
मनसा भावयन् कुर्यात्तेन पूजाफलं लभेत्॥ इति॥

---

१. मनोहरं—श्री. सुवर्णकं—ब२.

अक्षतपूजने विशेषोयोगिनीतन्त्रे—

श्वेताक्षतैर्न पूज्या स्यात् त्रिपुरा परमेश्वरी ।
काश्मीरैः [1]कुङ्कुमैर्वाऽपि रक्तचन्दनपङ्कैः[2] ।
रञ्जितान् शालिजान् शुद्धानखण्डानर्पयेत् बुधः ॥ इति ॥

इदं प्रतिनिधिकल्पनमपि गन्धपुष्पधूपदीपनैवेद्यव्यतिरिक्तविषयमेव । तदुक्तं योगिनीतन्त्रे—

उपचारानलाभे तु पुष्पाद्यैर्मनसा स्मरेत् ।
गन्धपुष्पधूपदीपनैवेद्यान्यन्महेश्वरि ।
गन्धादिपञ्चकाभावे पूजा व्यर्थैव [3]सर्वदा ॥ इति ॥

नवमुद्राप्रदर्शनम्

**नवमुद्राश्च प्रदर्श्य ॥ ६ ॥**

नवमुद्राः संक्षोभिण्यादियोन्यन्ताः–[4]वक्ष्यमाणाः । चकारेण दशमीं त्रिखण्डां च प्रदर्श्य । देव्याइति शेषः ॥ ६ ॥

त्रिधा संतर्पणम्

**मूलेन त्रिधा सन्तर्प्य ॥ ७ ॥**

बिन्दाविति शेषः ॥

केचित्तु विशेषार्घ्यएव तत्संस्काररूपं—ततः किंचित् उद्धृत्य पात्रान्तरेण तत्रैव निक्षेपरूपं—तर्पणं विधीयते–इत्यूचुः । तत्र, विशेषार्घ्यशोधनप्रकरणाभावेन तथात्वे प्रकृतहान्यप्रकृतकल्पनापत्तेः, एतदर्घ्यसंशोधनमिति पूर्वसूत्रविरोधाच्च । न च बिन्दाविति कथं ज्ञातमिति शङ्कनीयम्, मूलेनेति [5]तुरीयकूटश्रवणेन तज्ज्ञानसम्भवात् । परं तु इयान् विशेषः—एतदतिरिक्ते पूजयित्वेति, अत्र सन्तर्प्येति श्रवणात्, अत्र तर्पणं, अन्यत्र पूजनम् । अनुष्ठाने विशेषस्तु अत्र बिन्दुमात्रप्रक्षेपः, पूजनस्थले बिन्दुपुष्पाक्षतोभयप्रक्षेपः । किं च

---

१. वा हरिद्रैर्वा–श्री.
२. पङ्कजैः–श्री.
३. सर्वधा–श्री, ब२.
४. एतद्ग्रन्थे तत्तत्पत्रे उक्ताशेषमुद्रोद्धारः द्वि० प.–शि.–१५–२/८ विषये द्रश्यः अथवा ५ खण्डे ललिताक्रमे १५ सूत्रभाष्ये द्रश्यः–
५. तृतीय–ब२.

मूलेनेति तृतीयया इतरनैरपेक्ष्यश्रवणात्, [1]श्रीपादुकेत्याद्यष्टाक्षर्योः पूजायामेव योजनविधानात्, " स्वाहा होमे तर्पणे च तर्पयामीति चोच्चरेत् " इति दक्षिणामूर्तिसंहितावचनेन मूलान्ते तर्पयामीत्येव योगः ॥

ननु तन्त्रान्तरे एकक्रियायामेव द्वयोः पदयोः प्रयोगः पर्यायेण दृश्यते, यथा " क्षीरेण ब्राह्मणैस्तर्प्या " इति " द्रव्येण सात्विकेनैव ब्राह्मणः पूजयेच्छिवाम् " इति, क्वचित् अस्मिन्नेवार्थे यज्धातुरपि दृश्यते यथा—" सुराघटसहस्रेण यक्ष्ये त्वां परमेश्वरि " इति, तथा च तर्पणपूजनयजनानि [2]पर्यायाणीति चेत्;—न। नह्येकार्थे प्रयोगमात्रेण पर्यायता सिध्यति, लक्षणयाऽप्यन्यस्मिन्नर्थे प्रयोगसम्भवात्। अन्यथा गङ्गातीरपदयोरपि तथात्वापत्तेः। अतएव " वायव्यं श्वेतमालभेत भूतिकामः " इत्यत्र धातोः स्पर्शार्थकत्वेऽपि द्रव्यदेवतायोगस्य यागमन्तराऽनुपपत्तेः आलभतिधातोः यागे लक्षणा कल्पिता। तथा अनुपपत्त्यभावेन अग्निहोत्रे श्रूयमाणस्य " वत्समालभेत " इत्यत्र धातोः यथाश्रुतार्थत्वमेवाङ्गीकृतम्। प्रकृतेऽपि सन्तर्प्येत्यत्र वायव्यादिवाक्यवत् बाधकाभावात् वत्समालभेत—इतिवत् यथाश्रुतार्थत्वमेव युक्तम् ॥

ननु द्रव्यस्यात्राप्यनुक्तत्वात् तर्पणं पूजनं वा केन कार्यमिति चेत्—उच्यते। विहिततर्पणादिकं साधनमपेक्षते। संस्कृतं विशेषार्घ्यं च कार्यमपेक्षते। एवं साकाङ्क्षयोस्तयोः नष्टाश्वदग्धरथन्यायेन विशेषार्घ्यं संस्कृत्य तेन देवतां यजेत्—इति वाक्यैकवाक्यता कल्प्यते ॥

न च एवं सति सामान्यार्घ्यस्याऽपि तुल्यत्वेन तस्यापि पूजासाधनत्वापत्तिः इति वाच्यम्; तज्जलेन त्रिकोणेति विशेषार्घ्यमण्डलादौ श्रौतविनियोगेनास्य किं कार्यम्;—इत्याकाङ्क्षाविरहात् ॥

न च एवं " तद्बिन्दुभिः त्रिशः गुरुपादुकामिष्ट्वा " इति तृतीयया विशेषार्घ्यस्यापि विनियोगश्रवणात् उभयत्र तुल्यम्—इति वाच्यम्; [3]एतदर्घ्यसंशोधनमिति तदग्रिमसूत्रेण तावत्पर्यन्तं विशेषार्घ्यसंस्कारस्यैवोक्तत्वेन बिन्दुभिरित्यादेरपि संस्कारान्तःपातित्वात्, किं च श्यामाक्रमे स्थितेन [4]सर्वचक्रदेवताऽर्चनानि वामकराङ्गुष्ठानामिकासन्दष्टद्वितीयशकलगृहीतश्रीपात्रप्रथमबिन्दुसहपतितैः दक्षकराक्षतपुष्पक्षेपैः कुर्यादिति वचनेन द्रव्यलाभस्य निष्प्रत्यूहत्वात् ॥

---

१ अनुगते-८२-पत्रे-२-खण्डे-श्रीगणनायकपद्धतौ-८-मूलसूत्रे, उक्तोयमष्टाक्षरं मन्त्रः—

२ पर्याया: इति साधुः—पाठः—

३ अनुगत-३-खण्डान्तिमेन, ३२—सूत्रेणेत्यर्थः—।

४ इदं-६-खण्डे श्रीश्यामाक्रमस्थं २२-सूत्रम्।

न च तस्य श्यामाप्रकरणस्थत्वात् तत्रैव विश्रान्तिः इति वाच्यम् । श्यामायाललितोपास्त्यङ्गत्वं पूर्वमेव व्यवस्थापितम् । अङ्गस्य प्रकरणं नास्तीति मीमांसकसिद्धान्तः । अतः प्रबलेन प्रकरणेन सन्निधिं बाधित्वा सर्वत्र विनियोगे बाधकाभावात् ॥

न च तथाऽपि श्यामापदैरुभयतः संदंशात् प्रयाजाभिक्रमणन्यायेन अवान्तरप्रकरणं महाप्रकरणबाधकं भविष्यति, इति वाच्यम्; सर्वशब्दश्रुत्या सर्वप्रबलया अवान्तरप्रकरणबाधसम्भवात् ॥

किं च अनारभ्य पठितेन सिद्धान्तग्रन्थस्थेन " तदभिव्यञ्जकाः पञ्च मकाराः तैरर्चनम् " इत्यनेन द्रव्यस्य प्राप्तत्वेन अनुपपत्तिगन्धाभावात् ॥

एताएव युक्तयः गणपतिप्रकरणस्थे—" सर्वत्र देवतानामसु श्रीपूर्वं पादुकां पूजयामीत्यष्टाक्षरं योजयेत् " इति वाक्ये[1]—द्रष्टव्याः ॥

त्रिधा त्रिवारं, अत्र द्रव्यभेदात् मन्त्रावृत्तिर्ज्ञेया ॥ ७ ॥

## षडङ्गपूजनम्

षडङ्गपूजनमाह—

**देव्याअग्नीशासुरवायुषु मध्ये दिक्षु च षडङ्गानि पूजयित्वा ॥ ७ ॥**

अत्र पूजनं नाम पुष्पाक्षतबिन्दुप्रक्षेपएव, न तु पञ्चोपचाराद्यर्पणरूपं, श्यामाक्रमोक्तकल्पसूत्रानुरोधात् तथा शिष्टसम्प्रदायाच्च ॥

एवं सति अत्राधुनिकाः—यत्रयत्रैतदुत्तरं पूजयित्वेति तत्र तत्र पूर्वसूत्रस्थं सन्तर्प्येत्यनुवर्त्योभयविधिः, मूलदेवीस्थले तर्पणमात्रं, बिन्दुद्रव्यदानं तर्पणं, पुष्पाक्षतदानं पूजनं, इत्थं च त्रितारीशिरोमन्त्रोत्तरं शिरश्शक्तिश्रीपादुकां पूजयामि शिरश्शक्तिश्रीपादुकां तर्पयामि इत्यनुतिष्ठन्ति। तदनुष्ठानं भ्रान्तिमूलम्, तथा सति अर्धजरतीयन्यायात्। त्रितारीमारभ्य शिरोमन्त्रान्तं सकृदावृत्तिः, शिरश्शक्तीत्यारभ्य द्विवारमिति कथनस्यातिहासास्पदत्वात् । किं च पूजयामीति मन्त्रेण पूजनं—अग्रिममन्त्रेण तर्पणम् इति पूजनतर्पणयोः क्रमिकत्वं प्राप्तम् । तथा सति बिन्दुपुष्पाक्षतदानयोः एककालबोधकेन बिन्दुसहपतितैः पुष्पाक्षतैः कुर्यात्, इति सूत्रेण विरुध्यते। अपि च वामकरसम्बन्धाभावप्रसङ्गश्च, क्रमिकत्वेन द्वयोरपि दक्षहस्तेन कर्तुं शक्यत्वात्।

---

१. इदं वाक्यमनुपदे—८१—पत्रे—२—खण्डे—गणनायकपद्धतौ, ८—सूत्रेऽस्ति—

२. एतत्—अग्रे—६ खण्डे-श्यामामे-२२-सू—द्रष्टव्यम्—

न च "वामकराङ्गुष्ठानामिकासन्दष्टः" इतिसूत्रानुसारेण वामकरस्यावश्यकता—इति वाच्यम्; दक्षकरस्य पुष्पाक्षतप्रक्षेपव्यापृतत्वेन सहत्वान्यथाऽनुपपत्त्या प्राप्तवामकरस्य विधानासम्भवेनानुवादकत्वात्। अतएव बहिष्पवमानस्तोत्रार्थं प्रसर्पणावसरे छन्दोगानां सूत्रे "सव्यैः पाणिभिस्तृणन्ति" इत्यत्र भाष्ये दक्षहस्तस्य "अध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारमुद्गाता" इति वाक्येन अध्वर्य्वाद्यन्वारम्भे व्यापृतत्वात् अर्थप्राप्तः सव्यपाणिः अनूद्यते इत्युक्तम्॥

केचित्तु—सन्तर्प्येत्यनुवर्त्य तर्पणपूजोभयं विधीयते अर्धजरतीयन्यायभीत्या, त्रितार्युत्तरं हृन्मन्त्रान्ते हृदयशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः—इति मन्त्रं पठन्ति। तदशुद्धम्, अनुवृत्तौ प्रमाणाभावात्॥

किं च विधौ आदौ तर्पणं, पश्चात् पूजा, मन्त्रे विपरीतक्रमइति च विरुद्धम्॥

तस्मात् पूर्ववाक्ये तर्पणं नाम बिन्दुप्रक्षेपमात्रम्। तस्य अनुवृत्तौ आकाङ्क्षाविरहात् पूजनमेव विधीयते। पूजापदार्थश्च बिन्दुपुष्पाक्षतसमुदायप्रक्षेपः। इत्थं च आदौ त्रितारी, ततोहृन्मन्त्रः, ततोहृदयशक्तिश्रीपादुकां पूजयामि—इति मन्त्रस्वरूपं ज्ञेयम्। एवमेवाग्रेऽपि सर्वत्र ज्ञेयम्॥

अग्नीशेत्यत्र अग्न्यादिपदेन तत्तद्देवतासम्बन्धिदिशां ग्रहणम्। दिक्षु इत्यनेन प्रागादिदिक्चतुष्टयग्रहणम्। षडङ्गयुवतीनां—अग्न्यादिचतस्रोविदिशः, मध्यं, प्रागादिदिक्चतुष्टयं मिलित्वैकं, इति षट् स्थानानि ज्ञेयानि॥

अत्र केचित्—

यः पश्येद्यत्र सूर्यं तु सा प्राची तस्य कथ्यते।
उदये सूर्यद्रष्टुस्तु मेरुरुत्तरसंस्थितः॥

इति [2]दिग्व्यवस्था श्रौतस्मार्तकर्मणि प्रसिद्धा, तथैव श्रीविद्योपासनायामपि दिग्व्यवस्था इत्याहुः॥

अन्ये तु निरुक्तदिग्व्यवस्थायावैदिके कर्मणि सावकाशत्वात् "पूज्यपूजकयार्मध्ये दिशं प्राचीं प्रकल्पयेत्" इति तन्त्रवचनानुसारेण देव्यग्रभागः प्राची, देवीपृष्ठभागः प्रतीची, देव्यादक्षभागोदक्षिणा, वामभागउदीची, दिगनुसारेण विदिशां कल्पनम्—इत्यूचुः॥

---

१. इदं-६ खण्डे श्रीश्यामाक्रमे, २२-सूत्रम्।

२. दिङ्मुखत्वव्यवस्थायां—द्वि.प-शि-वि. १३/१४-३ द्रष्टव्यः—॥

तदुभयमपि स्थूलमानत्वादुपेक्ष्यम् । वस्तुतस्तु ज्ञानार्णवे श्रीचक्रपूजनसन्निधौ—

उत्तराशामुखोमन्त्री यदा चक्रं समुद्धरेत् ।
उत्तराशा तदा देवि पूर्वाशेति निगद्यते ॥
ईशानकोणं देवेशि तदाऽऽग्नेयं न संशयः ।
पश्चिमाशामुखोमन्त्री यदा चक्रं समुद्धरेत् ॥
पश्चिमाशा तदा ज्ञेया पूर्वाशेति न संशयः ।
वायुकोणं तदाऽऽग्नेयमैशानं राक्षसं भवेत् ॥
दक्षिणाभिमुखोमन्त्री यदा चक्रं समुद्धरेत् ।
पूर्वाशैव ह्यदीची स्यात् रक्षःकोणं तु वह्निदिक् ॥ इति ॥

उत्तरापश्चिमाशेत्यत्र लोकप्रसिद्धोत्तरां दिशमनूद्य पूर्वादिदिक्कार्यं विधीयते "खलेवाली यूपोभवति" इतिवत् । इत्थं च दिङ्मात्रानुवादेन दिक्कार्यविधानात् विदिङ्मुखश्चक्रं नोद्धरेत् इति सिद्धम् । प्राचीदिगनुवादेन विधेयाभावात् तत्त्यक्तम् । एवं कुलार्णवेऽपि—

यदाशाऽभिमुखोमन्त्री त्रिपुरां परिपूजयेत् ।
देवीपश्चात्तदा प्राची प्रतीची त्रिपुरापुरः ॥

इति निरवकाशवचनैः श्रीविद्याविषये उक्तरीत्या दिग्व्यवस्था । श्रीविद्याऽतिरिक्ते तान्त्रिके कर्मणि पूज्यपूजकयोर्मध्यं प्राची । निखिलश्रौतस्मार्तकर्मणि, यः पश्येदित्यादिवचनप्रवेशः—इति अलं भूयसा । देव्या इत्युक्त्या बिन्दुचक्रएवाग्नेयादिदिशउक्तशास्त्रेण प्रकल्प्य तत्र षडङ्गयुवतीः पूजयेत्—इति सिद्धम् ॥ ८ ॥

### नित्यापूजनम्[1]

अथ पञ्चदशनित्यामन्त्रोद्धारपूर्वकं नित्यापूजनमाह—

**वाक्सकलह्रीं नित्यक्लिन्ने मदद्रवे सौः—इति कामेश्वरी । सर्वत्र नित्याश्रीपादुकेति योज्यम् । वाग्भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशङ्करि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वस-**

१. इतआरभ्य, श्रीललिताम्बायाआवरणार्चनस्थलदेवतानित्यादिकं ४-खण्डसमाप्ति-१०-सूत्रान्तं-यावद्दर्शयति ।

**स्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं भगमालिनी। तारोमाया नित्यक्लिन्ने मदद्रवे स्वाहा—इति नित्यक्लिन्ना। प्रणवः क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा—इति भेरुण्डा। प्रणवोमाया वह्निवासिन्यै नमः—इति वह्निवासिनी। मायाक्लिन्ने वाक् क्रों नित्यमदद्रवे ह्रीं—इति महावज्रेश्वरी। माया शिवदूत्यै नमः—इति शिवदूती। प्रणवोमाया हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट्—इति त्वरिता। कुमारी कुलसुन्दरी। हसकलरडवाग्भवहसकलरड्बिन्दुमालिनी हसकलरडचतुर्दशषोडशा—इति नित्या। माया फ्रें स्रूं अङ्कुशपाशस्मरवाग्भवब्लूंपदनित्यमदद्रवे वर्म फ्रें मायेति नीलपताका। भमरयऊमिति विजया। स्वौमिति सर्वमङ्गला। तारोनमोभगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल त्रिजातियुक्तमायारेफसप्तकज्वालामालिनि वर्मफडग्निजायेति ज्वालामालिनी। (अं) च्क्रौं—इति चित्रेति पञ्चदश नित्याः प्रथमन्यस्त्ररेखास्थितपञ्चदशस्वरेषु पूज्याः। विसृष्टौ षोडशीं मूलविद्यया चाभ्यर्च्य ॥ ९ ॥**

वाक् ऐं। शेषं यथापठितम्। मन्त्रान्ते सर्वत्र तत्तन्नित्यानाम, तदुत्तरं अष्टाक्षरीयोगः। यथा आदौ त्रितारी, ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवे सौः कामेश्वरीनित्याश्रीपादुकां पूजयामि नमः—इति। एवमग्रेऽपि द्रष्टव्यम्। यद्यपि श्रीपादुकेत्यष्टाक्षरीयोगः सामान्यवचनप्राप्तः, तथाऽपि नित्यापदघटितत्वेनाप्राप्तत्वात् तदर्थआरम्भः सर्वत्र नित्यापूजनमन्त्रेषु। द्वितीयमाह—वागिति। तृतीयमाह—तार इति। तारः प्रणवः, माया ह्रीं, शेषं यथाश्रुतं पठनीयम्। आदौ प्रणवः, ततोमाया, ततः स्वाहाऽन्तोयथाश्रुतः—इति फलितोऽर्थः। चतुर्थमाह—प्रणवइति स्वाहेत्यन्तेन। पञ्चमीमाह—प्रणवइति नमः—इत्यन्तेन। षष्ठमाह—मायेति ह्रींमित्यन्तेन। सप्तममाह—मायेति नमः—इत्यन्तेन। अष्टममाह—प्रणव इति फडित्यन्तेन। नवममाह—कुमारीति। कुमारी बाला सैव कुलसुन्दरीत्यर्थः। दशममाह—हसेति षोडशा इत्यन्तेन। अत्र पूर्वोक्तयुक्त्या हसकेत्यादौ केवलव्यञ्जनानामेव ग्रहणम्। अन्यथा "द्वादशार्धा च नित्या स्यात्" इति अन्यतन्त्रवचनेन द्वादशार्धामन्त्रवर्णातिदेशे "त्रिबीजस्था द्वादशार्धा" इति मन्त्रे त्रिवर्णत्वसिद्धेः अत्रापि तदतिदेशसिद्धत्रिवर्णत्वं विरुध्येत। हसकलरडोत्तरं वाग्भवः ऐं पुनः तदुत्तरं बिन्दुयुक्ता मालिनी ईकारः,

" गोविन्दश्च त्रिमूर्तीशोमालिनीवामलोचनम् " इति कोशात् । चतुर्दशषोडशौ पूर्वमुक्तौ । इत्थं च ह्स्क्ल्र्डैं ह्स्क्ल्र्डीं ह्स्क्ल्र्डौः नित्यानित्याश्रीइति—मन्त्रस्वरूपम् ॥

यच्च निबन्धे अवर्णसहितहकारादि लिखितं तदज्ञानप्रयुक्तमेव । तन्त्रान्तरानुसारेण यदि लिखितं, तर्हि वशिन्यादिन्यासे कवर्गं कलह्रीं च निगद्य-इति सूत्रे सति हल्मात्रग्रहणे तन्त्रान्तरमृते साधनं मृग्यम् । तस्मात् उक्तयुक्त्या त्र्यक्षर्येव नित्याविद्या ॥

एकादशमाह—मायेत्यारभ्य मायेत्यन्तेन । आद्यानि त्रीणि बीजानि स्पष्टानि, अङ्कुशः क्रोमिति, पाशः आमिति " आद्यन्तगोमहापाश" इति—योगिनीतन्त्रात् । आदिरकारः तस्यान्तः अग्निर्मोदेशः तत्र स्थितआकारइति तदर्थः । एवं "कामोऽग्निर्व्यापकोऽङ्कुशः" इति तत्रैव । कामः ककारः अग्निः रेफः व्यापकः प्रणवः मिलित्वा क्रोमिति सम्पद्यते । अयमङ्कुशइत्यर्थः । स्मरः क्लीं-वाग्भवः ऐं-वर्म हुं । इत्थं च ह्रीं फ्रें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं नीलपताकानित्याश्री—इति-मन्त्रस्वरूपम् । द्वादशमाह—भमरयऊं-इति । अत्रापि पूर्वयुक्त्या हल्मात्रग्रहणम्, "इयमेकाक्षरी विद्या विजया सम्प्रकीर्तिता" इति तन्त्रान्तरवचनात् ॥

तेन निबन्धे पञ्चाक्षरोच्चारणं औकारोच्चारणं प्रामादिकम् । भ्म्र्यूमिति स्वरूपं ज्ञेयम् । यद्यपि तन्त्रान्तरे अङ्गदादिबिन्दुसंयुतमित्यस्ति । अङ्गदऔकारः । तेन चरमस्वरऔकारः इति प्रतिभाति । तथाऽपि सूत्रे षष्ठस्वरोच्चारणात् सूत्रविरुद्धं तन्त्रान्तरोक्तं सूत्रानुसारिणा-मनादर्तव्यमेव ॥

त्रयोदशमाह—स्वौमिति । चतुर्दशमाह—तारइति अग्निजायेत्यन्तेन । त्रिजातियुक्त-माया ह्रां ह्रीं ह्रूं । वह्निजाया स्वाहा । शेषं स्पष्टम् । पञ्चदशमाह—अं चकौमिति । पञ्चदश-नित्यापूजने देशनियममाह—प्रथमेत्यादि । प्रथमत्र्यस्रं बिन्दुसमीपस्थं त्रिकोणं, तत्रत्याः यास्तिस्रोरेखाः, तासु वर्तमानाये पञ्चदश स्वराः आकाराद्यनुस्वारान्ताः तेषु एकैकस्वरे एकैकनित्या क्रमेण पूज्येत्यर्थः । अत्र रेखास्थितपञ्चदशस्वरेष्विति स्वराणां तत्र सिद्धवन्निर्देशात् एकैकरेखायां पञ्च पञ्च स्वराः भावनीयाः इति विधिरुन्नेयः । क्रमस्यानुक्तत्वात् स्वाग्रादि-प्रादक्षिण्येन । पश्चिमादारभ्य ईशानान्तरेखायां,-अ आ इ ई उ-इति । ऐशानादाग्नेयान्त-रेखायाम्-ऊ ऋ ॠ ऌ ॡ-इति । आग्नेयादारभ्य पश्चिमान्तम्,-ए ऐ ओ औ अम्-इति भावनाविवेकः । विगता निर्गता सृष्टिः यस्याः सा विसृष्टिः बिन्दुचक्रम् । तत्सृष्टिप्रकारः उत्तरचतुश्शतीव्याख्याने सेतुबन्धे द्रष्टव्यः । तस्मिन् षोडशीं समष्टिरूपां मूलविद्यया पञ्चदश्या अभ्यर्च्य । एतासामधिष्ठानं कप्तत्रिकोणादन्यदेव त्रिकोणमुक्तं ज्ञानार्णवे—

विभाव्य च महात्र्यस्रमग्रदक्षोत्तरं क्रमात् ॥ इति ॥

तन्त्रराजे तु बिन्दावेव पूजनमुक्तम् । इत्थं तत्तत्तन्त्रानुयायिभिः तत्र तत्र कर्तव्यम् ॥ ९ ॥

ओघत्रयपूजामाह—

**मध्ये प्राक्त्र्यस्रमध्यान्तः मुनिवेदनागसङ्ख्यान् यथासम्प्रदायं पादुकान् दिव्यसिद्धमानवौघसिद्धानिष्ट्वा पश्चात् स्वशिरसि नाथं यजेत् । एतल्लयाङ्गपूजनम्-इति शिवम्[1] ॥ १० ॥**

॥ इति . . . कल्पसूत्रे ललिताक्रमोनाम चतुर्थः खण्डः ॥ श्रीः-

प्राक्त्र्यस्रं प्रथमत्र्यस्रम् । यद्वा—प्राक्त्र्यस्रं पूर्वोक्तं त्र्यस्रं तस्य योमध्यः आभ्यन्तरप्रदेशः तस्य यः अन्तः चरमावयवः स्वाभिमुखाग्रसमीपवर्ती यः आभ्यन्तरप्रदेशः तत्रेति फलितोऽर्थः । मुनिः सप्त वेदः चत्वारः नागः अष्टौ सङ्ख्या यत्रेति व्युत्पत्त्या ओघे विशेषणम् । यथासंप्रदायं पादुकाः, कादिहादिविद्याभेदेन पादुकानां गुरुमण्डलानां भिन्नत्वात् यस्य पुरुषस्य परिगृहीताः यायाः पादुकाः तत्तल्लाभाय यथासम्प्रदायं पादुका इति । दिव्याश्च सिद्धाश्च मानवाश्च ते ओघाश्च तादृशान् सिद्धान् । पूर्वोक्ते ओघविशेषणे । उभयत्र विभक्तिव्यत्ययः आर्षः । दिव्याः ७ सिद्धाः ४ मानवाः ८ इति विवेकः । तान् इष्ट्वा पूजयित्वा । क्त्वाप्रत्ययेन पाठेन च प्राप्तक्रमः पश्चादित्यनेन अनूद्यते । एतदुक्तं [१]यद्वा एतदुत्तरं वक्ष्यमाणं[२] नवावरणपूजनं—लयाङ्गं लयस्वरूपं चतुरस्रादिबिन्द्वन्तक्रमस्य लयस्वरूपत्वात् लयाङ्गपूजनं भवितुमर्हति । एतेन तन्त्रान्तरोक्तबिन्द्वादिपूजाव्यावृत्तिः[३] । शिवमिति खण्डसमाप्तिद्योतकम् ॥ १० ॥

॥ इति . . . परशुरामसूत्रवृत्तौ ललिताक्रमोनाम चतुर्थः खण्डः[४]

1. एके योगसूत्रसृष्टिस्थितिसंहारत्रिके पञ्चपञ्चिकपञ्चासूयान् प्रपञ्चादिन्यासदेवतादर्शनानि च यजन्ति—इत्यधिकः पाठः क्वचित्.

---

१. नाम-पाश्चात्यैतत्खण्डीय९सूत्रादारभ्योर्ध्वतन१०सूत्रान्तम्-

२. नाम-आगामिपञ्चमखण्डस्थैकसूत्रादारभ्य-

३. इदमत्रतात्पर्यं यत्-सर्वत्र यन्त्रपूजायां-सृष्टिस्थितिसंहारक्रमाणामन्यतमएकःक्रमः प्रतिपदोक्तोगृह्यते-अर्थात् सृष्टिक्रमेणबिन्दुमारभ्याचर्नमारभ्यते-तथात्र क्रमे, न ग्राह्यमपि तु-लयाङ्ग नाम संहारक्रमेणात्रक्रमे पूजारम्भः कार्यः । एतद्देवताभिन्नदेवार्चने तु बिन्दुमारभ्येति मार्मिकम्-

४. अत्र पूजा, न समाप्ता०अपि तु,खण्डएवेत्यवसेयम्-

सूत्रस्यपुनरावृत्तौ शोध्यं सूचयितव्यकम् ।
परिशिष्टस्थलं चैव पूर्णमाद्याप्रसादतः-इति चतुर्थः खण्डः-श्रीः

---

## पञ्चमः खण्डः--ललितानवावरणपूजा

### प्रथमावरणव्यष्टिपूजा[1]

[2]एतत्पदेन निर्दिष्टां पूजां वितत्य दर्शयति—

**अथ प्राथमिके चतुरस्रे अणिमालघिमामहिमेशित्ववशित्वप्राकाम्यभुक्तीच्छाप्राप्तिसर्वकामसिद्ध्यन्ताः मध्यमे चतुरस्रे ब्राह्म्याद्यामहालक्ष्म्यन्ताः तृतीये चतुरस्रे संक्षोभणद्रावणाकर्षणवश्योन्मादनमहाङ्कुशखेचरीबीजयोनित्रिखण्डाः सर्वपूर्वास्ताः सम्पूज्याः ॥ १ ॥**

अथेति नवावरणपूजाऽधिकारद्योतकम्। चतुरस्रत्रयमध्ये प्राथमिके सर्वबाह्ये चतुरस्रे अणिमेत्यारभ्य सर्वकामपर्यन्तं द्वन्द्वः। ते सर्वेऽपि सिद्ध्यन्ताः कार्याः। सर्वेषां पदानाम् अन्ते सिद्धिरिति योज्यम्। तथा च त्रितारी ततोऽणिमासिद्धिश्रीपादुकां पूजयामीति। एवमग्रेऽपि। अत्राणिमाऽऽदिपदत्रयं न मन्नन्तं, किंतु डाबन्तं, अणिमालघिमेतिसमासान्तसूत्रपाठात्। अणिमासिद्धीति पुंवद्भावरहितः पाठः अशास्त्रीयोऽपि सम्प्रदायानुरोधादार्षप्रायः। यद्वा—षष्ठीतत्पुरुषः। षष्ठ्यर्थश्चाभेदएव "राहोः शिरः" इतिवत्। प्राथमिकचतुरस्रे अणिमाऽऽदीनां यथेच्छं पूजाप्राप्तौ तन्नियमः वामकेश्वरतन्त्रे—

अणिमां पश्चिमद्वारे लघिमामपि चोत्तरे।
पूर्वद्वारे तु महिमामीशित्वाख्यां तु दक्षिणे ॥
वशित्वाख्यां तु वायव्ये प्राकाम्यामीशदेशके।
भुक्तिसिद्धिं तथाऽऽग्नेय्यामिच्छासिद्धिं तु नैर्ऋतौ ॥
अधस्तात् प्राप्तिसिद्धिं च [T]सर्वकामं तथोर्ध्वतः ॥ इति ॥

दिग्व्यवस्थासम्प्रदायश्च पूर्वमुक्तः। ऊर्ध्वाधरावपि न लोकप्रसिद्धौ ग्राह्यौ, किं तु तान्त्रिकौ। तदुक्तं तत्त्वविमर्शिन्याम्—

इन्द्रेशानदिशोर्मध्ये स्थानमूर्ध्वस्य कीर्तितम्।
निर्ऋत्यम्बुपयोर्मध्ये अधःस्थानं प्रकीर्तितम् ॥ इति ॥

मध्यमे चतुरस्रे ब्राह्म्याद्याः—ब्राह्मी आदौ यासां ताः, एवं महालक्ष्मीः अन्ते यासां ताः।

T. सर्वकामां—श्री.

१. आगामि पत्रत: २ सूत्रसमाप्त्यन्तं पुनरपि समष्ट्यर्चनप्रयोगोप्यस्ति
२. नाम पाश्चात्य १० सूत्रान्ते, एतल्लयाङ्गपूजनमितिपदस्थोत्रैतच्छब्दोज्ञेय:

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही चैव चेन्द्राणी चामुण्डाः सप्त मातरः ॥

इति प्रसिद्धाः सप्त, महालक्ष्मीश्चेत्यष्टौ मातरोमध्यचतुरस्रे पूज्याः । तत्र क्रमाकाङ्क्षायां वामकेश्वरतन्त्रे—

ब्रह्माणीं पश्चिमद्वारे माहेशीमपि चोत्तरे ।
पूर्वद्वारे तु कौमारीं दक्षिणे वैष्णवीमपि ॥
वाराहीमपि वायव्ये तथैन्द्रीमैशदेशके ।
चामुण्डामपि चाग्नेये महालक्ष्मीं च नैर्ऋते ॥ इति ॥

अथ तृतीये चतुरस्रे दशमुद्रापूजनमाह—तृतीये इति । सर्वः सर्वशब्दः पूर्वं यन्नामसु ताः यथा त्रितार्युत्तरं सर्वसंक्षोभिणीशक्तिश्रीपादुकां पूजयामि इति । एतादृशमुद्राशक्तयः—मुद्राशब्दार्थश्चोक्तः 'प्राक्—तादृशमुद्रात्वव्याप्यधर्मावच्छिन्नाः इमाः । सर्वसंक्षोभिणी पदार्थश्च इत्थं—सर्वान् पदार्थ[T]भूतान् क्षोभयतीति उत्पादयतीति सर्वसंक्षोभिणी, कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताऽऽश्रयेति यावत् । इयमेव वामाशक्तिरित्युच्यते । एतदुक्तं योगिनीतन्त्रे—

योनिप्राचुर्यतस्सैषा सर्वसंक्षोभिका पुनः ।
वामाशक्तिप्रधानेयम्............इति ॥

योनिः कारणत्वानि तेषां प्राचुर्यतोभूयस्त्वेन । अतएव सर्वसंक्षोभिण्याबाह्यस्वरूपे अङ्गुलिग्रथनात्मकेऽपि अङ्गुष्ठे कनिष्ठानामामध्यमाग्राणां योगे योनिभूयस्त्वं प्रत्यक्षेणानुभूयते । एतेन अदृश्यरूपमपि तथेत्युन्नेयम् । द्वितीया सर्वविद्राविणी सर्वानुत्पन्नान् द्रावयति वर्धयति पोषणेन सा सर्वविद्राविणी, सर्वेषां वस्तूनां पालकत्वादृजुस्वभावा ज्येष्ठाशक्तिप्रचुरा च । तदुक्तं योगिनीतन्त्रे—“ क्षुब्धविश्वस्थितिकरी ज्येष्ठा प्राचुर्यमास्थिता ” इति । क्षुब्धस्य उत्पन्नस्येत्यर्थः । यश्च संरक्षकः सऋजुरिति लोके प्रसिद्धा गाथा । अतएव अस्यामुद्रायाः बाह्यरूपेऽपि अङ्गुष्ठेन कनिष्ठिकानामायोगे अङ्गुलिचतुष्टये ऋजुत्वं दृश्यते । एवमाद्यत्रिकोणे रेखात्रयमध्ये पूर्वस्यां दिशि स्थितायां ऋजुरेखायामेव तस्याः अधिष्ठानं शास्त्रप्रसिद्धम् । तृतीया सर्वाकर्षिणी सर्वाकर्षणशीला । इयं ज्येष्ठा वामोभयात्मिका । तदुक्तं योगिनीतन्त्रे—

T. मात्रान्–श्री. अ.

१ अत्रवललिताक्रमे पाश्चात्य–४–खण्डे–१सूत्रभाष्ये १३५–पत्रे–

ज्येष्ठा वामासमत्वेन सृष्टेः प्राधान्यमास्थिता ।
आकर्षिणीति मुद्रेयम्......... ॥ इति ॥

पूर्वोक्तमुद्राद्वयवाचकपदशक्यताऽवच्छेदकयोः द्वयोरपि सर्वाकर्षिणीपदशक्यताऽवच्छेदकत्वं बोध्यम्, पुष्पवच्छब्दवत् । तत्रापि ज्येष्ठात्वविशिष्टवामात्वं शक्यताऽवच्छेदकं, न तु विपरीतम् । तथासति ज्येष्ठायाविशेष्यत्वेन प्रधानं वाच्यम् । प्राधान्ये ज्येष्ठायाअतिसरलत्वेन प्रधानानुसारेण विशेषणीभूतवामायाअपि प्रधानानुवर्तिन्याः सरलतया तर्जनीमध्यमयोः बाह्यरूषे कुटिलत्वं न स्यात् । वामायाः प्राधान्ये तु तस्याः कुटिलतया तदनुसारेण अप्रधानायाज्येष्ठायाः प्रधानानुवर्तिन्याः कुटिलत्वं युक्तम् । अतएव बाह्यस्वरूपे अङ्गुलिग्रथने सर्वास्वङ्गुलिषु कुटिलत्वम् । चतुर्थी सर्ववश्यकरी सर्वान् क्षित्यादिशिवान्तान् वश्यं स्वाधीनं नयति प्रापयतीति तथा । लोके आकाशोद्विविधः दह्वः प्राकृतश्च । दह्वाकाशेऽपि सुसूक्ष्मोऽन्यः आकाशोऽस्ति, " तस्यान्ते सुषिरꣳ सूक्ष्मम् " इति श्रुतिप्रसिद्धः । तन्मध्ये गाढमाश्लिष्टा परशिवेन या आनन्दविग्रहा मूर्तिः सा सर्ववश्यकरीपदवाच्या । तदुक्तं उत्तरचतुश्शत्याम्—

व्योमद्वयान्तरालस्थबिन्दुरूपा महेश्वरी ।
शिवशक्त्यात्मसंश्लेषादेषा वश्यकरी स्मृता ॥ इति ॥

बिन्दुरूपेति कथनात् स्वरूपमपि तथा । अतएवाङ्गुलिऽग्रथनेपि अस्याबाह्यरूपे बिन्द्वाकारता सर्वाङ्गुलीनां गाढसंश्लेषोऽपि व्यक्तः । पञ्चमी उक्तशिवशक्तिबिन्द्वोर्मध्ये सूक्ष्मरेखा " नीवारशूकवत्तन्वी ", "तस्य मध्ये वह्निशिखा " इति श्रुतिप्रसिद्धा । तस्याः शिखायाः द्विस्वभावत्वं ज्येष्ठास्वभावत्वं च । यथा लोके एकस्यैव दण्डस्य घटोत्पादकशक्तिमत्त्वं तन्नाशकशक्तिमत्त्वं चास्ति, तथाऽपि सदण्डः कदाचिदुत्पादकशक्तिप्रधानोभूत्वा घट मुत्पादयति, कदाचिन्नाशशक्तिप्रधानः तं नाशयति । एवं लोके बहुस्थले दृष्टम् । तथा दण्डस्थानीया उक्तरेखा । सा यदा जगद्रक्षणकर्तृत्वविशिष्टज्येष्ठाशक्तिप्रधाना तदा सर्वोन्मादिनी पदवाच्या । तदुक्तं उत्तरचतुश्शत्याम्—

बिन्द्वन्तरालविलसत्सूक्ष्मरूपशिखामयी ।
ज्येष्ठाशक्तिप्रधाना तु सर्वोन्मादनकारिणी ॥ इति ॥

अतएव तदङ्गुलिग्रथनवेलायां—अङ्गुष्ठानामतर्जन्यः सरलाः दृश्यन्ते, बिन्दुद्वयाकारं मध्यमाद्वयं च भवति । तत्रापि निरुक्तशिखास्थानापन्नग्रथनवेलायां अनामाद्वयमेव ज्ञेयम् । मध्यमाद्वयस्य तदानीं बिन्दुद्वयरूपत्वेन तन्मध्यवर्त्यनामाद्वयस्य " तस्य मध्ये वह्निशिखा " इति प्रसिद्धशिखात्वं युक्तम् । षष्ठी तु—इदमेव पूर्वोक्तं शिखाद्वयं यदा वामाप्रधानं तदा सर्वमहाङ्कुशा ।

सूक्ष्मरूपेण परमशिवकुक्षौ स्थितं जगत्। यथा अन्तस्थोगजः अङ्कुशेन बहिराकृष्यते तथा सर्वस्य बहिराकर्षणात् सर्वमहाङ्कुशेत्युच्यते। परशिवकुक्षिस्थजगतोवमनात् वामा तत्प्रधाना शिखा सर्वमहाङ्कुशा इत्युच्यते। तदप्युक्तं योगिनीतन्त्रे—

वामाशक्तिप्रधाना तु महाङ्कुशमयी पुनः।
तद्वद् विश्वं वमन्ती सा द्वितीये तु दशारके॥ इति॥

अतएव पूर्वमुद्रायां सरलयोरनामयोः वक्रता दृश्यते। लोके वमनवेलायां मानवोधनुराकारः वक्रोभवति। प्रसिद्धमेतत्। अत्रायं विवेकः—केवलवामात्वं सर्वसंक्षोभिणीपदप्रवृत्तिनिमित्तं, ज्येष्ठात्वविशिष्टवामात्वं सर्वाकर्षिणीपदप्रवृत्तिनिमित्तं, सूक्ष्माकाशान्तर्वृत्तिबिन्दुद्वयत्वं सर्ववश्यकरपदप्रवृत्तिनिमित्तं, ज्येष्ठाशक्तिप्रधानकबिन्दुद्वयमध्यवृत्तिरेखात्वं सर्वोन्मादिनीपदशक्यताऽवच्छेदकं, वामाशक्तिप्रधानत्वं सर्वमहाङ्कुशापदशक्यताऽवच्छेदकं, एवंरीत्या वैलक्षण्यं सूक्ष्मधिया द्रष्टव्यम्। सप्तमी सर्वखेचरी जीवानां स्वकर्मजनितरोगादिदुःखनाशनक्षमा शक्तिः। अतएव सर्वरोगहरचक्रस्था भवति। तदप्युक्तं योगिनीतन्त्रे—

धर्माधर्मस्य सङ्घट्टादुत्थिता वित्तिरूपिणी।
विकल्पोत्थक्रियालोपरूपदोष[?]विघातिनी।
विकल्परूपरोगाणां हारिणी खेचरी मता॥ इति॥

अस्यार्थः—धर्मः शक्तिः परशिववृत्तित्वात्। न विद्यते धर्मोयत्रेति अधर्मः परं ब्रह्म परशिवः। यद्वा—न कस्यापि धर्मः अधर्मइति नञ्तत्पुरुषएव युक्तः, परशिवे शक्तिरूपधर्मसत्त्वेन पूर्वकल्पे स्वोक्तव्याघातात्। तयोः संघट्टः मेलनं तेन उत्थिता। यावद्विकल्पः तेनोत्थिताः याः क्रियाः नित्यनैमित्तिकाः तासां लोपेन यत्पापं तत्सम्भवाः रोगाः तन्नाशिनी खेचरीति। अतएवैतादृशशिवशक्तिसामरस्यद्योतकं बाह्यरूपे बाहुद्वयपरिवर्तनम्। अष्टमी बीजमुद्रा—जगतः षड्विकारेषु प्राथमिकोयोभावविकारः सूक्ष्मरूपेण सत्ता तदभिमानिनी शक्तिः। तदुक्तमुत्तरचतुश्शत्याम्—

शिवशक्तिसमाश्लेषस्फुरद्व्योमान्तरे पुनः।
प्रकाशयन्ती विश्वं सा सूक्ष्मरूपस्थितं सदा।
बीजरूपा महामुद्रा .......॥ इति॥

अयमर्थः—वटबीजे सुसूक्ष्मेऽपि किञ्चिदाकाशोऽस्ति विभुत्वात्। तस्मिन् यथा महावृक्षः सूक्ष्मरूपेण तिष्ठति तथा षट्त्रिंशत्तत्त्वानि शिवशक्तिगर्भे विद्यन्ते सूक्ष्मरूपेण। सैव सत्ता घटोऽस्ति पटोऽस्ति इत्यत्र अनुवर्तते। सा बीजमुद्रेत्यर्थः। सर्वबीजस्थानापन्नत्वात् सर्वबीजा। सूक्ष्मत्वादवे अङ्गुलिप्रग्रथनवेलायां संक्षोभिण्याद्यपेक्षया अल्पयोनित्वं सूक्ष्मत्वज्ञापकम्। या

२० प.

नवमी योनिमुद्रा तद्वृत्त्यसाधारणोधर्मः मुद्रात्वे सति कलारूपत्वम्। मुद्रात्वस्वरूपमुक्तं प्राक्। कलापदार्थश्चोच्यते। शक्तिविशिष्टे प्रकाशरूपे परशिवे शक्तिमपहाय केवलस्वरूपमात्र-निष्कर्षणे सति तुरीयबिन्दुपदवाच्यत्वं, यथा जलनिष्ठं द्रवत्वमपहाय स्वरूपमात्रनिष्कर्षणे जलपदवाच्यत्वम्। अत्रापहानं नाम शक्यताऽवच्छेदककोटिप्रवेशाभावएव न ततः पृथक् निष्कासनं, असम्भवात्। तस्य शुद्धशिवस्य शक्तिसम्बन्धित्वेन विवक्षायां कामबिन्दुपदवाच्यता। तस्यैव संबन्धस्याभेदत्वेन शक्यताऽवच्छेदककोटिप्रवेशे विसर्गोहकारः विमर्शः इति तान्त्रिक-व्यवहारः। तादृशसामरस्योत्तरं रक्तशुक्लबिन्दुमिश्रणेन आविर्भूतानन्दान्तर्भावेण विवक्षायां कलेत्युच्यते। [1]ईदृशकलारूपा योनिमुद्रा। तदुक्तं नित्याहृदये—

संपूर्णस्य प्रकाशस्य लाभभूमिरियं पुनः।
योनिमुद्रा कलारूपा...............॥ इति॥

सर्ववश्यकरी केवलबिन्दुद्वयरूपा, अस्याः शरीरे बिन्दुद्वयसंसर्गाविर्भूतानन्दोऽपि शक्यताऽवच्छे-दककोटिप्रविष्टइति ततोवैलक्षण्यं ज्ञेयम्। दशमी त्रिखण्डा पूर्वमुक्ता। एवं दशमुद्राणां स्वरूपं श्रीगुरुकृपाविशेषेणाविर्भूतस्फूर्तिकं यथामति लोकानां सुखबोधार्थं स्पष्टीचकार। एवं स्वरूपज्ञानफलं तन्त्रेषु अनन्तं प्रपञ्चितं, विस्तरभयान्नेह लिखितम्। एवं दशमुद्राश्चतुरस्रे तृतीये पूज्याः। अत्रापि इच्छया प्राप्तौ नियामकं वचनं तन्त्रे—

पुरस्सव्ये च वंशे च वामे चैवान्तरालके।
ऊर्ध्वाधोदशमुद्राश्च...............॥ इति॥

पूर्वदक्षिणपश्चिमोत्तरेष्वाग्नेयाद्यन्तरालचतुष्के चोर्ध्वमधश्च दश मुद्राः पूज्याइति तदर्थः॥१॥

### प्रथमावरणसमष्टिपूजा

प्रथमावरणस्य व्यष्टिपूजामुक्त्वा समष्टिपूजामाह—

**एताः प्रकटयोगिन्यस्त्रैलोक्यमोहनचक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्त्विति तासामेव समष्ट्यर्चनं कृत्वा॥२॥**

एताः अणिमाऽऽदित्रिखण्डाऽन्ताः। प्रकटयोगिन्यइति तासामेव समष्टिनाम, यथा चैत्रोमैत्रइत्यादिप्रत्येकनामवतामपि मनुष्य—इति समष्टिनाम तद्वत्। उक्तयोगिनीषु प्रकटत्वं च शिवादिषट्त्रिंशत्तत्त्वानां मध्ये या स्थूला पृथिवी तद्रूपे भूपुरे चतुरश्रे वर्तमानत्वात्। तदुक्तं नित्याहृदये—

1 T. ' कलापदशक्यताऽवच्छेदककोटौ आनन्दस्याधिकस्य निवेशइति विशेषः' इत्यधिकः—ब.

तत्र प्रकटयोगिन्यश्चक्रे त्रैलोक्यमोहने ।
योगिन्यः प्रकटाज्ञेयाः स्थूलविश्वप्रथात्मनि ॥
स्थितत्वात् ........................॥ इति ॥

त्रैलोक्यमोहनमिति [T]योगरूढिभ्यां चतुरस्रत्रयात्मकं सर्वबाह्यं यच्चक्रं तस्य नाम । समुद्राः इति—पूर्वं विस्तरेण दश याः प्रतिपादिताः तास्वेकैका मुद्रा एकैकचक्रेऽस्ति । दशमी त्रिखण्डा सर्वव्यापिका । अस्मिन्नर्थे प्रमाणं योगिनीतन्त्रेऽस्ति । श्रीभगवान् परशुरामोऽपि तत्तच्चक्र-पूजायां एकैकमुद्राप्रदर्शनं [1]वक्ष्यति । एवं च यस्मिन् या मुद्राऽस्ति तया सहिताइत्यर्थः । ससिद्धयइति—अत्र सिद्धिर्नाम तत्तच्छक्तिसाध्यं फलम् । तच्च स्वाकारेण सूक्ष्मरूपेण तिष्ठत्येवेति शक्तयोऽपि ससिद्धयः । सायुधाइति स्पष्टम् । सशक्तयः—अत्र शक्तिपदेन अणिमाऽऽदिनिष्ठा या तत्तत्कार्यजनकता तदवच्छेदकोयोधर्मः सग्राह्यः । न हि कारणता निरवच्छिन्ना लोके प्रसिद्धा । अतः स्वनिष्ठकारणतायाम् अवच्छेदकं किं चिदभ्युपगन्तव्यम् । अभ्युपगतं च यद्रूपं तत् अधिष्ठानादन्यन्नवेत्यन्यदेतत् । तादृशशक्त्या सहिताः । सवाहनाः इति स्पष्टम् । परिवाराअनुचराः तैः सहिताः । शेषोमन्त्रार्थः स्पष्टः । तासामणिमाऽऽदि-त्रिखण्डाऽन्तानां समष्ट्यर्चनं समुदायनामघटितमन्त्रेणार्चनं विधाय । अत्र मन्त्रगतलिङ्गेन प्रार्थनाङ्गत्वं प्रतीयते, लोट्श्रवणात् "प्रार्थनेषु लिङ् लोट च" इति पाणिनिस्मृतेः । तथाऽपि "ममाग्नेवर्चोविहवेष्वस्तु०" इति मन्त्रस्य "विहव्याउपदधाति" इति श्रुत्या लिङ्गं बाधित्वा उपधानाङ्गत्ववत् अर्चनाङ्गत्वं बोध्यम् । सम्पूजिताः सन्तु इति समष्ट्यर्चनं कृत्वा, इत्यनेन अर्चनाङ्गत्वे प्रतीयमाने दुर्बलं लोट्श्रवणं न बाधकं भवति ॥२॥

**करशुद्धिमुच्चार्य त्रिपुराचक्रेश्वरीमवमृश्य द्रामिति सर्वसंक्षोभिणी-मुद्रां प्रदर्शयेत् । चक्रयोगिनीचक्रेशीनां नामानि भिन्नानि । शिष्टं समानम् ॥ ३ ॥**

अत्र करशुद्धिपदेन करशुद्धिन्यासाङ्गभूतोमन्त्रः न्यासप्रकरणोक्तः[2] तम् उच्चार्य । त्रिपुरेति त्रैलोक्यमोहनचक्रस्य नायिका । त्रिपुरा चासौ चक्रेश्वरी चेति कर्मधारयः । त्रिपुरेत्यत्र पुंवद्भावाभावआर्षः । ईदृशीं चक्रेश्वरीम् अवमृश्य सम्पूज्य । अत्रापि पूजारूपत्वात् श्रीपादुकेति मन्त्रशेषोऽस्ति । परंतु समष्ट्यर्चने श्रीपादुकामिति मन्त्रशेषोनास्ति, 'इति समष्ट्यर्चनं विधाय' इत्यत्र इतिशब्देन शेषव्यवच्छेदात् । द्रां–इति सर्वसंक्षोभिणीमुद्राबीजं तां पठित्वा

T. योगरूढिशक्त्या भूसदनात्मकचतुरस्ररेखात्रयस्य नाम––ब.

---

१. अधस्तनावरणार्चनेषु–इत्यर्थः–
२. अयं करशुद्धिन्यासमंत्रः पाश्चात्य-३-खण्डे श्रीक्रमस्थ–१५ सूत्रे तद्भाष्ये १०१ पत्रेऽस्ति

सर्वसंक्षोभिणीमुद्राम् अङ्गुलिप्रग्रथनरूपां वक्ष्यमाणरीत्या प्रदर्शयेत्। देव्याइति शेषः। एवं वक्ष्यमाणरीत्या देव्यग्रभागे अङ्गुलिषु ग्रथितेषु तस्याः दर्शितं भवति। एवमग्रिमे[1]ऽववगन्तव्यम्। एवं प्रकृते समष्ट्यर्चनमन्त्रं प्रकृतचक्रेश्याश्च मन्त्रमुक्त्वा अग्रिमसमष्ट्यर्चनमन्त्रे[2] चक्रेशीमन्त्रे च केषांचित् वर्णानां पर्युदासपूर्वकं कांश्चिद्वर्णानतिदिशति—चक्रेति। चक्रनामानि सर्वाशापरिपूरकेत्यादीनि, योगिनीनां नामानि गुप्तेत्यादीनि, चक्रेशीनां त्रिपुरेत्यादीनि, यानि नामानि तद्वर्णाभिन्नानि। समुद्राः[3] इत्यादिवर्णकूटं समानम्। अनेन तत्तत्प्रकरणे उक्तचक्रादिनामस्थाने वक्ष्यमाणनामानि पठनीयानीति भावः॥ ३॥

## द्वितीयावरणपूजा

अथ द्वितीयावरणपूजामाह—

**षोडशपत्रे कामाकर्षिणी नित्याकलेति नित्याकलाऽन्ताः बुद्ध्याकर्षिणी - अहङ्काराकर्षिणी - शब्दाकर्षिणी - स्पर्शाकर्षिणी - रूपाकर्षिणी रसाकर्षिणी - गन्धाकर्षिणी - चित्ताकर्षिणी - धैर्याकर्षिणी - स्मृत्याकर्षिणी - नामाकर्षिणी - बीजाकर्षिणी - आत्माकर्षिणी - अमृताकर्षिणी - शरीराकर्षिणी - एतागुप्तयोगिन्यः सर्वाशापरिपूरके चक्रे समुद्राः इत्यादि पूर्ववत् आत्मरक्षामुच्चार्य त्रिपुरेशीमिष्ट्वा द्रीं–इति सर्व-[4]विद्राविणीं प्रदर्शयेत्॥ ४॥**

नित्याकलेति वर्णसमुदायः अन्ते यन्नाम्नः इति व्युत्पत्त्या बुद्ध्याकर्षिण्यादिपञ्चदशस्वपि इदं विशेषणमनुषज्य योज्यम्। सर्वत्र पुंवद्भावोनाऽस्ति, प्रथममन्त्रपाठानुरोधात्। श्रीपादुकेत्यादिशेषः पूर्ववत्। षोडशपत्रे क्रमस्तु वामकेश्वरतन्त्रे—"षोडशारे महादेवीं वामावर्तेन पूजयेत्" इति। तत्राप्यारम्भः कस्माद्दलादारभ्य कर्तव्यइति विशेषजिज्ञासायां देव्यग्रकोणमारभ्येति सेतुबन्धे स्थितम्। योगिनीचक्रयोः प्रकृतमन्त्रप्रवेशार्थं नामनी आह–एताः गुप्तयोगिन्यइति, भूपुरापेक्षया षोडशदलस्य अन्तःस्थत्वेन, तत्रस्थायोगिन्यः गुप्ताः। "शिष्टं समानम्" इति पूर्वसूत्रेणैव प्राप्तमर्थम् अनुवदति समुद्राः इत्यनेन। अनुवादफलं च तदर्थकानां

---

१. आगामि पञ्चमसूत्रे–

२. अधस्तन-४ सूत्रादितत्तदावरणदर्शकसूत्रेषु वक्ष्यमाणानि–

३. अनुगत १५४ पत्रे-२-सूत्रे उक्तं समुद्राः ससिद्धयः इत्यादि–

४. द्वि. प. शि. १५-८/६ विषयोदस्यः।

पदान्तराणां मन्त्रे प्रक्षेपोमा भवत्वित्येतदर्थम्। पूर्ववत् पूर्वं यथोच्चरितं तथैवेत्यर्थः[1]। [2]आत्मरक्षा तन्मन्त्रः। शेषं स्पष्टम्॥ ४॥

### तृतीयावरणपूजा

तृतीयावरणपूजामाह—

**दिक्पत्रे कुसुमामेखलामदनामदनातुरारेखावेगिन्यङ्कुशामालिनीरनङ्गपूर्वाः संमृश्यैतागुप्ततरयोगिन्यः सर्वसंक्षोभणचक्रे समुद्राः इत्यादि पर्ववदात्मासनमुच्चार्य त्रिपुरसुन्दरीमिष्ट्वा क्लींमिति सर्वाकर्षिणीमुद्रां[3] प्रदर्शयेत्॥ ५॥**

अत्र दिक्पदमष्टसङ्ख्यालक्षकं, दिक्षु अष्टसङ्ख्यायाः सत्त्वात्। तथा च दिग्वृत्तिसङ्ख्यानि पत्राणि यस्मिन्निति व्युत्पत्त्या तृतीयचक्रपरम्। दिक्ष्वष्टसङ्ख्या च अवान्तरदिशोगृहीत्वा, "चतस्रोदिशश्चतस्रोऽवान्तरदिशाः" इति श्रुतेः। अवान्तरदिक्ष्वपि "अधिकं तु प्रविष्टं न तद्धानिः" इति न्यायेन दिक्त्वमबाधितम्। अनङ्ग—इति पूर्वं यासां कुसुमादीनां देवतानां नामादौ ताः देवता अनङ्गपूर्वाः। अत्रान्यपदार्थोदव्यः, न कुसुमादिवर्णसमुदायः, संमृश्येत्यस्यानन्वयापत्तेः। एतद्देवतापूजाक्रमश्च योगिनीतन्त्रे—

अनङ्गकुसुमां पूर्वे दक्षिणेऽनङ्गमेखलाम्।
पश्चिमेऽनङ्गमदनामुत्तरे मदनातुराम्॥
अनङ्गरेखामाग्नेये नैर्ऋतेऽनङ्गवेगिनीम्।
अनङ्गाङ्कुशां वायव्ये ईशानेऽनङ्गमालिनीम्॥ इति॥

पूर्वचक्रदेवताऽन्तरङ्गत्वात् आसां गुप्ततरत्वम्। शेषं गतप्रायम्॥ ५॥

### चतुर्थावरणपूजा

चतुर्थावरणपूजामाह—

**भुवनारे संक्षोभिणीद्राविण्याकर्षिण्याह्लादिनीसंमोहिनीस्तम्भिनी-जृम्भिणीवशङ्करीरञ्जन्युन्मादिन्यर्थसाधिनी - सम्पत्तिपूरणी - मन्त्रयी-द्वन्द्वक्षयङ्करीः[4] सर्वादीरवमृश्यैताः सम्प्रदाययोगिन्यः सर्वसौभाग्य-**

---

१. अनुगते १५४ पत्रे अस्मिन् खण्डे-२-सूत्रे समुद्राः—इत्यादितः सन्त्विन्तम्—इत्यर्थः

२. अनुगते १०२-पत्रे ३ खण्डे-श्रीक्रमे-१६ सूत्रोक्तरक्षशब्दान्तोमन्त्रः

३. एतत्सर्वाकर्षिणीमुद्रोद्धारार्थं द्वि—प—शि—१५—८/७ वि—दृश्यः॥

४. अत्र-दीर्घेकारान्ताः संक्षोभिणीत्यतोद्वन्द्वक्षयङ्कर्यन्ताः-१४-देवताः—

**दायकचक्रे समुद्राः—इत्यादि मन्त्रशेषः चक्रासनमुच्चार्य त्रिपुरवासिनीं चक्रेश्वरीमिष्ट्वा ब्लूं—इति [2]सर्ववशङ्करीमुद्रामुद्भावयेत् ॥ ६ ॥**

भुवनारे चतुर्दशारे । भुवनानि चतुर्दश[3] । शेषं दिक्पत्रवत्[4] । सर्वआदिर्येन्नामावयवानामित्यपि व्याख्यातप्रायं अनङ्गपूर्वाः इत्यनेन । क्रमाकाङ्क्षायां योगिनीतन्त्रे "वामावर्तक्रमेणैव पश्चिमादेव दक्षिणम्" इति पश्चिमे प्रारम्भः ततस्ततोदक्षिणं ग्राह्यमिति तदर्थः । पश्चिमादारभ्य अप्रादक्षिण्येनेति फलितोऽर्थः ॥ ६ ॥

## पञ्चमावरणपूजा

पञ्चमावरणपूजामाह—

**बहिर्दशारे सिद्धिप्रदासम्पत्प्रदाप्रियङ्करीमङ्गलकारिणीकामप्रदादुःखविमोचिनीमृत्युप्रशमनीविघ्ननिवारिण्यङ्गसुन्दरीसौभाग्यदायिन्यः सर्वपूर्वाः सम्पूज्यैताः कुलोत्तीर्णयोगिन्यः सर्वार्थसाधकचक्रे[T] [5]मनुशेष मुक्त्वा मन्त्रासनमुच्चार्य [6]त्रिपुराश्रीचक्रेश्वरीं प्रत्यवमृश्य सहत्युन्मादिनीमुद्रां दद्यात् ॥ ७ ॥**

नवचक्रेषु दशारद्वयमस्ति । तयोर्मध्ये यत् बहिर्दशारं तत्रेत्यर्थः । शेषं व्याख्यातप्रायम् । अत्रापि क्रमाकाङ्क्षायां पूर्वचक्रवदेव क्रमः । वामकेश्वरतन्त्रे तथैवेत्यनेन पूर्वचक्रक्रमातिदेशात् ॥ ७ ॥

## षष्ठावरणपूजा

षष्ठावरणपूजामाह—

**अन्तर्दशारे ज्ञानशक्त्यैश्वर्यप्रदाज्ञानमयीव्याधिविनाशिन्याधारस्वरूपापापहराऽऽनन्दमयीरक्षास्वरूपिणीप्सितफलप्रदाः सर्वोपपदाः**

T. चक्रे इति मनु—श्री.

---

१. अनुगते १०३ पत्रे-३-श्रीक्रमे-१८-सूत्रभाष्येऽयं चक्रासनमन्त्रोऽस्ति—

२. द्वि—प—शि—१५—८ त्रि. दश्यः—
८

३. भुवनसङ्ख्याः, आरायत्र, तत्र-मन्वस्रे—इत्यर्थः—

४. उपरितन-२८-सूत्रवदित्यर्थः—-

५. एतत्खण्डे १५४ पत्रे-२-सूत्रे समुद्राः—इत्यतः सन्त्वित्यन्तं मनुशेषं ज्ञेयम्

६. अनुगते १०३ पत्रे-३-खण्डे श्रीक्रमे-१८-सूत्र चक्रासनमन्त्रोऽस्ति—

**यष्टव्याएतानिगर्भयोगिन्यः सर्वरक्षाकरचक्रे शिष्टं[1] तद्वत् साध्य-[2]सिद्धासनमुच्चार्य त्रिपुरमालिनी मान्या क्रोमिति [3]सर्वमहाङ्कुशां दर्शयेत् ॥ ८ ॥**

सर्वोपपदाः सर्वपूर्वाः । मान्या पूज्या । क्रमस्तु [4]पूर्ववत्, "पूर्वोक्तेन विधानेन" इति योगिनीतन्त्रात् । शेषं व्याख्यातकल्पम् ॥ ८ ॥

### सप्तमावरणपूजा

सप्तमावरणपूजामाह—

**अष्टारे वशिन्याद्यष्टकं नमःस्थाने[5] पूजामन्त्रसन्नाम एतारहस्य-योगिन्यः सर्वरोगहरचक्रे शिष्टं स्पष्टं [6]मूर्तिविद्यामुच्चार्य त्रिपुरासिद्धामाराध्य शिवभृगुक्रद्धियुक्स्फ्रें–इति खेचरी देया ॥ ९ ॥**

योगिर्नीन्यासप्रकरणे ये वशिन्यादीनामष्टौ मन्त्राउद्धृताः तेषु नमःपदस्थाने पूजा-मन्त्रस्य श्रीपादुकेति मन्त्रस्य सन्नाम ऊहः कार्यः । चतुर्थीसहितनमःपदस्थाने पूजामन्त्रः कार्यइत्यर्थः, अन्यथा [I]चतुर्थीश्रवणापत्तेः ॥

न च—नमःपदनिवृत्तौ तद्योगनिमित्तचतुर्थ्यपि निवर्तते "निमित्तापाये नैमित्तिकापायः" इति न्यायात् इति—वाच्यम् । न हि चतुर्थीसत्त्वे नमःपदं निमित्तम्, किं तु तदुत्पत्तौ । तथा च नमःपदं निमित्तीकृत्योत्पन्ना या चतुर्थी तस्या निवर्तकपर्यन्तं स्थितौ बाधकाभावात् ॥

न च—चतुर्थ्युत्पत्तेः प्रागेव नमःपदं निवर्तताम्, तथा सत्युत्पादकाभावात् न चतुर्थी इति—वाच्यम् । न्यासमन्त्रस्य पूजामन्त्रप्रकृतित्वे सिद्धे प्रकृतितोऽतिदेशेन चतुर्थीनमः-पदसहितप्राप्तौ नमःपदं युक्तविन्यासेनोहेन बाधितं, चतुर्थी केन बाध्यताम् । श्रौते प्रकृतितोऽग्निपदसहितनिर्वापमन्त्रस्य प्राप्तौ सूर्ययागे अर्थबाधात् अग्निपदमात्रस्य सूर्यपदेन बाधः न चतुर्थ्याः । तथाऽत्रापि । तस्मात् चतुर्थीसहितनमःपदबाधकः पूजामन्त्रः । शेषं गतप्रायम् ॥

I. चतुर्थी पूर्वं श्रूयमाणा या तस्याः बाधकाभावेन तच्छ्रवणं स्यात्–अ. श्री.

---

१. एतत्खण्डे-१५४-पत्रे-२-सूत्रे समुद्राः इत्यतः सन्त्वित्यन्तं मनुशेषं ज्ञेयम्

२. अनुगते-१०३-पत्रे-श्रीक्रमोक्ते-१८-सूत्रे अयं साध्यसिद्धासनमन्त्रोऽस्ति

३. द्वि. प. शि. १५-७/६ वि. दृश्यः—

४. वामावर्तेनेत्यर्थः

५. इमावशिन्याद्यष्टदेव्यः ३ खण्डे-श्रीक्रमे-२०-सूत्रे–१०४–पत्रे सन्ति

६. अयं मूर्तिविद्यामन्त्रः ४ खण्डे–१३६–पत्रे–२ सूत्रेऽस्ति—

मूर्तिविद्या मूर्तिकल्पनमन्त्रः आवाहनप्रकरणे ऊक्तः । शिवोहकारः भृगुः सकारः ऋद्धिः खकारः । अत्र प्रमाणानि [1]प्राक् दर्शितानि । तैर्युक्तः फ्रेमिति वर्णः ह्स्ख्फ्रें–इति । इममुच्चार्य खेचरीं दर्शयेदित्यर्थः ॥ ९ ॥

## आयुधपूजा

आयुधपूजामाह—

**बाणबीजान्युच्चार्य सर्वजृम्भणेभ्योबाणेभ्योनमः धं थं सर्वसंमोहनाय धनुषे आं ह्रीं सर्ववशीकरणाय पाशाय क्रों सर्वस्तम्भनायाङ्कुशाय नमः इति महात्र्यस्रबाह्यचतुर्दिक्षु बाणाद्यायुधपूजा ॥ १० ॥**

बाणबीजानि संक्षोभिण्यादिपञ्चमुद्राबीजानि [I]कामेश्वरबाणानां बीजानि । तदुक्तं मालिनीतन्त्रे—

थान्तद्वयं समालिख्य वह्निसंस्थं क्रमेण तु ।
मुखवृत्तेन नेत्रेण बिन्दुना परिभूषितम् ॥
बाणद्वयमिदं प्रोक्तं मादनं भूमिसंस्थितम् ।
चतुर्थस्वरबिन्द्वाढ्यं नादरूपं वरानने ॥
फान्तं [II]चक्रेण संयुक्तं वामकर्णविभूषितम् ॥
बिन्दुनादसमायुक्तं सर्गवान् चन्द्रमाः प्रिये ॥
पञ्च बाणानिमान् विद्धि मामकान् प्राणवल्लभे ॥ इति ॥

अस्यार्थः— थान्तः मातृकाक्रमे थकाराग्रिमोदकारः तस्य द्वयं लिखित्वा तयोर्मध्ये प्रथमदकारं वह्निना रेफेण संस्थं युक्तं, मुखवृत्तमाकारः, मातृकान्यासे तस्य तत्स्थानत्वात्। बिन्दुश्च ताभ्यां सहितः । द्रामिति सम्पन्नम् द्वितीयदकारेऽपि वह्निसंस्थत्वं तल्लमं तदनन्तरं नेत्रेण वामनेत्रेण ईकारेण, मातृकान्यासे तत्स्थानत्वात्, बिन्दुना च समन्वितं द्रीमिति सम्पन्नम् । एवं सम्पन्नबीजद्वयं बाणद्वयं भवति । आद्यबाणद्वयबीजं भवति । एवं मादनं ककारः भूमिः लकारः तस्मिन् संस्थितं—अधोलकारः उपरि ककारः इति भावः— चतुर्थस्वरः–ईकारः बिन्दुः प्रसिद्धः ताभ्याम् आढ्यं युक्तम्, क्लीमिति सम्पन्नम्। फान्तं बकारः,

I. तदुक्तं कुलसारे—
संक्षोभिण्यादिमुद्राणां यानि बीजानि पञ्च वै ।
तानि सर्वाणि देवेशि शरादौ सम्प्रकीर्तयेत् ॥ इति ॥
इत्यधिकः–ब.
II. शक्रेण–श्री.

१. अत्र प्राक्वाम-१०३-पत्रे-३-खण्डे श्रीक्रमे १८ सूत्रभाष्ये-इतिज्ञेयम्–

व्युत्पत्तिः थान्तवत्, चक्रेण लकारेण युक्तं वामकर्णऊकारः तेन बिन्दुना च युक्तं, ब्लूमिति सम्पन्नम्। सर्गोविसर्गः तद्वान् चन्द्रमाः सकारः सः—इति। एवं च, द्रां द्रीं क्लीं ब्लूं सः—इति पञ्च मामकान् बाणान् विद्धीत्यर्थः। कामेश्वरीबाणबीजानि योगिनीतन्त्रे—

त्वगसृङ्मांसमेदोऽस्थिमज्जार्णान्ताः सुरेश्वरि।

द्वितीयस्वरसंयुक्ता एते बाणास्तदीयकाः॥ इति॥

अस्यार्थः—त्वक् यकारः "त्वग्वाली व्यापकोवायुः" इति कोशात्। असृग्रेफः "रो रक्तः क्रोधिनी रेफः" इति कोशात्। मांसं लकारः "पिनाकी मांससंज्ञिकः" इति कोशात्। मेदोवकारः "वोमेदोवरुणः सूक्ष्मः" इति कोशात्। अस्थिमज्जान्ते चरमदेशे स्थितं शुक्रं तद्वर्णः सकारः "दशपादोभृगुः शुक्रम् इति" कोशात्। यद्वा—अस्थिमज्जार्णौ शषौ, "शङ्कुकर्णास्थिसंज्ञश्च शकारोविह्निरीरितः" इति, तथा "वृषः श्वेतेश्वरः पीतोमज्जा" इति षकाराधिकारे च कोशात्। तयोरन्ते वर्तमानः स इत्यर्थः। उक्ताः वर्णाः द्वितीयस्वरसंयुक्ताः, आकारेण युक्ताः, बीजरूपत्वात् बिन्दुयोगोऽपि। इत्थं च—यां रां लां वां सां,—इति देव्याबाणबीजानि। उक्तवर्णेषु बिन्दुयोगस्तन्त्रान्तरे—"सर्वेऽन्तस्थास्तृतीयोष्माबिन्द्वनन्तसमन्विताः"। यरलवाः—अन्तस्थाः, तृतीयोष्मा सकारः, अनन्तः—आकारः। अत्र बाणबीजपदेन सर्वेषां ग्रहणम्, सेतुबन्धे यां रां लां वां सां सर्वजृम्भणेभ्यः कामेश्वरीबाणेभ्योनमः, द्रां द्रीं क्लीं ब्लूं सः सर्वजृम्भणेभ्यः कामेश्वर-बाणेभ्योनमः इतिः मन्त्रद्वयं लिखित्वा, अग्रे "इदं च कल्पसूत्रानुगुण्येनोक्तम्" इति लिखित्वा, "वस्तुतस्तु स्वतन्त्रानुसारेण आदौ द्वितारी ततोदशबाणबीजान्युच्चार्य सर्व-जृम्भणबाणशक्तिश्रीपादुकां पूजयामि" इति लेखात्॥

निबन्धे तु कामेश्वरबाणबीजमात्रं लिखित्वा सर्वजृम्भणेभ्योबाणेभ्योनमः इति मन्त्र-स्वरूपं लिखितम्। तत्र बाणबीजत्वस्योभयसाधारणत्वेन बाणबीजान्युच्चार्येत्यनेन शिवबाणा-नामेवोच्चारणं न देव्याः—इति भगवतोरामस्याभिप्रायनिष्कासने प्रमाणगन्धस्याप्यभावात्, प्रत्युत स्थूलमानेन विचार्यमाणे ललितोपास्तेः उपक्रान्तत्वात् तदीयबाणपूजनमेव युक्तम्। ता नपहाय केवलशिवबाणानेव लिलेख। तदीयं साहसं महत्तरम्॥

न च तथा सति उत्तरमन्त्रेषु धनुषे पाशायाङ्कुशायेत्येकवचनमनुपपन्नम् इति वाच्यम्; पाशाधिकरणन्यायेनोपपत्तिसम्भवात्। यद्वा—बीजदशकमुच्चार्य सर्वजृम्भणेभ्योबाणेभ्योनमः इति द्वयोः तन्त्रेणैव पूजनम्। देवतात्वं चाग्नीषोमवद्व्यासक्तम्। इत्थमेव पाशादिषु। एवं च "आशासानामेधपतये मेधम्" इतिवत् धनुर्द्वयनिष्ठदेवतात्वस्य व्यासक्तत्वात्, देवता-

१. उपरितनानि-यां-इत्यादीनि-५-द्रां-इत्यादीनि च-५-इति-१०बाणबीजानीत्यर्थः—

त्वावच्छिन्नस्यैकत्वात्, तदभिप्रायेणैकवचनोपपत्तिः । बाणपदोत्तरं बहुवचनं च देवतात्वाधिष्ठानान्वयीति " मेधपतिभ्यां मेधं " इतिवत् न काऽप्यनुपपत्तिः ॥

न च—निबन्धकारः शिवबाणबीजान्युलिखन् बभ्रामेत्यास्ताम् । परं तु ललिताप्रकरणस्थत्वात् शक्तिबाणबीजानामेवात्र ग्रहणम्, बाणबीजान्युच्चार्य इति कल्पसूत्रेणाविशेषेण श्रुतस्यापि प्रकरणेन सङ्कोचस्य " आग्नेय्याऽऽग्नीध्रमुपतिष्ठते " इत्यादौ दृष्टत्वात्—इति वाच्यम्;

कामबाणान् महेशानि धनुस्तत्पाशमेव च।
चक्रमध्ये चतुःकोणे क्रमेण परिपूजयेत् ॥

इति वामकेश्वरतन्त्रवचनेन तेषां शिवायुधानामपि ललिताप्रकरणे पूजनं विहितम्, प्रकृते कल्पसूत्रे बाणबीजान्युच्चार्येति अविशेषेण श्रुतस्य प्रकरणेन सङ्कोचे कर्तव्ये ततोऽपि बलवता वाक्यान्तरेण श्रूयमाणार्थस्यैव व्यवस्थापनात् । " आग्नेय्याऽऽग्नीध्रमुपतिष्ठते " इत्यत्र प्रकरणबाधकं वचनान्तरं नास्तीति वैषम्यम् ॥

न च तन्त्रान्तराश्रयणं न क्रियतइति प्रतिज्ञाहानिः, सूत्रार्थनिर्णयाय वचनान्तरानुसरणे प्रतिज्ञायामनुपपत्त्यभावात् ॥

किं च, बहुषु पुस्तकेषु कल्पसूत्रपाठः " धं थं सर्वसंमोहनाय धनुषे नमः, आं ह्रीं सर्ववशीकरणाय पाशाय नमः " इति, अयमपि बाणद्वयग्रहणे लिङ्गम् । अन्यथा धनुर्बाणयोरुभयसम्बन्धिनोः ग्रहणसूचकं बीजद्वयं किमिति पठेत् । दृश्यते च बहुषु पुस्तकेष्वयमेव पाठः । तस्मादुभयपूजनमावश्यकम् । यदि च केषुचित् पुस्तकेषु बीजद्वयपाठस्यादर्शनात् निश्शङ्कं परमतसिद्धिरिति विभाव्यते, तदाऽपि सर्वपुस्तकेष्वविवादेन धं—इति धनुर्मन्त्रे शिवधनुर्बीजमस्ति, " तुरीयमरुणावर्गात् द्वितीयमपि पार्वति । पुंस्त्रीकोदण्डयुगलम् " इति वामकेश्वरतन्त्रात् । अस्यार्थः—अरुणावर्गस्तवर्गः, तत्र तुरीयोधकारः द्वितीयः थकारः क्रमेण पुंस्त्रीधनुषी इत्यर्थः । अनेन धं—इति शिवधनुर्बीजं सिद्धम् । एवं पाशे ह्रीं—इत्यविवादेन सर्वपुस्तकेष्वस्ति । तच्च शक्तिपाशबीजं, " माया स्त्रीपाशउच्यते " इति योगिनीतन्त्रवचनात् । एवं क्वचित् पुमायुधबीजकथनं, क्वचित् स्त्र्यायुधबीजकथनं, प्रग्रथनरूपम् आयुधद्वयग्रहणे सर्वपुस्तकसाधारणं लिङ्गम्। तन्त्रान्तरवचनं च स्पष्टरूपं लिखितं प्राक्। एकवचनगतिः दर्शिता अतोविरोधाभावादायुधद्वयमत्र पूज्यमिति ममासंशयं प्रतिभाति । धर्मस्यातीन्द्रियत्वात् साधवः सुधियः परिशीलयन्तु इतोऽप्यधिकम् । इत्थं च यस्मिन् पुस्तके धनुर्मन्त्रे केवलं धं—इत्यस्ति तत् थं—इत्यस्याप्युपलक्षकं, तृतीयमन्त्रे ह्रीमिति आमित्यस्याप्युपलक्षकं, तस्य शिवपाशरूपत्वात्, " आद्यन्तगोमहापाशः पौरुषेयः प्रकीर्तितः " इति

वामकेश्वरतन्त्वात्। एतदर्थोऽपि प्राक् नीलपताकामन्त्रोद्धारे वर्णितः। अङ्कुशबीजं तु उभयोरेकं "कामोऽग्निर्व्यापकोऽङ्कुशः" इत्यविशेषेण योगिनीतन्त्रपाठात्। तस्य तन्त्रेण सकृदेव पाठः। इत्थं च मन्त्रस्वरूपं, यां रां लां वां सां द्रां द्रीं क्लीं ब्लूं सः सर्वजृम्भणेभ्योबाणेभ्योनमः [I]बाणश्रीपादुकां पूजयामि। थं धं सर्वसंमोहनाय धनुषे नमः धनुःश्रीपादुकां पूजयामि। ह्रीं आं सर्ववशीकरणाय पाशाय नमः पाशश्री०। क्रों सर्वस्तम्भनायाङ्कुशाय नमः अङ्कुशश्री० इति। शक्तिबीजानां प्राथम्ये तत्प्राधान्यं गमकम्॥

केचित्तु तन्त्रानुयायिनः दशबीजान्युच्चार्य कामेश्वरकामेश्वरीबाणेभ्योनमः इति पठन्ति। तदतीवाशुद्धम्। कामेश्वरी च कामेश्वरश्चेति द्वन्द्वापवादकत्वात् "पुमान् स्त्रिया" इत्येकशेषः स्यात् न द्वन्द्वः॥

महात्र्यस्रम् आद्यत्रिकोणं तस्य बाह्यत: अष्टास्रत्र्यस्रमध्ये दिक्षु पश्चिमादिप्रादक्षिण्येन। तदुक्तं वामकेश्वरतन्त्रे—

पश्चिमोत्तरपूर्वाशा दक्षिणाशा क्रमेण तु। इति॥

अत्र निबन्धे आयुधमन्त्रेषु श्रीपादुकामिति शेषयोजनाभावे मूलं सएव प्रष्टव्यः॥

न च—अष्टाक्षरीप्रापकं सर्वत्र देवतानामसु श्रीपूर्वकं पादुकामित्यादिवाक्यं तत्र देवतानामस्वित्यनेन यत्र देवतायानाम गृह्यते [1]तत्रैवाष्टाक्षरी नान्यत्र। प्रकृते विधायकवाक्ये बाणादिरूपनामग्रहणाभावात् न तथा—इति वाच्यम्। देवतानामस्वित्यस्य देवतानामघटित-मन्त्रेष्विति निबन्धकारेणाप्यवश्यं वाच्यम्। अन्यथा ओघत्रये तद्योगः तत्त्वतोविरुध्यते। तत्र विधिवाक्ये देवतानामग्रहणं नास्ति, किं त्वोघत्रयमेवास्ति। तस्मान्न किंचिदेतत्॥१०॥

## अष्टमावरणपूजा

अष्टमावरणपूजामाह—

**त्रिकोणे वाक्कामशक्तिसमस्तपूर्वाः कामेश्वरीवज्रेश्वरीभगमालिनी-महादेव्यः बिन्दौ चतुर्थी ॥ ११ ॥**

या परशिवरूपदीपस्य प्रकाशरूपा परा शक्तिः सा सृष्ट्युन्मुखा त्रिधा जाता वामा, ज्येष्ठा, रौद्री, चेति। क्रमात् रजस्सत्वतमःप्रधानाः ताः। तासां समष्टिवाचकं पदं तन्त्रशास्त्रे अम्बिकेति। इमाएव क्रमात् इच्छाज्ञानक्रियाशक्तयः इत्युच्यन्ते। अमूषां त्रिपुरसुन्दरी-

I. बाणशक्तिश्री–श्री.

१. आदौ तत्तद्देवतानाम संगृह्य–**श्रीपादुकां पूजयामि**–अयमेवाष्टाक्षरीमन्त्रउक्तः प्रागपि–

व्यष्टिरूपत्वं ज्ञापयितुमेव योगिनीषु अतिरहस्येति विशेषणं अग्रे दत्तवान्। अत्र [1]वाग्भव पदेन प्रथमकूटं ग्राह्यम्, काम पदेन द्वितीयकूटं, शक्ति पदेन तृतीयकूटं, न तु बालावर्णाः, वामकेश्वरतन्त्रे कूटानामेव परिगृहीतत्वात्। यद्यपि तन्त्रान्तरे " वाग्भवं चाद्यकूटं च " इति समुच्चयोऽपि द्वयोर्दृश्यते, तथाऽपि अत्र वागादीनामेवोक्तत्वात् योगिनीतन्त्रानुसारेण कूटमात्रग्रहणम्। समस्तं कूटत्रयम्। इमानि पूर्वं यासां नाम्नां ताः चतस्रः त्रिकोणे त्रिकोणकोणत्रये बिन्दौ च पूज्याइत्यर्थः ॥

निबन्धकारः चतुर्थदेवतायामन्त्रे समष्टिमूलानन्तरं ललिताश्री० इति लिलेख। तत्तुच्छम्। कामेश्वरी, वज्रेश्वरी, भगमालिनी, महादेव्यः—इति सूत्रे क्रमेण चतसृणां देवतानां नामसु सत्सु शास्त्रप्रसिद्धं परित्यज्य स्वकपोलकल्पितं ललितेति नाम मन्त्रे प्रवेशयामास। अत्र शास्त्रं न प्रमाणम्। अचिन्त्यशक्तिमन्त्रेष्वपि स्वेच्छाप्रवृत्तिशीलेयः तद्वचनं महान्तोऽपि विश्वसन्ति। अत्र मूलं श्रीभगवन्मायासमुत्पन्नालस्यमेव नान्यत्। न च—महादेवीपर्यायएव ललिताशब्दः, तत्प्रयोगे किं बाधकम्—इति वाच्यम्। " अग्निमीळे " इति मन्त्रे, वह्निमीळे—इत्यपि प्रयोगेनापूर्वं स्यात्। इत्यलमसदावेशेन ॥

क्रमस्तु वामकेश्वरतन्त्रे—

कामेश्वरीमग्रकोणे वज्रेशीं दक्षिणे ततः।
भगमालिनीं तथा वामे मध्ये त्रिपुरसुन्दरीम् ॥ इति ॥ ११ ॥

### कामेश्वर्यादीनां मूलदेव्यभिन्नत्वम्

ननु पञ्चदशनित्यानां मन्त्रेण मूलविद्यया चाभ्यर्च्य इति विहितं, प्रकृतेऽपि तुरीयदेवतायाः मूलेन पूजनमुक्तं, बिन्दुचक्रेऽपि वक्ष्यति मूलेन पूजनम्, एवं चरमचक्रेश्वर्याअपि। एवं च एकमन्त्रकरणकत्वात् एकदेवताकं यागत्रयं अभ्यासरूपं वा भिन्नदेवताकं वा; इति शङ्कायां देवतैक्यं प्रतिपादयति—

**तिसृणामासामनन्तरमभेदाय मूलदेव्याः पूजा। कामेश्वर्यादिचतुर्थीनित्यानां षोडशी चक्रदेवीनां नवमी बिन्दुचक्रस्था चेत्येकैव। न तत्र मन्त्रदेवताभेदः कार्यः। तन्महादेव्याएव। चतुर्षु स्थलेषु विशेषार्चनमावर्तते ॥ १२ ॥**

१. अत्र-मूले-वाक्-इत्येव पदं-ततोत्र-वाक्पदेनेति सम्भाव्यताम्-

आसां कामेश्वर्यादीनां तिसृणामनन्तरम् आसां मूलदेव्यभिन्नत्वप्रतिपादनाय मूलदेव्याः पूजा। एवं स्थलान्तरेऽपि त्रिपुरसुन्दर्याअन्ते पूजनं तत्र तत्र, स्वस्वपूर्वदेवताकूटाभेदं ज्ञापयति। इममेवार्थं स्पष्टं दर्शयति—कामेश्वरीति। प्रकृतचक्रे कामेश्वर्यादिभ्यः परं चतुर्थी, पञ्चदशनित्याभ्यः परं षोडशी, अष्टचक्रात् परं नवमे बिन्दौ सैव चकारसूचिता, पुनर्बिन्दावेव अष्टचक्रेशीपूजाऽनन्तरं चक्रेशीत्वेन पूज्या एकैव। तत्र एषु स्थलेषु देवताभेदः मन्त्रभेदश्च नास्ति। इत्थं च नित्याः समस्तावरणदेव्यश्च त्रिपुरसुन्दर्याअव्यतिरिक्ताइति ज्ञापयितुं तत्तदन्ते उक्तमिति भावः। ननु देवतैक्ये द्रव्यैक्ये मन्त्रैक्ये सकृदेव पूजनं युक्तं, किमिति पूजात्रयं, अतआह—चतुर्षु स्थलेषु विशेषार्चनमावर्तते इति। दर्शितचतुःस्थलेष्वित्यर्थः। तथा च यागैक्येऽपि तदभ्यासस्यापूर्वसाधनत्वेनावश्यकत्वादिति भावः। न चाभ्यासे सति यथा प्रोक्षणमन्त्रोनावर्तते तथा मन्त्रावृत्तिर्न स्यात् इति वाच्यम्; क्रियाऽन्तरव्यवधाने अभ्यासेऽपि मन्त्रावृत्तेः अग्निहोत्रादौ दृष्टत्वात्। तथाऽत्रापि क्रियाऽभ्यासरूपत्वेऽपि स्वविजातीयक्रियाऽन्तरव्यवधानाद्युक्ता मन्त्रावृत्तिः॥ १२॥

प्रासङ्गिकमुक्त्वा प्रकृतमाह—

**एताअतिरहस्ययोगिन्यः सर्वसिद्धिप्रदे चक्रे। परिशिष्टं द्रष्टव्यम्। आवाहनीमुच्चार्य[1] त्रिपुराम्बां सम्भाव्य ह्सौं—इति बीजमुद्राकृतिः॥१३॥**

परिशिष्टमित्यनन्तरं पूर्ववत् इति शेषः। आवाहनी तत्प्रकरणोद्धृता विद्या। सम्भाव्य पूजयित्वा। कृतिः कर्तव्येत्यर्थः॥ १३॥

## नवमावरणपूजा

नवमावरणपूजामाह—

**बिन्दुचक्रे मूलेन देवीमिष्ट्वा एषा परापररहस्ययोगिनी सर्वानन्दमये चक्रे समुद्रा ससिद्धिः सायुधा सशक्तिः सवाहना सपरिवारा सर्वोपचारैः संपूजिताऽस्त्विति पुनर्मूलमुच्चार्य, महाचक्रेश्वरीमिष्ट्वा वाग्भवेन [2]योनिं प्रदर्श्य॥ १४॥**

१. पत्रे-४-खण्डे-३ सूत्रे, तद्भाष्ये च एषा, आवाहनी विद्यास्ति—ततोग्राह्या-अथवा-द्वि. प. १५/३ वि. दृश्यः—

२. इमे द्वे मुद्रेपि-द्वि. प. शि. १५–८/१५–२ १५–८/२ विषयखोर्दृश्ये—

अत्रापि निबन्धकारः मूलान्ते श्रीललिताश्रीपादुकां पूजयामि इति योजयामास। तदशुद्धम्। एतत्पूर्वसूत्रे " न तत्र मन्त्रदेवताभेदः कार्यः तन्महादेव्याएव चतुर्षु स्थलेषु " इति वाक्ये स्थलचतुष्टयेऽपि महादेव्याः पूजनम् इति कण्ठरवेणोक्तम्। श्रुत्या श्रुतशब्दं परित्यज्य अश्रुत-शब्दस्य कल्पनं अशास्त्रीयम्। अन्यथा " सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः " इत्यस्मिन् यागे सूर्यपर्यायशब्दं प्रक्षिप्य " दिवाकराय जुष्टं निर्वपामि " इति स्यात्। न च—तत्र सूर्यशब्दः उत्पत्तिवाक्ये श्रुतः, इह तु पूर्वसूत्रं नोत्पत्तिवाक्यं, किं तु अभ्यासरूपगुणविधायकमिति वैषम्यम्—इति वाच्यम्। नायमैकान्तिकोनियमः, उत्पत्तिवाक्यएव श्रवणमपेक्षितमिति। नक्षत्रेष्ट्युपहोमोत्पत्तिवाक्यं " सोऽत्र जुहोति " इत्येतावन्मात्रम्। नात्र देवतावाचकः शब्दः श्रूयते। तथाऽपि मन्त्रे—"अग्नयेस्वाहा, कृत्तिकाभ्यःस्वाहा" इत्यत्र श्रूयमाणयोरग्न्यादिशब्दः तं गृहीत्वा प्रथममन्वाधानेऽग्निमाज्येन इति व्यवहरन्ति, न तु वह्निमाज्येनेति। यद्युत्पत्ति-वाक्यएवेति नियमः, तर्ह्यत्र स्वेच्छया स्यात्। न च अस्य क्रमस्य उत्पत्तिवाक्ये " शक्तिचक्रैकनायिकायाः ललितायाः क्रममारभेत " इत्यस्मिन् ललिताशब्दस्य श्रुतत्वात् तद्ग्रहणम् इति निबन्धाभिप्रायः वर्णितुं शक्यः। तथा सति पूर्वसूत्रे ललितायाएव चतुर्षु स्थलेषु इति वक्तव्ये तमपहाय महादेव्याएवेति कथनस्य फलं ब्रह्मणाऽपि वक्तुं अशक्यम। मन्मते तु ललितामहादेवीशब्दयोः एकार्थकत्वेऽपि यत्र विशेषेन श्रुतः तत्र ललिताशब्द-प्रयोगः, यत्र श्रुतः तत्र श्रुतशब्दोच्चारणं अपूर्वजनकमिति ज्ञात्वा ललिताशब्दपरित्यागइति। फलं सङ्कल्पादौ श्रीललिताप्रीतये इति वक्तव्यम्। प्रकृते महादेवीशब्दस्य निरवकाशस्य प्रयोगउचितः। अतएवानया दिशा नवम्याः चक्रेश्वर्याः मन्त्रे महादेवीप्राप्तौ विशेषत श्चक्रेशीमिष्ट्वेति तत्र श्रुतत्वात् महादेवीशब्दबाधः, " सावकाशनिरवकाशयोः निरवकाशं बलीयः " इति न्यायात्। न च—एवं सति चतुर्षु मन्त्राभेदः प्रदर्शितः, इदानीं त्रिषु महादेवीघटितोमन्त्रः, एकत्र महाचक्रेश्वरीघटितइति मन्त्रभेदः पतितः, कथमेतत्—इति वाच्यम्; निबन्धकारेणापि ललितामहाचक्रेश्वरीश्री० इति लिखितत्वेन अस्य दोषस्य उभय-साधारणत्वेनाचोद्यत्वात्। प्रत्युत निबन्धकारमन्त्रस्य ललितापदघटितत्वेन अस्त्यत्यन्तवैलक्षण्यम्। मन्मते देवीस्थाने चक्रेश्वरीमात्रप्रक्षेपे " एकदेशविकृतमनन्यवत् " इति वैय्याकरणपरिभाषा माश्रित्य निर्वाहोभविष्यतीत्यलमतिविस्तरेण ॥

महादेवीशब्दनिरुक्तिर्देवीभागवते—

बृहदस्य शरीरं यदप्रमेयं प्रमाणतः।
धातुर्महति पूजायां महादेवी ततः स्मृता ॥ इति ॥

वाग्भवेन ऐं—इत्यनेन, न प्रथमकूटेन, पूर्वाष्टमुद्राबीजेषु वर्णैकत्वदर्शनात्, तत्पङ्क्तिस्थ-स्यास्यापि तादृशत्वस्यावश्यकत्वात्। अतः—ऐं—इत्यस्यैव ग्रहणं युक्तम् ॥ १४ ॥

### धूपादिदानम्

एवं नवावरणपूजां विधाय अग्रे कर्तव्यक्रियाशेषमाह—

**पूर्ववद्धूपदीपमुद्रातर्पणनैवेद्यादि दत्वा॥ १५॥**

धूपादिनैवेद्यान्तेषु [2]पूर्वोक्तधर्माणां प्राप्त्यर्थं पूर्ववदिति। धूपादिषु ये पूर्वोक्तधर्माः तद्धर्मकाः ते धूपादयः कार्याइत्यर्थः। ते च धर्माः धूपदीपनैवेद्येषु पूर्वमन्त्राः। मुद्रासु पूर्ववत्त्वं तर्पणे मूलमन्त्रः त्रिरभ्यासः इत्येवंरूपाः ज्ञेयाः। आदिपदेन ताम्बूलकर्पूरनीराजनादिमद्रव्यप्रज्वलनप्रभृतयोग्राह्याः॥

निबन्धकारः षोडश्युपासकः त्रिखण्डामपि प्रदर्शयेत् इत्युवाच। सः बभ्राम, तथाव्यवस्थायाः सूक्ते अनुक्तत्वात्॥

### त्रिखण्डाऽऽदिमुद्राणां स्वरूपम्

अत्र [3]संक्षोभिण्यादिमुद्राप्रदर्शनार्थं तत्कथंभावज्ञानस्यावश्यकत्वात् तन्मुद्रादर्शनप्रकारः सप्रमाणं संक्षेपेण कथ्यते। तत्रावाहने प्रथमं विनियुक्ता त्रिखण्डोच्यते। त्रिखण्डालक्षणमुक्तं वामकेश्वरतन्त्रे—

परिवर्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत् समौ।
अनामाऽन्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती॥
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि।
त्रिखण्डेयं समाख्याता त्रिपुराऽऽह्वानकर्मणि॥ इति॥

परिवर्तनं नाम हस्तद्वयाङ्गुलिमेलनम्। इदं सर्वत्राधिकाररूपं सदन्वेति। अङ्गुष्ठौ सरलौ परस्परस्पृष्टौ, तथैव कनिष्ठे मध्यमे च कुर्यात्। वामानामोपरि दक्षानामां तिर्यक् प्रसार्य तयोरधःप्रदेशात् तर्जनीद्वयमानीय कुटिलाकाराभ्यां तर्जनीभ्याम् अनामाऽग्रद्वयं धारयेत्। अनामे अन्तर्गते ययोरिति विग्रहेण लब्धोऽर्थः। अस्याउक्तरीत्या निर्माणे खण्डत्रयं दृश्यते। उपरि सरलाङ्गुष्ठद्वययोगः। मध्ये तादृशमध्यमायोगः। अधश्च कनिष्ठायोगस्तादृशः। एवं सति पूर्वोक्तवामाज्येष्ठारौद्रीकलात्रयरूपमस्यां स्फुटम्। अतएव त्रयः खण्डाः कलाः यस्याम् इति विग्रहेण त्रिखण्डेयम् अत्र यद्यपि खण्डद्वयनिर्माणप्रकारउक्तः। मध्यमखण्डरचनाप्रकारोनोक्तः। तथाऽपि त्रिखण्डेति योगार्थसम्पत्तये तन्त्रान्तरं शरणीकृत्य खण्डत्रयं सम्पादनीयम्। खण्डत्रयमुक्तं ज्ञानार्णवे—

---

१. द्वि. परि. १५ वि. दृश्यः—

२. अत्र पूर्वोक्तधर्माणामित्यनेनैतत्क्रमीयानुगत–४-६-७–सूत्रोक्तधर्माणामित्यर्थोज्ञेयः॥

३. एतत्संक्षोभिण्यादियोनिमुद्रान्तसर्वमुद्राणामुद्धारः द्वि. प. शि. १५–विषये दृश्यः—

पाणिद्वयं महेशानि परिवर्तनयोगतः ।
योजयित्वा तर्जनीभ्याम् अनामे धारयेत् प्रिये ॥
मध्यमे योजयेन्मध्ये कनिष्ठे तदधस्ततः ।
अङ्गुष्ठावपि संयोज्य त्रिधा युग्मक्रमेण तु ॥
त्रिखण्डा मम मुद्रेयं त्रिपुराऽऽह्वानकर्मणि ॥ इति ॥

सर्वसंक्षोभिणीस्वरूपं तत्रैव—

मध्यमे मध्यगे कृत्वा कनिष्ठाङ्गुष्ठरोधिते ।
तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके ॥
एषा तु प्रथमा मुद्रा सर्वसंक्षोभकारिणी ॥ इति ॥

तन्त्रराजे तु—

कनिष्ठाऽनामिकामध्याः नखैरन्योन्यसङ्गताः ।
कृत्वाऽङ्गुष्ठौ कनिष्ठास्थावृजू कुर्याच्च तर्जनी ॥
सर्वसंक्षोभिणी मुद्रा त्रैलोक्यक्षोभकारिणी ॥ इति ॥

सर्वविद्राविणी मुद्रा तत्रैव—

एतस्याएव मुद्रायामध्यमे सरले यदि ।
क्रियते चेन्महेशानि सर्वविद्राविणी तदा ॥ इति ॥

मध्यमे मध्यमेऽप्रीत्यर्थः । एतेन तर्जनीमध्यमयोः द्वयोः सरलत्वं ज्ञेयम् ॥

तृतीयमुद्राऽपि तत्रैवोक्ता—

मध्यमा तर्जनीयुग्मे वक्रीकुर्यात् सुलोचने ।
एतस्याएव मुद्रायास्तदाकर्षणकारिणी ॥ इति ॥

तत्रैव चतुर्थी मुद्रा सर्ववशङ्कर्युक्ता—

पुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ।
परिवर्त्य क्रमेणैव मध्यमे तदधोगते ॥
क्रमेण देवि तेनैव कनिष्ठाऽनामिके अपि ।
संयोज्य निबिडाः सर्वाः अङ्गुष्ठावग्रदेशतः ॥
मुद्रेयं परमेशानि सर्ववश्यकरी स्मृता ॥ इति ॥

अस्यार्थः—पुटाकारौ परस्परं पृष्ठसंलग्नौ ऊर्ध्वाग्राङ्गुलिकौ हस्तौ कृत्वा ततोऽङ्गुष्ठव्यतिरिक्ताङ्गुलयः परस्परमङ्गुलिसन्धिषु प्रवेश्य तर्जन्यादिकनिष्ठाऽन्ताअङ्गुलयः अङ्कुशाकाराः कुर्यात् । एवं कृत्वा ततोऽङ्गुष्ठद्वयं अधोमुखं तर्जन्युपरि स्थापयेत् । इयं सर्ववशङ्करी इति भावः ॥

पञ्चम्यपि तत्रैव—

संमुखौ तु करौ कृत्वा मध्यमामध्यगेऽनुजे ।
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ॥
दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ।
मुद्रैषोन्मादिनी नाम क्लेदिनी सर्वयोषिताम् ॥ इति ॥

अयमर्थः—वामकनिष्ठोपरि दक्षकनिष्ठां तिर्यगनामाद्वयोपरिमार्गेण मध्यमापर्यन्तं प्रसार्य तादृशकनिष्ठाऽग्रद्वयं मध्यमाद्वयेन दृढं गृह्णीयात् । गृहीतमध्यमानखोपरि दण्डाकारमङ्गुष्ठद्वयं स्थापयेत् । तथाऽनामाद्वयं परस्पराभिमुख्येन सरले कुर्यात् । अनामिकयोः पार्श्वद्वये तर्जनीद्वयमपि सरलं कुर्यात् । एषा सर्वोन्मादिनी मुद्रा योषिद्वश्यकरी इति ॥

षष्ठी मुद्राऽपि सर्वमहाङ्कुशा तत्रैव प्रकटिता—

अस्यास्त्वनामिकायुग्ममधः कृत्वाऽङ्कुशाकृति ।
तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ॥
इयं महाङ्कुशा मुद्रा सर्वकार्यार्थसाधिनी ॥ इति ॥

अस्याः सर्वोन्मादिन्याः । तेनैव क्रमेण अनामिकाक्रमेण । अनामिकाऽङ्कुशाकारा । तथैव तर्जनीद्वयमपि कर्तव्यम् । शेषं पूर्वमुद्रावत् इति भावः ॥

सप्तमीं खेचरीमुद्रां तत्रैव व्याचचक्षे—

सव्यं दक्षिणहस्ते तु दक्षिणं सव्यहस्ततः ।
बाहू कृत्वा महेशानि हस्तौ सम्परिवर्त्य च ॥
कनिष्ठाऽनामिके देवि युक्त्वा तेन क्रमेण तु ।
तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ॥
अङ्गुष्ठौ तु महेशानि कारयेत् सरलावपि ।
इयं सा खेचरी नाम मुद्रा सर्वोत्तमा प्रिये ॥

अस्य तात्पर्यम्—बाहू सरलौ प्रथमं कृत्वा दक्षबाहूपरि वामं स्थापयित्वा पुनर्वामं हस्त दक्षहस्ताधोमार्गेण वामपार्श्वे निर्गमय्य हस्तद्वयाङ्गुलीः वक्ष्यमाणरीत्या ग्रथ्नीयात् । तद्यथा वामानामाकनिष्ठे दक्षमध्यमाधोमार्गेण दक्षतर्जन्यां नीत्वा एवं दक्षानामाकनिष्ठे वाममध्यमाऽधोमार्गेण वामतर्जन्यां नीत्वा हस्तद्वयतर्जनीभ्यां स्वसमीपागतानामाकनिष्ठे दृढं गृह्णीयात् । मध्यमे सर्वोर्ध्वं सरले एवाग्राभ्यां परस्परसंलग्ने स्थापयेत् । अङ्गुष्ठौ सरलौ कृत्वा योनिसादृश्यं सम्पादयेत् । इयं खेचरीमुद्रा । यद्यप्युक्तार्थः सर्वोऽपि पूर्वलिखितवचने नास्ति, तथाऽपि—

वामं भुजं दक्षभुजे दक्षिणं वामदेशतः ।
निवेश्य योजयेत् पश्चात् परिवर्त्य क्रमेण हि ॥
कनिष्ठाऽनामिकायुग्मे तर्जनीभ्यां निरोधयेत् ।
मध्यमे सरले कृत्वा योनिवत् सरलौ ततः ॥
अङ्गुष्ठौ खेचरीमुद्रा पार्थिवस्थानयोजिता ॥

इति ज्ञानार्णववचनेन सह एकवाक्यतां सम्पाद्य निष्कासितोऽर्थोज्ञेयः ॥

अष्टमीमुद्राऽपि तत्रैव प्रकटिता—

परिवर्त्य करौ स्पृष्टावर्धचन्द्राकृती प्रिये ।
तर्जन्यङ्गुष्ठयुगलं युगपत् कारयेत् ततः ॥
अधःकनिष्ठाऽवष्टब्धे मध्यमे विनियोजयेत् ।
तथैव कुटिले योज्ये सर्वाधस्तादनामिके ॥
बीजमुद्रेयमचिरात् सर्वसिद्धिप्रवर्तिनी ॥ इति ॥

अस्यार्थः—अनामामध्यमामार्गेण व्यत्यस्ते कनिष्ठिके स्वाधोभागे मध्यमा यथा तिष्ठति तथा कुर्यात् । ततोमध्यमाद्वयं कनिष्ठाद्वयावष्टम्भकं यथा तथा कुर्यात् । सर्वाधःस्थिते अनामे यावत्कुटिले भवतः तावत् कुर्यात् । अङ्गुष्ठतर्जनीयुगलं अर्धचन्द्राकृति यथा भवति तथा योजयेत् । इयं बीजमुद्रा भवति ॥

नवमीं योनिमुद्रां तत्रैव विशिनष्टि—

मध्यमे कुटिलाकारतर्जन्युपरि संस्थिते ।
अनामिकामध्यगते तथैव च कनिष्ठिके ॥
सर्वाएकत्र संयोज्य अङ्गुष्ठपरिपीडिताः ।
एषा तु प्रथमा मुद्रा योनिमुद्रेति या स्थिता ॥ इति ॥

अस्यार्थः--अनामिके मध्यमाऽधोमार्गेण कुटिलाकारतर्जन्युपरि व्यत्यस्ते स्थापयेत् । अनामिकापृष्ठलग्ने व्यत्यस्ते कनिष्ठिके संयोजयेत् । अङ्गुष्ठाग्रद्वयं मध्यमामध्यपर्वद्वये योजयेत । इयं योनिमुद्रा भवति । यद्यपि एतावानर्थोन लभ्यते तेन वचनेन, तथाऽपि—

अनामिकापृष्ठभागे मध्यमामध्यपर्वणि ।
कनिष्ठाङ्गुष्ठसंश्लेषान्महायोनिस्त्रिखण्डिका ॥

इति स्थलान्तरे । अस्यार्थः—या त्रिखण्डा सा महायोनिः । ततो विशेषस्त्वियान्—मध्यमामध्यपर्वणी अङ्गुष्ठसंयोगः, अनामिकापृष्ठभागेन कनिष्ठिकासंयोगः । शेषं त्रिखण्डया सममित्यर्थः । अनेन सह पूर्ववचनस्यैकार्थतायां क्रियमाणायां पूर्वलिखितार्थः संपद्यते ॥

एवं दशमुद्राः परमगहनाः यथामति सप्रपञ्चं सप्रमाणं प्रपञ्चिताः प्रासङ्गिकाः । प्रकृतमनुसरामः ॥ १५ ॥

कामकलाध्यानम्

अथ कामकलाध्यानं वक्तुमुपक्रमते—

**बिन्दुना मुखं बिन्दुद्वयेन कुचौ सपरार्धेन योनिं कृत्वा कामकलामिति ध्यात्वा ॥ १६ ॥**

सूक्ष्मं कलाध्यानं स्थूलं चेति द्विविधम् । तत्र सूक्ष्मकामकलाध्यानस्य अस्मत्परमेष्ठिगुरुभिः उत्तरचतुश्शतीव्याख्याने विस्तरेण सेतुबन्धे वरिवस्यारहस्ये च व्याख्यातत्वात् तादृशध्यानकर्तुः उपासकधौरेयस्य साम्प्रतं शशशृङ्गकल्पत्वेन तल्लेखनस्य केवलस्वपाण्डित्यमात्रख्यापकत्वम् इदानीन्तनवेदान्तशास्त्राध्ययनवत् स्यात् । अतः प्रथमं परित्यज्य स्थूलमेव मन्दाधिकारिणामुपयोगाय वर्णयिष्यामः । तद्यथा—तुरीयस्वरे हकारे वा अंशत्रयं परिकल्प्य तत्र स्त्रीरूपं परिकल्प्य उर्ध्वांशे मुखकल्पनां मध्यमांशे कुचद्वयकल्पनां जघन्यांशे योनिकल्पनां च कृत्वा ध्यायेत् । तदुक्तं कुण्डलिनीविमर्शे—

शक्तिमध्यपरिकल्पितांशकेष्वन्तरङ्गपरिभावने पटुः ।
ऊर्ध्वमध्यतदधोविभागशः चिन्तयेन्मुखकुचावधोमुखम् ॥

अस्मिन् श्लोके शक्तिशब्दार्थः ईकारः इति बहवः । हकारइत्यपि केचित् । अधोमुखं योनिमित्यर्थः । शेषं स्पष्टम् । "मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधोहरार्धं ध्याये द्धोहरमहिषि ते मन्मथकलाम्" इति श्रीभगवत्पादैरप्युक्तम् । सेतुबन्धे तु ईकारएव स्थूलध्यानमुक्तम् "ईकारस्य बिन्दुविसर्गात्मनः शिवशक्त्योः सामरस्यरूपस्य स्वात्मत्वेन भावनायां परमानन्दानुभवः" इति पङ्क्त्याम् । सालग्रामे विष्णुबुद्धिवत् भगवत्याः ध्यानाधिष्ठाननियमोऽयम् । एवं स्थूलध्यानेन जितान्तःकरणस्तादृशोपासकमकुटमणिः सूक्ष्मकलां सेतुबन्धादिलिखितां गुरुमुखात् ज्ञात्वा काममुपासीत । नान्ये इदानीन्तनाः तद्योग्याः । तादृशध्यानं च परदेवताश्रीगुरुप्रसादैकलभ्यम् । अयमर्थस्त्रिपुरार्णवे सुस्पष्टमुक्तः— "सूक्ष्मध्यानेऽसमर्थश्चेत् स्थूलं ध्यायेद्यथोक्तवित्" इति । इत्थं च पूर्वोक्तान्यतरवर्णे मुखं कुचौ योनिं चांशत्रये कृत्वा मनसा निर्माय कामकलाम् इति वक्ष्यमाणप्रकारेण[1] ध्यात्वा, यथाऽवकाशमिति शेषः ॥ १६ ॥

वर्णविशेषे पूर्वोक्तावयवकल्पनानन्तरं विशिष्टे ध्यानप्रकारमाह—

**सौभाग्यहृदयमामृश्य ॥ १७ ॥**

---

१. सन्निहिताधस्थ-१७-सूत्र,भाष्योभयोक्तयनुसारेणेत्यर्थः-

सौभाग्यस्य धर्मादिसकलपुरुषार्थस्य हृदयं स्थानं उपादानकारणमिति यावत् । ईदृशं पूर्वोक्तरूपम् आमृश्य ध्यात्वा । पूर्वसूत्रस्थेतिशब्दस्य अत्राप्यनुवृत्तिः । अयमेवार्थः स्पष्टमुक्तः योगिनीतन्त्रे—

एवं कामकलारूपम् अक्षरं यत् समुत्थितम् ।
कामादिविषमोक्षाणामालयं परमेश्वरि ॥ इति ॥

एतदुत्तरं निबन्धे होमः पाक्षिकउक्तः, सः निर्मूलः, "यद्यग्निकार्यसम्पत्तिः" इति सूत्रस्य गणपतिप्रकरणस्थस्य अन्यत्र प्रापकप्रमाणाभावात् ॥ १७ ॥

### बलिदानम्

अथ बलिप्रकारमाह—

**वामभागविहितत्रिकोणवृत्तचतुरस्रे गन्धाक्षतार्चिते वाग्भवमुच्चार्य व्यापकमण्डलाय नमः इत्यर्धभक्तभरिताम्भसा आदिमोपादिममध्यमभाजनं तत्र न्यस्य ॥ १८ ॥**

अत्र वामभागेत्यनेन शीघ्रोपस्थितत्वात् स्वस्यैव वामभागोग्राह्यः । विहिते निर्मिते त्रिकोणवृत्तचतुरस्रे। निर्गमरीत्या त्रिकोणं स्वाभिमुखं ग्राह्यम्, तथा शिष्टसम्प्रदायात् ॥

केचित्तु त्रिकोणे या बलिग्राहिणी देवता सा तिर्यग्रेखाद्वयसंयोगरूपकोणाभिमुखी, त्रिकोणवर्तिदेवतानां तथात्वनियमात् । एवं च तन्त्रान्तरे—

मूलदेव्युन्मुखां ध्यात्वा न्यस्याग्रे बलिपात्रकम् ॥

इति वचनेन तस्यादेवतायामूलदेव्युन्मुखत्वनियमात् । त्रिकोणमपि देव्युन्मुखमेव न स्वाभिमुखमित्याहुः । तन्न, अनङ्गकुसुमादिश्रीचक्रस्थकोणेषु कोणपराङ्मुखीनां मूलदेव्यभिमुखीनां देवतानां बह्वीनां दृष्टत्वेन तादृशनियमासिद्धेः । न किंचिदेतत् ॥

गन्धाक्षतेत्यनेन तदितरव्यावृत्तिः दर्शिता । अर्चने मन्त्रमाह——वाग्भवमित्यादि । वाग्भवं——ऐं–इति । शेषं स्पष्टम् । अर्धभक्तेन अन्नेन भरिताम्भसा च सहितमिति शेषः । इदं भाजने विशेषणम् । एकस्मिन् पात्रे अर्धांशम् अन्नेन अर्धांशं जलेन पूरयेत्। ईदृशमेकं पात्रं क्षीरादिपात्रत्रयं च तत्र मण्डले न्यस्य । अत्र बलिपात्रं ताम्रमयम्,

बलिपात्रं ताम्रभवं नैवान्यत्तु कदाचन ॥

इति त्रिपुरार्णववचनात्। व्यञ्जनादिमिश्रणं न कार्यम्, एतत्तन्त्रे उक्तद्रव्येणैव द्रव्याकाङ्क्षाशान्तेः ॥

अत्र निबन्धकारः बाणमुद्रया बलिदानं वामपार्ष्णिघातादिकं लिलेख। सः प्रष्टव्यः किमत्र प्रमाणम् इति। सयदि ब्रूयात् श्यामाप्रकरणे सूत्रे उक्तत्वात् अत्रापि ते धर्मागृह्यन्ते इति, तर्हि तद्ग्रहणं आकाङ्क्षया, उत अनाकाङ्क्षया; । आद्ये बलिदाने द्रव्यदेवतामन्त्राणामाकाङ्क्षोदिता प्रकृतवाक्यैरेव शान्ता। बाणमुद्रायावामपार्ष्णिघातस्य च ग्रहणं कुर्वतः तस्यैव कीदृशी आकाङ्क्षोदितेति च न विद्मः। किं च श्यामाप्रकरणस्थपार्ष्णिघातादिधर्मेण किमपकृतम्। क्षेत्रपालवागीश्वर्यादिबलयोऽपि तत्र सन्ति। उक्तव्यतिरिक्ताअन्येऽपि मन्त्राः सन्ति। तैः निबन्धकृतोऽपराधः कोऽनुष्ठितः। श्यामाप्रकरणस्थत्वस्य तुल्यत्वेऽपि केषुचित् अनुगृह्णन् जग्राह केषुचित् रुष्टः तत्याजेति मूलं न विद्मः। किं च ततएव त्रिकोणादिमण्डलधर्माणां प्राप्तौ पुनर्विधानमत्र किमर्थम् इति चेत् वाग्बन्धनमेवोत्तरं नान्यदिति। तस्मात् स्वेच्छया धर्मप्रवर्तकसरणिः अश्रद्धेया। यावदुक्तं कार्यम्॥ १८॥

बलिदाने मन्त्रमाह—

**प्रणवमायाऽन्ते सर्वविघ्नकृद्भ्यः सर्वभूतेभ्योहुं स्वाह–इति त्रिः पठित्वा बलिं दत्वा॥ १९॥**

त्रिः इत्यनेन मन्त्राभ्यासोविहितः। तेन त्रिःपाठान्ते बलिदानम्। देवता च मन्त्रलिङ्गेन ज्ञेया॥ १९॥

### प्रदक्षिणादि

**प्रदक्षिणनमस्कारजपस्तोत्रैः सन्तोष्य॥ २०॥**

प्रदक्षिणमेकं कार्यम्,

अजेशशक्तिगणपभास्कराणां प्रदक्षिणे।
वेदार्धचन्द्रवह्न्यद्रिसङ्ख्याः सर्वार्थसिद्धयः॥

इति शक्तिसङ्गमतन्त्रे उक्तत्वात्। अजः विष्णुः। वेदाः चतस्रः। अर्धं तदर्धं द्वयम्। चन्द्रः एकः। वह्निः तिस्रः। अद्रिः सप्त। इमाः सङ्ख्याः अजादिप्रदक्षिणे क्रमात् ज्ञेयाः इत्यर्थः। श्रीमच्छङ्करभगवत्पादैरपि “प्रदक्षिणं ते परितः करोमि” इत्येकवचनान्तमेवोक्तम्[1]॥

नमस्कारे तु, इच्छैव नियामिका शास्त्रोपलब्धिपर्यन्तम्। नमस्कारे कश्चिद्विशेषः परमानन्दतन्त्रे—

१. श्रीबाला–मानसपूजा स्तोत्रे–मत्कृतबालातन्त्रचिन्तमणौ–चायं श्लोकोस्ति–

पूजागृहाद्बहिर्देवीं प्रणमेत् दण्डवद्भुवि ।
मण्डले नमनं नैव साष्टाङ्गं दण्डवत् चरेत् ॥
जानुभ्यां च पदाभ्यां च मूर्ध्ना हस्तयुगेन च ।
चतुरङ्गप्रणामोऽयं मण्डले विहितः शिवे ॥ इति ॥

मण्डललक्षणं योगिनीतन्त्रे—

पूज्यते यत्र सा देवी तच्चतुर्दिक्षु शङ्करि ।
धनुश्शतप्रमाणेन मण्डलं परिकीर्तितम् ॥ इति ॥

धनुर्मानं तु हस्तचतुष्टयम् । बृहद्वामकेश्वरे तु—

मण्डलं तद्विजानीयात् यावद्दृश्या हि देवता ॥ इति ॥

रहस्यार्णवे तु—

द्वारपूजा यत्र कृता तदन्तर्मण्डलं विदुः ॥ इति ॥

अयं च देशतः परिच्छेदउक्तः । कालतः परिच्छेदस्तु शक्तिसङ्गमतन्त्रे—

द्वारपूजां समारभ्य यावदुद्वासनं भवेत् ।
तावत्तन्मण्डलं विद्धि ....... ॥ इति ॥

त्रिपुरार्णवेऽपि--

इदं तन्मण्डलं देवि प्रारभ्यैतस्य पूजनम् ।
मार्तण्डमण्डलाद्यान्तं ....... ॥ इति ॥

इदमेव मण्डलं वक्ष्यमाणमण्डलधर्मेषु ज्ञेयम् ।

पूजागृहं ततोगत्वा चक्रराजं समर्चयेत् ।
विद्यां जपेत् सहस्रं वा त्रिशतं शतमेव वा ॥

इति ब्रह्माण्डपुराणोक्तजपसङ्ख्या ज्ञेया । अयं जपः कर्माङ्गभूतः, अङ्गैरुभयतः सन्दंशात् । यद्वा—

आवृतिर्गुरुनित्याऽर्चा समयाम्नाययोरपि ।
पूजात्रयं जपश्चैव प्रधानं पूजने मतम् ॥

इति स्वतन्त्रतन्त्रे त्रयोदशोल्लासे जपस्य प्राधान्यकथनात्, प्रत्यक्षवचनेन कथनस्य सर्वबाधकत्वात् ॥

स्तोत्राणि, गणेशग्रहनक्षत्रेत्यादिवामकेश्वरतन्त्रोक्तानि, सहस्रनामपाठः, अपराधस्तुतिः, सत्यवकाशे सप्तशतीपाठोऽपि, “ ततः कृताञ्जलिर्भूत्वा स्तुवीत चरितैरिमैः ” इति तत्रैव विहितत्वात् । एवमादिभिः सन्तोष्य ॥ २० ॥

## शक्तिपूजा

अथ शक्तिपूजामाह—

**तद्रूपिणीमेकां शक्तिं बालयोपचारैः सम्पूज्य तां मपञ्चकेन सन्तर्प्य । २१ ॥**

तद्रूपिणीं त्रिपुरसुन्दरीरूपिणीं एकवचनेन एकामित्यनेन अद्वितीयां सौन्दर्येणेत्यर्थः । प्रतिपाद्यते । एतेन तन्त्रान्तरोक्तशक्तिलक्षणानि सूचितानि । बालया मन्त्रेण उपचारैः यथासम्भवैः । मपञ्चकेन सन्तर्पणं तस्याः इच्छायां सत्यां ज्ञेयम् । अयं भावः सन्तर्प्येत्यनेन ज्ञापितः । तर्पणं तृप्तिसम्पादनं तत् शक्तिनिष्ठतत्तद्विषयकेच्छानिवर्तकोव्यापारः । तस्याइच्छायामसत्यां तन्निर्वर्तकव्यापारस्यापि असम्भवात् इच्छायामेव इति सिध्यति । अन्यथा "मपञ्चकैरुपचारैश्च पूजयेत्" इत्येव वदेत् । तस्मादयमर्थः सिद्धः । शक्तिलक्षणानि कुलार्णवे--

[1]सुरूपा तरुणी शान्ताऽनुकूला मुदिता शुचिः ।
शङ्काहीना भक्तियुक्ता गुरुशास्त्रपरायणा ॥
[I]प्रियाक्षरा विशेषज्ञा देवतापूजनोत्सुका ।
मनोहरा सदाचारा शक्तिरेवं सुलक्षणा ॥ इति ॥

योगिनीतन्त्रेऽपि

सवर्णा हीनवर्णा वा कुलस्था कुलटाऽपि वा ।
मन्त्रोपासनसंयुक्ता पूज्या स्यात् गणिकाऽपि च ॥ इति ॥

दोषाअपि कुलार्णवे

[2]दूष्या च कर्कशा लज्जाहीना च कुलदूषिणी ।
दुराचारा दुराराध्या भीता क्रुद्धा चलाऽलसा ॥
निद्रासक्ताऽतिदुर्मेधाः हीनाङ्गी व्याधिपीडिता ।
दुर्गन्धा दुःखिता मूढा वृद्धोन्मत्ता रहस्यभित् ॥
ईदृशीं मन्त्रयुक्तां च [3]पूजाकाले विवर्जयेत् ॥ इति ॥

यश्च योगिनीतन्त्रे—

योग्या वाऽपि निषिद्धा वा बहुदोषाकुलाऽपि वा ।
काले सुवासिनीं प्राप्तां सर्वथा भक्तितोऽर्चयेत् ॥ इति ॥

I. प्रियेक्षणा–श्री.

---

१. एतदादिश्लोकाः कुलार्णवतन्त्रे–७ उल्लासे–मुद्रितपुस्तके ६४ पत्रे सन्ति–

२. इमेपि श्लोकाःपूर्वतनोक्तपत्रस्थले एव सन्ति–

३. मुद्रितकुलार्णव पुस्तकेत्र–शक्तियोगे विवर्जयेदितिपाटोस्ति

सः मुख्यालाभे पूर्ववचनैः निषिद्धायाअभ्यनुज्ञापरः, विवाहे अनृतवदनवत् । यद्वा—पूर्ववचनैः निषेधः प्रतिपादितोयः सः शक्तिपूजापरः। योग्या वा इत्यनेन तदतिरिक्तं सुवासिनीमात्रे पूजनं तत्काले प्रतिपादयति । युक्तश्चायमेव पक्षः ॥ २१ ॥

### हविश्शेषप्रतिपत्तिः

हविश्शेषप्रतिपत्तिमाह—

**शिष्टैः सार्धं चिदग्नौ हविश्शेषं हुत्वा ॥ २२ ॥**

अत्र शिष्टत्वं कुलार्णवे दर्शितम्—

अहो भुक्तं तु यन्मद्यं मोहयेत् त्रिदशानपि ।
तन्मैरेयं शिवं पीत्वा योन विक्रियते नरः ॥
जपन् शिवपरोभूत्वा समुक्तः सच कौलिकः ॥ इति ॥

ईदृशं शिष्टत्वं सामयिकनिष्ठम् । एतेन विशेषणेन आधुनिकाः कौलिकंमन्याः केवलं जिह्वाचपलाः मण्डले न प्रवेश्याः इति ज्ञापितं भवति । सामयिकैः सहेति सहत्वं एकजातीयक्रियाकर्तृत्वं, " पुत्रेण सह याति " इत्यादौ तथा दृष्टत्वात् । प्रकृतेऽपि होमरूपैकजातीयक्रियाकर्तृत्वमस्तीति सहत्वं उपपन्नम् । चिदग्नौ चिल्लक्षणेऽग्नौ हविश्शेषं देवतोद्देशेन संस्कृतार्पितशेषम् । हुत्वेत्यनेन तत्र केवलहोमबुद्धिरेव विधेया । इन्द्रियतृप्तिविषयिणीच्छा न कदाऽपि कार्येति सूचितं भवति । मण्डले प्रवेशे इन्द्रियतृप्तीच्छायां पतितएव स्यात् इति भावः । अयं च उपयुक्तद्रव्यसंस्कारः " आग्नेयं चतुर्धा करोति " इतिवत् , हविश्शेषम्- इति द्वितीयाश्रवणात् ॥

एतेनेदानीन्तनाः एकं कलशं असंस्कृतद्रव्येण परिपूर्णं स्थापयित्वा तस्मिन् विशेषार्घ्यबिन्दुं किञ्चिन्निक्षिप्य तद्द्रव्यं सामयिकेभ्यः प्रयच्छन्ति । तेषामनुकूलतया निबन्धकारोऽपि क्षीरकलशादिकं देव्याः पश्चाद्भागे निधायेति, विशेषार्घ्यपात्रात् किञ्चित् क्षीरं कलशे निक्षिपेत् इति च वाक्यद्वयं लिलेख । इदं मूलं कृत्वा यइदृशोऽनाचारः पतनहेतुः प्रवृत्तः सः लिखितसूत्रविरोधेन निरस्तः, तस्मिन् हविःशेषत्वाभावात् । यदि च बिन्दुमात्रप्रक्षेपेण हविश्शेषत्वं संस्कृतत्वं स्यात् तर्हि आपणस्थद्रव्येऽपि बिन्दुप्रक्षेपं कृत्वा द्रव्यस्वीकारे दोषाभावेन महानुपप्लवः स्यात् ॥

यच्च त्रिपुरार्णवे—

तथा पूजानिमित्तं वै प्रथमाद्यमुपाहृतम् ।
यज्ञियं तत् पवित्रं स्यात् दृष्ट्वा स्पृष्ट्वा शुचिर्भवेत् ॥

तथैव मण्डले प्राप्तं सर्वं तदमृतं भवेत् ।
विप्रेणान्येन वाऽऽनीतं देवतायै निवेदयेत् ।
प्रथमाद्यैः संस्कृतैस्तु युक्तं तत्तदगात्मजे ।
अविशेषेण सर्वैस्तु ग्राह्यं शङ्काविवर्जितैः ॥ इति ॥

संस्कृतद्रव्येण युक्तं असंस्कृतं संस्कृतं भवतीति कथयतीति यद्युच्यते, तथाऽपि संस्कृतद्रव्यसंयोगोद्वेधा । संस्कृतद्रव्यस्य असंस्कृतद्रव्यपात्रे प्रक्षेपे सति एकः, संस्कृते विशेषार्घ्यपात्रे असंस्कृत व्यप्रक्षेपेणापरः । तत्र पूर्वस्मात् पक्षात् उत्तरपक्षोवरिष्ठः, श्रौते कर्मणि सोमे द्रोणकलशे दर्शपूर्णमासे ध्रुवादौ तथा दृष्टत्वात् । किं च यदि संस्कृतद्रव्येण लौकिकं बहिष्ठं संस्कृतं भवेत् तर्हि अतिप्रसङ्गोदर्शितः [1]पूर्वमेव, बहिर्द्रव्यस्य पात्रे प्रक्षेपपक्षे पूर्वोक्तातिप्रसङ्गोऽपि नास्ति, इदमपि साधकम् । तस्मात् द्वितीयपक्षएव श्रेष्ठः । तत्रापि पूजानिमित्तं भक्तेनानीतस्थलएव अयं प्रकारोनान्यत्र, अशास्त्रीयत्वात् । इदानीन्तनाः बुद्ध्या यथेच्छं द्रव्यं सम्पाद्य मनःपूतं व्यवहरन्ति । तत्पतनायैवालं भविष्यतीति ॥

वस्तुतस्तु इदमपि तन्त्रान्तरानुयायिनां, न तु सूत्रानुयायिनाम् । सूत्रे हविश्शेषंहुत्वेत्युक्त्या, कलशस्थासंस्कृतद्रव्ये हविश्शेषत्वं गीर्वाणगुरुणाऽपि प्रतिपादयितुमशक्यम्, शास्त्रोक्तविधिना संस्कृत्य देवतायै दत्तशेषस्यैव हविश्शेषत्वात् । तस्मात् यागशेषेणैव होमप्रतिपत्तिसंस्कारः सूत्रानुयायिनां नान्यद्रव्येण इति राद्धान्तः ॥

ननु तर्पणे आवरणपूजने च कृते सति यदा तत्रैव विनियोगः तदा इदं कर्म लुप्तं स्यात् इति चेत्—न । यथा " अश्वशफमात्रं पुरोडाशं करोति, " " अङ्गुष्ठपर्वमात्रमवद्यति, " इति विधिभ्यां अनुष्ठिते हविश्शेषोनियतः, तथा तन्त्रान्तरे--

सामान्यकलशं पञ्चपलान्यूनजलैर्युतम् ।
दिक्पलादधिकं नैव हेतुकुम्भं तदर्धकम् ॥
तदर्धं च विशेषार्घ्यम्.... .... .........॥

इति मानानुसरणे सूत्रानुयायिनां हेतुकुम्भंस्थानापन्नविशेषार्घ्ये हेतुकुम्भमानाङ्गीकारे षोडशशतगुञ्जापरिमितं विशेषार्घ्यद्रव्यं भवति । यदि च विशेपार्घ्यमानमेव अस्य तुल्यनामत्वात् अङ्गीक्रियते तदाऽपि अष्टशतगुञ्जापरिमितमित्यविवादम् । आवरणपूजादिषु एकैकदेवतोद्देशेन एकैकबिन्दुविनियोगोदृश्यते । तथा सति सामयिकानामात्मनश्च होमायालं द्रव्यं शिष्यतएव । अस्मिन् शास्त्रे द्रव्यस्वीकारजनितोऽवस्थाविशेषः उल्लासः । सोऽपि द्रव्यस्यात्युत्तमत्वे भवितुमर्हति इति न काऽप्यनुपपत्तिः ॥

---

१. पूर्वमेव नाम, १७६ पत्रस्थे-आपणद्रव्येऽपि-इत्यादितः॰महाननुपप्लवः स्यादित्यन्तने-लेखेनेत्यर्थः—

अत्र होमेतिकर्तव्यतायाः[1] शिष्टानां मण्डले प्रवेशधर्माणां च अनुक्तेः कथं शिष्टैः सह होमं कुर्यात् इत्याकाङ्क्षायां तन्त्रान्तरं तद्विषये शरणीकार्यम् । तथासति आदौ मण्डलधर्माः उच्यन्ते । ते चोक्ताः परमानन्दतन्त्रे—

क्षताङ्गोज्वरिताङ्गश्च मलिनाम्बरमूर्धजः ।
आशौचाङ्गस्तथोष्णीषी कञ्चुकी कृतभोजनः ॥
पूयिताङ्गस्तथोच्छिष्टमुखोमरणसूतकी ।
अपस्मारी क्लेशयुक्तः छर्द्यतीसाररोगवान् ॥
प्रायश्चित्ती तथाऽस्नातोन विशेन्मण्डले क्वचित् ।
सकृन्मोहात् प्रविष्टोऽपि देवताशापमाप्नुयात् ॥
यदि तेषां तु भक्तिः स्यादुत्कटा दर्शनादिषु ।
पूजागृहद्वारदेशाद्बहिः पूजां समाचरेत् ॥ इति ॥

त्रिपुरार्णवे भुक्तस्य विशेषः—

अतर्कितोदिवा भुक्तोयदा रात्रौ समागतः ।
तदा गुर्वाद्याज्ञया तु स्नात्वा सेवेन्न चान्यथा ॥ इति ॥

इदमपि सेवनं मण्डलाद्बहिरेव ।

भुक्त्वा न मण्डलं गच्छत् सवथा परमेश्वरी ।

इति मण्डलप्रवेशनिषेधबाधकशास्त्राभावात् ॥

यच्च कुलार्णवे—

अस्नात्वा वाऽपि भुक्त्वा वा [I]अभक्त्या वा कुलेश्वरि ।
यः सेवेत कुलद्रव्यं सदारिद्र्यमवाप्नुयात् ॥

इति भुक्तस्य कुलद्रव्यसेवननिषेधशास्त्रं कामं बाधतां प्रवेशनिषेधबाधकाभावात् प्रवेशोन कर्तव्यः । न च मण्डलात् बहिः स्वात्मीकारविध्यभावेन स्वात्मीकारविधिना प्रवेशोऽप्याक्षिप्यते इति वाच्यम् । तथा सति त्रिपुरार्णवे—“ भुक्त्वा न मण्डलं गच्छेत् ” इति प्रवेश-निषेधेनैव स्वात्मीकारनिषेधे सिद्धे—

कुलद्रव्यं तथा भुक्त्वा मोहादपि प्रमादतः ।
यः सेवेत सवै देवि देवताशापमाप्नुयात् ॥

इत्यनेन उन्नीतः कुलद्रव्यसेवननिषेधोव्यर्थः स्यात । अतोऽनेनैव ज्ञापकेन बहिरपि सेवनं द्रव्यस्य सिद्धम् ॥

I. अभ्यङ्क्त्वा—श्री.

१. कर्तव्यतायाम्-इति सप्तम्यर्थोत्रावधेयः

एवं प्रवेशायोग्यानुक्त्वा प्रवेष्टृगुणानप्याह परमानन्दतन्त्रे—

स्नातः शुचिर्धौतवस्त्रोधृतपुण्ड्ः शुभाशयः ।
क्षालिताङ्घ्रिकरोदेवीं ध्यायन् भक्त्या प्रणम्य च ॥
आचार्याज्ञाऽनुरूपेण मण्डलान्तर्विशेत् ततः ।
भावयन् देवतारूपं मण्डलं प्रणमेत् बुधः ॥
पुष्पाञ्जलिं ततः कुर्यात् तद्विधानं निगद्यते ।
सामान्यकुम्भतोयेन करौ प्रक्षाल्य भक्तितः ॥
सुरभीकृत्य गन्धाद्यैः पुष्पाण्यादाय भक्तितः ।
उत्थाय च ततोदेवि देवताऽभिमुखस्थितः ॥
श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान् द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥
सम्प्राप्तपञ्चदश्यादिः साधकस्तु महेश्वरि ।
समष्टियोगिनीविद्यामपि तत्र पठेच्छिवे ॥
देवतां ध्यानोक्तरूपां ध्यायन् सम्पूज्य शङ्करि ।
आचार्यादींस्ततोध्यात्वा पूजयेत् परमेश्वरि ॥
प्रणमेदुक्तविधिना ज्ञात्वा सर्वं शिवात्मकम् ।
सद्वितीयं समादद्यात् पात्रमाचार्यसत्तमात् ॥
पात्रं ग्राह्यं दक्षकरे दीक्षायुक्तेन शङ्करि ।
अन्येन तु समादेयं वामहस्तेन शङ्करि ॥
अथवा वामहस्तेन सर्वैर्ग्राह्यं महेश्वरि ।
हस्तान्तरेण त्वाच्छाद्य गृह्णीयात् दापयेदपि ॥
अनाच्छादितपात्रं तु भवेदसुरभागकम् ।
तर्पणाद्युपयोगे तु छादनं तु परित्यजेत् ॥
उपवेशक्रमं देवि शृणु संयतमानसा ।
मण्डलाकारतोवाऽपि चतुरस्रतयाऽथवा ॥
आचार्यं मध्यतः कृत्वा विशेत् ज्येष्ठक्रमेण तु ।
ज्येष्ठेषु सत्सु न विशेत् आचार्यस्य समीपतः ॥

न साम्येन गुरोः स्थेयं स्त्रीणां मध्ये तथैव च ।
नाग्रतस्तु गुरोर्देवि नाज्ञामुल्लङ्घ्य वै गुरोः ॥
एवं ज्ञात्वा सम्प्रदायं निषीदेन्मण्डले शिवे ।
आचार्योऽपि तथा ज्येष्ठानुत्थाय प्रणिपत्य च ॥
तेषामाज्ञां गृहीत्वैव स्वासनेऽथ समाविशेत् ।
तस्मै च पात्रं दद्याद्वै ज्येष्ठायोत्थाय साधकः ॥
ज्येष्ठान् कनिष्ठोऽपि देवि गृह्णीयादुत्थितोनमन् ।
सर्वान् संपूज्य पात्राणि दातव्यानि महेश्वरि ॥
असम्पूज्य शिष्यमपि योदद्यात् पात्रमम्बिके ।
तस्मै कुप्यति सा देवी यस्मात् सर्वं हि तन्मयम् ॥
प्रक्षाल्य पात्रं पुष्पादियुतमाच्छाद्य यत्नतः ।
आचार्याय तथा दद्यात् नमस्कुर्याच्च भक्तितः ॥
स्वीकृत्य तत्प्रसादं वै जप्त्वा स्तोत्रादिकं पठेत् ॥ इति ॥

त्रिपुरार्णवे—

शक्त्या स्वर्णादिसंयुक्तमर्पयेत् पात्रमम्बिके ।
यत्किंचिद्वाऽपि पात्रस्थं दत्वाऽनन्तफलं लभेत् ॥ इति ॥

सुवासिनीनां विशेषोयोगिनीतन्त्रे—

एवं सन्तर्प्य हुत्वा तु सुवासिन्यः सशेषकम् ।
दद्युस्तृतीयं तुर्यं वा पात्रं पीठाधिकारिणे ॥ इति ॥

त्रिपुरार्णवे कश्चिद्विशेषः—

वीरात् ज्येष्ठात् तथाऽऽचार्यात् ग्राह्यं शेषं च चर्वणम् ।
तदभावेऽपि चान्यस्मात् ज्येष्ठात् ग्राह्य नगात्मजे ॥

बृहद्वामकेश्वरतन्त्रे—

गुर्वाद्यभावे ज्येष्ठात्तु चर्वणं शेषमर्पयेत् ।
तदभावे गुरुं मूर्ध्नि ध्यात्वा तच्छेष[1]कं न्यसेत् ॥
आदौ वा गुरुशेषं स्यात् सर्वान्ते वा नगात्मजे ।
पिबेदशब्दं पात्रं तु सकृन्निर वशेषकम् ॥
सावशेषं तु यत्पात्रं सुरापानसमं तु तत् ॥ इति ॥

1. माहरेत्—श्री.

पात्रस्य ओष्ठास्पर्शेऽपि निषेधस्तत्रैव—

दूरादोष्ठास्पर्शनेन पानं तु पशुपानवत् ॥ इति ॥

कुलार्णवेऽपि —

करेण पात्रं धृत्वाऽथ न तिष्ठेत चिरं प्रिये ।
नालपन् पात्रहस्तः सन् तिष्ठेत क्वचिदम्बिके ॥
पादेन न स्पृशेत् पात्रं न बिन्दुं पातयेदधः ।
नान्योन्यं ताडयेत् पात्रं न पात्रं पातयेदधः ॥
साधारं नोद्धरेत् पात्रं निराधारं न निक्षिपेत् ।
रिक्तं पात्रं न कुर्वीत न पात्रं भ्रामयेत् प्रिये ॥
न पात्रं लङ्घयेद्विद्वान् पात्रं नोत्पातयेत् प्रिये ।
प्रक्षाल्य गोपयेत् पात्रमित्याज्ञा पारमेश्वरी ॥ इति ॥

परमानन्दतन्त्रे कश्चन विशेषः—

अर्घ्यस्थापनमारभ्य यावत् पात्रविसर्जनम् ।
सर्वं शिवमयं पश्येदन्यथा पतितोभवेत् ॥
सर्वे वर्णाद्विजास्तत्र न भेदं चिन्तयेत् क्वचित् ।
उद्वासानन्तरं नैक्यं कुर्याद्विद्वान् कदाचन ॥
स्वात्मीकारास्त्रिधा देवि दिव्यवीरपशुक्रमात् ।
उद्वासावधि दिव्यः स्यात् तत्पश्चाद्वीरउच्यते ॥
असंस्कृतः पशुः प्रोक्तोविप्राणामाद्यएव तु ।
अपशुः क्षत्रियविशां शूद्राणां त्रितयं भवेत् ॥ इति ॥

कुलार्णवेऽपि —

[1]भुक्तिमुक्तिप्रदं दिव्यं वीरं भुक्तिप्रदं भवेत् ॥ इति ॥

रहस्यार्णवेऽपि—

सम्पूज्यैव विधानेन विप्रश्चोद्वासनावधि ।
द्रव्यं पिबेत् तदन्तेऽपि क्षत्रियोवैश्यएव च ॥
शूद्रस्त्विच्छाऽनुरोधेन विधिना वाऽन्यथाऽपि वा ।
निवेद्य देवतायै तत् संतर्प्य प्रपिबेदनु ॥ इति ॥

1. मुक्तिप्रद भवेद्दिव्यं-श्री.

एतावन्तः अत्यावश्यकधर्माः निरूपिताः। इतोऽधिकाअनेकतन्त्रावलोकनेन ज्ञेयाः। ग्रन्थविस्तरभयान्नेह लिख्यन्ते ॥

अत्र सामयिकानां कल्पसूत्रानुयायिनाम् अन्येषाम् उक्ताः मण्डलधर्माः तुल्याः। होममन्त्रः सूत्रानुयायिनाम् "आर्द्रं ज्वलति" इति मन्त्रएव, मन्त्राकाङ्क्षायां तन्त्रान्तरमन्त्रात् अस्य सन्निकृष्टत्वात्। अन्येषां स्वस्वतन्त्रोक्ता सरणिः। अत्रेयं व्यवस्था चिन्त्यते, पीठाधिकारिणा स्वकर्तृकपूजाफलसिद्धये प्रतिपत्तिसंस्कारस्य अवश्यमनुष्ठेयतया समण्डले ध्यानसमर्थोऽसमर्थः वा कामं द्रव्यस्वीकारं करोतु। सामयिकस्तु द्रव्यहोमानन्तरं शास्त्रोक्तध्यानसमर्थएव द्रव्यं हुनेत्। नान्यः। तथा हि—

अन्तर्निरन्तरमनिन्धनमेधमाने मोहान्धकारपरिपन्थिनि संविदग्नौ।
कस्मिंश्चिदद्भुतमरीचिविकासमाने विश्वं जुहोमि वसुधाऽऽदि शिवावसानम् ॥
धर्माधर्महविर्दीप्तावात्माग्नौ मनसा स्रुचा।
सुषुम्णावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥

इति मन्त्रलिङ्गेन कल्पितोध्यानप्रकारआवश्यकः। देवीयामलेऽपि—

होमेन चेतनां जित्वा ध्यायेदात्मानमात्मना ॥ इति ॥

कुलार्णवेऽपि—

तन्मैरेयं शिवं पीत्वा योन विक्रियते नरः।
जपन् शिवपरोभूत्वा समुक्तः सच कौलिकः ॥ इति ॥

परमानन्दतन्त्रेऽपि——

स्वीकृत्य तत्प्रसादं वै ध्यायेन्निश्चलमम्बिकाम् ॥ इति ॥

वीरचूडामणौ गणेश्वरसंहितायाम्—

द्रव्यमास्वाद्य विधिना मनोनिश्चलतां नयेत्।
ततोध्यायेत् परं ज्योतिरात्मज्योतिः सनातनम् ॥

इत्यादिमनोनिग्रहपूर्वकध्यानविधायकवचनानि बहूनि—

यावत् सुषुप्तता न स्यादविकारित्वमेव च।
तावदेव हुनेत् देवि निष्फलं त्वन्यथा भवेत् ॥ इति ॥
विकारे तु समुत्पन्ने ध्यानयोगबहिष्कृतः।
योगिनीनां पशुर्देवि मण्डलाच्च बहिष्कृतः ॥

इत्यधिकपात्रहोमे ध्यानभ्रंशमूलानर्थोऽपि तन्त्रे। तेनापि ध्यानावश्यकता सिध्यति। एवमादीनि बहूनि सन्ति। ग्रन्थविस्तरभयान्नेह लिखितमेतावदलमिति ॥

इत्थं च द्रव्यसेवनस्य प्रथमफलं चित्तैकाग्र्यं, तेन विना ध्यानासम्भवात्। अतएव परमानन्दतन्त्रे—

तावदेव हुनेत् देवि यावदानन्दसम्प्लुतः।
मनोनिश्चलतां याति चित्तं चापि प्रसादताम् ॥
विकारे तु समुत्पन्ने ध्यानयोगविहीनतः।
योगिनीनां पशुर्देवि मण्डलाच्च बहिष्कृतः ॥

इति अयोग्यस्य द्रव्यस्वीकारे अनिष्टं फलं दर्शयति। योगिनीतन्त्रेऽपि—

कुलद्रव्यं समाश्रित्य मनोनिश्चलतां नयेत् ॥ इति ॥

त्रिपुरार्णवेऽपि—

अयं सर्वोत्तमोधर्मः कौलमार्गोमहेश्वरि।
असिधाराव्रतसमोमनोनिश्चलहेतुकः ॥
तत्र संयतचित्तत्वं सर्वथा ह्यतिदुष्करम्।
भक्तिश्रद्धाविहीनस्य......... ॥

इत्येवमादीनि तन्त्रवचनानि, द्रव्यसेवनं मनोनिग्रहद्वारा ध्यानार्थं कर्तव्यं विपरीते बाधतइति, कोटिशः उपलभ्यन्ते। एवमादितन्त्रवचनार्थानां सङ्ग्रहं कुर्वन्नेव श्रीपरशुरामः "शिष्टैः सह" इत्युवाच। ईदृशध्यानसमर्थोव्रतादिदिवसेष्वपि अविचारेण अनाहूतोऽपि मण्डलं प्रविश्य पात्रं याचित्वा हुत्वा ध्यानं सम्पादयेत्। तदुक्तं त्रिपुरार्णवे—

एवं सामयिकोभक्त्या मानदम्भविवर्जितः।
[1]अनाहूतोऽपि वाऽऽहूतोव्रजेन्मडलमुत्तमम् ॥
व्रती वाऽपि हुनेदेव न दोषस्तत्र विद्यते।
व्रतादिशङ्कया यस्तु न व्रजेदाहूतोऽपि सन् ॥
व्रतं तस्य प्रतिहतमनर्थं च समाप्नुयात्।
तस्मात् कनिष्ठाहूतोऽपि प्रविशेदेव मण्डले ॥ इति ॥

अत्र ज्येष्ठत्वं कनिष्ठत्वं च विप्राणां दीक्षापूर्वापरभावेन ज्ञेयम्। तदुक्तं रुद्रयामले—

बालोऽपि दीक्षितः पूर्वं ज्येष्ठः सतु कुलागमे ॥ इति ॥
द्विजोऽपि दीक्षितः पश्चादन्त्यजः पूर्वदीक्षितः।
द्विजः कनिष्ठः सज्येष्ठइति शास्त्रविनिश्चयः ॥ इति ॥

1. अनाहूतोऽप्यनाहूतो—श्री.

तत्रैव वचनात् क्षत्रियादीनां पश्चात् दीक्षितोऽपि द्विजएव ज्येष्ठः । कचिदुच्छिष्टग्रहणे योनिसम्बन्धादपि ज्येष्ठत्वं प्रतिपादयति । तदुक्तं त्रिपुरार्णवे—

विद्यासम्बन्धतोवाऽपि योनिसम्बन्धतस्तथा ।
ज्येष्ठानामपि चोच्छिष्टं दीक्षितानां च भक्षयेत् ॥ इति ॥
दीक्षाहीनस्य चोच्छिष्टं जनकस्यापि दीक्षितः ।
न भक्षयेत् सकृद्वाऽपि भुक्त्वा पातित्यमाप्नुयात् ॥ इति ॥

अथ प्रसङ्गात् केन कियद्द्रव्यसेवनं कार्यं? तद्विविच्यते । तत्र बालोपास्तौ त्रिपात्रं, पञ्चदशी-मन्त्रोपदेशवतः चतुष्पात्रं, षोडश्यादिदीक्षावतः पञ्चपात्रम् । तदुक्तं परमानन्दतन्त्रे—

सौभाग्यतोपासकस्य चतुस्तत्त्वं भवेच्छिवे ।
बालाद्युपासकानां तु तत्पूजोक्तविधानतः ॥
तेषां तु तत्त्वत्रितयं अन्यत् सर्वं समं भवेत् ॥ इति ॥
दीक्षावतां पूर्णपात्रं पञ्चमं तु भवेच्छिवे ।
हुत्वा शिवाग्नौ क्रमशः त्रिचतुःपञ्चपात्रकम् ॥ इति ॥

ननु—

पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले ।
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ॥
आनन्दात् तृप्यते देवी मूर्च्छया भैरवः स्वयम् ।
वमनात् सर्वदेवास्तु तस्मात् त्रितयमाचरेत् ॥

इत्यादिकुलार्णवप्रभृतितन्त्रेष्वनियतपानस्योक्तत्वात् कथं पात्रनियमइति चेत् शृणु शास्त्रा-भिप्रायं अज्ञस्तत्त्वबुभुत्सुश्चेत् । पीत्वा पीत्वेति लिखितवचनम् "आगलान्तं पिबेद्द्रव्यं समुक्तोनात्र संशयः" इत्यादिकुलार्णववचनं यथेच्छयाऽनुरूपं न सर्वेषां, किं तु पूर्णारूढानाम्। अतएव कुलार्णवे "आगलान्तम्" इत्यस्याव्यवहितप्राक् "पूर्णाभिषेकयुक्तानां पानं देवि निगद्यते" इति प्रतिज्ञाय "आगलान्तं पिबेत् द्रव्यम्" इत्यादिवचनानि लिखितानि । पूर्णाभिषेकलक्षणमपि तत्रैव कुलार्णवे—

योनिन्दास्तुतिशीतोष्णसुखदुःखादिसम्भवे ।
समः सर्वत्र योगीशोहर्षामर्षविवर्जितः ॥ इत्यादिना,
तत्त्वत्रयश्रीचरणमूलमन्त्रार्थतत्त्ववित् ।
देवतागुरुभक्तश्च शाम्भवीमुद्रयाऽन्वितः ॥
सच पूर्णाभिषिक्तः स्यात् कौलिकोन तु दीक्षया ॥ इति ॥

ईदृशोयः पूर्णाभिषिक्तः सएव पूर्णारूढः, तस्यैव आगलान्तमिति विधानम्। अतएव अमृतारहस्ये—

ब्रह्मज्ञानी सुरां पीत्वा कुलाचारे चरन मुहुः।
भूमौ पतति तस्याङ्गे लगन्ति यदि रेणवः।
तावत्कालं रेणुसङ्ख्यं ब्रह्मलोके समोदते॥

इति वचने ब्रह्मज्ञानीति समष्टिशब्देन कुलार्णवोदितं विशिष्टार्थमाह। इदानीन्तनाः तन्त्रार्थमजानन्तोरागान्धाः स्वाधिकारम् अविचार्य पीत्वापीत्वेति तन्त्रवचनानि लोकानां दर्शयित्वा स्वयं यथेच्छाऽऽचारं कुर्वन्तः परेषां बुद्धिमपि तिरोदधिरे। ते यावच्चन्द्रदिवाकरौ तावन्नरकयातनामुपलभेयुः[1]। अत्र प्रमाणं परमानन्दतन्त्रे—

यावन्न चलते दृष्टिर्यावन्न चलते मनः।
तावत्पानं प्रकुर्वीत पशुपानमतः परम्॥
यावन्नेन्द्रियवैकल्यं यावन्न मुखवैकृतिः।
तावदेव पिबेत् द्रव्यमन्यथा पतनं भवेत्॥ इति॥

यथा साधकः स्वयोग्यताऽनुसारेण द्रव्यं स्वीकुर्यात्, एवमाचार्योऽपि योग्यतां दृष्ट्वैव पात्रं दद्यात्। तदुक्तं कुमारीतन्त्रे——

कौलिके पात्रमधिकं प्रयच्छत्यविचारयन्।
तदीयमधिकारं सः सह तेनैव मज्जति॥ इति॥

तत्रैव—

पानमेकप्रयत्नेन यावत् द्रव्यस्य वै भवेत्।
तदारम्भे भवेत् पात्रं न न्यूनं नाधिकं शिवे॥ इति॥

पानपात्रमानं नीलातन्त्रे। एकप्रयत्नसाध्यपानसाधनद्रव्यमानं पात्रं भवति इति तदर्थः। किं च तन्त्रान्तरे——

उल्लासभेदमज्ञात्वा प्राप्य मूढत्वमम्बिके।
जिह्वालोलुपभावेन चेन्द्रियप्रीणनाय च।
यः पिबेत्तं तु तामिस्रे मातृकाः पातयन्ति वै॥ इति॥

इत्थं च इदानीन्तनानां [I]अतिजितेन्द्रियाणामपि आरम्भोल्लासपर्यन्तानुधावनमेव युक्तम्। अतएवोक्तं तन्त्रे—

I. अजितेन्द्रियाणामार—श्री.

---

१. अत्र उपलभेरन्–इति व्याकरणदृष्ट्या स्यात्––

अशक्ताबुधबालानामारम्भः परिकीर्तितः ॥

आरम्भोल्लासलक्षणं तत्रैव--

यस्य यावत पात्रमुक्तमारम्भस्तस्य तावता ॥ इति ॥

प्रसक्तानुप्रसक्ते अलं पल्लवितेन। इतः शेषमग्रे उल्लासविलासे [1]चरमखण्डे वक्ष्यामः ॥ २२ ॥

देवीविसर्जनम्

**खेचरीं बद्ध्वा क्षमस्वेति विसृज्य तामात्मनि संयोजयेत् इति शिवम् ॥ २३ ॥**

**इति...कल्पसूत्रे ललितानवावरणपूजा नाम पञ्चमः खण्डः**

खेचरीं बद्ध्वा, बन्धनानन्तरं—

ज्ञानतोऽज्ञानतो वाऽपि यद्यदाचरितं शिवे ।
तव कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वरि ॥

इति क्षमाप्य विसृजेत्। विसर्गोनाम पूजार्थमाहूतायाः पुनः स्वस्थानं प्रति नयनम्। आत्मनि हृत्कमले योजयेत् स्थापयेत्। शिवमिति प्रकरणसमाप्तिद्योतकम् ॥

इति...कल्पसूत्रवृत्तौ श्रीललितानवावरणपूजा नाम पञ्चमः खण्डः

---

१. अत्र चरमखण्डे, इत्यनेन १०-खण्डे-६८-सूत्रे भाष्ये च इत्यर्थोज्ञेयः—

॥ सूत्रस्य पुनरावृत्तौ शोध्यं सूचयितव्यकम् ॥॥
॥ परिशिष्टस्थलं चैव पूर्णमायाप्रसादतः ॥ इति पञ्चमः खण्डः— श्रीः ॥

## षष्ठः खण्डः—श्यामाक्रमः

श्यामे सङ्गीतमातः पराशिवनिलये मुख्यसाचिव्यभारो-
द्वाहे दक्षे दयापूरितनिजहृदये मामकीं दैन्यवृत्तिम् ।
श्रीमत्सिंहासनेश्यां भववनपतितान् दावदग्धान्नमस्ते
त्रातुं पीयूषवर्षैः कथय परिकरं बद्धवत्यां विविक्ते ॥

### श्यामोपास्तिविधिः

श्रीभगवान् परशुरामः श्यामाक्रमं विवक्षुः तस्यामुपासकानामुपास्यत्वज्ञानोत्पत्तये, अङ्गीकृत-श्रीविद्योपासनस्य "यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति" इति श्रुत्या स्वीकृतैकदेवतोपास्तेरन्यदेवतोपासनमनिष्टजनकमिति यत् प्रतिपादितं, तेन कलुषितचेतसां कालुष्यनिवृत्तये च, आदौ तद्गुणस्वरूपं वर्णयति—

**इयमेव महती विद्या सिंहासनेश्वरी साम्राज्ञी तस्याः प्रधान-सचिवपदं श्यामा तत्क्रमविमृष्टिः सदा कार्या ॥ १ ॥**

### पराशक्तेः स्वरूपं उपास्यत्वं च

इयं वक्ष्यमाणा । इयमित्युत्तरं येति शेषः । या महती निरवधिकमहत्त्ववती सिंहासनं परशिवः स्वाधिष्ठानरूपत्वात्, तस्य ईश्वरी तन्निष्ठसृष्टिस्थितितिरोधानसङ्कल्पनिर्वाहकर्त्री । तदुक्तं शङ्करभगवत्पादैः—

[1]शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ॥ इति ॥

अगस्त्यसंहितायामपि विद्यावतीस्तुतौ—

यया देव्या विरहितः शिवोऽपि हि निरर्थकः ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ॥ इति ॥

इयं मायातो विलक्षणा चिद्रूपा, न जडस्वभावा । तदुक्तं सूतसंहितायाम्—

सदाकारा परानन्दा संसारोच्छेदकारिणी ।
सा शिवा परमा देवी शिवाभिन्ना शिवङ्करी ।
शिवाभिन्ना तया हीनः शिवोऽपि हि निरर्थकः ॥ इति ॥

१. अयं श्लोकः सुन्दरलहर्यां प्राथमिकः तत्पूर्वार्धमिदम्-

ननु—मुख्यं शिवे सृष्ट्यादिकर्तृत्वं, तन्निर्वाहकत्वमात्रं यदि शक्तेः, तर्हि मुख्य-जगत्कर्तृत्वनियन्तृत्वादि शिवनिष्ठम्। इयं च सहकारिणी। तथासति मुख्यत्वात् शिवः—एवोपास्यः न शक्तिः, इति चेत्—शृणु। क्षित्यादिकार्यजातं कारणमन्तरेणानुपपन्नम् इत्यनुपपत्त्यैव हि शिवस्य शक्तेर्वा कल्पनम्। न हि चर्मचक्षुषा शक्तिं शिवं वा पश्यामः। एवं कल्पयितुमारम्भे अत्र वेदान्तिनः—परस्य चिद्रूपस्य ब्रह्मणः धर्मोमाया, सैवाविद्या जडस्वभावा, सैव जगदुपादानं, परं ब्रह्म तु विवर्तोपादानं, अतएव जडोपादानत्वात् जगदपि जडस्वभावं, मायोपादानत्वात् मिथ्यात्वं च—इति प्राहुः। तं पक्षं तान्त्रिकाः न क्षमन्ते। तथा हि, या मायाऽविद्येत्युच्यते सा चिद्धर्मोऽन्यधर्मोवा; आद्ये धर्मधर्मिणोरभेदस्य वेदान्तिनामप्यनुमतत्वेन चिद्धर्मस्य जडत्वानुपपत्तिः। अचिद्धर्मत्वे अद्वैतहानिः, "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति प्रमाणविरोधश्च। अतः गत्यभावात सा माया चिद्धर्मइत्यवश्यं वाच्यम्। तथासति तस्याजडत्वं दूरतोनिरस्तम्। न च चिदतिरिक्ता शक्तिः नास्ति इति वाच्यम्। वयमपि तमेवार्थं ब्रूमः। परं तु पृथिवीव्यतिरिक्तगन्धाभावेऽपि धर्मोधर्मी—इति व्यवहारानुरोधेन ईषद्भेदः कल्प्यते, एवं द्वयोः चिद्रूपत्वेऽपि ईषद्भेदोव्यवहारार्थं कल्प्यः। एवं च जगदुपादानत्वं द्वयोरपि न सम्भवति, जडस्वभावत्वात् जगतः। न हि प्रकाशात् तमोभवितुमर्हति। अतः चिति जगत् सूक्ष्मरूपेण बीजे वटवृक्षवत् सर्वदा अस्त्येव। तदवयवशैथिल्यपूर्वकविस्तारसङ्कोचकर्तृत्वमेव चिति, न तु तदुपादानत्वं, यथा वणिजः प्रभाते क्रय्यवस्तूनां प्रसारणं रात्रौ सङ्कोचः तादृशं कर्तृत्वं चितः। तत्सहकारिणी चिच्छक्तिः॥

ननु चिदतिरिक्ता ईषद्भेदवती तन्निष्ठकर्तृत्वनिर्वाहिका शक्तिः, किमित्यङ्गीक्रियते चित्येव तत्कर्तृत्वमास्ताम्। अन्यथा तुल्ययुक्त्या कुलालादिष्वपि घटकर्तृत्वाश्रया एका शक्तिः सिध्येत् इति चेत्—न, श्रुतिस्मृतिलोकव्यवहाराणां सत्त्वात्। "पराऽस्य शक्तिर्विविधैव श्रूयते" इति श्रुतिः। देवीभागवतेऽपि—

शक्तिः करोति ब्रह्माण्डं सा वै पालयतेऽखिलम्।
इच्छया संहरत्येषा जगदेतच्चराचरम्॥
न विष्णुर्न हरः शक्रोन ब्रह्मा न च पावकः।
न सूर्योवरुणः शक्ताः स्वे स्वे कार्ये कथंचन॥
तया युक्ताहि कुर्वन्ति स्वानि कार्याणि ते सुराः।
कारणं [1]सैव कार्येषु प्रत्यक्षेणावगम्यते॥

1. नैव—श्री.

वस्तुजालं शक्ति[V]हीनं शक्तं कर्तुं न किञ्चन ।
शक्तं तु परमेशानि शक्त्या युक्तं यदा भवेत् ॥

इति बहुविस्तरेण । आ गोपालङ्गनमाच पण्डितम्—इदं कार्यं कर्तुं मम शक्तिरस्ति मम शक्तिर्नास्ति इति व्यवहरन्त्यविवादेन । तस्मात् बहुप्रमाणसिद्धा शक्तिः तन्निर्वाह्यं जगदपि शिवकुक्षौ सदा सूक्ष्मरूपेणास्त्येव ॥

अथवा चितोया शक्तिः तत्परिणामरूपं जगत् । तदुक्तं वासिष्ठे—
चिद्विलासः प्रपञ्चोऽयं [B]सखे ते दुःखदः कथम् ॥ इति ॥

एतेन चिच्छक्त्योः ईषद्भेदाङ्गीकारात् चितोनिर्विकारत्वबोधकश्रुतिरविरुद्धा, अत्यन्तभेदानङ्गीकारात्--अद्वैतप्रतिपादकश्रुतयोऽप्यबाधिताः । एतादृशी शक्तिः वस्तुमात्रे अनुभूयते कार्योत्पत्त्यनन्तरं न ततः प्राक् । अमुमेवार्थं भूतपञ्चकविवेके श्रीविद्यारण्यस्वामिचरणाः अप्याहुः—

निस्तत्त्वा कार्यगम्याऽस्य शक्तिर्मायाऽग्निशक्तिवत् ।
न हि शक्तिं कचित् कश्चित् बुध्यते कार्यतः पुरा ॥ इति ॥

एवं शिवनिष्ठायां तदभिन्नायां तद्धर्मरूपायां तन्निष्ठकर्तृत्वनिर्वाहिकायां सिद्धायां सैवोपास्या । न चिद्रूपः शिवः, [2]तस्यानुपास्यत्वात् उपासना नाम उपास्यनिष्ठगुणनामकीर्तनम् । शक्तिरहिते केवले गुणाभावात् निर्गुणस्य ध्यानस्तुतिकीर्तनादि कथं भवेत् । तदुक्तं योगिनीतन्त्रे—

शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते ॥ इति ॥
यतोवाचोनिवर्तन्ते अप्राप्य मनसा सह ॥ इति श्रुतिश्च ।

"नेति नेति" इति, सर्वनिषेधशेषत्वेनैव तस्य ज्ञेयत्वात्, केवलशिवविषयकज्ञानस्योपासनादिकर्मविरोधित्वेन तादृशचरमवृत्तेरुपासनासाध्यत्वात् केवलशिवस्त्वनुपास्यः । तदुक्तं देवीभागवतेऽपि—

शिवोऽपि शवतां यातः कुण्डलिन्या विवर्जितः ॥ इति ॥

योगिनीतन्त्रेऽपि—

यज्ज्ञानेऽपि महादेवि शर्म वर्म न किंचन ॥ इति ॥

किं च—यथाकथंचित् वलयाकारेण मनसः निराकारग्रहणार्थं प्रेरणेऽपि शुभाशुभधर्महीनत्वात् क्षणमात्रमपि न स्थातुमर्हति । तदुक्तं श्रीभगवद्गीतायाम्—

V हीनैः—श्री. B स च ते—श्री.

१. अत्राशुद्धानि अक्षराणि संशोध्य वाच्यानि
२. तस्य नाम, शक्त्यनवच्छिन्नस्य, ब्रह्मणः, इत्यर्थः-

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥ इति ॥

अतस्तस्यैव मनसः स्थैर्यार्थं किञ्चिद्रूपं कल्पनीयम् । यच्च परब्रह्मणि कल्पितं रूपं नामधामसहितं तदेव शक्तिपदवाच्यम् । तदप्युक्तं भागवते—

एवं सर्वगता शक्तिः सा ब्रह्मेति विविच्यते ।
सगुणा निर्गुणा चेति द्विधोक्ता सा मनीषिभिः ॥
सगुणा रागिभिः सेव्या निर्गुणा तु विरागिभिः ।
धर्मार्थकाममोक्षाणां स्वामिनी सा निराकुला ॥
ददाति वाञ्छितानर्थानर्चिता विधिपूर्वकम् ॥ इति ॥

एवमुक्तप्रमाणयुक्तिकलापैः उपास्या परा शक्तिः । परशिवश्च निर्गुणः । तद्विषयिणी वृत्तिस्तु परमपुरुषार्थरूपत्वात् अम्बोपासनासाध्येत्युपपन्नं सिंहासनेश्वरीत्वं, साम्राज्ञीत्वम् ॥

निर्गुणएव शिवः यः " बहु स्यां प्रजायेय " इति इच्छाशक्त्या युक्तः सृष्ट्युन्मुखः सएव शक्तिपदवाच्यः, शिवएव शक्तिरूपेणोपास्यश्चेति तत्त्वमवगन्तव्यम् ॥

या ईदृशी तस्याः प्रधानसचिवपदम्—अत्र सचिवपदं साचिव्यरूपधर्मपरं तस्य पदं आश्रयः श्यामेति । तस्याः यः क्रमः तस्य या विमृष्टिः अनुसरणं तत् सदाकार्यम् । अत्र सदेत्यनेन यावज्जीवं प्राप्तौ यथा अग्निहोत्रविधेः यावज्जीवं प्राप्तौ "सायं जुहोति प्रातर्जुहोति" इति वाक्यान्तरेण सङ्कोचः, तथा अस्याएव श्यामायाः प्रकरणे अग्रे "एवं नित्यसपर्यां कुर्वन् लक्षजपं जप्त्वा " इति वाक्येन[1] लक्षजपपर्यन्तं सकृत्पूजा कार्या न तु तदुत्तरमिति सङ्कोचः ॥

**श्यामायाः उपास्यतोपपत्तिः**

ननु या साम्राज्ञी सर्वनियन्त्री स्वतन्त्रा तां परित्यज्य किं तदनुवर्तिन्याः श्यामायाः उपासनेनेत्याशङ्कायां तदुपासनामुपपादयिष्यन् प्रथमं लोकदृष्टान्तेन दृढयति—

## प्राधानद्वारा राजप्रसादनं हि न्याय्यम् ॥ २ ॥

लोके राजदर्शनोत्सुकाः आदौ प्रधानमुपसेव्य तद्द्वारा राजदर्शनं गृह्णन्ति । तेन फलं सत्वरं अनायासेन भवतीति दृष्टं लोके । तद्वदत्रापि प्रथमं तत्प्रधानभूतायाः श्यामायाः प्रथममुपासनं न्याय्यमिति भावः । द्वारेत्यनेन प्रधानोपासनपूर्ववृत्तित्वं सूचितं, न्याय्यम् इत्यनेन अत्यन्तमनावश्यकताऽपि सूचिता । परंतु यः कोऽपि समर्थः सचिवादीननादृत्य स्वयमेव राजकृपां सम्पाद्य तस्मात् फलं सम्पादयतीत्ययमपि पक्षोलोके क्वचिदस्ति । तथाऽपि प्रधानद्वारा राजप्रसादनं न्याय्यं वरमित्यर्थः । अयंभावः, यश्च प्रधानदेवताकृपां साक्षात् सम्पाद-

१. इदमत्रैव षष्ठखण्डे–३७ मूलसूत्रेरित–

यितुमसमर्थः सः प्रथमं दीक्षां सम्पाद्य श्रीगणपत्युपास्तिं कृत्वा ततः श्यामोपास्तिं वाराह्युपास्तिं परोपास्तिं च विधाय तासां कृपां सम्पाद्य पश्चात् श्रीललितोपास्तिं आरभेत। समर्थस्तु दीक्षोत्तरं गणपत्युपास्त्यनन्तरं श्रीललिताक्रममारभेत। "अतिरात्रे षोडशिनं गृह्णाति," "नातिरात्रे षोडशिनं गृह्णाति" इतिवद्विकल्पः इतितत्त्वम्। फलाधिक्यकामः उक्तक्रमेण ललितोपास्तिं कुर्यात्। न्युनफलकामः गणपत्युपास्त्यनन्तरं ललितोपास्तिं कुर्यात्—इति व्यवस्था ॥ २ ॥

### प्रातःकृत्यं सन्ध्याऽन्तम्

एवमुपास्त्यधिकारिणं प्रदर्श्य उपास्तिप्रकरणं वक्तुं प्रक्रमते—

**ब्राह्मे मुहूर्ते चोत्थाय शयने स्थित्वैव श्रीपादुकां प्रणम्य प्राणानायम्य मूलादिद्वादशान्तपर्यन्तं ज्वलन्तीं परसंविदं विचिन्त्य मनसा मूलं त्रिशोजप्त्वा बहिर्निर्गत्य विमुक्तमलमूत्रोदन्तधावन-जिह्वाघर्षणकफविमोचननासाशोधनविंशतिगण्डूषान विधाय ॥ ३ ॥**

श्रीपादुकां [1]गुरुपादुकाम्। प्राणानिति, प्राणायामलक्षणमुक्तं सनत्कुमारतन्त्रे—

प्राणायामत्रयं कुर्यात् मूलेन प्रणवेन वा।
अथवा मन्त्रबीजेन यथोक्तविधिना सुधीः ॥
पूरयेत् षोडशभिर्वायुं कुम्भयेच्च चतुर्गुणैः।
रेचयेत् कुम्भकार्धेन अशक्तस्तत्तुरीयतः ॥
तदशक्तौ तच्चतुर्थैः स्यादेवं प्राणसंयमः।
प्राणायामं विना नैव पूजनादिषु योग्यता ॥ इति ॥

समयाङ्कमातृकायाम्—

इडया पूरयेद्वायुं सकृद्वै मूलविद्यया।
मध्यनाड्या कुम्भयेच्च वेदसङ्ख्या वरानने ॥
नेत्रसङ्ख्या क्रमेणैव रेचयेत् पिङ्गलाऽध्वना।
पुनः पुनः क्रमेणैव यथा वारत्रयं भवेत् ॥ इति ॥

दन्तधावनादीनां स्मृतिप्राप्तानामुक्तक्रमलाभार्थं पाठः। अतः पाठक्रमेणानुष्ठेयम्। यद्यपि प्राणायामप्रकारस्त्वग्रे[2] सूत्रेऽपि वक्ष्यते-तथाऽपि वायुधारणसमर्थानां विस्तृततया प्रदर्शनं, अशक्तानां सूत्रस्थं ज्ञेयम्। विंशतिगण्डूषानित्यन्तः शेषः स्पष्टार्थः ॥ ३ ॥

---

१. गुरुपादुकामित्यस्य–गुरुत्रयपादुकामित्यर्थे तात्पर्यम्–
२. अग्रे, नामैतत्खण्डीय–९-सूत्रे-१९४–पत्रे-इत्यर्थः

**मन्त्रभस्मजलस्नानेष्विष्टं विधाय वस्त्रं परिधाय ॥ ४ ॥**

मन्त्रस्नानमुक्तं त्रिपुरार्णवे—

वस्त्रेणार्द्रेण चाङ्गानां कृत्वा प्रोञ्छनमादितः ।
मूलं जपन् सप्तधा तु आपादतलमस्तकम् ॥
तलाभ्यां संस्पृशेत् देवि मन्त्रस्नानं प्रकीर्तितम् ।
एतत्स्नानमशक्तस्य विहितं शुद्धिहेतवे ॥ इति ॥

भस्मस्नानमुक्तं शिवरहस्ये—

शुद्धं भस्म करे धृत्वा मूलमष्टशतं जपेत् ।
सर्वाङ्गेष्वनुलेपेन भस्मस्नानमुदाहृतम् ॥ इति ॥

जलस्नानं [1]श्रीललिताप्रकरणोक्तम् । अत्र मुख्यं जलस्नानं, जलाद्यलाभे कर्मकाले प्राप्ते अशक्तौ गुरुकार्यार्थं क्षिप्रं गच्छता च मन्त्रस्नानादि कार्यम् । तदुक्तं नारदपाञ्चरात्रे—"अथ मान्त्रं शुभं शृणु" इत्युपक्रम्य,

तोयाभावे तु समये दुर्गमार्गेऽवसीदतः ।
गमने क्षिप्रसिद्ध्यर्थं गुरुकार्येष्वतन्द्रितः ॥
मन्त्रस्नानं प्रकुर्वीत.... .... .... ...इति ॥

इतोऽपि लघुस्नानं वीरतन्त्रे—

मणिबन्धादधोहस्तौ पादौ गुल्फौ तथाऽऽननम् ।
शोधयेत् स्नानमेतत् स्यात् पञ्चाङ्गं शुद्धिदायकम् ॥ इति ॥

इमानि स्नानानि शक्तितारतम्यात् अशुचित्वतारतम्याच्च व्यवस्थितानि ज्ञेयानि । अन्यान्यपि मानसिकध्यानस्नाना[2]दीनि ग्रन्थविस्तरभयात् नेह लिखितानि, तन्त्रान्तरात् द्रष्टव्यानि ॥ ४ ॥

सन्ध्यां विधत्ते—

**सन्ध्यामुपास्य सवितृमण्डले देवीं सावरणां विचिन्त्य मूलेन त्रिरर्घ्यं दत्वा यथाशक्ति सन्तर्प्य ॥ ५ ॥**

सन्ध्यामितीदमुत्पत्तिवाक्यं, अत्र कथम्भावाकाङ्क्षायामाह——सवितृमण्डले—इत्यारभ्य सन्तर्प्येत्यन्तेन । तर्पणमपि मूलमुच्चार्य श्रीश्यामां तर्पयामि स्वाहा—इति मन्त्रेण । मालिनीतन्त्रे तर्पणमन्त्रोद्धारस्य—" मूलान्ते मालीनीं प्रोच्य तर्पयाम्यग्निवल्लभाम् " इति लेखात् । प्रकृते

१. इदं श्रीक्रमे. ३ खण्ड–८८–पत्रे. ४ मूलसूत्रे भाष्ये च उक्तम् ।
२. ज्ञानस्नादीनीत्यर्थः–

मन्त्रस्यानुक्तत्वात् मन्त्राकाङ्क्षायाः तन्त्रान्तरस्थमन्त्रादरः। यथाशक्ति इत्यनेन सङ्ख्यायाः तर्पणवृत्तेरनङ्गत्वं सूचितम् ॥

अत्र निबन्धकारः एतदन्तमाह्निकं स्वतन्त्रोपास्तौ पुरश्चरणकाले च, नतु श्रीक्रमाङ्गत्वेन सहानुष्ठाने–इति जगौ। तन्न। पूर्वोक्तलौकिकन्यायदृष्टान्तेन ललितोपास्तेः पूर्वं श्यामोपास्तिः सिध्यति। तदनुष्ठानमर्यादा लक्षजपपर्यन्तमिति [1]अग्रिमवाक्येन व्यवस्थितम्। इत्थं च "सङ्गीतमातृकामिष्ट्वा संवित्साम्राज्ञीम् (इत्यादि) कोलमुखीं वरिवस्येत" इत्यग्रिमसूत्रे[2] क्त्वाप्रत्ययेन वारा पास्तिपूर्ववृत्तित्वं स्पष्टम्। इत्थंसति कोलमुखीवरिवस्यापूर्वकालसम्बन्धिनी या श्यामावरिवस्या जपश्च स सर्वोऽपि श्रीललिताक्रमारम्भाङ्गभूतः, नान्योललिताक्रमेण सह अनुष्ठीयमानः श्यामाक्रमगन्धोऽपि सूत्रे प्रतीयते। एवंसति पुरश्चरणादिकाले आह्निकम्—अन्यत्र नेति किं प्रमाणमनुसृत्य लिलेख। तदभिप्रायं सएव जानाति। वस्तुतोललिताप्रयोगानङ्गभूतश्यामाक्रमः सूत्रे अप्रसिद्धः। अङ्गभूतक्रममुद्दिश्याह्निकपाठात् अङ्गभूतेऽपि क्रमे सर्वमाह्निकं निश्शङ्कं प्रवर्ततएव ॥ ५ ॥

### यागगृहप्रवेशादि प्राणायामान्तं कृत्यम्

सन्ध्यामुक्त्वा पूजां वक्तुमारभते—

**यागगृहं प्रविश्यासने आधारशक्तिकमलासनाय नम–इत्युपविश्य ॥ ६ ॥**

अथ प्राणायामप्रकारमाह—

**समस्तप्रकटगुप्तसिद्धयोगिनी[I]चक्रश्रीपादुकाभ्योनमइति शिरस्यञ्जलिमाधाय स्वगुरुपादुकापूजां[II] च विधाय ॥ ७ ॥**

स्वगुरुपादुकापूजां विधाय। श्यामागुरुपादुका [3]वक्ष्यमाणा। तेन स्वमूर्ध्नि पुष्पाक्षतान् क्षिपेत् ॥ ७ ॥

**ऐं हः अस्त्राय फट् इत्यस्त्रमन्त्रेण अङ्गुष्ठादिकनिष्ठान्तं करतलयोः कूर्परयोः देहे च व्यापकत्वेन विन्यस्य ॥ ८ ॥**

I. 'चक्र' इति नास्ति–अ. II. गणपतिपूजां च–श्री.

१. अग्रिमवाक्येन नाम-एतत्खण्डीय-३७-सूत्रस्थवाक्येन-इत्यर्थोज्ञेयः–

२. अग्रिमसूत्रे, नाम-अग्रतन-७-खण्डीयवाराहीक्रमस्थप्रथमसूत्रगतसङ्गीतमातृकामिष्ट्वा, इत्येतद्वाक्यान्तस्थ,क्त्वा,प्रत्ययेन-इति-ज्ञेयम्–

३. एतत्खण्डीय ३२, सूत्रे–पत्रे ॥

व्यापकत्वलक्षणं [1]पूर्वमुक्तम् । अङ्गुल्यादिभेदेन मन्त्रावृत्तिः, प्रतिप्रधानमिति न्यायात् ॥ ८ ॥

**यं-इति वायुं पिङ्गलयाऽऽकृष्य देहमुपविशोष्य रं-इति वायुमाकृष्य देहं दग्ध्वा वं-इति वायुमाकृष्यामृतेन दग्धदेहभस्म सिक्त्वा लं-इति वायुमाकृष्य दृढं विधाय हंस-इति वायुमाकृष्य शिवचैतन्यमुत्पाद्य ॥ ९ ॥**

यं-इत्यस्य विशोष्य इत्यनेनान्वयः, वायुबीजत्वे शोषणकार्यक्षमत्वात् । शोषण नाम जलांशस्याकर्षणम् । वाय्वाकर्षणं तु तूष्णीमेव । इडापिङ्गले नारदीये निरूपिते—

पिङ्गला वामनासा स्यादिडा तदितरा स्मृता ॥ इति ॥

रं-इति वह्निबीजेन देहदाहः । अमृतेन अमृतबीजेन वं-इत्यनेन दग्धभस्मसेचनं पुनः शरीरोत्पादनार्थम् । लं-इति पार्थिवबीजेन सिक्तभस्मनि काठिन्यसम्पादनम् । ततः तस्मिन् हंसः-इति मन्त्रेण शिवचैतन्यसम्पादनम् ॥

एतावत्पर्यन्तं भूतशुद्धिं विधाय श्रीक्रमोक्तां प्राणप्रतिष्ठां च कुर्यात ॥ ९ ॥

**मूलमेकशउच्चार्य वायुमाकृष्य त्रिशः उच्चार्य कुम्भयित्वा सकृदुच्चार्य रेचयेत् । एवं रेचकपूरककुम्भकं त्रिधा सप्तधा दशधा षोडशधा वा विरच्य तेजोमयतनुः ॥ १० ॥**

एकशः एकवारम् । एवमग्रेऽपि रेचकपूरककुम्भकमिति द्वन्द्वसमासात् साहित्यलाभः । अत्र यद्यपि पूरकं मध्ये पतितं रेचकं प्रथमं कुम्भकं चरमम्-इति व्युत्क्रमः, तथाऽपि नात्र क्रमे तात्पर्यं, किंतु साहित्ये । क्रमस्तु पूर्वपाठानुसारेणैव । त्रिधेत्यारभ्य सङ्ख्यावृद्धौ फलाधिक्यम् । तेजोमयतनुः इत्यनेन प्राणायामक्रियायाः पापशोधकत्वं सूचितम् ॥ १० ॥

### षडङ्गादिन्यासपञ्चकम्

अथ न्यासजालं वदति—

**षडङ्गं बालासहितां मातृकां मूलहृन्मुखेषु रति[illegible]तिमनोभवान विन्यस्य ॥ ११ ॥**

---

१. पूर्वं नाम-२-खण्डे गणनायकपद्धतौ ४ सूत्रभाष्ये-७५-पत्रे-इति ज्ञेयम -

विन्यस्य इति सर्वत्रानुषज्य योज्यम्। तथा च षडङ्गं विन्यस्येत्यर्थः। [1]एतन्मन्त्रस्वरूपं उपरिष्टात् स्पष्टीकरिष्यामः। अयमेकोन्यासः। बालासहितां मातृकां विन्यस्य इति द्वितीयोन्यासः। मातृकां बहिर्मातृकाम्। न्यासस्थानानि तन्त्रान्तरादवगन्तव्यानि। [2]अग्रे वक्ष्यमाणत्रितारीकुमारीकेवलकुमार्योर्विकल्पेन प्राप्तौ तद्बाधकं केवलबालासहितामिति विशेषणम्। तेन मातृकान्यासमन्त्रे सदा बालायोगएव, अन्यत्र विकल्पेन बालायोगः। न्यासस्थानानां बहुप्रसिद्ध्या नात्र लेखः। मन्त्रस्वरूपं च—ऐं क्लीं सौः, अं नमः। एवमग्रेऽपि। मूलं मूलाधारस्थानम्। तदादित्रिषु रत्यादित्रयं विन्यसेत्। अयं तृतीयोन्यासः॥ ११॥

**मूलं सप्तदशधा खण्डयित्वा षट् ब्रह्मबिले त्रीणि ललाटे चत्वारि भ्रूमध्ये दक्षवामेक्षणयोः षट् चाष्टौ सप्तास्ये दक्षवामश्रुतिकण्ठेष्वेकैकं दक्षवामांसयोरष्टौ च दश हृदि दश दक्षवामस्तनयोरष्टावष्टौ नव नाभौ द्विः स्वाधिष्ठाने षडाधारएवं विन्यस्य॥ १२॥**

खण्डयित्वा विभज्य। विभागप्रकारं विभक्तखण्डैः क्रियमाणन्यासस्थानानि चाह— षडित्यादिना। षडित्यादिसङ्ख्यावाचकानि पदानि मूलस्थवर्णपराणि। आदिमषड्वर्णान् नमोऽन्तानुच्चार्य ब्रह्मरन्ध्रे न्यसेत्। एवमग्रेऽपि। दक्षवामेक्षणयोः षट्चाष्टावित्यत्र दक्षनेत्रे षड्वर्णाः क्रमप्राप्ताः वामनेत्रे अष्टौ यथासङ्ख्यं योज्यम्। एवमेव दक्षवामांसयोः इत्यादौ द्रष्टव्यम्। सर्वत्र त्रितारीकुमारीयोगः कार्यः। स्वाधिष्ठानं षड्दलकमलं गुह्यस्थानस्थम्। आधारोमूलाधारः, [3]सपूर्वं व्याख्यातः। अयं चतुर्थोन्यासः॥ १२॥

पञ्चममाह—

**पुनराधारादिब्रह्मबिलपर्यन्तं सप्तदशखण्डानुक्तस्थानेषु विन्यस्य॥ १३॥**

पूर्वस्माद्वैलक्षण्यं मूलाधारादिस्थानवैपरीत्यमात्रं, [I]न तु सप्तदशखण्डवैपरीत्यं प्रमाणाभावात्॥

निबन्धकारः खण्डवैपरीत्यं लिलेख। तस्य प्रमाणं तदीयेच्छैव न त्वन्यत्॥ अयं पञ्चमोन्यासः॥ १३॥

I खण्डक्रमश्च पूर्ववत्, खण्डवैपरीत्यबोधकप्रमाणाभावात्—ब.

---

१. एतदर्थमेतत्खण्डस्थपुरस्तन-१५-२०-सूत्रे, तद्भाष्ये च, द्रष्टव्ये—

२. अयं त्रितारीकुमारीमन्त्रःप्रत्यक्षः अत्रैव खण्डे २० सूत्रभाष्ये स्पष्टः। कुमारीशब्देन च त्र्यक्षरोबालामन्त्रोज्ञेयः। सोऽपि अत्रैवाधः तत्रापि च-स्पष्टः।

३. एतदाधारस्वरुपज्ञानाय ८८-पत्रे श्री गणेशक्रमे-३-सूत्रभाष्ये तथा च-१११-पत्रे-श्रीक्रमे-२८-सूत्रभाष्यं च पश्यन्तु—

मन्दिरार्चनम्

एवं न्यासजालमुक्त्वा मन्दिरार्चनं वदति—

**अमृतोदधिमध्यरत्नद्वीपे मुक्तामालाद्यलङ्कृतं चतुर्द्वारसहितं मण्डपं विचिन्त्य तस्य प्रागादिचतुर्द्वारेषु–सां सरस्वत्यै, लां लक्ष्म्यै, शां शङ्खनिधये, पं पद्मनिधये नमः–लां इन्द्राय वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय सपरिवाराय नमः–रां अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय सपरिवाराय नमः–टां यमाय दण्डहस्ताय प्रेताधिपतये महिषवाहनाय सपरिवाराय नमः–क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय सपरिवाराय नमः–वां वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय सपरिवाराय नमः–यां वायवे ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय सपरिवाराय नमः–सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय सपरिवाराय नमः–हां ईशानाय त्रिशूलहस्ताय विद्याऽधिपतये वृषभवाहनाय सपरिवाराय नमः ओं ब्रह्मणे पद्महस्ताय सत्यलोकाधिपतये हंसवाहनाय सपरिवाराय नमः श्रीं विष्णवे चक्रहस्ताय नागाधिपतये गरुडवाहनाय सपरिवाराय नमः ओं वास्तुपतये ब्रह्मणे नमः–इत्येकादशदिक्षु एकादश देवानर्चयेत् ॥ १४ ॥**

एकादशदिशश्च,–चतस्रोदिशः, चतस्रोऽवान्तरदिशः, ऊर्ध्वम्,–अधः, समस्तं चेति ज्ञेयाः । शेषं स्वयमूह्यम् ॥ १४ ॥

श्यामाक्रममन्त्रेषु बीजविशेषयोगः

श्यामाक्रमे सर्वमन्त्रेषु बीजविशेषयोगमाह—

**श्यामाक्रममन्त्राणामादौ त्रितारीकुमारीयोगः कुमारियोगोवा त्रितारी पूर्वोक्ता कुमारी बाला शेषमुत्तानम् ॥ १५ ॥**

अर्थः स्पष्टः ॥ १५ ॥

---

कर्तृगुणविशेषविधिः

कर्तुरङ्गभूतान् कांश्चित् गुणानाह—

**गन्धद्रव्येण लिप्ताङ्गस्ताम्बूलामोदितवदनः प्रसन्नमनाभूत्वा ॥ १६ ॥**

श्यामाचक्रलेखनप्रकारः

अथ श्यामाचक्रलेखनप्रकारमाह—

**सुवर्णरजतताम्रचन्दनमण्डलेषु बिन्दुत्रिकोणपञ्चकोणाष्टदलषोडशदलाष्टदलचतुर्दलचतुरस्रात्मकं चक्रराजं विलिख्य ॥ १७ ॥**

मण्डलेषु फलकेषु । पञ्चकोणं पञ्चास्रकुण्डाकारम् । निर्माणं बिन्दुमारभ्य निर्गमनरीत्या ज्ञेयम् ॥ १७ ॥

सामान्यार्घ्यविधिः

अथ सामान्यार्घ्यविधिमाह—

**मूलेन त्रिवारजप्तेन शुद्धजलेन चतुरस्रवृत्तषट्कोणत्रिकोणबिन्दून् प्रवेशेन मत्स्यमुद्रया विधाय–अं आत्मतत्त्वाय आधारशक्तये वौषट्–इत्याधारं प्रतिष्ठाप्य धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी सुश्रीः सुरूपा कपिला हव्यवाहा कव्यवाहेत्यग्निकलाअभ्यर्च्य–उं विद्यातत्त्वाय पद्माननाय वौषट्–इति पात्रं प्रतिष्ठाप्य–तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा–इति पात्रे सूर्यकलाअभ्यर्च्य–मं शिवतत्त्वाय सोममण्डलाय नमः–इति शुद्धजलमापूर्य–अमृता मानदा पूषा तुष्टिः पुष्टीरतिः धृतिः शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा पूर्णा पूर्णामृता–चेति चन्द्रकलाअभ्यर्च्य अग्नीशासुरवायुषु मध्ये दिक्षु च षडङ्गानि विन्यस्य अस्त्रेण संरक्ष्य कवचेनावकुण्ठ्य धेनुयोनी प्रदर्श्य–मूलमन्त्रेण सप्तशोऽभिमन्त्र्य तज्जलविप्रुड्भिः यागगृहं पूजोपकरणानि चावोक्ष्य ॥ १८ ॥**

[1]प्रवेशेन प्रवेशरीत्या । मत्स्यमुद्रया, सा चोक्ता तन्त्रे—

अधोमुखे वामकरे दक्षिणं तादृशं करम् ।
स्थापयेन्मत्स्यमुद्रेयं तान्त्रिकैः परिकीर्तिता ॥ इति ॥
दक्षपाणितलं देवि वामपृष्ठोपरि न्यसेत् ।
अङ्गुष्ठद्वितयं सम्यक् ऋजुरूपमधोमुखम् ॥
मत्स्यमुद्रेयमाख्याता मण्डलादिप्रकल्पने ॥

इति परमानन्दतन्त्रेऽपि । आधारलक्षणं तत्रैव—

1 "संस्कृतजलं मण्डलकरणार्थमेव न तु तत्पूरणार्थं प्रमाणाभावात्, पूरणं तु मूलानभिमन्त्रितशुद्धजलेनैव ज्ञेयम्" इत्यधिकः—ब.

आधाराण्यपि चैतेषां वर्तुलं वा त्रिकोणकम् ।
योन्याकारं च षटकोणमष्टकोणमथापि वा ॥
अपदं त्रिपदं पञ्चषट्सप्ताष्टपदं तथा ।
मध्यछिद्रं यथा पात्रपृष्ठं न स्याच्च भूगतम् ॥
अन्तर्नैव निमग्नं स्यात् तथा कर्तव्यमम्बिके ॥ इति ॥

नमोऽन्तैश्चतुर्थ्यन्तैरेतैर्नामभिः वह्निकलापूजनमाधारे कुर्यात् । नमोऽन्तत्वं चतुर्थ्यन्तत्वं सूर्येन्दुकलास्वपि द्रष्टव्यम् । पात्रं प्रतिष्ठाप्य इति—निरुक्तस्थापिताधारे इति शेषः । वह्न्यादि-कलानामभ्यर्चनं पश्चिमादिप्रादक्षिण्येन । प्रमाणमुक्तं [1]प्राक् । शेषं स्पष्टम् । अग्नीशेति—तत्प्रकारः पूर्वमेव दर्शितः[2] । अस्त्रेण अस्त्रमन्त्रेण । कवचेन कवचमन्त्रेण ॥

केचित्तु—अवकुण्ठ्येत्यनेन अवकुण्ठनमुद्राकवचमन्त्रयोः ग्रहणं कार्यम् । अवकुण्ठन-मुद्रास्वरूपमुक्तं तन्त्रे—

हस्तद्वयं मुष्टिरूपं तर्जन्यावृजुरूपके ।
युगपत् भ्रामयेत् ताभ्यां मुद्रेयमवकुण्ठिनी ॥

इति प्रजगुः ॥

धेनुः धेनुमुद्रा । इयं लोके बहुरूढा । तथाऽपि तत्प्रमाणं लिख्यते—

तर्जन्यादिचतुष्कं तु प्रोतं हस्तद्वयस्थितम् ।
दक्षतर्जन्यनामायां वाममध्यकनिष्ठिके ॥
वामतर्जन्यनामायां दक्षमध्यकनिष्ठिके ।
अधोमुखी धेनुमुद्रा ......... ॥

इति परमानन्दतन्त्रे स्थितम् । [3]योनिस्तु पूर्वमुक्ता । सप्तशः सप्तकृत्वः । तज्जलविप्रुड्भिः सामान्यार्घ्यविप्रुड्भिः ॥ १८ ॥

### विशेषार्घ्यविधिः

**ताभिरीकाराङ्कितत्रिकोण[I]वृत्तचतुरस्रं मण्डलं विधाय तस्मिन् पुष्पाणि विकीर्य पूर्ववदाधारं प्रतिष्ठाप्य अग्निकलाअभ्यर्च्य पात्रं प्रतिष्ठाप्य तस्मिन् पात्रे ह्रीं ऐं महालक्ष्मीश्वरि परमस्वामिनि ऊर्ध्व-**

I. षट्कोणवृ —श्री.

१. अत्र प्राक्शब्दार्थं, श्रीक्रमोक्त-२३-सूत्रभाष्ये १०७-पत्रे दृश्यम् ।
२. पूर्वमेव इत्यनेन—१४४-१४५—पत्रयोः—४ खण्डे ललिताक्रमे ८—मूलसूत्रे—तद्भाष्ये च अथवा उपरितन-मूलसूत्रेपि-इति ज्ञेयम् ।
३. इयं योनिमुद्रा-१७०—पत्रे-५-खण्डे-श्रीललिताक्रमीय १५ सूत्रभाष्यान्ते दृश्या—अथवा द्वि. प. $\frac{१५-८}{२}$ विषये दृश्या-

**शून्यप्रवाहिनि सोमसूर्याग्निभक्षिणि परमाकाशभासुरे आगच्छागच्छ विश विश पात्रं प्रतिगृह्ण प्रतिगृह्ण हुं फट् स्वाहेति पुष्पाञ्जलिं विकीर्य सूर्यकलाअभ्यर्च्य**

**ब्रह्माण्डाखण्डसम्भूतमशेषरससम्भृतम् ।**
**आपूरितं महापात्रं पीयूषरसमावह ॥**

**इत्यादिममापूर्य द्वितीयं निक्षिप्य अकथादित्रिरेखाऽङ्कितकोणत्रये हळक्षान् मध्ये हंसं च विलिख्य–मूलेन दशधा अभिमन्त्र्य–चन्द्रकलाः अभ्यर्च्य–अग्नीशासुरवायुषु मध्ये दिक्षु, षडङ्गानि विन्यस्य–अस्त्रेण संरक्ष्य–कवचेनावकुण्ठ्य, धेनुयोनी प्रदर्शयेत् ॥ १९ ॥**

ताभिः सामान्यार्घ्योदकसम्बन्धिनीभिः अद्भिः। ईकाराङ्कितेति त्रिकोणविशेषणम्। त्रिकोणमध्ये [I]ईकारं लिखेत् इति भावः। इदं न पूर्ववत् प्रवेशरीत्या निर्माणाभिप्रायकम्, किं तु निर्गमरीत्या, त्रिकोणमारभ्य चतुरस्रावसानपाठात्, त्रिकोणं सर्वान्तः चतुरस्रं सर्वस्मात् बहिरिति प्रायोदृष्टत्वात्। [1]पूर्ववदिति सामान्यार्घ्याधारवदित्यर्थः। [2]अग्निकलाः धूम्रार्चिरादीः अभ्यर्च्य पात्रं प्रतिष्ठाप्य इत्यत्रापि पूर्ववत् इत्यनुवर्तते, योग्यत्वात्। तेन पात्रप्रतिष्ठापने पूर्वमन्त्रलाभः[3]। आदिमद्वितीयौ प्रोक्तौ अत्र सूत्रे, तेन नात्र तृतीयचतुर्थपञ्चमाः अनुक्तत्वात्। [ नहि ] गणपतिक्रमइव मध्यमं चेतिवत् चकारोऽस्ति, अग्रे मपञ्चकमुररीकृत्येति वा लिङ्गमस्ति, येन तल्लाभोभवेत्। तस्मात् यावदुक्तम्। अश्च कश्च थश्च ते आदौ यासां ताः त्रिरेखाः। अवर्णमारभ्य विसर्गान्ता एका वर्णमयी रेखा, ततः कादितान्ता, ततः थादिसान्तेति भावः। विशेषस्यानुक्तत्वात् स्वाग्रादिप्रादक्षिण्येन, हळक्षान् त्रीन् वर्णान् त्रिषु विलिख्य मध्ये, हंस, इति उत्तरसंस्थं लिखित्वा। इदं सर्वं पात्रस्थद्रव्ये तत्संस्काररूपं लेखनम्। इत्थं च ईदृशलेखेन द्रव्यसंस्कारं भावयेत् इति तदर्थः। दशधा—एतदनन्तरं आवर्तितमूलेनेत्यस्य विशेषणम्। धेनुयोनी प्रदर्शयेत् इति [4]धेनुमुद्रां प्रदर्श्य [5]योनिमुद्रया प्रणमेत्। एतदर्घ्यसंशोधनमिति क्वचित पुस्तके पाठः ॥ १९ ॥

I. ईकारं—अ.

---

१. पूर्ववत्–नाम-अत्रैव खण्डे १९७–पत्रे १८-सूत्रोक्त-अं आत्मतत्वायेत्यादिवदित्यर्थः
२. एतत्खण्डे १९७–पत्रे मूलसूत्रे-एव एताः कलाः सन्ति —
३. अत्र पूर्वमन्त्रः, अत्रैव खण्डे–१९७–पत्रे-उपरितन-१८-मूलसूत्रे एव- उं विद्यातत्वायेत्यादिरस्ति
४. एतद्धेनुमुद्रोद्धारः १९८–पत्रे-अत्रैवानुगत-१८-सूत्रभाष्ये–अथवा द्वि. प. १५–८/१ विषयेऽस्ति
५. योनिमुद्रोद्धारश्च-१७०-पत्रे-५-खण्डे श्रीललिताक्रमे-१५ सूत्रभाष्ये–अथवा द्वि. प. १५-८/२ वि. दृश्यः–

चक्रदेवीपूजा

इत्थं पात्रासादनमुक्त्वा श्रीदेवतायाः–मूर्तिकल्पनामन्त्रमाह—

**चक्रमध्ये श्रीमातमुक्त्वा गीश्वरीमूर्तये नमः–इति मूर्तिं कल्पयित्वा भूयः श्रीमातमुक्त्वा गीश्वर्यमृतचैतन्यमावाहयामि–इत्यावाह्य–षोडशभिरुपचर्य आशुशुक्षणित्र्यक्षरक्षःप्रभञ्जनदिक्षु देव्यामौलौ परितश्च पूज्याअङ्गदेव्यः। तन्मन्त्राः सर्वजनादयः अष्टौ सप्तैकादश दश पुनर्दशाष्टाविंशतिखण्डाः त्रितारीकुमारीवागादयः सजातयः सामान्यमनुयुक्ताः ॥ २० ॥**

चक्रमध्ये इति आवाह्येत्यनेनान्वितम्। श्री०–इत्यारभ्य प्रथमनमः–इत्यन्तः उक्त्वेत्यपहाय मूर्तिकल्पनमन्त्रः। द्वितीयश्री०–इत्यारभ्य आवाहयामीत्यन्तः उक्त्वावर्जम् आवाहनमन्त्रः। षोडशोपचाराः सप्रमाणं द्वितीयखण्डे[1] दर्शिताः। आशुशुक्षणिः अग्निः, त्र्यक्षः ईशानः, रक्षः निर्ऋतिः, प्रभञ्जनोवायुः, एषां दिक्षु उक्तक्रमेण विदिक्ष्विति भावः। देव्यामौलौ मध्ये इत्यर्थः। प्रागादिदिक्षु अङ्गदेव्यः षडङ्गदेव्यः पूज्याः। तासां मन्त्रान् वक्तुं प्रक्रमते–तन्मन्त्राइति। मूलमन्त्रे सर्वजनेत्यारभ्य षट् खण्डानि षडङ्गदेवीनां मन्त्राबोध्याः। तत्रैकैकं कूटं कियद्वर्णकमिति जिज्ञासायामाह—अष्टाविति। सर्वजनेत्यादिषटखण्डानि क्रमादष्टादिसङ्ख्याकानीत्यर्थः प्रथमखण्डम् अष्टवर्णं, द्वितीयं सप्तवर्णं, तृतीयम् एकादशवर्णं, चतुर्थपञ्चमौ दशवर्णौ, षष्ठम् अष्टाविंशतिवर्णकमिति फलितम्। न केवलं मूलमन्त्रघटकोक्तसङ्ख्याकवर्णाः एव मन्त्रस्वरूपम्, अन्येऽपि वर्णायोज्याः इत्याह—त्रितारीकुमारीवाचः आदौ एषां खण्डानां, जातिः हृदयाय शिरसे०–इत्यादिः, तैः सहिताः सजातयः, सामान्यमनवोनमःस्वाहावषडित्यादयः, तैः क्रमेण युक्ताः। इत्थं च मन्त्रस्वरूपम्—ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं सर्वजनमनोहारि हृदयाय नमः। उक्तबीजानि ऐं०-इत्यादीनि सप्त, आदौ सर्वत्र योज्यानि। ७ सर्वमुखरञ्जिनि शिरसे स्वाहा। ७ क्लीं ह्रीं श्रीं सर्वराजवशङ्करि शिखायै वषट्। ७ सर्वस्त्रीपुरुषवशङ्करि कवचाय हुं। ७ सर्वदुष्टमृगवशङ्करि नेत्रत्रयाय वौषट्। ७ सर्वसत्ववशङ्करि सर्वलोकवशङ्करि अमुकं मे वशमानय स्वाहा। सौः क्लीं ऐं श्रीं ह्रीं ऐं अस्त्राय फट्, इति मन्त्रस्वरूपम्। यद्यपि मन्त्रे त्रयस्त्रिंशद्वर्णाः दृश्यन्ते सूत्रोक्ताष्टाविंशतिसङ्ख्यया विरुध्यन्ते, तथाऽपि स्वाहाऽन्ताः सप्तविंशतिवर्णाः अग्रिमषड्बीजानि मिलित्वा श्रीषोडशाक्षर्यां प्रविष्टपञ्चदशवर्णात्मककूटत्रये एकैककूटस्यैकैकवर्णत्ववत् षण्णां वर्णानामेकवर्णत्वम्। इत्थं च अष्टाविंशतिसङ्ख्योपपन्ना ॥

१. द्वितीयखण्डे-९ सूत्रभाष्ये-८२-पत्रे-दर्शिताइति ज्ञेयम्—

निबन्धकारः स्वाहाऽन्तं खण्डं चकार, तथा सप्तविंशतिवर्णात्मके उक्तगतेरप्यभावः ॥ २० ॥

### आवरणपूजा

**पश्चादावरणपूजां कुर्यात् ॥ २१ ॥**

पश्चादितीदं सूत्रं व्यर्थम् इव दृश्यते, तथाऽपि न तथा मन्तव्यम् । तथाहि—इदम् आवरणपूजोत्पत्तिवाक्यम्, अग्रिमवाक्यानि तदितिकर्तव्यताप्रपञ्चरूपाणि, "सोमेन यजेत," "ऐन्द्रवायवं गृह्णाति" इतिवत् । एतेन एकविधिविहितत्वेन एकपदार्थरूपत्वात् मध्ये आवरणावयवैकदेवतालेपेऽपि पुनः सर्वानुष्ठानं सिद्धम ॥ २१ ॥

अथ सर्वोपयोगिनीं कांचित् परिभाषामाह—

**सर्वचक्रदेवताऽर्चनानि वामकराङ्गुष्ठानामिकासन्दष्टद्वितीयशकलगृहीतश्रीपात्रप्रथमबिन्दुसहपतितैः दक्षकराक्षतपुष्पक्षेपैः कुर्यात् ॥ २२ ॥**

सर्वचक्रदेवताः गणपत्यादिपराऽन्ताः सामान्यपद्धत्या यक्ष्यमाणाअन्याश्च । श्रीपात्रं विशेषार्घ्यपात्रम् । सहपतितैरित्यनेन बिन्दुपुष्पाक्षतयोः पतनम् एककाले, इति सूचितम् ॥ २२ ॥

प्रथमावरणदेवताः तत्स्थानं चाह—

**त्रिकोणे रतिप्रीतिमनोभवान् ॥ २३ ॥**

त्रिकोणे त्रिकोणकोणेष्वित्यर्थः । अत्र क्रमस्यानुक्तत्वात् स्वाग्रादिप्रादक्षिण्यक्रमः । यद्वा—आग्नेयकोणे, ततः पश्चिमकोणे, ततऐशाने, तेनोदगपवर्गलाभः । इति प्रथमावरणम् ॥ २३ ॥

द्वितीयावरणपूजास्थानादिकं दर्शयति—

**पञ्चारमूले पुरआदिक्रमेण द्रां द्रावणबाणाय–द्रीं शोषणबाणाय–क्लीं बन्धनबाणाय–ब्लूं मोहनबाणाय–सः उन्मादनबाणाय नमः–इति तदग्रे मायाकामवाग्ब्लूं स्त्रीमुपजुष्टाः काममन्मथकन्दर्पमकरकेतनमनोभवाः ॥ २४ ॥**

नमः, इति सर्वमन्त्रेष्वनुषज्यते । पुरः प्राची । मूले पञ्चारकोणमूले । तदग्रे इति, पञ्चारकोणाग्रेष्वित्यर्थः । मायाऽऽदिपञ्चकैः क्रमेण युक्ताः कामादयः पूज्याइत्यर्थः । मन्त्रस्वरूपं तु—ह्रीं कामश्रीपादुकां पूजयामि । एवमग्रेऽपि । पूर्ववत् चतुर्थ्यन्तनमोऽन्तरहितं ज्ञेयम् । इति द्वितीयावरणम् ॥ २४ ॥

तृतीयावरणपूजादेशादीनाह—

**अष्टदलमूले ब्राह्मी-माहेश्वरी-कौमारी-वैष्णवी-वाराही-माहेन्द्री-चामुण्डा-चण्डिकाः, सेन्दुस्वरयुग्मान्त्यादयः पूज्याः। तदग्रे लक्ष्मी-सरस्वती-रति-प्रीति-कीर्ति-शान्ति-पुष्टि-तुष्टयः ॥ २५ ॥**

इन्दुना अनुस्वारेण सहिताः ये स्वरयुग्मेषु अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः—इत्यष्टसु अन्त्याः आं ईं ऊं ॠं ॡं ऐं औं अः,—इत्यष्टौ वर्णाः आदौ एभिः क्रमेण युक्ताब्राह्म्यादयः पूज्याः। मन्त्रस्वरूपम्—आं ब्राह्मीश्रीपादुकां पूजयामीति। एवमग्रेऽपि। तदग्रे इति, अष्टदलाग्रे इत्यर्थः। जातावेकवचनम्। पूज्याइत्यस्यानुषङ्गः। इति तृतीयावरणम् ॥ २५ ॥

चतुर्थावरणपूजास्थानान्याह—

**षोडशदले-वामा-ज्येष्ठा-रौद्री-शान्ति-श्रद्धा-सरस्वती-क्रियाशक्ति-लक्ष्मी-सृष्टि-मोहिनी-प्रमथिनी-आश्वासिनी-वीची-विद्युन्मालिनी-सुरानन्दा-नागबुद्धिकाः ॥ २६ ॥**

अत्र क्रियाशक्तिः विद्युन्मालिनी सुरानन्दा इत्येकैका देवता। शेषादेवताः स्पष्टाः। क्रमस्यानुक्तत्वात् देव्यग्रदलमारभ्य प्रादक्षिण्येन। इति चतुर्थावरणम् ॥ २६ ॥

पञ्चमावरणदेशादीनाह—

**अष्टदले असिताङ्ग-रुरु-चण्ड-क्रोधन-उन्मत्त-कपाल-भीषण-संहाराः सदण्डिस्वरयुग्मादिसंयुक्ताभैरवान्ताश्च भावनीयाः ॥ २७ ॥**

सदण्डीत्यत्र दण्डी अनुस्वारः, "दण्डी पञ्चदशः शून्यः" इति मेदिनीकोशात्। अनुस्वारेण सहिताः ये पूर्वोक्तस्वरयुग्मादयः अं इं उं०—इत्यादयः आदौ, तैः युक्ताः भैरवान्ताश्च ये मन्त्राः तैः पूज्याः इत्यर्थः। यथा—अं असिताङ्गभैरवश्रीपादुकां पूजयामि। एवमेवाग्रिमसप्तमन्त्राः ऊह्याः। इति पञ्चमावरणम् ॥ २७ ॥

षष्ठावरणदेवतामन्त्रादीनाह—

**चतुर्दलं मायुक्तङ्गी सिद्धलक्ष्मीश्च महामायुक्तङ्गी महासिद्ध-लक्ष्मीश्च ॥ २८ ॥**

उभयत्र युक्तेति ज्ञेयम्। तथा च मातङ्गी महामातङ्गीति सिद्धम्। शेषं स्पष्टम्। मातङ्गी-सिद्धलक्ष्मी-महामातङ्गी-महासिद्धलक्ष्म्यः चत : पूज्याः—इति विवेकः। इति षष्ठावरणम् ॥ २८ ॥

सप्तमावरणपूजामाह—

**गं गणपति-दुं दुर्गा-बंबटुक-क्षंक्षेत्रपालाः, चतुरस्रे सम्पूज्याः ॥ २९ ॥**

क्रमस्तु आग्नेयकोणमारभ्यैशानान्तकोणेषु । इति सप्तमावरणम् ॥ २९ ॥

आवरणबहिर्भूतदेवतायजनम्

श्रीक्रमे तन्त्रान्तरे आम्नायादिदेवतावत् आवरणबहिर्भूतदेवतायजनमाह—

**सां सरस्वत्यै नमः, इतिप्रभृति, वास्तुपतये ब्रह्मणे नमः–इतिपर्यन्तं पुनस्तत्रैवाभ्यर्च्य ॥ ३० ॥**

तत्रैवेति [1]पूर्वं यत्र न्यासोत्तरं पूजिताः तत्र तैरेव मन्त्रैः श्रीपादुकां पूजयामीति सहितैः । यथा सां सरस्वत्यै नमः सरस्वतीश्रीपादुकां पूजयामीति । एवमग्रेऽपि नमःपदान्ते श्रीपादुकामिति योगस्तु सूत्रे नमोऽन्तानुकरणेन सूचितः ॥

निबन्धे चतुरस्रे अमीषां पूजनमुक्तं, तन्मन्दम्, पूर्वं यत्रैकवारं पूजिताः तत्रैव पुनः पूज्याइति स्वरसतोलाभात् । लोकेऽपि-" चैत्रं गृहात् बहिः स्थापय, मैत्रं गृहे भोजय, चैत्रं तत्रैव भोजय" इत्युक्तौ कथमनुभवः श्रोतुः–इति सूक्ष्मबुद्ध्या विचारयन्त्वार्याः ॥ ३०॥

श्यामाविद्याऽऽचार्यपूजा

श्रीश्यामाविद्या[I]प्रवर्तकाचार्यपूजां तेषां स्थानं चाह—

**हंसमूर्तिपरप्रकाशपूर्णनित्यकरुणसम्प्रदायगुरूंश्चतुरस्रपूर्वरेखायामभ्यर्च्य ॥ ३१ ॥**

हंसमूर्तिश्च परप्रकाशश्च पूर्णश्च नित्यश्च करुणश्च ये ते सम्प्रदायगुरवः तान् चतुरस्रपूर्वरेखायाम् उदगपवर्गं पूजयेत्–इति तदर्थः । मन्त्रस्वरूपं च—हंसमूर्तिसम्प्रदायगुरुश्रीपादुकां पूजयामि । एवमग्रिममन्त्रेष्वपि सम्प्रदायगुर्विति योज्यम्, " द्वन्द्वान्ते श्रूयमाणं प्रत्येकं सर्वत्र सम्बध्यते " इति न्यायात् ॥ ३१ ॥

गुरुपादुकापूजा

एवं चक्रपूजां समाप्य गुरुपादुकापूजामाह—

**स्वशिरसि सामान्यविशेषपादुके अभ्यर्चयेत् ॥ ३२ ॥**

I. ' प्रवर्तकपूजाऽऽचार्य ' इति कोशेषु.

१. पूर्वं नाम १९६–पत्रे–अनुगत–१४–सूत्रे यथोक्तं तद्वत्–

सामान्यगुरुपादुकामन्त्रः [1]दीक्षाखण्डे प्रतिपादितः । विशेषगुरुपादुकामन्त्रः चरमखण्डे श्यामागुरुपादुकेत्युद्धृतः । ताभ्यां मन्त्राभ्यां स्वशिरसि पादुकाद्वयं सम्पूजयेत् ॥ ३२ ॥

देव्याः पुनःपूजा

एवं गुरुपादुकाऽर्चना आवरणपूजामुक्त्वा प्रधानदेवतापूजापुरस्सरं बलिप्रदानं विवृणोति--

**पुनर्देवीमभ्यर्च्य बालया षोडशोपचारान् विधाय ॥ ३३ ॥**

मूलेनेति शेषः । पुनरित्यनेन षडङ्गदेवताभ्यः प्राक् प्रधानदेव्यर्चनं ज्ञापितम् । बालयेति स्पष्टम् ॥ ३३ ॥

बलिदानम्

बलिदानप्रकारं दर्शयति—

**शुद्धजलेन त्रिकोणवृत्तचतुरस्रं विधा[I]याधान्नपूर्णसलिलं सादिमोपादिममध्यमं सु[स]गन्धपुष्पं साधारं पात्रं निधाय ॥ ३४ ॥**

शुद्धजलेन कलशस्थेन । अर्धान्नपूर्णं सलिलं यस्मिंस्तत् । आदिमं प्रथमम् उपादिमं द्वितीयं—मध्यमं तृतीयम् एभिः सहितं सुगन्धपुष्पं यत्र, ईदृशम् आधारसहितं बलिपात्रं निधाय स्थापयित्वा ॥ ३४ ॥

बलिदानमन्त्रान् तदितिकर्तव्यतां च दर्शयति—

**श्रीमातमुक्त्वा गीश्वरीमं बलिं गृह्ण गृह्ण हुं फट् स्वाहा श्रीमातमुक्त्वा गीश्वरि शरणागतं मां त्राहि त्राहि हुं फट् स्वाहा क्षेत्रपालनाथेमं बलिं गृह्ण गृह्ण हुं फट् स्वाहा—इति मन्त्रत्रयेण वामपार्ष्णिघातकरास्फोटसमुदञ्चितवक्त्रनाराचमुद्राभिः बलिं प्रदाय ॥ ३५ ॥**

श्रीमातमिति हुंफट् स्वाहेत्यन्तं मन्त्रत्रयम् । नाराचमुद्रा परमानन्दतन्त्रे—

विमुष्ट्यङ्गुष्ठतर्जन्यावूर्ध्वाङ्गुष्ठाग्रतर्जनी ।
हस्तद्वयगता चैवं मुद्रा नाराचसंज्ञिता ॥ इति ॥

अयमर्थः,—प्रथमं हस्तद्वये मुष्टिभावं सम्पाद्य तस्यानिर्गते विमुष्टी ये अङ्गुष्ठतर्जन्यौ तयोर्मध्ये ऊर्ध्वाग्रमङ्गुष्ठं प्रागग्राम् ऋजुरूपां तर्जनीं कुर्यात् । इयं नाराचमुद्रेत्यर्थः ॥ ३५ ॥

I य तस्मिन् पुष्पाणि विकीर्यार्धा—श्री.

१. दीक्षाखण्डे ६६-पत्रे ४१ सूत्रे तद्भाष्ये च

### सुवासिनीपूजादि

एवं बलिप्रदानक्रममुक्त्वा सुवासिनीपूजाऽऽदिकमुपदिशति—

**श्यामलां शक्तिमाहूय बालया तामभ्यर्च्य तस्याहस्तआदिमोपादिमौ दत्वा तत्त्वं शोधयित्वा तच्छेषमुररीकृत्य योग्यैः सह हविश्शेषं स्वीकुर्यात् ॥ ३६ ॥**

अभ्यर्च्येति विशेषानुक्तेः यथाविभवम् । तत्त्वं शोधयित्वा इत्यनेन तत्त्वशोधनमन्त्राः अपि प्राप्ताः, ते च मन्त्राश्चत्वारः प्रसिद्धाः[1] । तैः पात्रचतुष्टयं ग्राहयित्वा चतुर्थपात्रं सशेषं ग्राहयित्वा तच्छेषं स्वयम् उररीकुर्यात् । हविश्शेषप्रतिपत्तिमाह—योग्यैरिति । योग्यपदार्थः श्रीक्रमोक्तशिष्टपदेन व्याख्यातः[2] । इत्थं च तस्य प्रयोजनं, तदितिकर्तव्यता, तत् सर्वमपि श्रीक्रमोक्तप्रकारेणावगन्तव्यं भवति ॥ ३६ ॥

### श्यामापूजाऽवधिः

एवं सङ्गीतमातृकापूजा कियत्कालं कर्तव्या; इत्यवध्याकाङ्क्षायां तदवधिमाह—

**एवं नित्यसपर्यां कुर्वन् लक्षजपं जप्त्वा तद्दशांशक्रमेण च होमतर्पणब्राह्मणभोजनानि विदध्यात् ॥ ३७ ॥**

एवम् उक्तप्रकारेण नित्यसपर्यां नित्यपूजाम् । अत्र कुर्वन्नित्यनेन पूजनस्य जपाङ्गत्वं गमयति । तथा हि—यदि पूजा प्रधानं जपश्चाङ्गं स्यात् तर्हि, यावत्पर्यन्तं लक्षजपः तावत् पूजेति कथनं विरुध्येत। न हि अङ्गानुसारिणी प्रधानावृत्तिः लोके वेदे च दृष्टा । " यावत् भटोधावति तावत् राजा धावति " इति न हि ब्रूते। " यावत् राजा धावति तावत् भटोधावति " इति व्यवहारोऽस्ति । अतोजपः प्रधानं, तदवधित्वस्य पूजायां कथनात् । अतएव जपसमाप्तौ पूजानिवृत्तिः । लक्षजपं जप्त्वेति लक्षसङ्ख्याविशिष्टजपोऽनेन विधीयते । तद्दशांशक्रमेण—होमोजपदशांशं, तद्दशांशं तर्पणं, तद्दशांशं ब्राह्मणभोजनमित्यर्थः ॥ ३७ ॥

### श्यामामनुजापिधर्माः

अथैतन्मनुजापिधर्मानाह—

**एतन्मनुजापी न कदम्बं छिन्द्यात् गिरा कालीति न वदेत् वीणावेणुनर्तनग.यनगाथागोष्ठीषु न पराङ्मुखोगच्छेत् गायकं न निन्द्यात् ॥ ३८**

१. इमे तत्वमन्त्राः त्रयः दीक्षाप्रकरणे-६२-पत्रे ३९ सूत्रभाष्ये सन्ति, चतुर्थश्चमन्त्र; सर्वतत्यायस्वाहेति ज्ञेयः ।। इति तत्वमन्त्रचतुष्टयं ज्ञेयम् ।।

२. १७६-पत्रे-पाश्चात्यपञ्चमखण्डीय २२ सूत्रे तद्भाष्ये च-शिष्टपदार्थः स्फोटितः

एतन्मनुजापी श्यामामनुजापीत्यर्थः । एते धर्माः न जपसमकालिकाः, किं तु जप मारभ्य यावज्जीवं; " तस्मादग्निचिद् वर्षति न धावेत् " इतिवत् ॥ ३८ ॥

ललितोपासकधर्माः

एवं श्यामोपासकानां धर्मानुक्त्वा प्रसङ्गात् प्राधान्याच्च ललितोपासकधर्मानप्याह—

**ललितोपासकोनेक्षुखण्डं भक्षयेत्–न दिवा स्मरेद्वार्तालीं–न जुगुप्सेत सिद्धद्रव्याणि–न कुर्यात् स्त्रीषु निष्ठुरतां–वीरस्त्रियं न गच्छेत्–न तं हन्यात्–न तद्द्रव्यमपहरेत्–नात्मेच्छया मपञ्चकमुररीकुर्यात्–कुलभ्रष्टैः सह नासीत–न बहु प्रलपेत–योषितं सम्भाषमाणामप्रतिसम्भाषमाणोन गच्छेत्–कुलपुस्तकानि गोपायेत्–इति शिवम् ॥ ३९ ॥**

**इति...कल्पसूत्रे श्यामाक्रमोनाम षष्ठः खण्डः**

इक्षुखण्डमित्यनेन तद्विकाराणां गुडशर्करादीनाम् अदोषः सूचितः । वार्तालीं वाराहीम्। सिद्धद्रव्याणि मपञ्चकरूपाणि न जुगुप्सेत स्वमनसाऽपि न निन्द्यात् । निष्ठुरतां नासिकाच्छेदनादि । वीरस्त्रियमिति षष्ठीतत्पुरुषः, न कर्मधारयः । तथा सति अग्रे ' न तं हन्यात्' इत्यत्र, पुंस्त्वस्यानन्वयापत्तेः । अतोबाधकसत्त्वात् लघोरपि कर्मधारयस्य त्यागः । वीरस्त्रियम् इत्यत्र वीरपदार्थश्च, निर्मूलपराहतद्वैतभावः । तदुक्तं तन्त्रे—

अहमि प्रलयं कुर्वन् इदमः प्रतियोगिनः ।
सः वीरइति विज्ञेयः स्वात्मानन्दनिमग्नधीः ॥

तं वीरम् । तद्द्रव्यं वीरद्रव्यम्। आत्मेच्छया स्वेन्द्रियतृप्तये उररीकुर्यात् स्वीकुर्यात्। कुलभ्रष्टैः–प्रथमं कुलमार्गमङ्गीकृत्य जन्मान्तरांहसा तत्रोत्पन्नाविश्वासाः सन्तोये स्वीकृतं मार्गं परित्यजन्ति ते कुलभ्रष्टाः । तदुक्तं देवीभागवते—

कुलमार्गं समाश्रित्य जन्मान्तरकृतांहसा ।
तन्मार्गं त्यजता साकं न तिष्ठेन्न च संवदेत् ।
ततोवरः पशुर्ज्ञेयः तं दृष्ट्वाऽप्सु[1] सुसंस्पृशेत् ॥ इति ॥

न बहुवचन प्रलपेत इति, तैः साकमेव। बहुपदेन स्वमार्गगुप्तये तज्जनितानर्थपरिहारार्थं यावदर्थसम्भाषी भवेत्–इति ज्ञापितम् । अप्रतिसम्भाषमाणः प्रत्युत्तरमदत्वा । कुलपुस्तकानि कुलशास्त्रपुस्तकानि । शिवमित्यस्य व्याख्यानं पूर्ववत् ॥

इति...कल्पसूत्रवृत्तौ श्यामाक्रमोनाम षष्ठः खण्डः

1 अप्सु संविशेत्—श्री.

---

सूत्रस्यपुनरावृत्तौ शोध्यं सूचयितव्यकम् ।
परिशिष्टस्थलं चैव पूर्णमायाप्रसादतः॥ इति षष्ठः खण्डः ॥ श्रीः–

## सप्तमः खण्डः—वाराहीक्रमः

मातर्वाराहि जाते तव चरणसरोजार्चनं वा जपं वा
कर्तुं शक्तोन चाहं तदपि च सदये मय्यतस्त्वां हि याचे ।
यस्त्वां दंष्ट्राशिताग्रां त्रिनयनलसितां चारुभूदारवक्त्रां
मूर्तिं चित्ते विधत्ते तदरिगणविनाशोऽस्तु तस्मिन् क्षणे वै ॥

### कोलमुखीवरिवस्याविधिः

अथ वाराह्युपासनां वक्तुं प्रक्रमते—

**इत्थं साङ्गां सङ्गीतमातृकामिष्ट्वा संवित्साम्राज्ञीसिंहासनाधिरूढायाललितायामहाराज्ञ्यादण्डनाथिकास्थानीयां दुष्टनिग्रहशिष्टानुग्रहनिरर्गलाज्ञाचक्रां समयसङ्केतां कोलमुखीं विधिवद्वरिवस्येत् ॥ १ ॥**

इत्थं पूर्वोक्तप्रकारेण साङ्गां सावरणां सङ्गीतमातृकां मातङ्गीमिष्ट्वा सम्पूज्य उपास्य इत्यर्थः । नानेन वाराहीसङ्गीतमातृकयोः अग्निं चिन्वेतिवदङ्गाङ्गीभावः प्रतिपाद्यते, उभयोरपि ललिताङ्गत्वस्य प्रमाणान्तरसिद्धत्वात् । किं तु अनेन सङ्गीतमातृकायागोत्तरकालस्य श्रीवाराह्युपासनाङ्गत्वमात्रं विधीयते । संविदः परशिवस्य या साम्राज्ञी पट्टमहिषी तद्रूपायाः, सिंहासनं राज्ञः सदसि सर्वोत्तमत्वेनावस्थितमासनं तदधिरूढायाललितायामहाराज्ञ्यादण्डनायिकायाः यत् स्थानं (महाराष्ट्रभाषायां ''कोत्तवाल्चावडि''-इति प्रसिद्धं) तदीया स्वामिनी दुष्टनिग्रहाधिकारवती, या, तामितिफलितोऽर्थः । एतेन ललिताङ्गत्वं सूचितम्—अप्रधानत्वात् । अस्याअधिकारं विवृणोति—दुष्टनिग्रहेत्यादिना—। दुष्टनिग्रहादौ निरर्गलम् अन्यानपेक्षं यदाज्ञाचक्रम् (आज्ञाशक्तिः ) तद्वतीम् । केचन सेवकाः स्वामिनमविचार्य निग्रहानुग्रहादिकं कर्तुमसमर्थाः, तथा नेयमिति भावः । एतेन श्रीललितायाअतिप्रीतिपात्रमिति ध्वनितं भवति । समयोगुप्तः सङ्केतः शास्त्रपद्धतिर्यस्याः तां, ''समयोरहसि प्रोक्तः काले कार्यक्षमेऽपि'' च इति [I]त्र्यक्षरकोशः । सङ्केतः शास्त्रपन्थानौ[B] इति वैजयन्ती । एतेन अतिगोप्येयं विद्या इति सूचितम् । कोलः वराहः, ''कोलः पोत्री किरिः किटिः'' इत्यमरः । तस्य मुखमिवमुखं यस्याः तां विधिवत् वक्ष्यमाणविधिना । एतेनेतरदेवतोपास्तिवत् किञ्चिदङ्गलोपेन तस्मादपूर्वं, तद्वारा देवताप्रीतिश्च न भविष्यति इति सूचितम्, अन्यथा विधिवदित्यस्य अनुवादकत्वापत्तेः । वरिवस्येत पूजयेत् । इदमुत्पत्तिवाक्यम्—॥ १ ॥

I विश्वकोशः-श्री.

B सदनं-अ.

### महारात्रे अनाहतध्वनेरनुसंधानम्

तत्र कथम्भावाकाङ्क्षायामाह—

**तत्रायं क्रमो महारात्रे बुद्ध्वा स्वहृदयपरमाकाशे ध्वनन्तमनाहतध्वनिमूर्जितानन्ददायकमवमृश्य ॥ २ ॥**

तत्र वाराह्युपास्तौ अयं वक्ष्यमाणः क्रमः प्रकारः। महारात्रे इति—धूर्तस्वामिभाष्ये "महारात्रिस्त्रिभागावशिष्टा रात्रिः" इति। यद्वा—महारात्रिः निशीथः, "महारात्रिसमुत्पन्नः कृष्णोगोपालनन्दनः" इति ब्रह्मवैवर्तात्, कृष्णजन्मार्धरात्रे इति प्रसिद्धत्वात्। तस्मिन् समये बोधोत्तरकालीनक्रियामाह—स्वहृदयेति। स्वहृदयरूपोयः परमउत्कृष्टआकाशः तस्मिन् ध्वनन्तं शब्दं कुर्वन्तम् अनाहतस्य द्वादशदलकमलस्य ध्वनिं कराभ्यां कर्णपिधाने श्रूयमाणोयः शब्दः सोऽनाहतशब्द–इत्युच्यते। समध्यरात्रे बाह्यशब्दविरमे कर्णपिधानाभावेऽपि अनुभूयते। कथमभूतम्? ऊर्जितः सिद्धोयआनन्दः तस्य दायकम् अभिव्यञ्जकम् अवमृश्य अनुसन्धाय कंचित् कालं श्रुत्वेत्यर्थः ॥ २ ॥

### शिवादिगुरुनमस्कारः

**शिवादिश्रीगुरुभ्योनमः,–इति मूर्ध्नि बध्नीयादञ्जलिम् ॥ ३ ॥**

शिवादि इति स्पष्टम् ॥ ३ ॥

### वाराहीक्रममन्त्रेषु बीजविशेषयोगः

वाराहीपद्धतौ सर्वमन्त्रेषु बीजविशेषस्य योगमाह—

**वाचमुच्चार्य ग्लौम्–इति च पद्धतावस्यां सर्वे मनवोजप्याः ॥४॥**

अस्यां पद्धतौ सर्वमन्त्रादौ, ऐं ग्लौं–इति योज्यमित्यर्थः ॥ ४ ॥

### भूतशुद्धिः

अथ भूतशुद्धिं विधत्ते—

**मूलादिषण्मन्त्रैः यथामन्त्रं लिङ्गदेहं शोधयेत् ॥ ५ ॥**

मूलादिषण्मन्त्रैः [1]वक्ष्यमाणैः, यथामन्त्रं, मन्त्रे यथा लिङ्गमस्ति तथा—लिङ्गदेहं सूक्ष्मदेहं शोधयेत् ॥ ५ ॥

तान् षण्मन्त्रानाह—

**मूलशृङ्गाटकात् सुषुम्नापथेन जीवशिवं परशिवे योजयामि स्वाहा—यं सङ्कोचशरीरं शोषय शोषय स्वाहा—रं सङ्कोचशरीरं**

१. अधःस्तनसूत्रे एव वक्ष्यमाणैरित्यर्थः—

**दह दह पच पच स्वाहा—वं परमशिवामृतं वर्षय वर्षय स्वाहा—लं शाम्भवशरीरमुत्पादयोत्पादयस्वाहा—हंसः सोहमवतरावतर शिवपदात् जीव सुषुम्णापथेन प्रविश मूलशृङ्गाटकमुल्लसोल्लस ज्वल ज्वल प्रज्वल प्रज्वल हंसः सोहं स्वाहा–इति भूतशुद्धिं विधाय ॥ ६ ॥**

स्वाहेत्यत्रैकमन्त्रसमाप्तिः । सुषुम्णामार्गेण परशिवे शिवयोजनशोषणदाहनाप्लावन शाम्भवशरीरोत्पत्तिजीवस्वस्थाननयनानि क्रमेण षण्मन्त्रैः कुर्यात् ॥ ६ ॥

एकचत्वारिंशत् स्थानेषु द्वितारीन्यासः—

अथ मातृकासम्पुटितबीजाभ्यां न्यासमाह—

**मातृकासम्पुटितां द्वितारीं काननवृत्तद्व्यक्षिश्रुतिनासागण्डोष्ठ दन्तमूर्धास्यदोःपत्सन्ध्यग्रपार्श्वद्वयपृष्ठनाभिजठरहृद्दोर्मूलापरगलकक्षहृदादिपाणिपादयुगलजठराननेषु–विन्यस्य ॥ ७ ॥**

मातृकाभिः आदिक्षान्तैः सम्पुटितां, सम्पुटितलक्षणमुक्तं [1]प्राक् । द्वितारी प्रकृतत्वात् ऐं ग्लौं, तां । तद्यथा—आदिक्षान्तं प्रथमं सबिन्दु उच्चार्य–मध्ये ऐं ग्लौं–इति वर्णद्वयं पुनरपि आदिक्षान्तं, ततोनमःपदं न्यासरूपत्वात् । एवं वक्ष्यमाणैकचत्वारिंशत्स्थानेषु न्यसेदित्यर्थः । कं शिरः, " कं शिरोऽम्बुनोः " इत्यमरः । आननवृत्तं मुखवृत्तम् अक्षिद्वयं श्रोत्रद्वयं नासाद्वयं गण्डद्वयम् ओष्ठद्वयं दन्तपङ्क्तिद्वयं मूर्धा शिरः आस्यं गुहारूपं दोर्द्वयं पादसन्धि द्वयं पादाग्रद्वयं पार्श्वद्वयं पृष्ठः नाभिः जठरं कुक्षिः हृद्वक्षः दोर्मूलं गलस्यापरभागः पाश्चात्यदेशः कक्षः, पुनर्वामपार्श्वे हृदादिकक्षपर्यन्तं, पाणिद्वयं पादद्वयं पुनर्जठरं पुनराननम्–एवम् एकचत्वारिंशत्स्थानेषु मातृकासम्पुटितां द्वितारीं न्यसेत् ॥

यत्तु निबन्धे, अं ऐं ग्लौं अं नमः–इति रीत्या क्षान्तवर्णैः प्रत्येकसम्पुटितबीजद्वयं मातृकास्थानेषु न्यसेत् इति, तत् तुच्छम् । तथाहि—मातृकास्थानलेखस्य मूलं तन्त्रान्तरं कल्पसूत्रं वा । नाद्यः, एकचत्वारिंशत्स्थानपाठवैयर्थ्यात् । न द्वितीयः, एकपञ्चाशत्स्थ ना भावात् तन्त्रान्तरोक्तमातृकास्थानक्रमाभावाच्च । तस्मात् निबन्धलेखः लिखितसूत्रविरुद्धः हेयः ॥

इति द्वितारीन्यासः ॥ ७ ॥

**अङ्गुलीन्यासः**

अथाङ्गुलीन्यासमाह—

**अन्धे प्रभृति सप्तार्णपञ्चकमङ्गुष्ठादिकनिष्ठान्तम् ॥ ८ ॥**

---

१ इदं सम्पुटितलक्षणं १०९–पत्रे श्रीक्रमे–३–खण्डे–२६ भाष्ये–अस्ति–२७ प.

अत्रापि पूर्वसूत्राद्विन्यस्येत्यस्यानुवृत्तिः । अन्धे अन्धिनि नमः—इत्यादि स्तम्भे स्तंभिनि नमः, इत्येतैः पञ्चभिः सप्तार्णमन्त्रैः अङ्गुष्ठादिकनिष्ठान्तं क्रमेण विन्यस्य । मन्त्रस्वरूपं तु—अन्धे अन्धिनि नमः अङ्गुष्ठाभ्यां नमः । एवमग्रेऽप्यूह्यम् ॥

यत्तु निबन्धे अन्धे(अन्धिनि)नमः-हृदयाय नमः—इति लेखनं तदत्यन्तमशुद्धम्—अङ्गुष्ठादिकनिष्ठान्तम्—इति सूत्रे विद्यमाने हृदयादिप्रवेशस्य अन्धलेखतुल्यत्वात्— ॥

इत्यङ्गुलीन्यासः ॥ ८ ॥

षडङ्गन्यासः

अथ हृदयादिन्यासमाह—

**वाङ्नमोभगवतीत्यारभ्य त्रयोदशभिर्हृदयं, षड्भिः शिरः—दशभिः शिखां, सप्तभिः सप्तभिः सप्तभिः कवचनेत्रास्त्राणि, विन्यस्य ॥ ९ ॥**

वागित्यारभ्य मूल मन्त्रत्रयोदशादिमवर्णैः हृन्मन्त्रसहितैः हृदये, तदग्रिमषड्वर्णैः शिरोमन्त्रसहितैः शिरसि, तदग्रिमदशवर्णैः शिखामन्त्रसहितैः शिखायाम्—तदग्रिमसप्तवर्णैः कवचमन्त्रसहितैः कवचे-तदग्रिमसप्तभिः नेत्रमन्त्रसहितैः नेत्रेषु—तदग्रिमसप्तवर्णैः अस्त्रमन्त्रसहितैः अस्त्रं च विन्यसेत् । मन्त्रस्वरूपम्—यथा, ऐं ग्लौं ऐं नमोभगवति वार्तालि वार्तालि हृदयायनमः । एवमग्रेपि योज्यम् । इति हृदयादिषडङ्गन्यासः ॥ ९ ॥

आत्मालङ्करणम्

**गन्धाभिरलङ्कृत्य अर्घ्यं शोधयेत् ॥ १० ॥**

आदिपदेन वस्त्रभूषणादिपरिग्रहः । आत्मानमिति शेषः । अर्घ्यं शोधयेदित्यस्य अग्रिमसूत्रेण सहान्वयः ॥ १० ॥

अर्घ्यशोधनम्

अथ अर्घ्यशोधनमाह—

**आत्मनोऽग्रभागे गोमयेन विलिप्ते, हेतुमिश्रितजलेन चतुरस्रं वर्तुलं षट्कोणं त्रिकोणमन्तरान्तरं-विलिख्य-अर्घ्यशोधनमनुभिः श्यामाक्रमोक्तैः[1] आधारार्घ्यपात्राणि संशोध्य-सामान्येनाभ्यर्च्य-तदर्घ्यं वषडित्युद्धृत्य-स्वाहेति संस्थाप्य-हुं-इत्यवकुण्ठ्य[2]-वौषट् इत्यमृतीकृत्य-फडिति संरक्ष्य-नमः-इति पुष्पं निक्षिप्य-मूलेन निरीक्ष्य-तत्पृषतैः पावयित्वा सपर्यावस्तूनि ॥ ११ ॥**

---

१. नाम १९९-पत्र९४श्यामाक्रमस्थ-१९ सूत्रोक्तैरित्यर्थः-

२. द्वि. प. शि. १५-८ विषयोद्दश्यः

हेतुमिश्रितेन प्रथममिश्रितेन । चतुरस्रादिमण्डलं प्रवेशरीत्या, चतुरस्रस्य सर्वबाह्यत्वेन भूरिदर्शनात् । अन्तरान्तरं परस्परमसंलग्नं यथा तथा मण्डलं कुर्यात् इत्यर्थः । अत्र विशेषांशमुक्त्वा शेषधर्मानतिदिशति—अर्घ्यशोधनेति । सामान्येन समस्तमूलमन्त्रेण । शेषं स्पष्टम् ॥

अत्र निबन्धे श्यामाक्रमोक्तैरिति सूत्रे उपलभ्यमाने श्रीक्रमोक्तेन क्रमेण सामान्यविशेषार्घ्ये आसादयेत् इति, साहसेन यत् लिलेख तस्य साहसं धर्मे तस्यैव शोभायै भूयात् ॥

तदर्घ्यमिति सपर्यावस्तूनीत्यन्तं स्पष्टोऽर्थः । एतावत्पर्यन्तं विहितमर्घ्यशोधनं सामान्यविशेषार्घ्ययोः समानम्, अविशेषेणोक्तेः ॥ ११ ॥

**अनन्तरकर्तव्यन्यासाः**

पुनरप्यर्घ्यशोधनानन्तरं कर्तव्यन्यासानाह—

**शिरोवदनहृद्गुह्यपादेषु पूर्वोक्तसप्तकपञ्चकं विन्यस्य विद्यामष्टधा खण्डयित्वा, पादादिजानु-जान्वादिकटि-कट्यादिनाभि-नाभ्यादिहृदय-हृदयादिकण्ठ-कण्ठादिभ्रूमध्य--भ्रूमध्यादिललाट--ललाटादिमौलिषु-एकत्रिंशत् सप्त सप्त सप्त सप्त सप्त पञ्चत्रिंशदेकादशार्णखण्डान् मातृकास्थानेषु मूलमनुपदानि च न्यस्य ॥ १२ ॥**

शिरोवदनेति । [1]पूर्वोक्तसप्तार्णमन्त्रपञ्चकं शिरआदि पञ्चसु स्थानेषु न्यसेत्— । पादद्वयं मिलित्वैकं स्थानम् । विद्यामिति—मूलविद्याम्—अष्टधा खण्डयित्वा विभज्य—क्रमेण अष्टखण्डानष्टसु स्थानेषु विन्यसेदित्यर्थः । स्थानानि तानि कानि, इत्याकाङ्क्षायामाह—पादादिजान्विति, ललाटादिमौलिष्वित्यन्तेन ।

पादादिजान्वित्यत्र जानुपर्यन्तमिति तदर्थः । तेन प्रथमखण्डन्यासे जान्ववयवलेशोन— । एवमग्रेऽपि । अष्टधा खण्डयेदित्युक्तम् । तत्रैकखण्डे कियन्तोवर्णाः । इत्याकाङ्क्षायामाह एकत्रिंशदित्यादिना । मूलस्य खण्डाष्टकं क्रमादेकत्रिंशदादिसङ्ख्याकं भवतीत्यर्थः—। इत्यष्टखण्डन्यासः ।

मूलपदन्यासमाह—मातृकास्थानेषु इति— । मातृकास्थानानि—शिरः १ मुखवृत्तं २—नेत्रद्वितयं—४—कर्णद्वयं—६—नासाद्वयं—८—कपोलद्वयम्—१०—ओष्ठद्वितयं—१२—दन्तपङ्क्तिद्वयं, १४—जिह्वा, १५—ब्रह्मरन्ध्रं, १६—दक्षदोर्मूलं, १७—बाहुमध्यं, १८—मणिबन्धः १९—अङ्गुलीमूलम्—२०—अङ्गुल्यग्रम्—२१—एवं वामदोर्मूलादारभ्य अङ्गुल्यग्रान्तं पञ्च—२६—दक्षोरुमूलं—२७—तज्जानु—२८—तत्पादसन्धिः—२९—तत्पादाङ्गुलीमूलं—

१. २१०—पत्रे—एतत्खण्डस्थ-८-सूत्रभाष्योक्तसप्तार्णमन्त्रपञ्चकमित्यर्थः

३०–तदङ्गुल्यग्रम्–३१––एवं वामभागे पञ्च–३६–पार्श्वद्वयं–३७–पृष्ठं–३८–नाभ्यूरू जठराणि, ४१–हृदि–४२––स्कन्धद्वयं–४४–गलपरभागं–४५–हृदयादिदक्षपाण्यन्तं, ४६–हृदयादिवामपाण्यन्तं, ४७–हृदयादिदक्षपादान्तं, ४८–हृदयादिवामपादान्तं, ४९–नाभिमूर्धनी, ५१–एवमेकपञ्चाशत् स्थानानि। अत्र प्रमाणं परमानन्दतन्त्रे–

मस्तके मुखवृत्ते च नेत्रयोः श्रोत्रयोर्नसोः।
गण्डोष्ठदन्तयुगले जिह्वायां ब्रह्मरन्ध्रके॥

पाणिद्वये मूलमध्यमणिबन्धेषु वै क्रमात्।
शिखामूले तदग्रे च तद्वत् पदयुगे न्यसेत्॥

पार्श्वद्वये पृष्ठनाभिजठरेषु तथा हृदि।
स्कन्धयोर्गलपृष्ठे च हृदयात् पाणिपादयोः॥

नाभौ मूर्ध्नि च देवेशि क्रमादादींस्तु विन्यसेत्॥

पाणिद्वये इति, षष्ठ्यर्थे सप्तमी। शाखामूले, अङ्गुलिमूले। एवं एकपञ्चाशत्स्थानेषु मूलमन्त्रस्य एकपञ्चाशतपदानि न्यसेत्। तानि चैकपञ्चाशतपदानि, ऐं ग्लौं ऐं १, नमः–२, भगवति ३, वार्तालि ४, वार्तालि ५, वाराहि ६, वाराहि ७, वराह ८, मुखि ९, वराह १०, मुखि ११, अन्धे १२, अन्धिनि १३, नमः १४, रुन्धे १५, रुन्धिनि १६, नमः १७, जम्भे १८, जम्भिनि १९, नमः २०, मोहे २१, मोहिनि २२, नमः २३, स्तम्भे २४, स्तम्भिनि २५, नमः २६, सर्व २७, दुष्ट २८, प्रदुष्टानां २९, सर्वेषां ३०, सर्व ३१, वाक् ३२, चित्त ३३, चक्षुः ३४, मुख ३५, गति ३६, [I]जिह्वा ३७, स्तम्भनं ३८, कुरु ३९, कुरु ४०, शीघ्रं ४१, वश्यं ४२, ऐं ४३, ग्लौं ४४, ठः ४५, ठः ४६, ठः ४७, ठः ४८, हुं ४९, [II]अस्त्राय ५०, फट ५१, इत्येकपञ्चाशतपदानि॥

### मूलमन्त्रस्य एकपञ्चाशत्पदतत्त्वनिरूपणम्

लिखितस्यैवार्थस्य उपपत्तिर्लिख्यते। प्रकृतसूत्रेण मातृकान्यासस्थानाधिकरणकत्वविशिष्ट-मूलपदरूपमन्त्रकरणकत्वविशिष्टन्यासरूपं कर्म विधीयते। अनेन तत्र मातृकास्थानानाम् एक-पञ्चाशत्सङ्ख्याकत्वात् मूलस्थपदानाम् असमसङ्ख्याकत्वात् कथं भवितव्यम्।–इति भवति संशयः॥

I 'मति' इत्यधिकः—श्री.
II 'अस्त्राय' इति नास्ति—श्री.

अत्र निबन्धकारः,—मूलं द्विचत्वारिंशत्पदघटितमिति मत्वा पदानुसारेण नेत्रद्वयादौ सङ्कोचेन एकत्वं संपाद्य स्थानसङ्कोचं कृत्वा स्थानेष्वपि द्विचत्वारिंशत्सङ्ख्यां सम्पादयामास ॥

तदतीव तुच्छम्। तथा हि—सूत्रे मातृकास्थानेष्वित्यविशेषेण मातृकास्थानानि न्यासाङ्गत्वेन विहितानि। मातृकास्थानान्येकपञ्चाशत्। तावतां प्रत्येकमङ्गत्वम् उक्तसूत्रवशात् अप्रत्याख्येयम्। तथासति तत्सङ्कोचं कृत्वा द्विचत्वारिंशत्स्थानसम्पादनं स्वमौर्ख्यप्रकाशायैव भवेत् ॥

न च मूले द्विचत्वारिंशत्पदानां सत्त्वात् तदनुसारेण स्थानसङ्कोचआवश्यकइति वाच्यम्; स्थानानुरोधेन मन्त्रस्य प्रयाजन्यायेनावृत्त्या एकपञ्चाशत्सङ्ख्यापूरणस्यापि कर्तुं शक्यत्वात् ॥

यद्वा—एकं साम '[1]त्रिचे क्रियते इत्युक्त्या ऋक्त्रये सर्वेष्वक्षरेषु सामगानं प्राप्तम्। एवं सति यत्र प्रथमा ऋक् अनुष्टुप्छन्दस्का द्वितीया जगती तत्र 'यद्योन्यां गायति तदुत्तरयोर्गायति' इत्यनेन प्रथमायाम् ऋचि यद्गानं तदेवोत्तरयोरतिदिष्टम्। तादृशं द्वात्रिंशदक्षरेषु समाप्तम्। शिष्टाक्षराणि गानेनासंस्कृतानि हेयानि इतिवत् मातृकास्थानेषु निखिलेषु प्राप्तोन्यासः मन्त्रानुसारेण द्विचत्वारिंशन्मातृकास्थानेषु न्यासोहृदयान्तेषु भविष्यतीति। स्थानसङ्कोचस्तु न्यायशून्यः प्रमाणशून्यश्च उन्मत्तप्रलापवदधेयः ॥

वस्तुतस्तु मूलमन्त्रे एकपञ्चाशत्पदानां विभागस्य अस्माभिः दर्शितत्वात् स्थानानां तावतां सत्त्वात् नानुपपत्तिगन्धोऽपि ॥ न च सर्ववाक्चित्तेत्यादीनां समासघटकानां कथं पदत्वमिति-वाच्यम्। किंनाम पदत्वं; नैय्यायिकमतरीत्या शक्तिमत्वम्—उत वैय्याकरणरीत्या सुप्तिङन्तत्वम्;—तव मतेऽपिनाद्यः पक्षोऽभिमतः सम्भवति—नैय्यायिकमते सुब्विभक्तीनामपि पदत्वेन तैः सहगणने द्विचत्वारिंशत् सङ्ख्याऽतीतानि पदानि, द्विचत्वारिंशत्त्वकथनं विरुद्धम्। सुप्तिङन्तंपदमिति द्वितीयपक्षोममाप्यभिमतः अविरुद्धश्च। समासघटकेष्वपि सर्ववाक्चित्तेत्यादिष्वन्तर्वर्तिनीं विभक्तिमाश्रित्य सुबन्तत्वमक्षतम् ॥

न च तत्र विभक्तेर्लुप्तत्वात् सुबन्तत्वं कथमितिशङ्क्यं। "प्रत्ययलोपे प्रत्ययलक्षणम्," इत्यनेन लोपेऽपि तत्कार्यपदत्वसम्भवात्। अन्यथा "राजपुरुषः इत्यादौ राजोत्तरं न लोपः न स्यात्।

किं च तव मते वा द्विचत्वारिंशत्पदविभागेऽपि हुंफडादिपदानां पदत्वेन विभागोविरुध्येत, तेषामव्ययत्वेन तदुत्तरसुपोलुप्तत्वेन सुबन्तत्वाभावात् ॥

१. अत्र तिसृणां ऋचां समाहारः त्र्यृचं—तत्र—एवं च—त्र्यृचे—इति साधीयान् पाठः—

न च तव मते प्रदुष्टानामित्यत्र प्र, इत्यस्योक्तरीत्या पृथक्पदत्वेन प्रथमबीजत्रयस्य त्रिपद रूपत्वेन चतुःपञ्चाशत्पदानि भवन्ति, कथं सङ्ख्यासाम्यमितिवाच्यम्। न पदत्वं तावत् केवलं सुप्तिङन्तत्वम्—किन्तु सुप्तिङन्तत्वे सति अर्थवत्त्वम्—। प्र, इत्यस्योपसर्गस्य द्योतकत्वेन अर्थवत्त्वाभावात्—न, पदत्वमिति तद्विभागः। प्रथमबीजत्रयस्य प्रत्येकम् तत्त्वेऽपि वाक्सम्पुटित ग्लौं—" इति वाराहीमन्त्रोद्धारसूत्रस्वारस्यात् त्रयाणामेकस्तोमत्वम्। यथा गेहस्थं सम्पुटमानय" इत्यत्र आनयनकर्मत्वेन युगपत् पूर्वोत्तरावयवैतन्मध्यस्थवस्तु चान्वेति एक-स्तोमरूपत्वात्— ॥

यद्वा—मातृकास्थानानुसारेण मूलपदसङ्कोचः कार्यः। तथा च प्रथममारभ्य मातृका-स्थानेषु बीजत्रये पदत्रयं सम्पाद्य मूलपदेषु न्यस्यमानेषु उर्वरितचरमपदान्येकीकृत्य हुं अस्त्राय फट्—इति मूर्ध्नि न्यसेत् ॥

न च मूलपदानुसारेण प्रयाजन्यायेन मातृकास्थानावृत्तिरेव किं न स्यात्—इति वाच्यम्; मातृकास्थानानां प्रथमं सूत्रे उल्लेखेन उपक्रमप्राबल्यमनुसृत्य तदनुसारेण चरमनिर्दिष्टमूल-पदानां नेयत्वात्। युक्तश्चायमेव पक्षः। एतेन—हुंफट्पदयोः निरर्थकत्वात् सुबन्तत्वे सति अर्थवत्त्वरूपं पदत्वं नास्तीति पूर्वपक्षोऽपि पराहतः। हुं अस्त्राय फट्, इत्यत्र सुप्तिङन्तत्वे सति अर्थवत्त्वाय हुंफट्छब्दयोः तदसत्त्वात् सङ्घातकरणं युक्तं, नानुपपत्तिगन्धोऽपि ॥

न च—समासघटकपदानां निर्विभक्तिकानां कथं प्रयोगः—इति शङ्कनीयम्। यथा—"भवानि त्वं दासे मयि वितर दृष्टिं सकरुणामिति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः" इत्यत्र त्वमित्यनुकरणे प्रयोगवत् तवापि कर्तुं शक्यत्वात्। अतएव क्वचिन्मन्त्रे मन्त्रघटकवर्णन्यासोऽपि प्रकृतन्यासे दृष्टान्ताय भविष्यतीत्यलं भूयसा ॥ १२ ॥

तत्त्वन्यासमाह—

**पूर्वोक्तानष्टखण्डानेकैकशउच्चार्य पूर्वोक्तेषु स्थानेषु ह्रां शर्वाय क्षितितत्त्वाधिपतये-ह्रीं भवाय अम्बुतत्त्वाधिपतये-ह्रूं रुद्राय वह्नि-तत्त्वाधिपतये-ह्रैं उग्राय वायुतत्त्वाधिपतये-ह्रौं ईशानाय भानुतत्त्वाधि-पतये,-सौं महादेवाय सोमतत्त्वाधिपतये-हं महादेवाय यजमानतत्त्वाधि-पतये,-औं भीमाय आकाशतत्त्वाधिपतये नमः—इति तत्त्व न्यासः ॥ १३ ॥**

पूर्वोक्तानेकत्रिंशत्सप्तेत्यादिना[1] खण्डितानष्टखण्डान् [2]पूर्वोक्तस्थानेषु पादादिजा-न्वित्यादिस्थानेषु सर्वत्र, तत्त्वाधिपतये एतदनन्तरं नमः—इति पदस्यानुषङ्गेण योगः। इति तत्त्वन्यासः ॥ १३ ॥

---

१. इदमनुगते-२११-पत्रे, एतत्खण्डस्थ, १२-सूत्रे, दृश्यम्-

२. इमानि स्थानान्यपि-२११-पत्रे तत्रैव दृश्यानि-

देवीध्यानम्

**मूलेन सर्वेण व्यापकं कृत्वा देवीं ध्यात्वा ॥ १४ ॥**

ध्यानं सूत्रे [1]वक्ष्यमाणं, तन्त्रान्तरप्रसिद्धध्यानश्लोकरीत्याऽपि ज्ञेयम् । स,—ध्यान श्लोकोयथा—

पाथोरुहपीठगतां पाथोरुहमेचकां कुटिलदंष्ट्राम् ।
कपिलाक्षित्रितयां घनुकुचकुम्भां प्रणत वाञ्छितवदान्याम् ।
दक्षोर्ध्वतोऽरिखङ्गां मुसलमभीतिं तदन्यतस्तद्वत् ।
शङ्खं खेटं हलवरान् करैर्दधानां स्मरामि वार्तालीम् ॥

अत्र अरिः चक्रं, दक्षोर्ध्वतः (ऊर्ध्वमारभ्य,) तद्वद् वामेऽप्यूर्ध्वमारभ्यैव ॥ १४ ॥

अथ चक्रनिर्माणप्रकारः श्रीकोलमुख्याः—

**पुरतः पटपट्टसुवर्णरजतताम्रचन्दनपीठादिनिर्मितं दृष्टिमनोहरं चतुरस्त्रत्रय-सहस्रपत्र-शतपत्राष्टपत्र--षडस्रपञ्चास्त्रत्र्यस्र-बिन्दुलक्षणं कोलमुखीचक्रं विरच्य- ॥ १५ ॥**

पटः तूलमयः, पट्टः कौशेयः, पीठं फलकं, आदिपदेन नवरत्नपरिग्रहः । तेषु निर्मितम् । दृष्टिमनोहरमित्यनेन दलानां कोणानां च मानवैषम्यविरहः, दलमाने शास्त्रीय नियमाभावश्च सूचितः । तथापि तत्शारदातिलकाद् ग्राह्यएव । यन्त्रनिर्माणक्रमः प्रवेशरीत्या, बिन्दुचक्रस्य चरमपाठात्- । शेषं स्पष्टम्— ॥ १५ ॥

चक्रपूजा

चक्रनिर्माणानन्तरं चक्रकर्तव्यमाह—

**तत्र कुसुमाञ्जलिं विकीर्य स्वर्णप्राकाराय सुधाऽब्धये वराहद्वीपाय वराहपीठायनमः इति । आं-आधारशक्तये-कुं कूर्माय-कं कन्दाय-अं-अनन्तनालाय नमः-इति च धर्मादिभिः सह षोडशमन्त्रैः पीठे अभ्यर्च्य ॥ १६ ॥**

तत्र चक्रे । स्वर्णप्राकारादयः चतुर्थ्यन्ताः । अष्टौ नमोऽन्ताः मन्त्राः, तैः पीठमध्य-पूजनं, धर्मादिचतुर्भिः अधर्मादिचतुर्भिश्च गणपतिक्रमे [2]कुसस्थाने पूजनं, मिलित्वा षोड-शभिः पीठपूजनं भवति । पीठपदेन देवताऽऽयतनं चक्रमेव, अग्रिमसूत्रे " चक्रमनुना

---

१. एतत्सप्तखण्डीयागामि-२४-सूत्रे-मूले एवेदं श्रीभगवतोक्तं ध्यानमस्ति-

२-एतदर्थं श्रीगणेशक्रमे-२ खण्डे ८०-पत्रे ७ सूत्रभाष्ये यथा,-धर्मादिनां चतुष्टयं वायव्यादिविदिक्षु-अधर्मादिचतुष्टयं च, पश्चिमादिप्रादक्षिण्येन पीठएव समर्चयेत्-इत्यादि स्फोटितमस्ति-

चक्रमिष्ट्वा " इत्युक्तेः । न च—अग्रिममन्त्रेण चक्रपूजाऽस्तु, एभिः षोडशभिः चक्राधिष्ठान-पीठपजा आस्ताम्, इति वाच्यम् । त्रिपञ्चेत्यनेन यदि चक्रपूजनम् अवशिष्टैः पीठपूजनं, तदा अग्रे " सप्तविंशतिकमिदं पीठे वरीवसनीयम् " इति सूत्रोक्तसङ्ख्यापूर्तेरभावेन पीठपूजनमन्त्रेषु सप्तविंशति कथनम् असङ्गतं स्यात् ॥ १६ ॥

चक्रमनुमाह—

**त्रिपञ्चषडरदलाष्टकशतसहस्रारपद्मासनाय नमः-इति चक्रमनुना चक्रमिष्ट्वा ॥ १७ ॥**

अत्र निबन्धे अरशब्दस्य अनुषङ्गोदर्शितः । सचाशुद्धः । अनुषङ्गोहि मन्त्रभेदे दृष्टः । " चित्पतिस्त्वा पुनातु " इत्यादौ एकस्मिन् मन्त्रे अनुषङ्गोन दृष्टोन वा श्रुतः । प्रकृते मनुनेत्येकवचनेन मन्त्रे एकत्वं क्लृप्तम् । इत्थं च एकमन्त्रे अनुषङ्गं ब्रुवन् अङ्गनानामप्युपहासास्पदोभूत्वा स्वमौर्ख्यं प्रकटीकृतवान् । द्वन्द्वान्ते श्रूयमाणं प्रत्येकं सम्बध्यते इति परिभाषां तदीयगुरुर्नावदत् । अस्मिन् मन्त्रे अनुषङ्गं चकारेति प्रतिभाति । इत्यलं भूयसा ॥ १७ ॥

ततो मण्डलादीनां यजनमाह--

**वह्निमण्डलाय सूर्यमण्डलाय सोममण्डलाय नमः—इति त्रयोगुण-मन्त्राः—आत्ममन्त्राः चत्वारः-इति सप्तविंशतिकमिदं पीठे वरिवस-नीयम् ॥ १८ ॥**

अत्र सोममण्डलाय नमः—इत्यन्तं मन्त्रत्रयम् । सर्वत्र,—नमः—इत्यस्यानुषङ्गः । सं सत्त्वाय नमः, रं रजसे नमः, तं तमसे नमः, इति गुणमन्त्राः । आं आत्मने नमः, अं अन्तरात्मने नमः, पं परमात्मने नमः, ह्रीं ज्ञानात्मने नमः, इति आत्ममन्त्राश्चत्वारः । इत्थं च स्वर्णप्राकारायेत्यारभ्य सप्तविंशतिः, तैः पीठपूजा कार्येत्यर्थः ॥ १८ ॥

**हौं प्रेतपद्मासनाय सदाशिवाय नमः, इति चक्रोपरि देव्यासन-विमृष्टिः ॥ १९ ॥**

प्रेतरूपं यत् पद्मं तदभिन्नं यदासनं तत्स्वरूपोयः सदाशिवः तस्मै नमः, इति योजना—। ननु सदाशिवे प्रेतरूपत्वं कथम्; इति चेत्—-एतदुक्तं ज्ञानार्णवे—

पञ्च प्रेतान् महेशान ब्रूहि तेषां तु कारणम् ।
निर्जीवाअविनाशास्ते नित्यरूपाः कथं [1]भवेत् ॥

इति श्रीपार्वतीप्रश्ने साधुपृष्टं त्वया, इत्यारभ्य

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
पञ्च प्रेतावरारोहे निश्चलाएव ते सदा ॥
ब्रह्मणः परमेशानि कर्तृत्वं सृष्टिरूपकम् ।
वामा शक्तिस्तु सा ज्ञेया ब्रह्मा प्रेतोन संशयः ॥

इत्यारभ्य सदाशिवोमहाप्रेतः केवलोनिश्चलः प्रिये—इत्यन्तेन । अयमभिप्रायः—ब्रह्मादयः सदाशिवान्ताः वामाज्येष्ठादिस्वस्वशक्तिरहिताः, स्पन्दनेऽप्यशक्ताः सन्तः प्रेततुल्याएवेति, प्रेताइति कथनम् । विमृष्टिः (कल्पनम्) ॥ १९ ॥

### मूर्तिकल्पनम्

मूर्तिकरणीविद्यामाह—

**लृषाई वाराहीमूर्तये ठः ठः ठः ठः हुं फट्, इति, वाग्ग्लौमादि ग्लौंवागन्ता, मूर्तिकरणी, विद्या ॥ २० ॥**

वाक्ग्लौं—आदौ यस्यां, ग्लौंवागन्ते यस्यां, मध्यतनवर्णानाम्—ईदृशी मूर्तिकरणी विद्ये त्यर्थः । एतेन आसनकल्पनानन्तरं मूर्तिकल्पनविधिरुन्नेयः । मन्त्रस्वरूपम्,—ऐं ग्लौं लृषाई वाराहीमूर्तये ठः ठः ठः ठः हुं फट् ग्लौं ऐं—इति ॥ २० ॥

### आवाहनादिमुद्राबन्धनम्

**मूलविद्यया आवाहनसंस्थापनसंनिधापनसंनिरोधनसम्मुखीकरणावकुण्ठनवन्दनधेनुयोनीर्बद्धा ॥ २१ ॥**

मूलविद्यामुच्चार्य तत्तन्मुद्रां बद्ध्वा दर्शयन् तं तमर्थं भावयेत्—इति भावः । आवाहनादिमुद्राबन्धनप्रकारउच्यते । हस्तद्वयकनिष्ठाग्रादिमणिबन्धान्तम् ऊर्ध्वमुखसंलग्नं कृत्वा सर्वाः अङ्गुलयोऽग्रभागे किञ्चित्कुटिलाः कृत्वा कनिष्ठामूलद्वये स्पृष्ट्वा अङ्गुष्ठाग्रं न्यसेत । इयं आवाहनी मुद्रा । इयमेव अधोमुखी चेत् संस्थापनी । मुष्टिद्वयं परस्परं संलग्नं संनिधापनी । अस्यामेव अङ्गुष्ठद्वयस्य मुष्टिद्वयोदरनिवेशः संनिरोधिनी । संनिरोधिन्येव मणिबन्धादाकनिष्ठं परस्परयोगेन उत्तानमुखी सम्मुखीकरणमुद्रा । अवकुण्ठनधेनुयोन्यः [2]पूर्वमुक्ताः । उक्तार्थे प्रमाणं तन्त्रे—

---

१. अत्र नित्यरूपाः—इति बहुवचनान्तत्वात् कथं भवेदित्यत्र, यल्लिङ्गं यद्वचनमित्यादिव्याकृतिविदां नियमेन एकवचनं न स्यादतोत्र मुद्रणदोषएव—साधीयान् पाठस्त्वधोयथा— ( ज्ञानार्णवे—४—पटले श्रीचक्रराजसमर्चने पीठशक्त्यर्चनानन्तरमीज्यमानं प्रेतासनं—तत्र श्रीदेवीकृतप्रश्नोयम्—) निर्जीवाअविनाशास्ते नित्यरूपाः कथं विभो—इति— इत्यनघः पाठः—

२. इतोन्यथा अवकुण्ठनमुद्राधेनुमुद्रे—योनिमुद्रा, च—द्वि. प. शि—१५—विषये द्रष्टव्याः—

हस्तद्वयं चोर्ध्वमुख मृज्वङ्गुलियुतं युतम् ।
अङ्गुल्यग्राणि भुग्नानि कनिष्ठामूलभागतः ॥
अङ्गुष्ठाग्रसमायोगान्मुद्रैषाऽऽवाहिनी मता ।
अधोमुखी चेयमेव स्थापनाख्या समीरिता ॥
मुष्टिद्वयोदरयुता भवेत् सा संनिधापनी ।
इयमङ्गुष्ठगर्भा तु संनिरोधनरूपिणी ॥
इयमेवोत्तानरूपा सम्मुखीकरणाभिधा ॥ इति ॥

आवाहनादिमुद्राअनूद्य तदङ्गत्वेन मूलमन्त्रविधानात् " प्रतिप्रधानमङ्गावृत्तिः " इति न्यायेन " सृष्टीरुपदधाति " इतिवत् यावत्योमुद्राविहिताः तावतीषु मुद्रासु बध्यमानासु तावद्वारं मूलमावर्तयेत्, न तु सकृन्मूलमुच्चार्य सर्वमुद्राबन्धनम्—इति ज्ञेयम् ॥ २१ ॥

देव्यङ्गन्यासः

षडङ्गन्यासजालक्रमं च विवृणोति—

**देव्यङ्गन्यस्तषडङ्गपञ्चाङ्गः ॥ २२ ॥**

[1]षडङ्गमन्त्राः—ऐं ग्लौं ऐं नमोभगवति०—इत्यादयः । पञ्चाङ्गमन्त्राः—अन्धे अन्धिनि०—इत्यादयः [2]पूर्वोक्ताः । तैः देव्याः तत्तदङ्गेषु न्यासं भावयेत् ॥ २२ ॥

षोडशोपचारार्पणम्

अथ षोडशोपचारपदार्थकथनपूर्वकं तावतामर्पणं विधत्ते—

**पाद्यार्घ्याचमनीयस्नानवासोगन्धपुष्पधूपदीपनीराजनछत्रचामरदर्पणरक्षाचमनीयनैवेद्यपानीयताम्बूलाख्यषोडशोपचारक्लृप्त्यन्ते ॥२३॥**

उपचारमन्त्रस्तु—ऐं ग्लौं पाद्यं कल्पयामि नमः—इति श्रीक्रमवद् ज्ञेयः ॥ २२ ॥

देवीध्यानम्—

अथदेव्याध्यानप्रकारमाह—

**ध्यानं देव्याः-मेघमेचका कुटिलदंष्ट्रा कपिलनयना, घनस्तनमण्डला चक्रखड्गमुसलाभयशङ्खखेटहलवरपाणिः पद्मासीना वार्ताली ध्येया ॥ २४ ॥**

१. एतत्षडङ्गमन्त्रज्ञानार्थमनुगत २१०—पत्रे—९—सूत्रभाष्ये द्रष्टव्यम्

२. इमे—अन्धे अन्धिनि नमः० इत्यादि—५—न्यासमन्त्राः सम्पूर्णाः—२०९-२१०—पत्रयोः-८-१२-सूत्रभाष्ययोर्द्रष्टव्याः—

तथा च षोडशोपचारार्पणानन्तरं यावदवकाशमुक्तप्रकारेण मूर्तिं ध्यायेत्—इत्यर्थः—। मेघ-मेचका ( मेघश्यामला ) कालश्यामलमेचकाः ॥ इत्यमरः ॥ कुटिला ( वक्रा ) कुटिलं भुग्नं वेल्लितं वक्रमित्यपि—इत्यमरः— । हलं ( लाङ्गलम् ) ॥ २४ ॥

देवीतर्पणम्

**दशधा तस्यास्तर्पणं कुर्यात् ॥ २५ ॥**

तर्पणमन्त्रे कोलमुखीमिति मूलमन्त्रान्ते योज्यम्, न तु वाराहीमिति, उत्पत्तिवाक्ये कोलमुखीति श्रवणात् ॥ २५ ॥

आवरणपूजा

अथावरणपूजां वक्तुं प्रक्रमते—

**त्र्यस्रे जम्भिनीमोहिनीस्तम्भिन्यः ॥ २६ ॥**

देव्यग्रकोणमारभ्य प्रादक्षिण्येन ज्ञेयम् । इति प्रथमावरणम् ॥ २६ ॥

अथ द्वितीयावरणपूजामाह—

**पञ्चारे अन्धिनीरुन्धिन्यौ ताश्च ॥ २७ ॥**

पञ्चारे पञ्चकोणेषु अन्धिनीरुन्धिन्यौ, ताश्च जम्भिन्यादयः त्रयश्च मन्त्राः [१]पूर्वोक्ताः ग्राह्याः। मन्त्रस्वरूपम्—ऐं ग्लौं अन्धिनि नमः अन्धिनीश्री° । एवमग्रेऽपि। क्रमः पूर्ववत् । इति द्वितीयावरणम् ॥ २७ ॥

तृतीयावरणपूजामाह—

**षट्कोणे आक्षाई [I]ब्रह्माणी ईलाई माहेश्वरी ऊहाई कौमारी ऋसाई वैष्णवी ऐशाई इन्द्राणी औवाई चामुण्डा तस्यैवाग्रेषु मध्ये च यमरयूं यां यीं यूं यैं यौं यः याकिनि जम्भय जम्भय मम सर्वशत्रूणां त्वग्धातुं गृह्ण गृह्ण अणिमाऽऽदि वशं कुरु कुरु स्वाहेति। अन्यासां धातुनाथाना मप्येवं बीजे नामनि धातौ त्वाराधनकर्मणि मन्त्रसन्नामः। रमरयूं राकिणि रक्तधातुं पिब पिब लमरयूं लाकिनि मांसधातुं भक्षय भक्षय डमरयूं डाकिनि मेदोधातुं**

**ग्रस ग्रस कमरयूं काकिनि अस्थिधातुं जम्भय जम्भय समरयूं साकिनि मज्जाधातुं गृह्ण गृह्ण हमरयूं हाकिनि शुक्रधातुं पिब पिब अणिमाऽऽदि वशं कुरु कुरु स्वाहा—इति धातुनाथयजनम् ॥ २८ ॥**

I. ब्राह्मणी—श्री.

१. अनुगतटिप्पण्यनुक्रमः—२—द्वयः—

षट्कोणे कोणाग्रेषु, आक्षाई०—इत्यादिषण्मन्त्रैः षड्देवताः पूजयेत्—। ऐं ग्लौं आक्षाई ब्रह्माणीश्री०—इति मन्त्रस्वरूपम्। एवमग्रेऽपि। मध्ये (षट्कोणमध्ये) स्वाहान्तमेकं मन्त्रं दर्शयित्वा एतन्मन्त्रवर्णानन्यत्र कांश्चिदतिदिशति—एवमिति। एवम्- (उक्तमन्त्रवदित्यर्थः)। एवमतिदेशमुक्त्वा अतिदिष्टमन्त्रवर्णेषु बाधकमूह्यम्—तत्रैव क्वचित् स्थलविशेषे दर्शयति—बीजे०—इत्यादिना—। बीजे०—इत्येकवचनं—जात्याख्यायाम्—इति रीत्या—। बीजस्थाने वक्ष्यमाणबीजानां सन्नाम, ऊहः कार्य। एवं धातौ त्वग्धातुस्थाने तत्तद्धातूनां, नामनि याकिनीति नामस्थाने तत्तन्नाम्नामूहश्च कार्यः। शिष्टाः मन्त्रवर्णाः मम सर्वशत्रूणाम्०—इत्यादयः समानाः इति भावः। अथ द्वितीयादिमन्त्रेषु विशेषमाह—रमरयूमित्यादिना ॥ २८ ॥

**अनन्तरं षडस्रोभयपार्श्वयोः क्रोधिनीस्तम्भिन्यौ चामरग्राहिण्यौ तत्रैव स्तम्भनमुसलायुधाय आकर्षणहलायुधाय नमः षडरादूबहिः पुरतोदेव्याः क्ष्रौं क्रौं चण्डोच्चण्डाय नमः—इति तद्यजनम् ॥ २९ ॥**

अनन्तरं, धातुनाथयजनानन्तरम्। षडस्रोभयपार्श्वयोः इति, उभयपार्श्वद्वयकोणान्तः प्रदेशोबोध्यः। मन्त्रस्वरूपं च—ऐं ग्लौं क्रोधिनीचामरग्राहिणीश्री०। एवम् अपरम्। अग्रे चण्डोच्चण्डपूजायाबहिर्विधानात्, तत्रैवेति षडस्रोभयपार्श्वयोरेवत्यर्थः। इति तृतीयावरणम् ॥ २९ ॥

चतुर्थावरणमाह—

**अष्टदले वार्तालीवाराहीवराहमुख्यन्धिन्यादयः पञ्च तद्बहिः महामहिषाय देवीवाहनायनमः ॥ ३० ॥**

देव्यग्रदलमारभ्य प्रादक्षिण्येन, क्रमस्यानुक्तत्वात्। वाहनपूजामाह—तद्बहिरिति। अष्टदलाद्बहिरित्यर्थः देवीपुरतः अयं पूज्यः, वाहनरूपत्वात्, वाहनस्थितेः सर्वत्र प्रधानदेवताऽग्रभागे दृष्टत्वात् ॥ ३० ॥

पञ्चमावरणमाह—

**शतारे देवीपुरतोदलसन्धौ जम्भिन्याइन्द्रायाप्सरोभ्यः सिद्धेभ्योद्वादशादित्येभ्योऽग्नये साध्येभ्योविश्वेभ्योदेवेभ्योविश्वकर्मणे यमाय मातृभ्योरुद्रपरिचारकेभ्योरुद्रेभ्ये।मोहिन्यै निर्ऋतये राक्षसेभ्योमित्रेभ्योगन्धर्वेभ्योभूतगणेभ्योवरुणाय वसुभ्योविद्याधरेभ्यः किन्नरेभ्योवायवे**

**स्तम्भिन्यै चित्ररथाय तुम्बुरवे नारदाय यक्षेभ्यः सोमाय कुबेराय देवेभ्योविष्णवे ईशानाय ब्रह्मणे अश्विभ्यां धन्वन्तरये विनायकेभ्योनमः इति देवतामण्डलमिष्ट्वा तद्बहिः औं क्ष्रौं क्षेत्रपालाय नमः–सिंहवराय देवीवाहनाय नमः–इति च तदुभयं वरिवस्येत्। तद्बहिः महाकृष्णाय मृगराजाय देवीवाहनाय नमः–इति तत्पूजा ॥ ३१ ॥**

देवतानामष्टत्रिंशत्सङ्ख्याकत्वात् तया सङ्ख्यया शतपत्रविभागासम्भवात् अवश्यं सन्धयः हेयाः। तथा सति देव्याः पुरतः देवतासमसङ्ख्याकसन्धयोग्राह्याः। शेषाहेयाः। तत्राप्युदगपवर्गलाभाय दक्षिणस्यामारम्भः, उत्तरे समाप्तिः। सर्वत्र नमःपदमनुषज्यते। ततः क्षेत्रपालादिपूजां विधत्ते—तद्बहिरिति। तद्बहिः शतपत्रबहिः। वाहनरूपत्वात् देवीपुरतएव। यद्वा—तद्बहिः पूर्वपूजिताष्टत्रिंशद्देवताऽधिष्ठानदलसन्धिबहिः। तेन देवीपुरोभागस्त्वर्थात् सिध्यति। तदुभयं क्षेत्रपालसिंहोभयम्। तद्बहिः क्षेत्रपालसिंहबहिः। तत्पूजा मृगराजपूजा। इति पञ्चमावरणम् ॥ ३१ ॥

षष्ठावरणमाह—

**सहस्रारे अष्टधा विभक्ते ऐरावताय पुण्डरीकाय वामनाय कुमुदायाञ्जनाय पुष्पदन्ताय सार्वभौमाय सुप्रतीकाय नमः–इति तत्पूजा बहिः सुधाऽब्धेर्वा। बाह्यप्राकाराष्टदिक्षु अधउपरि च हेतुकादयः-भैरवक्षेत्रपालशब्दयुक्ताः प्रत्येकं क्ष्रौमादयश्च यष्टव्याः। हेतुकत्रिपुरान्तकाग्नियमजिह्वैकपादकालकरालभीमरूपहाटकेशाचलाः–दश भैरवाः ॥ ३२ ॥**

अष्टधा विभक्ते पञ्चविंशत्युत्तरशतदलेष्वेकैकादेवता पूज्या। अमीषामेव देवतानां विकल्पेन स्थानान्तरमाह—बहिस्सुधाब्धेर्वेति। सुधाब्ध्यधिकरणत्वेन कल्पितोयोदेशः तस्माद् बहिरित्यर्थः। क्रमस्तु इन्द्रादीशानान्तं प्रदक्षिणम्। अत्र नमोऽन्तमन्त्रेषु सर्वत्र नमोऽन्ते देवतानाम। ततः श्रीपादुकामित्यष्टाक्षरीयोगः। यथा जम्भिन्यै नमः जम्भिनीश्री०। बाह्यप्राकारेति प्रथमचतुरस्रे–इत्यर्थः। हेतुकादयः अग्रिमसूत्रे[1] वक्ष्यमाणाः दश अचलान्ताः प्रत्येकं प्रतिमन्त्रं क्ष्रौं,–इति आदौ येषां ते–यष्टव्याः पूज्याः। मन्त्रस्वरूपं–ऐं ग्लौं क्ष्रौं हेतुकभैरवक्षेत्रपालश्री०। एवमग्रेऽपि योज्यम्। हेतुकादयः के;–इत्याकाङ्क्षायामाह—हेतुक-

1. अग्रिमसूत्रे,–नाम–अत्रैवसूत्रे–अन्तिमपङ्क्त्यामेव–एवमर्थोज्ञेयः—

त्रिपुरान्तकेति। द्वन्द्वान्ते श्रूयमाणं जिह्वापदं अग्नियमयोरुभयत्र अन्वेति। एवं च अग्निजिह्वेति यमजिह्वेति। भीमरूपः हाटकेशः इत्येकैकम्। शेषं स्पष्टम्॥ ३२॥

देव्याः पुनःपूजा

उक्तमर्थमुपसंहरति—

**एवं षडावरणीमिष्ट्वा पुनर्देवीं त्रिधा सन्तर्प्य सर्वैरुपचारैरुपचर्य॥ ३३॥**

षडावरणपूजाऽनन्तरं कर्तव्यां क्रियामाह—पुनरिति। सर्वैरुपचारैः पूर्वोक्तषोडशोपचारैः॥ ३३॥

बलिदानप्रकारः

अथ बलिदानप्रकारं वक्तुं प्रक्रमते——

**पुरतोवामभागे हस्तमात्रं जलेनोपलिप्य रुधिरान्नहरिद्राऽन्नमहिषपलसक्तुशर्कराहेतुफलत्रयमाक्षिकमुद्रात्रयमाषचूर्णदधिक्षीरघृतैः शुद्धोदनं सम्मर्द्य चरणायुधाण्डप्रमाणान् दशपिण्डान् विधाय तत्र निधाय कपित्थफलमानमेकं पिण्डं च तत्समीपे सादिमोपादिममध्यमं चषकं च निक्षिप्य दशपिण्डान् हेतुकादिभ्योमध्यमपिण्डं चषकं च चण्डोच्चण्डाय तत्तन्मन्त्रैः दत्वा बृन्दमाराध्य॥ ३४॥**

देव्याइति शेषः, 'देवीं त्रिधा' इति पूर्वसूत्रे सन्निहितत्वात्। अथ द्रव्यमाह—रुधिरान्नेति। रुधिरेण रक्तेन युक्तम् अन्नं हरिद्रायुक्तम् अन्नं पलं मांसं सक्तवः भर्जितयवचूर्णं हेतुः प्रथमं फलत्रयं त्रिफला माक्षिकं पुष्परसः मुद्रात्रयं त्रिजातिमुद्राः। शेषं स्पष्टम्। एतैः शुद्धोदनं सम्मर्द्य मिश्रितं कृत्वा। चरणायुधः कुक्कुटः, "कुक्कुटश्चरणायुधः" इत्यमरः। तत्र पूर्वलिप्तदेशे। तत्समीपे दशपिण्डसमीपे। दशपिण्डस्थापनं च प्रागादिदशदिक्षु, पूजायामासां दिशां कॢप्तत्वात्। तत्तन्मन्त्रैः पूजायां कॢप्तमन्त्रैः। तत्रापि नमोऽन्तैरेव, न श्रीपादुकेत्यादिमन्त्रशेषः। बृन्दमाराध्येति हेतुकादिचण्डोच्चण्डान्तबृन्दमित्यर्थः। अत्र पाठक्रमं बाधित्वा अर्थक्रमेण आदौ आराधनं, पश्चात् बलिदानं ज्ञेयम्। तत्रापि बाधकाभावात् प्रधानसन्निकर्षलाभाय सप्तदशप्राजापत्यपशुवत् पदार्थानुसमयेनाभ्यर्चनं पञ्चोपचारैः कार्यम्॥ ३४॥

गुरुसंतोषणम्

**यथाविभवं श्रीगुरुं संतोष्य॥ ३५॥**

यथाविभवं स्वशक्तिं दृष्टवा। गुरुं संतोष्येत्यनेन गुरुसन्निधावस्यानुष्ठानं सूचितम्। दूरस्थे नित्यं सन्तोषणासम्भवात्। तेन सति सम्भवे गुरुसन्निधौ फलाधिक्यं ज्ञेयम्॥ ३५॥

### शक्तिवटुकपूजा

शक्त्यादिपूजामाह—

**सम्पूर्णयौवनाः सलक्षणामदनोन्मादिनीस्तिस्रः शक्तीराहूय बटुकं चैकमभ्यर्च्य स्नपयित्वा गन्धादिभिरलंकृत्य वार्तालीबुद्ध्या एकां शक्तिं मध्ये क्रोधिनीस्तम्भिनीबुद्ध्या द्वे इतरे पार्श्वयोश्चण्डोचण्डधिया, बटुकमग्रे स्थापयित्वा सर्वैर्द्रव्यैः संतोष्य मम श्रीवार्तालीमन्त्रसिद्धिर्भूयादिति ताः प्रतिवदेत् ताश्च प्रसीदन्त्वधिदेवताः–इति ब्रूयुः ॥ ३६ ॥**

उक्तं रतिरहस्ये

षोडशाब्दं समारभ्य पञ्चविंशत्समावधि
'रमणी पूर्णतारुण्या तत्र भोगोऽतिसौख्यदः ॥

इति लक्षणेन नेत्ररमणीयरूपेण मदनोन्मादिनीः मदनवर्धिनीः आहूयाभ्यर्च्येति शक्तिषु बटुके चान्वेति । स्नपनं चात्राभ्यङ्गरूपम् । तच्च पूजायां स्नानावसरे कर्तव्यम् । ततोगन्धादिभिरलङ्कुर्यात् । आदिपदेन वस्त्रभूषणादि ग्राह्यम् । अग्रे तासामग्रे सर्वैर्द्रव्यैरिति वाराहीपूजायां विहितप्रथमद्वितीयतृतीयैरित्यर्थः । ताः इत्यनेन प्रार्थनं सुवासिनीनामेव, न बटुकस्य ॥ ३६ ॥

### मन्त्रसाधनम्

एवं पूजामुपसंहृत्य अग्रे कर्तव्यं विधत्ते—

**एवं सपरिवारामुदारां भूदारवदनामुपतोष्य लक्षं पुरश्चरणं कृत्वा तद्दशांशं तापिञ्छकुसुमैर्हुत्वा मन्त्रं साधयेत् ॥ ३७ ॥**

एवमुक्तप्रकारेण सपरिवारां आवरणदेवतासहितां उदारां फलदानशौण्डां भूदारस्य क्रोडस्य वदनमिव वदनं यस्यास्ताम् । लक्षं पुरश्चरणं कृत्वा इति कथनं तन्त्रान्तरोक्तपुरश्चरणधर्मप्रापकम् ॥

### पुरश्चरणप्रकारः

ते च धर्माः परमानन्दतन्त्रे—

पुरश्चरणयोगेन मन्त्रसिद्धिं समाश्रयन् ।
कामान् सुसाधयेत् सर्वान् विधिना परमेश्वरि ।
तद्विधानं शृणु शिवे विस्तरेण ब्रवीमि ते ॥

इत्यारभ्य

पुरस्करोति योनैवं तस्य विद्या पराङ्मुखी ॥

इति निन्दया पुरश्चरणस्यावश्यकत्वं दर्शयित्वा " अशक्तश्चेत् दोशिकेन ब्राह्मणेन च कारयेत्" इत्यनेन कर्तृप्रतिनिधिमुक्त्वा तद्विधिं देशं कालं नियमांश्चाह—

अशयाने हरौ काले दीक्षोक्तशुभसंयुते ।
मनःप्रसादोयत्रास्ति तत्र पुण्ये समाचरेत् ॥
पुरश्चरणकं देवि पञ्चाङ्गं प्रोच्यते बुधैः ।
जपोहोमस्तर्पणं च मार्जनं ब्रह्मभोजनम् ॥
पूर्वपूर्वदशांशेन चाङ्गं स्यादुत्तरोत्तरम् ।
जपस्तु लक्षसङ्ख्याकोहोमादिस्तद्दशांशकः ॥
प्रत्यहं वा समाप्तौ वा लक्षान्ते वा महेश्वरि ।
साधिताग्नौ नित्यवत्तु हुत्वा होमेन होमयेत् ॥
चतुस्तारं मुखे क्षिप्त्वा मूर्धान्तेन महेश्वरि ।
पायसं बिल्वपत्रं वा द्राक्षां पुण्यफलानि वा ॥
करवीरं किंशुकं वा कमलं वा कुसुम्भकम् ।
मधूकं च जपां वाऽपि चान्यद्वा शुभगन्धयुक् ॥
एतेषां कुसुमं तद्वत् गव्यं क्षीरं घृतं तथा ।
पुष्पाणि तु समग्राणि कौसुम्भं दशसङ्ख्यकम् ॥
अम्लानं सुप्रसन्नं च होमकर्मणि योजयेत् ।
कर्षद्वयन्यूनफलं समग्रं होमयेत् तदा ॥
ततोऽधिकफलस्येह खण्डं स्यात् कर्षतोऽधिकम् ।
घृतश्रीखण्डागरूणां माषत्रयमितं भवेत् ॥
षष्टितण्डुलजं तद्वत् पायसं सम्प्रकीर्तितम् ।
क्षीरं कर्षमितं ज्ञेयमेवमन्यन्महेश्वरि ॥
शूद्राणां च तथा स्त्रीणां होमोनैव भवेच्छिवे ।
उत्कटेच्छाभक्तियुक्तशूद्रस्य स्यान्नमोन्ततः ॥
अथवा ब्राह्मणद्वारा होमः कर्तव्यएव तु ।
सर्वत्रायं विधिः प्रोक्तः पुजाऽऽदिषु महेश्वरि ॥
होमाभावे द्विगुणतः तत्सङ्ख्याजपः स्मृतः ।

अशक्त्या यस्य चाङ्गस्य लोपस्तद्द्विगुणोजपः ॥
ब्राह्मणस्य द्विगुणतः क्षत्रियस्य त्रिधा स्मृतः ।
चतुर्धा तु विशः पञ्चगुणः शूद्रस्य वै जपः ॥
अशक्तवृद्धस्त्रीणां तु सिद्धिर्जपद्विजार्चनात् ।
अङ्गद्वयेनैव तेषां पुरश्चरणकं भवेत् ॥
दुग्धेन गन्धतोयेन तर्पयेद्वाऽपि मूलतः ।
जले देवीं समावाह्य सम्पूज्यैव तु पूर्ववत् ॥
स्वमूर्ध्नि देवतां ध्यात्वा तीर्थमावाह्य [1]सुन्दरि ।
मार्जयेन्मूलमनुना मार्जयामीति वै शिवे ॥
ब्राह्मणान् विविधैर्देवि उपचारैस्तु पूजयेत् ।
आदौ भूमिग्रहं कुर्यात् पूर्वस्मिन् दिवसे शिवे ॥
सङ्कल्प्यामुकमन्त्रस्य पुरश्चरणसिद्धये ।
मयेयं गृह्यते भूमिर्मन्त्रोमे सिध्यतामिति ॥
ग्रामे क्रोशमितं तद्वन्नगरे द्विगुणं भवेत् ।
अन्यत्र तु यथेच्छं स्यात् पुण्यारण्यादिषु प्रिये ॥
तद्दिक्षु क्षीरवृक्षोत्थान् कीलान् वैतस्तिकान् शिवे ।
मूलास्त्रेणाभिमन्त्र्याथ पूर्वादिदशदिक्षु तान् ॥
निखनेत् तेषु गन्धाद्यैरस्त्रेणाभ्यर्च्य दिक्पतीन् ।
माषभक्तबलिं दद्यात् तत्तन्मन्त्रेण मन्त्रवित् ॥
एह्यीन्द्र पूर्वदिग्भागे पूजितोवस कीलके ।
मां पालय ततोनिर्विघ्नेन कार्यं च साधय ॥
पुनः साधय वै माष ततोभक्तबलिं तथा ।
गृह्णद्वयं ततो[2]मूर्धा रामवेदाक्षरोमनुः ॥
तत्तद्दिशादेवनामसंयोगादन्यमन्त्र[3]काः ।
नैतत् सुरालये कुर्यात् यतस्तैः पूर्वसङ्ग्रहात् ॥
तन्मध्ये गणपं क्षेत्रपालं वास्त्वीशमर्चयेत् ।
पूर्ववत् कूर्मचक्रं तु पूजयेत् तदनन्तरम् ॥
नवकोष्ठेषु पूर्वादीशान्तकोष्ठेषु वै क्रमात् ।
विलिखेत् काद्यष्टवर्गान मध्ये कोष्ठे तु पूर्वतः ॥

१. पूर्ववत्—ब २. २. मूर्ध्ना—श्री. ३. कान्—श्री.

अत्रोपरितने–३–चिह्ने–मन्त्रकाः–इत्येव शोभनः पाठः प्रथमावृत्तिटिप्पणीस्थाः कानित्यप पाठः

द्वन्द्वं स्वराणां संलिख्य कूर्मं भक्त्या समर्चयेत् ।
प्रागादिनवकोष्ठेषु क्षेत्रपालान् नवार्चयेत ॥
अमृतं वृषभं शैलराजं वासुकिमेव च ।
अर्थकृच्छक्तिपद्मादियोनीन् शङ्कं महादिकम् ॥
छायाछत्रगणं चेति क्रमात् सम्पूजयेत् बुधः ।
दीपस्थानं तत्र देवि जानन् संसाधयेन्मनून् ॥
तत्र कूर्मस्य मुखं देवि दीपस्थानं प्रकीर्तितम् ।
दीप्यन्ते मनवोयत्र दीपस्थानं ततस्तु तत ॥
गृहनामाद्यक्षरं तु यत्र कोष्ठे स्थितं शिवे ।
तत्कूर्ममुखमुद्दिष्टं निर्विघ्नं तत्र सिध्यति ॥
मध्यं पृष्ठं तस्य चाथ पुच्छं पार्श्वेषु वै क्रमात् ।
हस्तयुग्मं पादयुग्मं पार्श्वयुग्मं प्रकीर्तितम् ॥
मुखे पृष्ठे चोत्तमं स्यात् मध्यमं हस्तयुग्मके ।
अन्यत्र तु निषिद्धं स्यादेष देवि त्रिधा स्थितः ॥
देशकूर्मं ग्रामकूर्मं गृहकूर्ममितीश्वरि ।
भावयेत् तत्र तत्रैव प्रोक्तरीत्या विचिन्तयेत् ॥
मुख्यं फलं त्रयाणां तु लाभः स्यादेकमेव वा ।
तत्रोक्तपरकूर्मं तु पूजयेत् तत्र वै जपेत् ॥
कुरुक्षेत्रे प्रयागे च महाकाले तथैव च ।
पर्वते च शुभारण्ये समुद्रस्योपकूलके ॥
काश्यां च चिन्तनं नैव दीपस्थानस्य शङ्करि ।
निजे गृहे यथोक्तं स्यात् गोष्ठेऽब्धेस्तीरएव च ॥
द्विगुणं कुलवृक्षाधः पर्वताग्रे त्रिधा फलम् ।
अब्धिसंयुक्तसरित्तीरे पुण्यस्रोतस्तटे तथा ॥
स्वयंभुदेवगेहे च शतधा फलमुच्यते ।
पश्चिमाभिमुखे नन्दिशून्ये त्वेव शिवालये ॥
तथा नार्मदलिङ्गस्य चालये गुरुसन्निधौ ।
अनन्तसङ्ख्य तु फलं मनःकान्तिविशेषतः ॥
दीपनाथस्य मन्त्राणामाद्यमेकाक्षरं यथा ।
तथारिमन्त्राअपि च सिध्यन्ति दृढमीश्वरि ॥

तत्र स्थित्वा जपेल्लक्षं हविष्याशी समाहितः ।
मन्त्रसाधनकामस्तु युगसङ्ख्याकलक्षकम् ॥
आदौ शुभदिने केशान् वापयित्वा महेश्वरि ।
अयुतं प्रजपेत् तत्र तद्गायत्रीं समाहितः ॥
तेनाधिकारी भवति पुरश्चरणसाधने ।
तदादिनियमं कुर्यात् प्रयत्नेन तु साधकः ॥
शुद्धं स्वच्छं तथा वासः स्थानमङ्गं च मूर्धजाः ।
सुगन्धामलकैः केशशोधनं बन्धनं तथा ॥
पञ्चतिक्तमुखोनिद्राजृम्भालस्यादिवर्जितः ।
निष्ठीवनं भयं नीचस्पर्शभाषणमेवच ॥
अकार्यभाषणं क्रोधं चित्तचाञ्चल्यमेव च ।
वर्जयेच्च महेशानि सदा नियतमानसः ॥
आहारस्तु फलं क्षीरं मूलं तद्वद्धविष्यकम् ।
भुञ्जीयाद्रात्रिसमये शयनं स्थण्डिलेऽथवा ॥
कुशासनेऽजिने श्वेतकम्बले धौतवाससि ।
जपस्थानसमीपे तु शयनं प्रत्यहं भवेत् ॥
ब्रह्मचर्यं सदा कुर्यात् कायवाङ्मानसैः शिवे ।
त्रिकालं वा द्विकालं वा स्नानं स्यात् प्रातरेव वा ॥
त्रिकालं वा द्विकालं वा सकृद्वा देवताऽर्चनम् ।
आमध्याह्नं च देवेशि जपं कुर्यात् तथाऽन्वहम् ॥
मूलाभिमन्त्ररहितं न पिबेन्न च भक्षयेत् ।
कदलीमधुपर्णेषु पालाशे मध्यवर्जिते ॥
हितं मितं च भुञ्जीयात् देवतायै निवेदितम् ।
एलालवङ्गकर्पूरजातीपत्रफलात्मकम् ॥
पञ्चतिक्तं तेन युतं ताम्बूलं निशि भक्षयेत् ।
न वदेदप्रियं मिथ्या बहुभाषणमेव च ॥
अर्कच्छायां स्नुहिच्छायां करञ्जस्यापि सुन्दरि ।
नैवाक्रमेद्विभीतस्य छायां चापि कचिच्छिवे ॥
मौनेन भोजनं स्नानमप्रतिग्रहएव च ।
क्षौरमुष्णजलस्नानगीतवाद्यनिषेवणम् ॥

अनृतुस्त्रीसङ्गमं च कञ्चुकोष्णीषधारणम् ।
अन्धकारे च शयनं वर्जयेत् साधकोत्तमः ॥
अन्यानपि यथाशास्त्रं नियमानाचरेत् प्रिये ।
नियमांस्तु परित्यज्य यइच्छेन्मन्त्रसाधनम् ॥
चण्डभानुं समाश्रित्य शीतलं वाञ्छति ध्रुवम् ।
स्त्रीणां तथा रोगिणां च वृद्धानामपि सुन्दरि ॥
यथाशक्ति भवेदेतन्नियमानां तु धारणम् ।
आदौ गुरुं ब्राह्मणांश्च देवतां प्रणमेत् बुधः ॥
सङ्कल्प्य गणनाथार्चां पुण्याहं वाचयेत् तथा ।
गुर्वाद्याज्ञां समादाय जपं कुर्यात्तु भक्तितः ॥
विन्यस्य मूलविद्यां च प्राणायामत्रयं चरेत् ।
सामान्यकलशोदेन पञ्चतिक्तं निवेदयेत् ॥
मूलाभिमन्त्रितं तच्च मुखे संस्थाप्य साधकः ।
गृहीत्वा वामपाणौ तु पात्रस्थां जपमालिकाम् ॥
कलशोदकविप्रुड्भिः प्रोक्ष्य सम्प्रार्थयेच्छिवे ।
ॐ माले त्वं महामाये सर्वशक्तिस्वरूपिणि ॥
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।
सम्पूज्य मन्त्रयोगेन गृहीत्वा दक्षहस्तके ॥
[1]मायासिद्ध्यै च हृदयं पञ्चार्णः पूजने मनुः ।
अविघ्नं कुरु पश्चाद्दै मे मालेति शिरस्तथा ॥
गमाद्यं ग्रहणे चैव रुद्रवर्णः स्मृतोमनुः ।
मूर्ध्नि संस्थाप्य मालां तु मातृश्रृङ्गाटकं बिले ॥
तन्मयीं मूलविद्यां तु मुखे हृदि पराम्बिकाम् ।
तद्वाच्यां तन्मयं नाथमाज्ञायां तु विभावयेत् ॥

इत्यादिना । किंच द्रव्यमाने विशेषोदक्षिणामूर्तिसंहितायाम्—

कस्तूरीकुङ्कुमशशिगुञ्जामात्रं हुनेच्छिवे ॥ इति ॥

तर्पणे विशेषोयोगिनीतन्त्रे—

नद्यादौ वा शुभे तोये पात्रस्थे वाऽपि देवताम् ।
आवाह्य मूलमनुना तर्पयामीति तर्पयेत् ॥ इति ॥

---

१ ॐ ह्रीं सिद्ध्यैनमः-इति मन्त्रोऽत्र ज्ञेयोमालापूजने—

तत्रैव—

देवतीर्थेनाञ्जलिना जलदानं तु तर्पणम् ।
मार्जनं तु कुशैर्वाऽपि निषिञ्चेत् तत्त्वमुद्रया ॥ इति ॥

स्थाने विशेषोयोगिनीतन्त्रे—

प्रत्यग्भिन्नमुखे नन्दियुते हानिः शिवालये ॥ इति ॥

किंच तत्रैव—

अप्रसन्नं मनोयत्र तत्रोत्तमतमेऽपि च ।
मन्त्रसिद्धिर्न भवति यथोक्तानुष्ठितावपि ॥ इति ॥

जपसङ्ख्यायां विशेषः एकवीराकल्पे—

भावनारहितानां तु क्षुद्राणां क्षुद्रचेतसाम् ।
चतुर्गुणोजपः प्रोक्तः सिद्धये नान्यथा भवेत् ॥ इति ॥

योगिनीतन्त्रेऽपि

असंयतात्मनामुक्तोजपः षोडशधा भवेत् ॥ इति ॥

जपे गौणकालोयोगिनीतन्त्रे—

सङ्कटे तु दिनस्यान्तं तृतीयांशं परित्यजेत् ॥ इति ॥

पुरश्चरणसङ्कल्पउक्तोयोगिनीतन्त्रे—

तिथ्याद्युक्त्वा गोत्रनामद्वयमुल्लिख्य शङ्करि ।
श्रीविद्यासिद्धिवैद्वारा महात्रिपुरसुन्दरी ॥
प्रीत्यर्थं दिनसङ्ख्यां च जपसङ्ख्यां समुल्लिखन् ।
पञ्चाङ्ग पुरश्चरणं करिष्य,इति वै वदेत् ॥

द्वित्रिकालपूजायां विशेषोयोगिनीतन्त्रे—

द्वित्रिकालार्चने देवि उपचारांस्तथाऽऽवृतम् ।
आवर्तयेद्धोममपि चान्यत् सर्वं सकृत् भवेत् ॥ इति ॥

जपनियमाः मनोनिग्रहसाध्याः बहवः सन्ति तन्त्रेषु । तेषामनुष्ठाने मनोनिग्रहस्य मुख्यतया तत्साधयितुरिदानीमभावात् तादृशं जपाङ्गधर्मानुष्ठानमपि सम्प्रतिकालेऽननुष्ठेयमिति ते धर्माः आभ्यन्तराः न लिख्यन्ते । यद्यनुष्ठानसमर्थास्तर्हि तन्त्रेभ्योजानन्तु ॥

तद्दशांशं, जपदशांशम् । तापिच्छकुसुमैः तमालकुसुमैः " कालस्कन्धस्तमालः स्यात् तापिच्छोप्यथसिन्धुकः " इत्यमरः । मन्त्रं साधयेत् इत्यनेन केवललक्षजपे नैव पर्याप्तिः । किंतु तन्त्रान्तरोक्तानि यानि चिह्नानि मन्त्रसिद्धिसूचकानि तावत्पर्यन्तमनुष्ठानं कुर्यादिति ज्ञापितम् ॥

**मन्त्रसिद्धिचिह्नानि**

मन्त्रसिद्धिचिह्नानि तन्त्रान्तरेषु । तत्रादौ वक्रतुण्डकल्पे—

चित्तप्रसादोमनसश्चतुष्टिरल्पाशिता स्वप्नपराङ्मुखत्वम् ।
स्वप्नेषु यानाद्युपलम्भनं तु सिद्धस्य चिह्नानि भवन्ति सद्यः ॥ इति ॥

भैरवीतन्त्रे—

ज्योतिः पश्यति सर्वत्र शरीरं वा प्रकाशयुक् ।
निजं शरीरमथवा देवतामयमेव हि ॥ इति ॥

नारदपाञ्चरात्रे—

मन्त्राराधनसक्तस्य प्रथमं वत्सरत्रयम् ।
जायन्ते बहवोविघ्नानियमस्थस्य नारद ॥
नोद्वेगं साधकोयाति कर्मणा मनसा यदि ।
तृतीयवत्सरादूर्ध्वं राजानश्च महीभृतः ॥
प्रार्थयन्तेऽनुरोधेन गर्विताअपि मानिनः ।
प्रसादः क्रियतां नाथ ममोद्धरणकारणम् ॥
प्रज्वलन्तं च पश्यन्ति तेजसा विभवेन च ।
अतस्ते मुनिशार्दूल निष्ठुरं वक्तुमक्षमाः ॥
नवमाद्वत्सरादूर्ध्वं स्वयं सिध्यति मन्त्रराट् ।
नानाश्चर्याणि हृदये मन्त्रसिद्धिमयानि वै ॥
अत्यानन्दप्रदान्याशु प्रत्यक्षेण बहिस्तथा ।
जडधीस्तु क्षणं विप्र क्षणमस्ति प्रहर्षितः ॥
क्षणं दुन्दुभिनिर्घोषं शृणोत्येवान्तरिक्षतः ।
क्षणं च मधुरं वाद्यं नानागीतसमन्वितम् ॥
आजिघ्रति क्षणं गन्धान् कर्पूरमृगनाभिजान् ।
उत्पतन्तं क्षणं वापि पश्यत्यात्मानमात्मना ॥
चन्द्रार्ककिरणाकीर्णं क्षणमालोकयेन्नभः ।
तारकाणि विचित्राणि योगिनोनभसि स्थितान् ॥

क्षणं मेघोदयं पश्येत् क्षणं रात्रिं दिने सति ।
रात्रौ च दिवसालोकं ससूर्यं क्षणमीक्षते ॥
[I]बलेन परिपूर्णश्च तेजसा भास्करोपमः ।
पूर्णेन्दुसदृशः कान्त्या गमने विहगोपमः ॥
स्वल्पाशनेनाशक्तता बहुनाऽपि न खिद्यते ।
विण्मूत्रयोरप्यल्पत्वं भवेन्निद्राजयस्तथा ॥
जपध्यानगतोमन्त्री न खेदमधिगच्छति ।
विना भोजनपानाभ्यां पक्षमासादिकं मुने ॥
इत्येवमादिभिश्चिह्नैः महाविस्मयकारिभिः ।
प्रवृत्तैः सम्प्रबोद्धव्यं प्रसन्नोमन्त्रराडिति ॥

बोधायनः—

सिद्धेस्तु त्रीणि चिह्नानि दाता भोक्ता ह्ययाचकः ॥ इति ॥

प्रपञ्चसारे—

ततोऽस्य प्रत्ययास्त्वेवं जायन्ते जपतोमनुम् ।

इत्यारभ्य

अर्काभस्तेजसाऽसौ भवति नलिनजा सन्ततं किंकरी स्या-
द्रोगानश्यन्ति दृष्ट्वा तमथ च धनधान्याकुलं तत्समीपम् ।
देवानित्यं नमोऽस्मै विदधति फणिनोनैव दंशन्ति पुत्राः
सम्पन्नाः स्युः सपुत्रास्तनुविपदि परं धाम विष्णोः सभू(या)यात् ॥

## शुभाशुभस्वप्नाः

परमानन्दतन्त्रेऽपि—

साधकस्य तु सिद्धेर्वै चिह्नानि शृणु शङ्करि ।
आचार्यदर्शनं चित्तप्रसादोऽल्पाशनं तथा ॥
अल्पनिद्रा मनोल्लासः सिद्धिचिह्नानि शङ्करि ।
अथ स्वप्नान् प्रवक्ष्यामि शुभांश्चैव तथेतरान् ॥
उपास्य देवतारूपं प्रासादं स्फटिकोपमम् ।
गुरुप्रियजनं पूर्णचन्द्रं सूर्यं सरित्पतिम् ॥

I—जपेन

पूर्णां नदीं तटाकं च प्रफुल्लकमलाकरम् ।
यन्त्रराजं महादेवलिङ्गं हैरण्यपर्वतम् ॥
दृष्ट्वा सिद्धिस्तथा नौकातरणं स्वस्य वै जयः ।
ज्वलदग्निं हंसचक्रवाकसारसबर्हिणः ॥
अश्वयुग्मथमध्यस्थं श्वेतच्छत्रादिभूषणम् ।
दीपपङ्क्तिं श्वेतमाल्यं दिव्यस्त्रीणां कदम्बकम् ॥
फुल्लवृक्षं चारुमांसं खे यानमभयं तथा ।
श्वेताश्ववृषभौ मत्तवारणं तेषु रोहणम् ॥
विमानगमनं मद्यपानं मांसस्य भक्षणम् ।
विष्ठालेपं रक्तलेपं दधिलेपं च भक्षणम् ॥
राज्याभिषेकं रत्नादिभूषणं चैवमादिकम् ।
हर्षहेतुकरं चित्रं स्वप्नं विद्याच्छुभावहम् ॥
एतन्निवेदनविधिं शृणु वक्ष्यामि सुन्दरि ।
प्रातःस्नानं च सन्ध्याऽऽदि विधाय गुरुसन्निधौ ॥
तत्समानसमीपे वा देवतानिकटेऽथवा ।
नत्वा कृताञ्जलिः सर्वं वाच्यं दृष्टवदेव हि ॥
शुभस्वप्ने पुनःस्वापोन कर्तव्यः कदाचन ॥ इति ॥

अथ पुरश्चरणे अनुष्ठीयमाने अशुभस्वप्नानि तत्रैव—

अथाशुभांस्तु स्वप्नान् वै प्रवक्ष्यामि शृणु प्रिये ।
काककङ्कोलूकगृध्रान् खरमार्जारमाहिषान् ॥
चण्डालं कृष्णपुरुषं स्त्रियं वा विकटां तथा ।
शून्यगर्तं शुष्कवृक्षं नदीपुष्करवापिकाः ॥
तैलाभ्यङ्गं कण्टकयुग्वृक्षं प्रासादभञ्जनम् ।
उन्मत्ततां नग्नतां च भीततां स्वात्मनस्तथा ॥
सङ्कटेन समायोगं पश्यन् शान्तिं समाचरेत् ॥ इति ॥

अशुभस्वप्नशान्तिः

एवम् अशुभे शान्तिरुक्ता तत्रैव—

दर्शने चाशुभस्याथ शान्तिं वक्ष्यामि संशृणु ।
मन्त्रराजं पठित्वा तु नृसिंहं प्रार्थ्य वै जपेत् ॥
नृसिंहबीजं देवेशि शुचिर्भूत्वा ह्युदङ्मुखः ।

प्रथमं मन्त्रराजजपः, ततः—

नृसिंहाय नमोदोषान् जहि दुःस्वप्नजान् मम ।
यतः स्वप्नाधिपस्त्वं वै सर्वेषां फलदोमतः ॥

अनेन प्रार्थनं, ततोनृसिंहबीजजपः । मन्त्रराजः कः ? नृसिंहबीजं किम् ? इति ।

तदुक्तं तन्त्रे, उर्ध्वाम्नाये—

उग्रं वीरं चाथ महाविष्णुं चाथ ज्वलं च तम् ।
सर्वतश्च मुखं पश्चात् नृसिंहं भीषणं तथा ॥
भद्रं वै मृत्युमृत्युं वै नमाम्यहं रदनाक्षरः ।
मन्त्रराजइति ख्यातः सर्वेत्रायं सुगोपितः ॥
नृसिंहबीजं देवेशि वक्ष्यामि प्राणवल्लभे ।
पृथ्वी स्पर्शयुता ज्वाला बिन्द्वाढ्येति समीरितम् ॥ इति ॥

नृसिंहमन्त्रोद्धारे च अथ पश्चात् तथा वै इत्यपहाय द्वात्रिंशदक्षरोमन्त्रः । पृथ्वी–क्ष, स्पर्शः–र, ज्वाला–औ, बिन्दुयोगे–क्ष्रौं–इति ज्ञेयम् । अथ स्वप्नफलकालेयत्ता तत्रैव—

वर्षेण च तदर्धेन तदर्धेन च मासतः ।
आद्ययामादितोज्ञेयं फलं यामचतुष्टये ॥ इति ॥

मनुजापिशयनधर्माः—

जपस्थाने शयनं कर्तव्यमित्युक्तम् । तत्र धर्माः—

भुक्त्वैव तु जपस्थानसमीपे शयनं चरेत् ।
मूलेन सप्ताभिमन्त्र्य प्रार्थयेत् देवतागणम् ॥

अत्र शयनम्–आस्तरणं, तदभिमन्त्रणं मूलेन—

अत्र देवास्त्रयस्त्रिंशदाशापालामरुद्गणाः ।
रक्षन्तु मां मन्त्रसिद्ध्यै यतन्तं विबुधेश्वराः ॥
महाविद्यासाधकस्य भूतवेतालकादयः ।
विघ्नं कुर्वन्ति सततं तेभ्योरक्षतु मां शिवः ॥
भैरवामातृसहिताः कोटिशः संचरन्ति वै ।
सिद्धिनाशाय लोकस्य तेभ्योरक्षतु शंकरः ॥
सुप्तं सर्पादिरूपेण साधकं भीषयन्ति वै ।
सिद्धिलोपाय देवाद्याः शूलपाणिस्ततोऽवतु ॥

अनन्तमूर्ध्नि देव्येषा धरा यस्मात् प्रतिष्ठिता ।
तेन सत्येनावतु मामनन्तः [1]सर्वरक्षकः ॥
नमः स्वप्नाधिपतये रुद्रायामिततेजसे ।
इष्टार्थान् सम्यगाचक्ष्व नाशयानिष्टसूचकान् ॥
रुद्रमन्त्रं त्रिधा जप्त्वा विन्यस्याङ्गेषु सुस्वपेत् ॥ इति ॥

रुद्रमन्त्रोऽपि तत्रैवोक्तः—

तारश्च हृदयं वै च स्वप्नाधिपतये ततः ।
रुद्राय हृदयं मूर्ध्नो नृपवर्णः स्मृतोमनुः ॥ इति ॥

" ॐ नमः स्वप्नाधिपतये रुद्राय नमः स्वाहा " इति षोडशाक्षरोमन्त्रः ॥

## हविष्यपदार्थगणनम्

पूर्वं हविष्याशननियमउक्तः । तत्र हविष्याणि तन्त्रे—

व्रीहिजास्तण्डुलाश्चैव यवाः कृष्णतिलास्तथा ।
मुद्गानीवारकाश्चापि षाष्टिकाश्च महेश्वरि ।
सैन्धवं चापि सामुद्रं लवणं द्विविधं स्मृतम् ।
गव्यं घृतं पयश्चैव दधि निस्सृतसारकम् ॥
ऐक्षवं सर्वमेव स्यात् गुडवर्जं महेश्वरि ।
फलं तु नारिकेलं स्यात् कदली लवली तथा ॥
[१]तिन्त्रिण्याम्रफलं तद्वत् दाडिमस्य फलं तथा ।
आर्द्रकं नागरं धात्री तथैव च हरीतकी ॥
पटोलं वास्तुशाकं च कन्दं स्यात्तु पवित्रकम् ।
निवेदितं तथाऽन्यद्वा चार्थप्राप्तं न सन्त्यजेत् ॥ इति ॥

वास्तुशाकं महाराष्ट्रभाषया चाकवत् इति प्रसिद्धम् । कन्दे अन्यस्मिंश्च पवित्रकमित्यस्यान्वयः । तथा च, पवित्रं कन्दं, उक्तादन्यत् यत् पवित्रम् अनिच्छया प्राप्तं तदपि हविष्ये ग्राह्यमिति भावः ॥

1 सर्वभक्ष—श्री. अ.

---

१ अत्रतिन्तिज्याम्रफलम्–अथवा, तिन्तिल्याम्रफलम्–इति शुद्धं पदम्–प्र–अमर० २ कां–३–श्लोके तट्टीकायां च–

### जपकालिकनैमित्तिकक्रियाः

अथ जपप्रारम्भानन्तरं निमित्ते सति नैमित्तिकाः याः क्रियाः सन्ति तायथा—

उद्गारजृम्भाहिक्कानां जपमध्ये तु सम्भवे ।
जपेच्चतुस्तारकं तु प्राणायाममथापि वा ॥
निद्राऽपानोद्गारयोगे, तन्मालां तु परित्यजेत् ।
आचम्य विन्यसेदङ्गं, मालास्रंसे तु निद्रया ॥
जपेदष्टोत्तरशतं तदात्रोहे, सहस्रकम् ।
आजानुकूर्परान्तं तु प्रक्षाल्यकरपादयोः ॥
कृत्वाऽऽचमनकं देवि, त्रिधा प्राणस्य धारणम् ।
मूत्रोत्सर्गे मलोत्सर्गे स्नानं चापि विधीयते ॥
विस्मृतौ जपसङ्ख्यायाः पुनरारम्भएव च ॥ इति ॥

मूत्रोत्सर्गे प्राणायामान्तं मलोत्सर्गे तावत् स्नानं चेति तात्पर्यम्—

अथासने विशेषउच्यते । तदुक्तं योगिनीतन्त्रे—

छिद्रयुक्तानि दग्धानि जीर्णानि स्फुटितानि च ।
परकीयान्यासनानि वर्जयेत् जपकर्मणि ॥
हरिणव्याघ्रयोश्चर्म कुशवेत्रभवं कटम् ।
कार्पासपट्टोर्णवस्त्रमच्छिद्रास्फुटितं भवेत् ॥
त्रयं वा द्वयमेकं वा भिन्नजातीयकं स्मृतम् । ॥ इति ॥

एवमन्येऽपि धर्माः अनुष्ठितुं समर्थेन परमानन्दतन्त्रात्—

अवगन्तव्याः—

एतद्धर्माणां श्रीविद्यापुरश्चरणेऽपि ग्राह्यत्वम्

इत्थं वाराहीपुरश्चरणपदेन सूचिताधर्माः—निरूपिताः । श्रीविद्यायाः अपि पुरश्चरणे इमान् धर्मान् गृहीत्वा श्रेयस्कामोऽनुतिष्ठेत् पुरश्चरणस्य पूजादिप्रयोगबहिर्भूतस्यासूचितस्यापि सहस्रनामपाठादिवत् श्रेयस्कामेन गृहीतुं शक्यत्वात् तथाऽन्येष्वतिदूषितम् इति[I] त्रिपुरार्णव वचनाच्च । किंच,

चरमखण्डे श्रीविद्याजपकालस्य[१] प्राह—इत्यनेनोक्तत्वाच्च सूत्रकाराभिमतं पुरश्चरणमिति ज्ञायते ॥

I त्रिपुरारहस्यवचनोदाहरणरूपत्वाच्च—अ. ब. २ .

१ आगामि १० खण्डे—५५—सूत्रे मूले, उक्तत्वादित्यर्थः—

## कादिहादिभेदेन श्रीविद्योपास्तिभेदः

तत्र श्रीविद्योपास्तिः कादिहादिभेदेन द्विधा । तत्र हादिविद्योपास्तिः लक्षसङ्ख्याजपरूपा, श्रीचक्रसंहितायां हादिविद्यामुद्धृत्य—

लक्षमेकमिदं जप्त्वा सर्वपापहरोभवेत् ।

इत्युक्तत्वात् । कादिविद्यायास्तु लक्षं त्रिलक्षं नवलक्षम् इति त्रिप्रकारं शास्त्रमुपलभ्यते । एक-लक्षसङ्ख्या परमानन्दतन्त्रे—

तत्र स्थित्वा जपेल्लक्षं हविष्याशी समाहितः ।
मन्त्रसाधनकामस्तु .... .... ....इति ॥

त्रिलक्षजपस्तु ज्ञानार्णवे—

तदा लक्षत्रयं साधुः सर्वपापनिकृन्तनम् ।
एवं लक्षत्रयं जप्त्वा व्रतस्थः स्वस्थमानसः ॥
संक्षोभयति भूलोकस्वर्लोकतलवासिनः ॥ इति ॥

दक्षिणामूर्तिसंहितायाम्—

लक्षमात्रं जपेत् देवि नियतः संयतेन्द्रियः ।
तद्दशांशेन होमः स्यात् कुसुमैर्ब्रह्मवृक्षजैः ॥ इति ॥

नवलक्षजपोऽपि तत्रैव—

अथवा नवलक्षं तु जपेद्विद्यां समाहितः ।
क्षोभयेत् स्वर्गभूलोकपातालतलवासिनः ॥ इति ॥

अत्रेयं व्यवस्था । केवलं मन्त्रसिद्धिकामस्य लक्षात्मकमेव पुरश्चरणम् पूर्ववचने "मन्त्र-साधनकामस्तु" इति श्रवणात् । सर्वक्षोभणकामः त्रिलक्षं, पूर्ववचनेन "संक्षोभयति भूलोक" इति श्रवणात् । अतएव ज्ञानार्णवे—

तृतीयलक्षे सम्प्राप्ते द्रावयन्ति सुराङ्गनाः ॥ इत्युक्तम्

स्वर्गभूपातालादिवासिलोकवशीकरणकामोनवलक्षं, पूर्ववचने तथा श्रुतत्वात् । इत्थं च एक-लक्षात्मकं मन्त्रसिद्ध्यर्थं पुरश्चरणं विधाय मन्त्रसिद्धिं सम्पाद्य पश्चात् तत्तत्कामनायां सत्यां तत्तत्सङ्ख्याकं कुर्यात् । अतएव [1]ज्ञानार्णवे एकलक्षमारभ्य नवलक्षपर्यन्तं एकद्वित्र्यादिलक्ष-सङ्ख्यानां फलं पृथगेवोक्तम् । ग्रन्थविस्तरभयात् न लिखितम् ॥

---

१ इदमेकलक्षादिजपफलं–ज्ञानार्णवेपि–२०-पटले-९१-पत्रे-१०-श्लोकतोस्ति–

### पञ्चदश्यादिविद्यासु मन्त्रशोधनानपेक्षा

यद्यपि सिद्धारिचक्रादि मन्त्रशोधनं तन्त्रान्तरे बहुशोऽस्ति तथापि

नृसिंहार्कवराहाणां प्रासादप्रणवस्य च ।
सपिण्डाक्षरमन्त्राणां सिद्धादीन्[1] नैव शोधयेत् ॥

इति सौरतन्त्रे । डामरे—

पञ्चदशीं षोडशीं च तथा सर्वाङ्गसुन्दरीम् ।
चण्डालेभ्योऽपि गृह्णीयात् यदि भाग्येन लभ्यते ॥
न शुद्धिं चिन्तयेदत्र भावशुद्धेर्हि शुद्धता ।
नात्र शुद्ध्याद्यपेक्षाऽस्ति [2]नारिमित्रादिशोधनम् ॥ इति ॥

तन्त्रराजे च—

नित्यानां त्रैपुराणां च नावेक्ष्यास्त्वंशकादयः ॥ इति ॥

प्रकृते, तद्विचारस्याप्रयोजकत्वात्—न लिखितम् ॥

इयं पूर्वोक्तसङ्ख्या पुरश्चरणे कृतयुगे । कलौ चतुर्गुणं प्रोक्तम् इति वचनात् कलियुगे चतुर्गुणम् इत्यलं पल्लवितेन ॥ ३७ ॥

### पूजाशेषकृत्यम्

एवं प्रसङ्गात् पुरश्चरणमुक्त्वा, पूजाशेषकृत्यमाह—

**ततश्च पूजितां देवीमात्मनि योजयित्वा स्वैरं विहरन्नाज्ञासिद्धः सुखी विहरेत्—इति शिवम् ॥ ३८ ॥**

**इति...कल्पसूत्रे वाराहीक्रमोनाम, सप्तमः खण्डः**

ततः जपानन्तरं पूजिताम् चक्रे पूजितां आत्मनि हृदयकमले योजयित्वा स्थापयित्वा स्वैरं स्वेच्छया विहरन् गच्छन् आज्ञायाः सिद्धिः फलवत्ता यस्यैतादृशः अप्रतिहताज्ञः इत्यर्थः । सुखी अपरिच्छिन्नसुखः । [१]शिवमिति व्याख्यातं प्राक् ॥ ३८ ॥

इति...कल्पसूत्रवृत्तौ वाराहीक्रमोनाम सप्तमः खण्डः

1 न विचारयेत्—ब २ 2 नचामित्रादिदूषणम्—अ. २

[१] अत्र शिवम्—इति प्रत्येकखण्डान्ते-मूलसूत्रान्ते-उक्त-तत् तत्तत्खण्डस्य—वा-प्रकरणस्य-वा-समाप्तिद्योतकमिति ज्ञेयं सर्वत्र—

सूत्रस्यपुनरावृत्तौ शोध्यं सूचयितव्यकम् ।
परिशिष्टस्थलं चैव पूर्णमाद्याप्रसादतः ॥ इति सप्तमः खण्डः-श्रीः-

## अष्टमः खण्डः पराक्रमः

सृष्टिस्थितिलयकृद्भिः नयनाम्भोजैः शशीनदहनाख्यैः ।
मौक्तिकताटङ्काभ्यां मण्डितमुखमण्डलां परां नौमि ॥

### परायाउपास्यत्वम्

अथ पराक्रमं वक्तुमुपक्रमते—

**इति विधिवत्कृतवार्तालीवरिवस्यः सिंहासनविद्याहृदयमनुत्तरं पराबीजरूपं धाम तत्क्रमपूर्वं विमृशेत् ॥ १ ॥**

कृतवार्तालीवरिवस्यइत्यनेन वार्तालीक्रमसमाप्त्युत्तरकालोऽङ्गत्वेन सूचितः। सिंहासनं सिंहासनस्वामिपरम्, तद्रूपा या विद्या सा त्रिपुरसुन्दरी ललिता, तस्याः हृदयं हृदयरूपम्। क्वचित् सिंहासनीविद्या इति पाठः। तत्पक्षे सुगमम्। न विद्यते उत्तरं श्रेष्ठं यस्मात् तत् अनुत्तरं पराबीजं, सौः तद्रूपं, देवतामन्त्रयोः अभेदात् तद्रूपत्वं युक्तम्। धाम तेजः। तत्क्रमः पूर्वं यस्येति क्रियाविशेषणम्। विमृशेत् उपासनां कुर्यात् ॥ १ ॥

अस्याउपासने हेतुमाह—

**प्रभुहृदयज्ञातुः पदे पदे सुखानि भवन्ति ॥ २ ॥**

अस्याः श्रीललिताहृदयरूपत्वात्—एतदुपासनेन तत्प्रीतौ सम्पादितायां प्रधानदेवी-प्रीतिसम्पादनं सुगममिति ध्वनितम् ॥ २ ॥

### परापद्धतिप्रारम्भः

अस्याः क्रमव्याख्यानं प्रतिजानीते—

**अथोनुत्तरपद्धतिं व्याख्यास्यामः ॥ ३ ॥**

अथो, इति समुच्चयार्थोनिपातः। अग्रिमवर्णे पूर्वरूपमार्षम् ॥ ३ ॥

### उषःकृत्यम्

**कल्ये समुत्थाय ब्रह्मकोटरवर्तिनि सहस्रदलकमले सन्निविष्टायाः सौवर्णरूपायाः परायाश्चरणयुगलविगलदमृतरसविसरपरिप्लुतं वपुः ध्यात्वा ॥ ४ ॥**

कल्ये उषसि । प्रत्यूषोऽहर्मुखं कल्यम् इत्यमरे । ब्रह्मकोटरं ब्रह्मबिलम् । सौवर्णरूपायाः इति–सुवर्णस्येदं सौवर्णं, पीतम् इत्यर्थः । सौवर्णं रूपं यस्याः तस्याः विगलत् प्रस्रवत् अमृत-रसः–अमृतसारं तस्य योविसरः व्याप्तिः तेन परिप्लुतं स्नातं, ध्यात्वा । इति ब्राह्ममुहूर्त-कृत्यम् ॥ ४ ॥

## स्नानादिकृत्यम्

अथ स्नानादिकृत्यमाह—

**स्नातः शुचिवासोवसानः, सौः वर्णेन त्रिराचम्य, द्विः परिमृज्य, सकृदुपस्पृश्य, चक्षुषी, नासिके, श्रोत्रे, अंसे, नाभिं, हृदयं, शिरश्चाव-मृश्य, एवं त्रिराचम्य ॥ ५ ॥**

स्नातइति नाम्ना श्रीक्रमोक्तस्नानधर्मातिदेशः । अत्र मूलस्थाने प्रकृतमूलम् । एतावान् विशेषः । अथाचमनमाह—त्रिराचम्य त्रिवारं, सौः वर्णेन, एकैकवारमभिमन्त्रितजलपानं कृत्वेत्यर्थः । सौः, वर्णस्य तृतीयाश्रुत्या आचमनाङ्गत्वे सिद्धे "प्रतिप्रधानमङ्गावृत्तिः" इति न्यायेन मन्त्रावृत्तिर्लभ्यते । एवमेव द्विः परिमृज्य इत्यादिषु सर्वत्र मूलेनेत्यस्यानुषज्यान्वयः, योग्यत्वात् । द्विः परिमार्जनम् ओष्ठयोः, ब्रह्मयज्ञप्रकरणे तथा दृष्टत्वात् । तथा सकृदुपस्पृश्य इत्यत्रापि जलमिति, ब्रह्मयज्ञे दर्शनात् । अवमृश्य स्पृष्ट्वा । एवं त्रिराचम्येति अवमृश्येत्यन्तं क्रियाकलापः आचमनमेकम् । अस्मिन् तन्त्रे यत्राचमनं तत्रेत्थं कार्यम् । तत्तत्प्रकरणे तत्तन्मूलमात्रयोजनं विशेषः । न तु तन्त्रान्तरस्थं, विप्रकर्षात् । प्रकृते अस्यैवाचमनस्य त्रिरभ्यासोविधीयते ॥ ५ ॥

## आसनविधिः

अथासनविधिमाह—

**ऊर्णाम्रदु शुचितममासनं सौवर्णसूर्यजपाभिमन्त्रितं मूलमन्त्रो-क्षितमधिष्ठाय ॥ ६ ॥**

ऊर्णा एडकलोमविकारः । मृदुत्वविधानात् दृष्ट फलं स्वस्थान्तःकरणं कठिनसंयोगा-भावेन । सौवर्णः तद्युक्तोथः सूर्यः विसर्गः सौः । विसर्गस्य सूर्यपदवाच्यत्वे प्रमाणं देवीभागवते बालामन्त्रवासनाकथनावसरोक्तं—

बिन्दुद्वयं हिमांशुः स्यात् विसर्गस्तरणिस्तथा ।

इति वाक्यं ज्ञेयम् । सौः, अनेनाभिमन्त्रितं मूलेन तेनैवोक्षितम् आसनम् इति शेषः। अधिष्ठाय स्थित्वा ॥

एतेन निबन्धे सूर्यशब्दस्य सङ्ख्यावाचकत्वमङ्गीकृत्य मूलमन्त्रेण द्वादशवारमभिमन्त्रितेनेति लेखः परास्तः; विसर्गप्रापकपदाभावेन निबन्धे विसर्गान्तपाठस्य सन्दर्भविरोधात्। व्याख्यानसमये नानादेशसमुद्भवानि षोडशसङ्ख्याकानि पुस्तकानि सम्पादितानि। एकस्मिन्नपि पुस्तके विसर्गान्तपाठाभावात् तथा पाठप्रतिपादनमप्यशुद्धम् ॥ ६ ॥

देशिकयजनम्

**उदग्वदनोमौनी भूषितविग्रहोमूलपूर्वेण देशिकमनुना मस्तके देशिकमिष्ट्वा ॥ ७ ॥**

उदग्वदनइति पराप्रकरणे नियमविधिः। भूषितविग्रहः वस्त्रभूषणादिभिः। मूलं पूर्वं यस्य ईदृशेन देशिकमनुना [1]दीक्षाप्रकरणस्थगुरुपादुकामन्त्रेण देशिकं गुरुम्—॥ ७ ॥

विघ्नोत्सारणम्

**वामपार्ष्णिघातैः छोटिकात्रयेण पातालादिगतान् भेदावभासिनः, विघ्नानुत्सार्य ॥ ८ ॥**

वामपार्ष्णिघातैः वामपादपृष्ठभागघातैः बहुवचनेन त्रित्वमेव प्रथमोपस्थितं बुध्यते। छोटिका, अङ्गुलिद्वयसंयोगजनितोध्वनिः तासां च त्रयेण। पातालादिपदेन अन्तरिक्षस्य दिवश्चपरिग्रहः; चकारस्वारस्यात्—। पातालादित्रये अभिघातछोटिकयोः प्रत्येकमन्वयः, अनुक्तास्त्रग्रहणं वा। उत्सार्य दूरीकृत्य ॥ ८ ॥

अङ्गन्यासः

**शिरोमुखहृन्मूलसर्वाङ्गेषु मूलं विन्यस्य ॥ ९ ॥**

अत्र, शिरोमुखादिषु प्रत्यवयवं मूलावृत्तिः, सर्वाङ्गे सकृत्। मूले, मूलाधारे। पराप्रकरणे एतावानेवन्यासः, अधिकानुक्तेः ॥ ९ ॥

चिदग्नौ सर्वतत्त्वविलापनम

**काकचञ्चूपुटाकृतिना मुखेन संचोष्यानिलं सप्तविंशतिशोमूलं जप्त्वा वेद्यं नाभौ संमुद्रय पुनः सप्तविंशतिशोजप्त्वा अङ्गुष्ठेन शिखां बध्वा पुनरनिलमापूर्य तेन मूले चिदग्निमुत्थाप्य तत्र वेद्यस्य विलयं विभाव्य ॥ १० ॥**

---

[1] दीक्षा प्रकरणे अयं श्रीगुरुपादुकामन्त्रः प्रत्यक्षोन, तत्र तु—तत्रोपयुक्तबहुतारस्फोटएवास्ति ततः १० खण्डे—३२—सूत्रभाष्ये—हृदयउद्धारोथवात्र-द्वि० परिशि. ५ विषयेप्यस्ति-ततोग्राह्यः— ॥

काकचञ्चूपुटं काकमुखाग्रं तत्समाकृतिना स्वमुखेन सञ्चोष्यानिलं सम्यग्बाह्यवायुमन्तर्नीत्वा । वेद्यम् षट्त्रिंशत्तत्त्वानि [1]वक्ष्यमाणानि सम्मुद्रय एकीकृत्य । अङ्गुष्ठेन तन्मन्त्रेण नमइत्यनेनेत्यर्थः । विलयमिति घनघृतम् अग्निसंयोगेन द्रवीभूतम् । यद्यपि लयशब्दः नाशः, तथाऽपि 'वि' इत्युपसर्गेण द्रवत्वम् अर्थः, "आज्यं विलाप्य" इति प्रयोगात्, "तप्तायोद्रववत्" इत्यग्रिमसूत्रानुरोधाच्च ॥ १० ॥

### अर्घ्यसादनम्

अथार्घ्यसादनमाह—

**गोमयेनोपलिप्तचतुरस्रभूतले प्रवहत्पार्श्वेकरकृतया मत्स्यमुद्रया दिव्यगन्धाम्बुयुतया भूव्योमवायुवह्निमण्डलानि कृत्वा ॥ ११ ॥**

प्रवहत्पार्श्वेति—येन नासापुटेन वायुर्वहति तत्पार्श्वकरमधः, कृत्वा रचितमत्स्यमुद्रयेत्यर्थः । दिव्यः श्रेष्ठः । भूमण्डलं चतुरस्रं, श्रीयन्त्रलेखने चतुरस्रे भूबिम्बं क्षोणीपुरमिति भूरिप्रयोगात् । व्योममण्डलं वृत्तं, शून्यात्मकवृत्ते ज्योतिश्शास्त्रादौ सङ्ख्यासङ्केते आकाशशब्दस्य भूरिप्रयोगात्, शून्यस्य वृत्तरूपत्वात् । वायुमण्डलं षट्कोणं, तन्त्रसारे भूशुद्धिप्रकरणे—

धूम्रवर्णं ततोवायुबीजं षड्बिन्दुलाञ्छितम् ।
षट्कोणं ........................

इति विशुद्धेश्वरतन्त्रवचनस्योदाहृतत्वात् । वह्निमण्डलं त्रिकोणम् "रक्तवर्णं वह्निबीजं त्रिकोणकम्" इति तत्रैव सत्त्वात् । इत्थं च चतुरस्रवृत्तषट्कोणत्रिकोणानीत्यर्थः ॥ ११ ॥

ततः शेषधर्मानतिदिशति—

**श्यामावत् सामान्यविशेषार्घ्यै सादयेत् ॥ १२ ॥**

### परामन्त्रेषु योजनीयोबीजविशेषः

पराक्रमे सर्वमन्त्रेषु, बीजविशेषयोगमाह—

**सर्वेऽपि पराक्रममनवः [I]सौः वर्णपूर्वाः कार्याः ॥ १३ ॥**

### षडङ्गन्यासविशेषः

विशेषार्घ्ये श्यामातोयोऽधिकांशस्तमाह—

**भृगुचतुर्दशषोडशाद्भिरावृत्त्या, वर्णषडङ्गं सर्वमूलषडावृत्त्या, मन्त्रषडङ्गं च, कृत्वा ॥ १४ ॥**

---

१ अत्रैव खण्डे आगामिपराचक्रनिर्माणे-पत्रे-१८-सूत्रे तद्भाष्ये च-सन्ति ३६-तत्वानि-

भृगुः सकारः, चतुर्दश औकारः, षोडशोविसर्गः, एतेषां प्रत्येकं द्विरावृत्त्या हृदयादि-षडङ्गं कुर्यात्—अथ वर्णषडङ्गन्यासः। बिन्दुयोगश्च, शिष्टसम्प्रदायात्। मन्त्रस्वरूपम्—सं हृदयायनमः। औं शिरसे स्वाहा। अः शिखायै वषट्—विसर्गस्य केवलस्यानुच्चार्यत्वात्। एवमग्रेऽपि। इति मूलवर्णषडङ्गन्यासः। विशेषार्घ्ये अग्रे सुधादेवीमभ्यर्च्येति, तस्यैव संस्कारश्रवणात् तत्रैव विशेषः। मूलेन पुनः षडङ्गन्यासमाह—सर्वमूलेति ॥ १४ ॥

### षडङ्गदेवीपूजा

न्यस्तानां षडङ्गदेवीनां पूजामाह—

**उभाभ्यामर्चयित्वा ॥ १५ ॥**

मूलवर्णमूलाभ्यामित्यर्थः ॥ १५ ॥

### सुधादेवीपूजा

अथ सुधादेवीपूजामाह—

**मूलमुच्चार्य, तां चिन्मयीमानन्दलक्षणाममृतकलशपिशितहस्तद्वयां, प्रसन्नां, देवीं, पूजयामि नमः स्वाहा—इति सुधादेवीमभ्यर्च्य तया सम्प्रोक्ष्य वरिवस्यावस्तूनि ॥ १६ ॥**

मूलमुच्चार्येति। तया सुधादेव्या वरिवस्यावस्तूनि पूजाद्रव्याणि ॥ १६ ॥

### तत्त्वकदम्बस्य हृत्पद्मानयनम्

**पूर्वं नाभौ सम्मुद्रितं चिदग्निविलीनं तप्तायोद्रववत् षट्त्रिंशत्तत्त्व-कदम्बकं हृत्सरोजे समानीय ॥ १७ ॥**

पूर्वं, पात्रासादनात् पूर्वमित्यर्थः। तप्तायोद्रववत् तप्तसुवर्णरसवत्, वेदे निघण्टौ सुवर्ण-पर्याये अयःपदसत्त्वात् प्रकृतायःपदमपि सुवर्णवाचकम्। इत्थं च पूर्वं नाभौ षट्त्रिंशत्तत्त्वानि एकीकृत्य चिदग्निना द्रवीभावः सम्पादितोऽस्ति,ताननूद्य हृदये तद्रसस्य समानयनं विधीयते ॥ १७ ॥

### पराचक्रनिर्माणम्

अथ पराचक्रं वक्तुं प्रक्रमते—

**मूलजप्तैः [1]कुसुमक्षेपैः वक्ष्यमाणैश्च मन्त्रैरासनक्लृप्तिं कुर्यात्—मूलादियोगपीठाय नमः—इत्यन्तानि तानि च पृथिव्यप्तेजोवाय्वाकाश-गन्धरसरूपस्पर्शशब्दोपस्थपायुपादपाणिवाग्घ्राणजिह्वाचक्षुस्त्वक्श्रोत्रा-**

1 माक्षतैः—श्री.

**हङ्कारबुद्धिमनःप्रकृतिपुरुषनियतिकालरागकलाविद्यामायाशुद्धविद्येश्वर-सदाशिवशक्तिशिवाः । एवं पराचक्रं कृत्वा ॥ १८ ॥**

प्रथमं केवलमूलेनैकवारं, कुसुमक्षेपः । ततोवक्ष्यमाणैकैकतत्त्वमन्त्रेण, मूलादिना, योगपीठाय नमः—इत्यन्तेनैकवारं कुसुमाक्षतक्षेपः वक्ष्यमाणैर्मन्त्रैः । यथा—तत्र तत्त्वमन्त्रस्वरूपं-पृथिवीयोगपीठाय नमः—इति । एवं शिवान्तेषु योज्यम्—। एवं हृदये षट्त्रिंशद्वारं मूलेन निरुक्तषट्त्रिंशत्तत्त्वमन्त्रैश्च कुसुमानां प्रक्षेपएव पराचक्रनिर्मितिः—इति भावः । तानि चेत्यत्र लिङ्गव्यत्ययः—आर्षः ।

षट्त्रिंशत्तत्त्वान्याह—पृथिवीति शिवाः—इत्यन्तेन—। यद्यपि तन्त्रान्तरे शिवादिपृथिव्यन्त-क्रमस्तत्त्वानामस्ति, तथापि प्रकृते अनेनैव क्रमेण मन्त्रैः पुष्पक्षेपोऽपूर्वसाधनमिति विपरीत पाठः । तत्वस्वरूपं व्याख्यातं [1]प्राक्— ॥ १८ ॥

### देव्याआवाहनम्

कल्पितचक्रे, आवाहनमाह—

**तत्रैतदैक्यविमर्शरूपिणीं षोडशकलां परां देवीमावाह्य ॥ १९ ॥**

एतेषां तत्त्वानां यऐक्यविमर्शः, ऐक्यप्रकाशशक्तिः तद्रूपिणीमावाहयेत् । अन्यत् स्पष्टम्—॥ १९ ॥

### देवीध्यानम्

एवमाहनमुक्त्वा आवाहितायाध्यानप्रकारमाह—

**अकलङ्कशशाङ्काभा त्र्यक्षा चन्द्रकलावती ।**
**मुद्रापुस्तलसद्बाहुः पातु मां, परमा कला ॥**

**इति ध्यात्वा ॥ २० ॥**

अकलङ्कः कलङ्कशून्यः यः शशाङ्कः चन्द्रः तत्तुल्याभा । मुद्रा चिन्मुद्रा, पुस्तं पुस्तकम एतेन द्विबाहुत्वं स्पष्टम् । अत्र, पुस्तकं वामहस्ते,[2] [3]गणपतिप्रकरणलिखितयामलवचनात्—परिशेषान्मुद्रा, दक्षे ॥ २० ॥

---

१ प्राक्—नाम १७ पत्रतः—२४ पत्रान्तमिति ज्ञेयम्

२ अत्र इतीत्यध्याहार्थम्—

३ एतदादिन्नियमकारिका: पाश्चात्य—२—खण्डे, ७६—पत्रे, सन्ति—

देवीपूजा

अथ पूजामाह—

**मूलादिमुच्चार्य प्रकाशरूपिणीपराभट्टारिका, मूलमध्यमुच्चार्य विमर्शरूपिणीपराभट्टारिका, मूलान्त्यमुच्चार्य प्रकाशविमर्शरूपिणी पराभट्टारिकेति त्रिभिः देव्यामूलहृन्मुखेष्वभ्यर्च्य–समस्तमुच्चार्य, महाप्रकाशविमर्शरूपिणीपराभट्टारिकेति, दशवारमवमृश्य तामेव देवीं, कालाग्निकोटिदीप्तां ध्यात्वा ॥ २१ ॥**

मूलादिं सकारम्। तत्र बिन्दुयोगोऽपि। एवं मूलद्वितीयम्, औं। तृतीयम्, अः। मन्त्रस्वरूपं तु–सम्प्रकाशरूपिणीपराभट्टारिकाश्री° । एवमन्यत्। देव्यामूलं मूलाधारम्। इदं पूजनं विशेषार्घ्यद्रव्येण [1]आवरणदेवतावत् स्वहृदये ज्ञेयम्। समस्तं सम्पूर्णं मूलमित्यर्थः। श्रीपादुकेत्यादियोजनं अत्रापि। अवमृश्य पूजयित्वा ॥ २१ ॥

देव्यामखिलतत्त्वहोमभावनम्

ततः कृत्यशेषमुपदिशति—

**[2]तस्यां क्रियासमभिव्याहारेण वेद्यमखिलं हुत्वा ॥ २२ ॥**

तस्यां दीप्तौ हुत्वा हुतं भावयित्वा ॥ २२ ॥

गुरवे अर्घ्यनिवेदनम्

**मूलमुच्चार्य, सामान्यपादुकया स्वमस्तकस्थाय गुरवे अर्घ्यं निवेद्य ॥ २३ ॥**

सामान्यपादुकया, दीक्षाप्रकरणे '[1]पठितगुरुपादुकामन्त्रेण ॥ २३ ॥

चिदग्नेरुद्दीपनम्

**पुनश्चिदग्निमुद्दीप्तं विभाव्य ॥ २४ ॥**

उद्दीप्तं विशेषेण दीप्तं विभाव्य ॥ २४ ॥

ओघत्रयाभ्यर्चनम्

**दिव्यौघं तिस्रः पादुकाः सिद्धौघं तिस्रः मानवौघमष्टावभ्यर्च्य ॥ २५ ॥**

दिव्यौघसिद्धौघमानवौघानामर्चनम्—आवरणदेवताऽर्चनवद्, विशेषार्घद्रव्येण स्वहृदये-एव कार्यम् ॥ २५ ॥

1 परदेवतावत्–अ, श्री. 2 तस्याः–ब२

१ अत्र, ६६ पत्रे–४१ सूत्रं तद्भाष्यं–१० खण्डे सर्वसाधारणक्रमीय ३२ सूत्रभाष्यमपि चद्रश्यम्—

दिव्यौघादिनाह

**पराभट्टारिकाऽघोरश्रीकण्ठशक्तिधरक्रोधत्र्यम्बकानन्दप्रतिभादेव्यम्बा, वीरसंविदानन्दमधुरादेव्यम्बा, ज्ञानश्रीरामयोगाः-इति,पराक्रमपादुकाः ॥ २६ ॥**

पराभट्टारिका अघोरः श्रीकण्ठः-इति दिव्यौघः । शक्तिधरः क्रोधः, त्र्यम्बकः-इति सिद्धौघः । आनन्दः प्रतिभादेव्यम्बा, वीरसंविदानन्दः मधुरादेव्यम्बा, ज्ञानः श्रीरामः योगः-इति मानवौघः—॥ २६ ॥

बलिनिवेदनम्

**ततः कलामनुना बलिं निवेद्य ॥ २७ ॥**

ततः अर्चनानन्तरम् । कलामनुना, सौः-इत्यनेन, "पातु मां परमा कळा-" इत्यत्र परायाः कलापदवाच्यत्वं निर्णीतम्- अतस्तन्मनुरसावेव भवितुमर्हति- ।

बलिदाने धर्माः [1]श्रीक्रमोक्ताः ग्राह्याः, एकदेवताकत्वेन साजात्यात् । अत्र जपस्य उपासनाकालस्य वाऽनुक्तेः, अयं प्रयोगः सकृदेव । यद्वा—श्यामावार्तालीसाहचर्यात् जपसङ्ख्या अनुक्ता, [2]तत्रत्या ग्राह्या । तावज्जपपर्यन्तमुपास्तिः । अतएवाग्रे सूत्रकारः जपकालं वक्ष्यति ॥ २७ ॥

हविश्शेषस्वीकारः

**हविश्शेषमात्मसात्कुर्यात् । इति शिवम् ॥ २८ ॥**

इति...कल्पसूत्रे पराक्रमोनामाष्टमः खण्डः

हविश्शेषात्मसात्कारः श्रीक्रमवत् । आत्मसात् कुर्यात्, इत्येवोक्त्या अत्र सामयिकाभावः सूचितः । शिवमिति व्याख्यातमेव ॥ २८ ॥

इति...कल्पसूत्रवृत्तौ पराक्रमोनामाष्टमः खण्डः

---

१. १७२-१७३-पत्रयोः-५-खण्डे-१८-१९-सूत्रे द्रश्ये-

२. तत्रत्या नाम, २०५-पत्रे श्रीश्यामाक्रमस्थ ३७-सूत्रोक्ता-तथाच, २२३ पत्रे श्रीवाराहीक्रमस्थ ३७ सूत्रोक्तवत् लक्षसङ्ख्येत्यर्थः-

सूत्रस्य पुनरावृत्तौ शोध्यं सूचयितव्यकम् ।
परिशिष्टस्थलं चैव पूर्णमाद्याप्रसादतः-॥ इति षष्ठः खण्डः-श्रीः—

## नवमः खण्डः—होमविधिः

### होमाधिकारः

अथ गणपतिक्रमे नित्यहोमप्रसक्तौ ललिताऽऽदिपुरश्चरणाङ्गहोमस्य अन्यत्र काम्यहोमस्य वा प्रसक्तौ तदितिकर्तव्यताज्ञानस्यावश्यकतया तदर्थं होमविधिं वक्तुमारभते—

**अथ स्वेष्टमन्त्रस्य होमविधानं व्याख्यास्यामः ॥ १ ॥**

अथेति पूर्वप्रक्रान्तविच्छेदद्योतकः । स्वेष्टमन्त्रस्येत्यनेन, [१]अग्रे सौरवैष्णवादि-सर्वसाधारणोपासनायाः वक्ष्यमाणत्वात् अत्रापि सर्वसाधारणोहोमविधिः—इति ज्ञापितः ॥ १ ॥

### कुण्डस्थण्डिलनिर्माणम्

ततः तद्विधिमाह—

**चतुरस्रं कुण्डमथवा हस्तायाममङ्गुष्ठोन्नतं स्थण्डिलं कृत्वा ॥ २ ॥**

कुण्डमित्यनेन तन्त्रान्तरोक्तमेखलायोनिखातादिकमतिदिष्टं नाम्ना । चतुरस्रं नित्यम् । प्रजाऽऽदिकामनायां योनिकुण्डादिकमपि । सूत्रानुयायिनां न मण्डपविचारः, अनुक्तत्वात् असूचितत्वाच्च । आयामः विस्तारः ॥ २ ॥

### सामान्योदकेनावोक्षणम्

**सामान्यार्घ्यमुपशोध्य तेनावोक्ष्य ॥ ३ ॥**

तत्तत्क्रमोक्तविधिना सामान्योदकं निर्मायेत्यर्थः । यदि पूजाऽङ्गहोमः तदा पूजायां कृतेनैव कार्यसिद्धौ न निर्माणं अन्यत्र निर्माणम्—इति ज्ञेयम् ॥ ३ ॥

### रेखासु ब्रह्मादिदेवताऽर्चनम्

**प्राचीरुदीचीस्तिस्रस्तिस्रोरेखालिखित्वा ॥ ४ ॥**

प्राचीः प्रागग्राः उदीचीः उदगग्राः ॥ ४ ॥

**तासु रेखासु ब्रह्मयमसोमरुद्रविष्णवन्द्रान्, षट्[1]तारीनमस्स-म्पुटितानभ्यर्च्य ॥ ५ ॥**

[२]षट्तारी त्रितारीकुमारी प्रथमं, ततोब्रह्मणे नमः—इति । एवं च षट्तारनमस्सम्पुटिताभवन्ति । एवमेव यमायेत्यादौ योज्यम् । नमस्सम्पुटितान् इत्यनन्तरं पठित्वेति शेषः । अभ्यर्च्येत्यस्य कर्माकाङ्क्षायां मन्त्रलिङ्गात् देवता योज्या ॥ ५ ॥

1 तार—अ, श्री.

१. अग्रे नाम—आगामि १०खण्डारम्भसूत्रतः—

२. एतदर्थं ६६ पत्रे—४१ सूत्रभाष्यं—९२ पत्रे ८ सूत्रभाष्यं च—द्रष्टव्यम्—

कुण्डाभ्यर्चनम्

**सहस्रार्चिषे हृदयाय नमः, स्वस्तिपूर्णाय शिरसे स्वाहा, उत्तिष्ठपुरुषाय शिखायै वषट्, धूमव्यापिने कवचाय हुं, सप्तजिह्वाय नेत्रत्रयाय वौषट्, धनुर्धराय अस्त्राय फट्—इति षड्ङ्गं विधाय तेन षडङ्गेन कुण्डमभ्यर्च्य ॥ ६ ॥**

उक्तषणमन्त्रैः स्वदेहे हृदयादिषडङ्गन्यासानन्तरं कुण्डे तैरव मन्त्रैः अग्नीशासुरवायुषु मध्ये दिक्षु च षडङ्गयुवतीः पूजयेत् ॥ ६ ॥

अग्निचक्रनिर्माणादि

ततः अग्निचक्रनिर्माणादिकमाह—

**तत्राष्टकोणषट्कोणत्रिकोणात्मकं अग्निचक्रं विलिख्य पीतायै श्वेतायै अरुणायै कृष्णायै धूम्रायै तीव्रायै स्फुलिङ्गिन्यै रुचिरायै ज्वालिन्यै नमइति त्रिकोणमध्ये वह्नेः पीठशक्तीः सम्पूज्य—तं तमसे, रं रजसे, सं सत्त्वाय, आम्—आत्मने, अम् अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने नमः—इति तत्रैवाभ्यर्चयेत् ॥ ७ ॥**

कुण्डे स्थण्डिले वा अष्टकोणादिनिर्माणं प्रवेशरीत्या कार्यम्, त्रिकोणस्याभ्यन्तरे भूरि दर्शनात्। पीतायै—इत्यादितः ज्ञानात्मने नमः—इत्यन्तं स्पष्टम्। तत्रैव त्रिकोणएव। क्रमस्तु स्वाग्रादिप्रादक्षिण्येन ॥ ७ ॥

वागीश्वरीवागीश्वरपूजा

एवं पीठशक्तिपूजामुक्त्वा ततः अग्निप्रतिष्ठामुपदिशति—

**ततोजनिष्यमाणवह्नेः पितरौ वागीश्वरीवागीश्वरौ पीठेऽभ्यर्च्य तयोर्मिथुनीभावं भावयित्वा ह्रीं वागीश्वरीवागीश्वराभ्यां नमः—इति ध्यात्वा ॥ ८ ॥**

पीठे त्रिकोणात्मके अभ्यर्चितदेवताविशिष्टे। तयोः वागीश्वरीवागीश्वरयोः मिथुनीभावं मैथुनकर्म मनसा भावयित्वा। ध्यात्वेति ध्यानं कामेश्वरीकामेश्वरवत् तदभिन्नत्वात् ॥ ८ ॥

संविदग्निपातनम्

**अरणेः सूर्यकान्तात् द्विजगृहाद्वा वह्निमुत्पाद्य मृत्पात्रे ताम्रपात्रे वा आग्नेय्यामैशान्यां नैर्ऋत्यां वा निधाय, अग्निशकलं क्रव्यादांशं नैर्ऋत्यां विसार्य निरीक्षणप्रोक्षणताडनावकुण्ठनादिभिः विशोध्य-**

**ॐ वैश्वानर जातवेदइहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा-इति मूलाधारोद्गतसंविदं ललाटनेत्रद्वारा निर्गमय्य तं बाह्याग्नियुक्तं पातयेत् ॥ ९ ॥**

अरणिः प्रसिद्धः । द्विजगृहे यः पचनाग्निः तस्यानयनमेव तदुत्पादनम् । पात्रनियममाह—मृत्पात्रे,—इति । स्थापनदेशनियममाह—आग्नेय्यामिति । क्रव्यादांशमिति अमेध्यांशम्-इत्यर्थः, "यएतान् क्रव्यात् तमपहत्य मेध्येऽग्नौ कपालमुपदधाति" इति श्रुतेः । विसार्य बहिर्निरस्य । निरीक्षणं स्वनेत्राभ्याम् । प्रोक्षणं सामान्यार्घ्योदकेन । ताडनम्, अभिघाताख्यः संयोगविशेषः । [2]अवकुण्ठनं पूर्वदर्शितमुद्रा । आदिपदेन धेनुयोनी, स्थलान्तरे अवकुण्ठनसहपाठात् । एतैः विशोध्य संस्कृत्य । तस्मिन् पात्रे चिदग्न्याह्वानप्रकारमाह—ॐ वैश्वानरेति । ललाटनेत्रद्वारा भ्रूमध्यद्वारा निर्गमय्य निर्गमनं विभाव्य । तं चिदग्निम् । बाह्याग्नियुक्तम्, इत्यनेन चिदग्नेः प्राधान्यं सूचितम्, भृत्ययुक्तराजेतिवत् । पातयेत् इत्यस्मात् पूर्वं पूर्वनिर्मिताग्निचक्रे इति शेषः ॥ ९ ॥

इन्धनैराच्छादनम्

**कवचमन्त्रेण इन्धनैराच्छाद्य ॥ १० ॥**

कवचमन्त्रेण हुं-इत्यनेन ॥ १० ॥

उपस्थानम्

अथोपस्थानमाह—

**अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।**
**सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम् ॥**

**इत्युपस्थाय ॥ ११ ॥**

उपस्थानं नाम, अग्नेरपरभागे कृताञ्जलेस्तिष्ठतोमन्त्रपाठः ॥ ११ ॥

उत्थापनम्

भूमौ मृण्मयपात्रे पूर्वम्, आग्नेयाद्यन्यतमदिक्षु स्थापिताग्नेः कुण्डे प्रक्षेपार्थम्-उत्थापने मन्त्रमाह—

**उत्तिष्ठ [1]हरितपिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा-इति वह्निमुत्थाप्य ॥ १२ ॥**

I पुरुष३—श्री.

---

१. अत्रमन्त्रे, इहावहावहेत्युक्त्वा लोहिताक्षपदान्तरम्-इत्यग्निमन्त्रोद्धारे, आवह पदं द्विरुक्तं-श्रीमहानिर्वाणतन्त्रे-६-उल्लासे-१४५ श्लोके तट्टीकायां च-

२. एतासामवगुण्ठनधेनुयोनिमुद्राणामुद्धारः द्वि-प-शि-१५—विषये द्रष्टव्यः—

एतेन—ॐ वैश्वानरेति, बहिः निर्गमय्य कुण्डे प्रक्षेपात् प्राक् अर्थक्रमेण पाठक्रमं बाधित्वा प्रयोगानुष्ठानकाले पाठः, उथापनस्य प्रक्षेपपूर्वकालिकत्वात् ॥ १२ ॥

### प्रज्वालनम्

प्रज्वालनमन्त्रमाह—

**चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा, इति प्रज्वाल्य ॥ १३ ॥**

प्रज्वालनं वेणुधमन्या, "मुखेनाग्निं नोपधमेत्" इति स्मृतेः ॥ १३ ॥

### अग्नेः पुंसवनादिसंस्काराः

उत्पन्नाग्नेः संस्कारानाह—

**षट्तारवाचोनमोमन्त्रेण पुंसवनसीमन्तजातकर्मनामकरणान्नप्राशनचौलोपनयनगोदानविवाहकर्माण्यमुकाग्नेरमुकं कर्म कल्पयामि नमः–इति विधाय ॥ १४ ॥**

षट्तारवाचः [1]उक्ताः । नमोमन्त्रेण नमोऽन्तमन्त्रेण । स्वयमेव नमोऽन्तमन्त्रं विवृणोति—अमुकेत्यादिना । इत्थं च प्रथमं षट्तारी ततः ऐं–ततः इष्टदेवतानाम ततोऽग्निशब्दः षष्ठ्यन्तः पुंसवनादिकर्मनाम द्वितीयान्तं, ततः कल्पयामीति ॥ १४ ॥

### परिषेचनादि

**परिषिच्य परिस्तीर्य परिधाय ॥ १५ ॥**

परिषिच्य, अनुक्तत्वात् ऐशानीमारभ्य प्रदक्षिणं समन्तात् सामान्यार्घ्योदकेन । परिस्तीर्य—परिस्तरणे एकैकदिशि चत्वारोदर्भाः, "अग्निं षोडशभिर्दर्भैः परितस्तु परिस्तरेत्" इति वचनात् । परिधाय श्रौतोक्तधर्मकसमिद्भिः प्राग्वर्जं त्रिषु । क्रमादिकं काष्ठनियमः श्रौतात् ज्ञेयः ॥ १५ ॥

### अग्निध्यानम्

अथ साधिताग्नेः ध्यानमाह—

**त्रिणयनमरुणाभं बद्धमौलिं सुशुक्ल-**
**शुकमरुणमनेकाकल्पमम्भोजसंस्थम् ।**
**अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं**
**नमत कनकमालालङ्कृतांसं कृशानुम् ॥**

**इति ध्यात्वा ॥ १६ ॥**

---

१ इयं षट्तारी ६६–पत्रे–१ खण्डे–दिक्षाविधौ–४१–सूत्रभाष्येऽस्ति–

### अग्निचक्रे देवतास्थापनम्

पूर्वकल्पिताग्निचक्राष्टकोणादिषु देवतास्थापनमाह—

**अष्टकोणे जातवेदसे सप्तजिह्वाय हव्यवाहाय [1]अश्वोदराय वैश्वानराय कौमारतेजसे विश्वमुखाय देवमुखाय नमः-इति-षट्कोणे षडङ्गं-त्रिकोणे अग्निमन्त्रेण अग्निं पूजयित्वा ॥ १७ ॥**

अष्टकोणे अनुक्तत्वात् प्रागादिप्रादक्षिण्यक्रमः । षट्कोणेऽपि तथैव । अग्निमन्त्रेण "[1]अग्निं प्रज्वलितम्" इत्युपस्थापनमन्त्रेण, अग्निलिङ्गस्य स्पष्टत्वात् । पूजनं च पञ्चोपचारैः मन्त्रावृत्त्या ज्ञेयम् ॥ १७ ॥

### सप्तजिह्वाहोमः

सप्तजिह्वाऽऽहुतीराह—

**हिरण्यायै कनकायै रक्तायै कृष्णायै सुप्रभायै अतिरक्तायै बहुरूपायै नमः-इत्यग्नेः सप्तजिह्वासु मूलशुद्धेनाज्येन सप्ताहुतीः कुर्यात् ॥ १८ ॥**

नमः-इति सर्वत्रानुषज्यते । मूलशुद्धेन मूलाभिमन्त्रणेन संस्कृतेन । अभिमन्त्रणं, सङ्ख्याऽनुक्तेः सकृन्मूलेन । नमः पदोत्तरं स्वाहायोगः, होमरूपत्वात्, "स्वाहा होमे, तर्पणे तु तर्पयामीति योजयेत्" इति योगिनीतन्त्रवचनात्[2] ॥ १८ ॥

### अग्नेराहुतित्रयम्

कर्मशेषमुपदिशति सूत्रान्तरेण—

**वैश्वानरोत्तिष्ठ चित्पिङ्गलैरग्नेस्त्रिधाऽऽहुतिं विधाय ॥ १९ ॥**

वैश्वानरोत्तिष्ठ चित्पिङ्गलैरिति [3]पूर्वपठितैः त्रिभिर्मन्त्रैः इत्यर्थः । त्रिधा त्रिवारम् । अनेन कर्माभ्यासोनाहुतिभेदः इति सूचितः । वैश्वानरादिमन्त्रत्रये स्वाहाकारोऽस्ति । तथाऽप्यन्यस्वाहाकारोहोमकाले योज्यः । तदुक्तं शक्तिसङ्गमतन्त्रे —

मन्त्रान्ते या वह्निजाया सा तु मन्त्रस्वरूपिणी ।
तदन्तेऽन्यां प्रयुञ्जीत सा होमाङ्गतया मता ॥ इति ॥

अत्र मन्त्रलिङ्गेनैव देवतालाभे पुनरग्नेरिति कथनात् त्रिष्वपि होमेषु "अग्नयइदं न मम" इति त्यागं गमयति । अन्यथा "वैश्वानरायेदं न मम" इति लिङ्गेन प्राप्नुयात् ॥ १९ ॥

I अश्वोदरजाय—अ.

---

१. अयमुपस्थानमन्त्रः २४७-पत्रे-एतत्खण्डे एव-११ सूत्रेऽस्ति ।

२. एतावता च तान्त्रिकेपि कर्मणि स्वाहाग्रहणमपलापयन्तोदूरं पलायन्ताम्-

३. नाम-एतत्खण्डीय ९-१२-१३-सूत्रोक्तैस्त्रिभिर्मन्त्रैरित्यर्थः-

### इष्टदेवताऽऽवाहनादि

अथेष्टदेवताऽऽवाहनमाह—

**बहुरूपजिह्वायामिष्टां देवतामावाह्य पञ्चोपचारैरुपचर्य ॥ २० ॥**

आवाहनं पूजाप्रकरणोक्तसरण्या । पञ्चोपचारैः गन्धादिभिः ॥ २० ॥

### चक्रदेवीनामाहुतयः

**सर्वासां चक्रदेवीना[1]मेकाहुतिं हुत्वा, नमोऽन्तान् पादुकाऽन्तान् [2]शेषान् मन्त्रान् स्वाहाऽन्तान् विधाय जुहुयात् ॥ २१ ॥**

सर्वासामिति तत्तदावरणदेवताषडङ्गौघत्रयनित्याऽऽदीनां मध्ये यस्मिन् पूजाप्रकरणे यावत्यः विहिताः तासां सर्वासाम् इत्यर्थः । द्रवस्यानुक्तत्वादाज्यम् । नमोऽन्तानिति—ये च नमोऽन्ताः मन्त्राः वाणमन्त्राः वशिन्यादिमन्त्राश्च पादुकाऽन्तामन्त्रागुरुपादुकामन्त्रादयः, एतदुभयभिन्नाः केवलं नाम्नैवोद्धृताः अणिमासिद्ध्यादयः [3]शेषाः एतान् सर्वान् स्वाहाऽन्तान् कृत्वा तेन होतव्यम् इत्यर्थः । श्रीक्रमे पञ्चदशनित्याऽनन्तरं सर्वरोगहरचक्रे कामेश्वर्याद्यनन्तरं मूलेन पूजनवन्न होमः, तस्याः प्रधानदेवतारूपत्वेन तस्याआहुतेः वक्ष्यमाणत्वात् ॥ २१ ॥

### प्रधानदेवताऽऽहुतयः

एवमग्निसंस्कारानुक्त्वा प्रधानहोमधर्मानुपदिशति—

**अथ प्रधानदेवतायै दशाहुतीर्जुहुयात् ॥ २२ ॥**

अथेत्यनेन अङ्गदेवताहोमविच्छेदः सूचितः ॥

एतावत्पर्यन्तं सर्वप्रयोगसाधारणम् । पुरश्चरणाङ्गहोमः काम्यहोमोवा सर्वोऽप्येतदुत्तरं भवति ॥ २२ ॥

### काम्यहोमविधिः

अथ काम्यहोमं विदधाति—

**यदि काम्यमीप्सेदभीष्टदेवतायै विज्ञाप्य सङ्कल्पं कृत्वैतावत्कर्मसिद्ध्यर्थमेतावदाहुतीः करिष्यामीति ॥ २३ ॥**

विज्ञाप्य प्रार्थ्य एतावत्कर्मसिद्ध्यर्थम् अमुकफलसिद्ध्यर्थं एतावत्कर्मामुकस याकाहुतीः कार्यतारतम्येन आहुति सङ्यातारतम्यं ज्ञेयम् ॥ २३ ॥

ससाधनं होमं विधत्ते—

**तिलाज्यैः शान्त्या—अन्नेनान्नायामृताय—समिच्चूतपल्लवैर्ज्वरशमाय—दूर्वाभिरायुषे—कृतमालैर्धनायोत्पलैर्भोगाय—बिल्वदलैराज्याय—पद्मैः**

1 मेकैका—श्री. 2 अशेषान्—श्री. 3 अशेषाः—श्री, ब२.

**साम्राज्याय–शुद्धलाजैःकन्यायै––नन्द्यावर्तैःकवित्वाय––वञ्जलैः[1]पुष्ट्यै–मल्लिकाजातीपुन्नागैर्भाग्याय, बन्धूकजपाकिंशुकबकुलमधुकरैरैश्वर्याय–लवणैराकर्षणाय–कदम्बैः सर्ववश्याय–शालितण्डुलैर्धान्याय–कुङ्कुमगोरोचनादिसुगन्धैःसौभाग्याय—पलाशपुष्पैःकपिलाघृतैर्वा तेजसे–धत्तूरकुसुमैरुन्मादाय–विषवृक्षैःनिम्बश्लेष्मातकविभीतकसमिद्भिः शत्रुनाशाय—निम्बतैलाक्तलवणैर्मारणाय—काकोलूकपक्षैर्विद्वेषणायतिलतैलाक्तमरीचैः कासश्वासनाशाय–जुहुयात् ॥ २४ ॥**

तिलाज्यैः तिलसहिताज्यैः । यावत्सङ्ख्याकाज्याहुतयः तावत्सङ्ख्याकतिलाहुतयः कार्याः इति निष्कर्षः । साहित्यं द्वन्द्वसमासलभ्यं ज्ञेयम्। शान्त्यै शान्तिर्नाम, उत्पत्स्यमानानिष्टप्रागभावसंरक्षणम् । अन्नेनोदनेन अन्नलाभाय अमृताय मोक्षाय । समिच्चूतपल्लवैः इति तिलाज्यवत् । समिधश्च यज्ञीयवृक्षसम्बन्धिन्योग्राह्याः । दूर्वाः प्रसिद्धाः । [1]कृतमालैः आरेवतैः, " आरेवतव्याधिघातकृतमालसुवर्णकाः " इत्यमरः । शुद्धलाजैरिति शुद्धत्वं गृहे निर्मितत्वम् नन्द्यावर्तैः तगरैः । वञ्जुलैः चित्रकृद्भिः, " वञ्जुलश्चित्रकृच्चाथ " इत्यमरः । बन्धूकः, महाराष्ट्रभाषया दुपारी इति प्रसिद्धः । किंशुकः पलाशः । अग्रे पलाशपुष्पैरिति स्वातन्त्र्येण तेजस्साधनत्वं बोध्यते । इह तु बन्धूकादिसहितस्य ऐश्वर्यसाधनत्वम्—इति न पुनरुक्तिः मधुकरैरिति योगेन मधुपुष्पाणां ग्रहणम्, न तु रूढ्या मरग्रहणं, पुष्पसाहचर्यात् विषवृक्षाः महाराष्ट्रभाषया, काजा इति प्रसिद्धम् । अत्र वृक्षशब्दः तत्समिल्लक्षकः, अग्रे समित्साहचर्यात् । श्लेष्मातकः शेलुः " शेलुः श्लेष्मातकः " इति कोशात् । विभीतकः अक्षः, " त्रिलिङ्गस्तु विभीतकः । नाक्षस्तुषः कर्षफलः " इति कोशात् । द्वन्द्वसमासाभावात् विषवृक्षसमिधः निम्बादिसमिद्भिः सह विकल्प्यन्ते । शत्रुनाशकर्मणि द्वयोस्तुल्यसाधनत्वम्। शत्रुनाशोऽत्र न मरणम्, मारणप्रयोगस्य पृथग्वक्ष्यमाणत्वात्, किं तु तदीयपशुपुत्रादिनाशः । विद्वेषः स्वशत्रोर्यः प्रबलाश्रयभूतः तेन साकम् । तिलतैलाक्तेति—[2]कासश्वासः रोगविशेषः ॥

ननु किमनेन द्रव्यविशिष्टं कर्म फलाय विधीयते, उत वाक्यान्तरेण प्राप्तहोमसामान्यमनूद्य द्रव्यफलसम्बन्धोविधीयते; इति चेत्—

अत्र केचित्—द्वितीयपक्षएव युक्तः । विशिष्टविधिपक्षे षष्ठोविधिः अत्यन्तगुरुभूतः, गुणफलसम्बन्धपक्षोलघुभूतः, अन्यथा " दध्नेन्द्रियकामस्य जुहुयात् " इत्यत्रापि तथात्वा-

1 पुष्टैर्म—अ, ब२ 2 कासश्वासौ रोगविशेषौ–श्री.

१ एतत्सूत्रस्थैतदादिशब्दानामर्थोऽन्यतोज्ञेयः–

पत्तेः । न च—“ दध्नेन्द्रियकामस्य ” इत्यत्र वाक्यान्तरेण लब्धहोमानुवादोयुक्तः, इह धात्वर्थप्रापकप्रमाणान्तराभावात् कथमनुवादः—इति वाच्यम् । होमविधानं व्याख्यास्यामः इत्यधिकारात्, प्रकरणेन तन्त्रशास्त्रप्राप्तपुरश्चरणाद्यङ्गभूतहोमानुवादेन गुणविधिसम्भवात्—इत्याहुः ॥

तदसत् । यदि पुरश्चरणाद्यङ्गभूतहोमानुवादेन द्रव्यं फलाय विधीयते, तर्हि तत्र तद्-शांशसङ्ख्यायाहोमे कॢप्तत्वेन श्रीदेवतायै विज्ञापनविधिसूत्रे “ एतावदाहुतीः करिष्यामि ” इति सर्वनाम्ना निर्देशोविफलः । “जपदशांशं करिष्यामि ” इति वदेत् । मन्मते कार्य-गौरवलाघवाभ्यां ह्रासवृद्धिसम्भवात्—अनियतसङ्ख्याकत्वेन सर्वनाम्ना निर्देशोयुक्तः ॥

न च जपं विहाय केवलहोमोनोपलभ्यते अन्यतन्त्रेषु, इति शङ्कनीयम् । अगस्त्य-संहितायां चोलराज्ञोरिपोः पाण्ड्यस्य संहारार्थं नग्नाः केवलं निम्बतैलमिश्रितलवणहोमेन कृत्यामुत्पादयामासुः—इत्यैतिह्यमस्ति । एवं तन्त्रेष्वप्युपलभ्यते । तस्मात् प्रथमपक्षोयुक्तः ॥ २४ ॥

### बलिदानम्

अथोत्तराङ्गमाह—

**बलिं प्रदाय ॥ २५ ॥**

बलिदानं, [1]तत्तत्पूजाक्रमोक्तविधिना ॥ २५ ॥

### महाव्याहृतिहोमः

महाव्याहृतिहोममाह—

**ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा ।**
**ॐ भुवोवायवे चान्तरिक्षाय च महते च स्वाहा ।**
**ॐ सुवरादित्याय च दिवे च महते च स्वाहा ।**
**ॐ भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा ।**

**इति चतुर्भिर्मन्त्रैः महाव्याहृतिहोमं कृत्वा ॥ २६ ॥**

### ब्रह्मार्पणाहुतिः

[2]ब्रह्मार्पणाहुतिमाह—

**इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतोजाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं**

---

१ अर्थात्-यस्यादेवतायाआवरणार्चनं कृतं-तद्देवतापूजाक्रमोक्तविधिनेत्यवधेयम्-

२ अत्राहुतिमन्त्रे-ब्रह्मार्पणं ब्रह्महविरित्यादिमन्त्रग्रहणभ्रान्तिर्माभूत् साधकवर्याणाम्-

**यत् कृतं तत् सर्वं ब्रह्मार्पणं भवतु स्वाहा, इति ब्रह्मार्पणाहुतिं कृत्वा ॥ २७ ॥**

**अग्निदेवतयोरुद्वासनम्**

पूर्वावाहितचिदग्नेरावाहितायादेवतायाश्चोद्वासनमाह—

**चिदग्निं देवतां चात्मन्युद्वासयामि नमः–इत्युद्वास्य ॥ २८ ॥**

उद्वासनं खेचरीमुद्रया ॥ २८ ॥

**भस्मधारणम्**

भस्मधारणफलमाह—

**तद्भस्मतिलकधरोलोकसम्मोहनकारः सुखी विहरेत् । इति शिवम् ॥ २९ ॥**

**इति–कल्पसूत्रे होमविधिर्नाम नवमः खण्डः**

तद्भस्म अग्नेर्भस्म । अग्निविसर्जनानन्तरं परिस्तरणपरिधीनामपि विसर्गः, प्रतिपत्तिसंस्कारस्यानुक्तत्वात् । शिवमिति व्याख्यातम् ॥ २९ ॥

इति—कल्पसूत्रवृत्तौ होमविधिर्नाम नवमः खण्डः

---

**॥ सूत्रस्य पुनरावृत्तौ शोध्यं सूचयितव्यकम् ॥**

**॥ परिशिष्टस्थलं चैव पूर्णमायाप्रसादतः ॥ इति नवमः खण्डः— श्रीः ॥**

# दशमः खण्डः—सर्वसाधारणक्रमः

## अथ सामान्यक्रमाधिकारः

प्रथमखण्डे दीक्षाऽनन्तरं सर्वमन्त्राधिकारी भवतीत्युक्तत्वात् श्रीत्रिपुरसुन्दर्युपास्तेः निष्कामरूपतया यदा सङ्कटे कामनावशात् सूर्यविष्णुभैरवाद्युपास्तिप्रसक्तिः तदितिकर्तव्यता-ज्ञानार्थं तन्त्रान्तरोपास्तिं सूत्रानुयायी मा करोतु इति, तदुपासनासिद्धये, किं च रश्मि-मालाऽऽदिषु प्रत्येकं मन्त्राणां फलश्रवणात् तत्तत्कामनया तत्तदुपास्तिप्रसक्तौ, अपि च कश्चन उपासनायां श्रद्धावान् ललितोपास्तौ च अनधिकारी तस्य शिवविष्णवाद्युपासनां प्रवर्तयतु इति, परमकृपालुः श्रीपरशुरामः सर्वसाधारणीं उपासनासरणिं दर्शयति—

**अथातः सर्वेषां मन्त्राणां सामान्यपद्धतिं व्याख्यास्यामः ॥ १ ॥**

अथ त्रिपुरसुन्दर्युपास्तिप्रकारदर्शनानन्तरम् । अतः अवतरणिकायामुक्तहेतोः । सर्वेषां गणपतिललिताश्यामावार्तालीभिन्नानां यावतां मन्त्राणाम् । सामान्यपद्धतिं साधारण-सरणिम् ॥ १ ॥

## श्यामाऽङ्गानां केषांचिदतिदेशः

अथ श्यामाक्रमे पठितानि कानिचिदङ्गान्यतिदिशति वचनेन—

**[1]श्यामावत् सन्ध्याऽऽद्यर्घ्यशोधनपर्यन्तं न्यासवर्जम् ॥ २ ॥**

सन्ध्याऽऽदीत्यनेन सन्ध्यातः प्राक् पठितानां व्यावृत्तिः । अर्घ्यशोधनपर्यन्तं—इत्यनेन तदग्रिमव्यावृत्तिः । उभयमध्यतनानां मध्ये न्यासवर्जम्—इत्यनेन तद्व्यावृत्तिः । अर्घ्यशोधनम्—इत्यविशेषोक्त्या विशेषार्घ्यशोधनान्तं कार्यम् । तेन ब्राह्मे मुहूर्ते यत् कृत्यं स्नानदन्तधावन विंशतिगण्डूषादि सर्वं निवर्तते ॥ २ ॥

## सर्वसाधारणन्यासः

सर्वसाधारणन्यासमाह—

**अनुक्तषडङ्गस्य षड्जातियुक्तमायया षडङ्गम् ॥ ३ ॥**

अनुक्तेत्यनेन अज्ञातमप्युपलक्षणीयम् । इत्थं च यस्य मन्त्रस्य षडङ्गम् उक्तम्, तेन स्वषडङ्गे श्यामाक्रमे न्याससमये न्यसेत् । यस्यानुक्तमज्ञातं वा तत्र षड्जातियुक्तमायया षडङ्गन्यासः । षडजातिमाया च, ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः,—इति क्रमेण षडङ्गेषु योज्यम् ॥३॥

## चक्रनिर्माणम्

चक्रनिर्माणप्रकारमाह—

---

१—अनुगत—६—खण्डस्थ—५—सूत्रोक्तविधिमारभ्य—१९—सूत्रान्तोक्तविधिपर्यन्तं—न्यासवर्जं श्यामाक्रमोक्त विधिना १९२ पत्रतः—१९९ पत्रान्तं सर्वं कार्यमन्यत् स्वतन्त्रमित्यर्थः—

**बिन्दुत्रिषडरनागदलचतुष्पत्रचतुरस्रमयं चक्रम् ॥ ४ ॥**

अष्टदलं चतुर्दलं पद्मद्वयं । शेषं स्पष्टम् ॥ ४ ॥

षडावरणी पूजा

अथावरणदेवतास्थानमाह—

**बिन्दौ मुख्यदेवतेच्छाज्ञानक्रियाशक्तयस्त्र्यस्रे, षडरे तत्तत्षडङ्गान्यष्टदले ब्राह्म्याद्याः, चतुर्दले गणपतिदुर्गावटुकक्षेत्रेशाश्चतुरस्रे दिक्पालाः ॥ ५ ॥**

द्वितीयावरणमाह—इच्छेति । क्रमः स्वाग्रादिप्रादक्षिण्येन । तृतीयमाह—षडरइति । क्रमः प्राक्कोणमारभ्यैशानान्तम् । चतुर्थमाह—अष्टदले इति । क्रमः पूर्ववत् । चतुर्दले पञ्चमावरणे । क्रमः प्रागादिदिक्षु । चतुरश्रेऽपि तथैव प्रागादीशानान्तम् ऊर्ध्वम्—अधश्च ज्ञेयम् । एवं षडावरणी पूजा ॥

यद्यपि प्रधानदेवतायाः अन्ते पूजाऽन्यत्रास्ति, तथाऽप्यत्र विपरीतं, तथा पाठात् ॥ ५ ॥

सर्वमन्त्रयोज्यबीजानि

सर्वमन्त्रेषु योज्यानि बीजान्याह—

**त्रितारीकुमारीभ्यां सर्वे क्रममन्त्राः प्रयोक्तव्याः ॥ ६ ॥**

त्रितारी [1]श्रीक्रमोक्ता । कुमारी बाला[2] ॥ ६ ॥

आवाहनादिमन्त्राः

**तत्तन्मूलेनावाहनं कलामनुना बलिरनेन क्रमेणाहुतिः ॥ ७ ॥**

आवाहनमन्त्रमाह—तत्तदिति । बलिदानमन्त्रमाह कलेति । [1]कलामनुः व्याख्यातः । अत्र बलिदानं पात्रोद्वासनदेवतोद्वासनादीनामुपलक्षकम्, तेषामावश्यकत्वादनुक्तेः । अनेन क्रमेण उक्तक्रमेण । आहुतिः यजनं पूजनम । सर्वदेवानां तत्तन्मन्त्रजपः श्रीक्रमोक्तजपसमये कार्यः ॥ ७ ॥

इति सर्वसाधारणक्रमः ॥

रश्मिमालाविनियोगः

एवं सामान्यक्रममुक्त्वा पुनस्सिंहगुहाऽवलोकनन्यायेन ललिताक्रमशेषमेव वक्तुं प्रक्रमते—

**अथ रश्मिमाला ॥ ८ ॥**

---

१. ६ खण्डस्थश्यामाक्रमीये २५-सूत्रे मूले २०२-पत्रे सन्त्येताः ८-

२. त्रितारी, ऐं ह्रीं श्रीं ३-बाला-ऐं क्लीं सौः-

अथेति पूर्वप्रकरणविच्छेदद्योतकम् । रश्मिरिति प्रकाशापरपर्यायः । मालेति मन्त्रविशेषसंज्ञा । तदुक्तं नित्यातन्त्रे—

मन्त्राएकाक्षराः पिण्डाः कर्तव्याद्व्यक्षरामताः ।
[1]बहुवर्णं समारभ्य नवार्णावधि बीजकाः ॥
ततोदशार्णभारभ्य यावद् विंशतिमन्त्रकाः ।
ततऊर्ध्वं गतामालास्तासु भेदोन विद्यते ॥ इति ॥

इत्थं च गायत्र्यादिमहापादुकाऽन्तस्य प्रकाशकत्वात् विंशतिवर्णाधिकत्वाच्च रश्मिमालेति वक्ष्यमाणमन्त्रकलापसंज्ञा ॥ ८ ॥

तस्याः विनियोगं कालं चाह—

**सुप्तोत्थितेनैषा मनसैकवारमावर्त्या ॥ ९ ॥**

एषा रश्मिमाला सुप्तोत्थितेनेति स्वारस्यात् प्रबोधाव्यवहितोत्तरक्षणएव कालइति ज्ञाप्यते । तेन ब्रह्मरन्ध्रे गुरोर्ध्यानादिकं पूर्वोक्तं एतदुत्तरमेवेति सिद्धम् । न च—-पूर्वमपि "मुहूर्ते ब्रह्मणोमुक्तस्वापः" इत्यनेन पूर्वोक्तक्रियाकलापेऽपि प्रबोधाव्यवहितत्वं प्रतीयते । अन्यथा तदुत्तरं वक्ष्यमाणसंविद्ध्यानादेः निद्रासमये असम्भवेनार्थसिद्धे तत्कालप्रबोधे मुक्तस्वापइति विशेषणं व्यर्थं स्यात् इति वाच्यम् । ब्राह्मे मुहूर्ते निद्रां रागपाशां निवारयत् तच्चरितार्थम् । अत्र सुप्तोत्थितेनेति विशेषणस्य तथा गत्यभावात् उत्थानानन्तरकालाङ्गतामेव प्रतिपादयति ॥

एतेन निबन्धे व्युत्क्रमेण पाठः अप्रामाणिकएवेति सिद्धः ॥ ९ ॥

### गायत्र्यादि प्रथमं रश्मिपञ्चकम्

अथ रश्मिमालासंज्ञकान मन्त्रान् दर्शयति—

**प्रणवोभूर्भुवस्सुवः-**

**तत्सवितुर्वरेणियं भर्गो देवस्य धीमहि ।**

**धियोयोनः प्रचोदयात् ॥**

**इति त्रिंशद्वर्णा गायत्री ॥**

**यतइन्द्र भयामहे ततोनोअभयं कुरु ।**

**मघवञ्छग्धि तव तन्नऊतये विद्विषोविमृधोजहि ॥**

**स्वस्तिदा विशस्पतिर्वृत्रहा विमृधोवशी ।**

1 कृधि-श्री. 2 वर्णत्रयम्-ब-२.

**वृषेन्द्रः पुरएतु नः स्वस्तिदा अभयङ्करः ॥**

**इत्यैन्द्री सप्तषष्ट्यर्णा सङ्कटे भयनाशिनी ॥**

**प्रणवोघृणिस्सूर्यआदित्यइत्यष्टार्णा सौरी तेजोदा ॥**

**प्रणवः केवलोब्रह्मविद्या मुक्तिदा ॥**

**तारः परोरजसे सावदोम्–इति नवार्णा तुर्यगायत्री स्वैक्य-विमर्शिनी ॥**

**रश्मिपञ्चकमेतन्मूलहृत्फालविधिबिलद्वादशान्तबीजतया विमृष्टव्यम् ॥ १० ॥**

"त्रिंशद्वर्णा गायत्री" इत्यादिभिः वक्ष्यमाणैः रश्मिमालाऽवयवमन्त्रसंज्ञा दर्शिता । ऐन्द्री इन्द्रदैवत्या । सङ्कटे दावाग्निव्याघ्रादिप्राणसङ्कटे । तेजोदा—तेजः स्वदर्शनेन परेषां स्वस्मिन् उत्कर्षप्रतिपादिका शक्तिः, तस्याः दायिनी । प्रणवः केवलः प्रणवोच्चारणमेव ब्रह्मविद्या ब्रह्मविद्याप्रतिपादिका । तारः प्रणवः । तुर्यगायत्री गायत्र्यास्तुर्यपादरूपा । तदुक्तं विश्वामित्रकल्पे—

गायत्र्यास्तुर्यपादोऽयं त्रिपदायाबुदाहृतः ॥ इति ॥

स्वैक्यविमर्शः आत्मरूपज्ञानं [1]तत्प्रदायिका । एतत्—तत्सवितुरिति गायत्रीमारभ्य गायत्री-तुर्यपादपर्यन्तं यत् रश्मिपञ्चकम् । रश्मीनां प्रकाशशक्तिमत्त्वात् अमीष्वपि तत्त्वे रश्मिशब्देन व्यवहारः । क्रमेण मूले मूलाधारे हृदि ललाटे विधिबिले ब्रह्मरन्ध्रे द्वादशान्ते । अयं व्याख्यातः [1]प्राक् । विमृष्टव्यं भावयितव्यम् ॥ १० ॥

चाक्षुष्मतीविद्याऽदि द्वितीयं रश्मिपञ्चकम्

**सूर्याक्षितेजसे नमः । खेचराय नमः । असतोमा सद्गमय । तम सोमा ज्योतिर्गमय । मृत्योर्माऽमृतं गमय । उष्णोभगवान् शुचिरूपः । हंसोभगवान् शुचिरप्रतिरूपः ॥**

**विश्वरूपं घृणिनं जातवेदसं**
**हिरण्मयं ज्योतिरेकं तपन्तम् ।**
**सहस्ररश्मिः शतधा वर्तमानः**
**प्राणः प्रजानामुदयत्येषसूर्यः ॥**

1 तत्प्रापिका—ब२.

१ प्राक्—नाम-२-खण्डे गणनायकपद्धतौ-६९-पत्रे-२-सूत्रभाष्ये । ३-खण्डे-श्रीक्रमे-३-सूत्रे-८८-पत्रे च-इत्यर्थः—

**ॐ नमोभगवते सूर्याय अहोवाहिनि वाहिन्यहोवाहिनि वाहिनि स्वाहा ॥**

**वयस्सुपर्णा उपसेदुरिन्द्रं**
**प्रियमेधाऋषयोनाथमानाः ।**
**अपध्वान्तमूर्णुहि पूर्धि चक्षु-**
**र्मुमुग्ध्यस्मान्निधयेव बद्धान् ॥**

**पुण्डरीकाक्षाय नमः । पुष्करेक्षणाय नमः । अमलेक्षणाय नमः । कमलेक्षणाय नमः । विश्वरूपाय नमः । श्रीमहाविष्णवे नमः ॥**

**इति षोडशमन्त्रसमष्टिरूपिणी दूरदृष्टिप्रदा [1]चाक्षुष्मती विद्या ॥ ११ ॥**

सूर्येत्यारभ्य घृणिनं जातवेदसम् [अप्रतिरूपः] इतिपर्यन्तं सप्त वाक्यानि सप्त मन्त्राः । ततोहिरण्मयं [विश्वरूपम्] इत्यारभ्य एषसूर्यः—इत्यन्तोऽष्टमः । ॐ नमः इत्यारभ्य स्वाहाऽन्तोनवमः । वयस्सुपर्णा०—इत्यारभ्य बद्धान् इत्यन्तोदशमोमन्त्रः । तदग्रिमाणि नमोऽन्तानि षट् वाक्यानि प्रत्येकं षण्मन्त्राः । इत्थं षोडशमन्त्राणां समष्टिः समुदायः तद्रूपिणी या प्रकृतविद्या सा उपासकानां दूरदृष्टिप्रदा द्वीपान्तरस्थं वस्त्वपि करस्थामलकवद् दृष्टिगोचरीकरोतीति भावः ॥ ११ ॥

द्वितीयपञ्चके द्वितीयमन्त्रमाह—

**प्रणवोगन्धर्वराज विश्वावसो मम अभिलषितामुकां कन्यां प्रयच्छ ततोऽग्निवल्लभेत्युत्तमकन्याविवाहदायिनी विद्या ॥ १२ ॥**

अमुकेत्यत्र अभिलषितकन्यानामनिक्षेपः, नात्रोहः सर्वनाम्ना निर्देशात्, "अदीक्षिष्टायं ब्राह्मणः" इतिवत् । अग्निवल्लभा स्वाहा ॥ १२ ॥

तृतीयमन्त्रमाह—

**तारोनमोरुद्राय पथिषदे स्वस्ति मा सम्पारय—इति मार्गसङ्कट-हारिणी विद्या ॥ १३ ॥**

मार्गे यत् सङ्कटं चोरादिजनितं तस्य हारिणी ॥ १३ ॥

चतुर्थमन्त्रमाह—

**तारस्तारे पदमुक्त्वा तुत्तारे तुरे शब्दं च दहनदयितेति जला-पच्छमनी विद्या ॥ १४ ॥**

1 चक्षु—श्री.

पदमुक्त्वेति शब्दं चेति त्यक्त्वा शेषं.... ॐ तारे तुत्तारे तुरे, इति पठित्वा ततः दहन दयितां पठेत् ॥ १४ ॥

पञ्चममन्त्रमाह—

**अच्युताय नमः अनन्ताय नमः गोविन्दाय नमः–इति महाव्याधि [1]विनाशिनी नामत्रयी विद्या ॥ १५ ॥**

**पञ्चमारश्मयोमूलादिपरिकरतया प्रपञ्च्याः ॥ १६ ॥**

इमाउक्तारश्मयः। परिकरतया तदाधारतया प्रपञ्च्याः योज्याः इत्यर्थः ॥ १६ ॥

महागणपतिविद्याऽऽदि तृतीयं रश्मिपञ्चकम्

अथ तृतीयपञ्चके प्रथममाह—

**प्रणवः कमला भुवना मदनोग्लाचतुर्दशपञ्चदशौ गं गणपतये वरयुगलं द सर्वजनं मे शब्दोवशमानयाग्निवामलोचनेति महागण-पतिविद्या प्रत्यूह[1]शमनी ॥ १७ ॥**

कमला श्रीं भुवना ह्रीं मदनः क्लीं ग्लात् चतुर्दशः औ पञ्चदशोऽनुस्वारश्च, मिलित्वा ग्लौं। वरयुगले वरद्वयम्। ततः शब्दं इति शब्दं च त्यजेत्। अवशिष्टाः सर्वे वर्णाः मन्त्रावयवाः। वह्निवामलोचना स्वाहा इति चरमं पठेत्। [2]प्रत्यूहशमनी विघ्ननाशिनी ॥ १७ ॥

द्वितीयमन्त्रमाह—

**प्रणवोनमः शिवायै प्रणवोनमः शिवायेति द्वादशार्णा, शिवतत्त्व-विमर्शिनी विद्या ॥ १८ ॥**

शिवरूपं यत् चरमं तत्त्वं तस्य योविमर्शः प्रकाशशक्तिः तत्सम्पादिनी ॥ १८ ॥

तृतीयमाह—

**प्रणवः काष्टमदक्षश्रुतिबिन्दुपिण्डोभृगुषोडशोमां पालयद्वन्द्वम् इति दशार्णा मृत्योरपि मृत्युरेषा विद्या ॥ १९ ॥**

ककारात् अष्टमः जकारः दक्षश्रुतिः उकारः, मातृकान्यासे तत्स्थानत्वात्, बिन्दुः प्रसिद्धः। त्रितय पिण्डः समुदायः जुं–इति। भृगुः सकारः, षोडशोविसर्गः, सः इति। तदनन्तरं मां पालय पालयेति। मृत्योरपि मृत्युः अपमृत्युनाशिनीत्यर्थः ॥

चतुर्थमाह—

1 शमनी–श्री. 2 नाशिनी–श्री.

**तारः नमोब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं माच्योढ्वं ममामुष्य ॐ–इति श्रुतधारिणी विद्या ॥ २० ॥**

श्रुतस्य अधीतस्य धारिणी दृढसंस्कारजनिका ॥ २० ॥

पञ्चममाह—

**श्रीकण्ठादिक्षान्ताः सर्वे वर्णाः बिन्दुसहिताः मातृका सर्वज्ञताकरी विद्या ॥ २१ ॥**

श्रीकण्ठः अकारः तदादिक्षान्ताः एकपञ्चाशद्वर्णाः बिन्दुसहिताः मातृका वाच्या सर्वज्ञताकरी ॥ २१ ॥

**रश्मयः पञ्च मूलादिरक्षाऽऽत्मकतया यष्टव्याः ॥ २२ ॥**

मूलाधारादिद्वादशान्तान्तरक्षाकर्त्र्यः इमाः यष्टव्याः भावयितव्याः इति भावः ॥ २२ ॥

**शिवादिविद्याऽऽदि चतुर्थरश्मिपञ्चकम्**

चतुर्थपञ्चके प्रथममन्त्रमाह—

**शिवशक्तिकामक्षितिमायारवीन्दुस्मरहंसपुरन्दरभुवनापरामन्मथवासवभौवनाश्च शिवादिविद्या स्वस्वरूपविमर्शिनी ॥ २३ ॥**

इयमेव लोपामुद्रोपास्या। इयम्, अग्रिमा कामराजोपास्या च, श्रीगुरुवक्त्रैकलभ्येति द्वयोरतिगोप्यत्वात् तद्विवरणं न करोमि। शिवादिविद्या हादिविद्या। स्वस्यात्मनः स्वरूप प्रकाशकर्त्री ॥ २३ ॥

द्वितीयमाह—

**क्लशब्दाद्वामेक्षणबिन्दुरेकोऽनन्तयोनिबिन्दवोऽन्यः शङ्करपरात्रिशूलविसृष्टयोऽपरश्चैतएव खण्डाः प्रतिलोमाः षट्कूटा सम्पत्करी विद्या ॥ २४ ॥**

क्ल इति वर्णादुपरि वामेक्षणम् ईकारः, मातृकान्यासे तत्स्थानत्वात्, ततोबिन्दुः, क्लीम् इति सम्पन्नम्। अयम् एकोंऽशः। अनन्तः हकारः योनिः ऐकारः बिन्दुः, हैं–इत्यपरोंऽशः। शङ्करः हकारः–परा सकारः–त्रिशूलम् औ–विसृष्टिः विसर्गः; ह्सौः–इति अपरोंऽशः। अत्र यद्यपि परापदेनैव विसर्गान्तग्रहः, न तु केवलसकारस्य, तथाऽपि त्रिशूलविसृष्ट्योः पृथगुक्त्या पराशब्देन तदेकदेशस्य सकारस्यैव ग्रहणम्। उक्तार्थेषु सर्वेषु प्रमाणमुक्तं [1]प्राक्। अतोनात्र प्रमाणमुच्यते। येषां प्रमाणं नोक्तं तावदंशोऽत्रोच्यते। एवम् अंशत्रयं क्रमेण पठित्वा व्युत्क्रमेण च पठेत्। इयं षट्कूटा सम्पत्करी विद्या ॥ २४ ॥

---

१. पराबीजं, सौः–इत्युक्तं–३–खण्डे १०२–पत्रे–श्रीक्रमीये–१७ सूत्रे तद्भाष्ये च तथा च ८–खण्डे–१ सूत्रभाष्ये–२३८–पत्रेपि—

तृतीयमाह—

**समुच्चार्य सृष्टिनित्ये स्वाहेति हमित्युक्त्वा स्थितिपूर्णे नमः–इत्यनलबिन्दुमहासंहारिणि कृशोपदाचण्डशब्दः कालि फट्–इत्यग्निबिन्दुसप्तममुद्राबीजं महानाख्ये अनन्तभास्करि महाचण्डपदात् कालि फट्–इति सृष्टिस्थितिसंहाराख्यानां प्रातिलोम्यं खेचरीबीजं महाचण्डवाणी च योगीश्वरीति विद्यापञ्चकरूपिणी कालसङ्कर्षिणी परमायुःप्रदायिनी ॥ २५ ॥**

उच्चार्येति त्यक्त्वा स्वाहाऽन्ता प्रथमा विद्या। इति शब्दम्, उक्त्वेति चापहाय नमोऽन्ता द्वितीया विद्या। अनलबिन्दुः रं। ततः पदात् इति शब्द इति च त्यक्त्वा फट् इत्यन्ता तृतीया विद्या। ततः अग्निबिन्दुः रं–ततः सप्तममुद्रायाः संक्षोभिण्यादिदशसु सप्तमी खेचरी तस्याः बीजं ह्स्ख्फ्रें। ततः पदादित्यंशमपहाय फडित्यन्ता चतुर्थी विद्या। क्त गोक्तासु चतसृषु विद्यासु मध्ये सृष्टिस्थितिसंहाराख्याः याः आद्यास्तिस्रः ताः प्रातिलोम्येन पठित्वा खेचरीबीजमुक्तं पठित्वा वाणी च इत्येतावदंशमपहाय योगीश्वर्यन्तं पठेत्। इयं पञ्चमी विद्या। एवं पञ्चविद्यासमष्टिरूपिणी कालस्य मृत्योः सङ्कर्षिणी विनाशिनी परमायुः शतवर्षपर्यन्तं तत्प्रदेत्यर्थः ॥ २५ ॥

चतुर्थमाह—

**त्रितारी सप्तममुद्रा शिवयुक्शक्तिरहंयुगलमेतत्पञ्चैवलोम्यमिति शुद्धज्ञानमयी शाम्भवी विद्या ॥ २६ ॥**

त्रितारी[1] उक्ता। अत्र सप्तममुद्रापदेन तद्बीजं, तदुक्तं[2] प्राक्। शिवः हः तेन युक्शक्तिः सौः, ह्सौः। अहंयुगलम् अहमिति द्विः पाठः। एवं क्रमेण पञ्चावयवाः। प्रथमावयवस्त्रितारी, ह्स्ख्फ्रें द्वितीयः, ह्सौः तृतीयः, अहंयुगलं चतुर्थपञ्चमौ। एते पञ्चावयवाः विपरीतं पठिताश्चेत् शाम्भवीविद्या। शुद्धज्ञानं निर्विषयं, तत्स्वरूपा केवलब्रह्मस्वरूपेत्यर्थः ॥ २६ ॥

पञ्चममाह—

**भृगुत्रिशूलविसृष्टयः परा विद्या ॥ २७ ॥**

भृगुः सः त्रिशूलम् औ–विसृष्टिः विसर्गः। मिलित्वा पराविद्या भवति ॥ २७ ॥

---

१. इयं त्रितारी–३–खण्डे–८–सूत्रभाष्ये-९२-पत्रे–तथा च-१३९-पत्रे-४ खण्डे-५-सूत्रभाष्ये द्रष्टास्ति–

२. इदं सप्तममुद्राबीजं–ह्स्ख्फ्रें–इतिबीजमिति ५–खण्डे–१५९–१६० पत्रयोः ९–सूत्रे मूले–तद्भाष्ये चास्ति–

**पञ्चेमारश्मयोमूलाद्यधिष्ठानतया परिकल्पनीयाः ॥ २८ ॥**

स्पष्टम् पञ्च पञ्चमन्त्राः ॥ २८ ॥

### अङ्गोपाङ्गप्रत्यङ्गपादुकायुक्ता श्रीविद्या

मूलाधारादिषु एकैकस्थाने एकैकविद्यायोजनमुक्त्वा, इतःपरं,—अङ्गोपाङ्गप्रत्यङ्गपादुकायुक्तमूलविद्यायाः पञ्चविद्यासमष्टिरूपेणैकस्थानएव विभावनं विवक्षुः तत्रादौ श्रियोऽङ्गबालामाह—

**वाक्कामशक्तयोऽनुलोमविलोमाः पुनरनुलोमाः-इति श्रियोऽङ्गबाला ॥ २९ ॥**

वाक् ऐं, कामः क्लीं, शक्तिः सौः। इमाः प्रथमं क्रमेण पठित्वा पश्चात् विपरीतं पठित्वा पुनः क्रमेण पठेत्। एवं सति इयं नवार्णा श्रियोऽङ्गभूता बाला भवति। श्रियोऽङ्गबालेत्यनेन त्र्यक्षरीबालातोव्यावृत्तिः दर्शिता। त्र्यक्षरी तु शुद्धबाला। सैव कुमारीपदवाच्या। तावुभौ पर्यायौ। त्र्यक्षर्याः केवलबालापदवाच्यत्वे प्रमाणं तु तन्त्रान्तरे—

> शृणु देवि प्रवक्ष्यामि बालायामन्त्रसाधनम्।

इत्युपक्रम्य—

> वाचं कामं समुच्चार्य शक्तिबीजं ततः पठेत्।
> इयं बाला त्र्यक्षरी सा या पुरोक्ता तवानघे ॥

इति वचनम्। तेन दीक्षाकाले बालामुपदिश्येत्यनेन त्र्यक्षरी ग्राह्या। न नवाक्षरी। इयं श्रियोऽङ्गबाला। अतएव विशेषणं स्वरसं, तात्पर्यविषयविशेषणस्य स्वसजातीयवस्त्वन्तरव्यावर्तकत्वात्, यथा "रक्तघटमानय" इत्यनेन नीलादिव्यावृत्तिः ॥

न च—नीलघटः घटानतिरिक्तः, विशिष्टस्यातिरिक्तत्वाभावात्, तथा प्रकृतेऽपि श्रियोऽङ्गबालैव बालापदेनोच्यते न शुद्धा—इति वाच्यम्। न हि विशेषवाचकपदस्य सामान्यवाचकत्वं लक्षणामृते सम्भवति, यथा "रक्तघटमानय" इत्यत्र समुदायस्य केवलघटे लक्षणामृते। अथवा विशेषणमविवक्षितमित्यनुक्त्वा वा घटसामान्यबोधः सम्भवति। तावुभावपि पक्षौ प्रमाणान्तराश्रयमन्तरा न सम्भवतः ॥

तस्मात् श्रियोऽङ्गबाला शुद्धबालातोऽन्या। अतएव तन्त्रसारे आदौ शुद्धकालीमन्त्रमुक्त्वा "अथ वक्ष्ये गुह्यकालीविद्यां सर्वार्थसाधिनीम्" इत्यधिकारान्तरं चक्रे। इत्यलमसदावेशेन ॥ २९ ॥

श्रियउपाङ्गं द्वितीयमाह—

**भुवना कमला सुभगा तारोनमोभगवति पूर्णे शेखरमन्न ममाभि-लषितमुक्त्वाऽन्नं देहि दहनजायेति श्रियउपाङ्गमन्नपूर्णा ॥ ३० ॥**

भुवना ह्रीं, कमला श्रीं, सुभगा क्लीं "सुभगोमदनः कामः" इति कोशात् । तारः—उक्तः ॐ । ततोनमोभगवति । ततः पूर्णे इति शेखरे अग्रभागे यस्य ईदृशं यत् अन्न इति वर्णद्वयं, अन्नपूर्णे इति पठितव्यमिति यावत् । उक्त्वेत्यंशमपहाय देह्यन्तं समानम् । दहनजाया स्वाहा । इयं, अन्नपूर्णा विद्या श्रियउपाङ्गं भवतीत्यर्थः ॥ ३० ॥

श्रियः प्रत्यङ्गं तृतीयमाह—

**प्रणवः पाशादित्र्यर्णा एहि परमेश्वरीत्युक्त्वा वह्निवामाक्ष्युक्तिरिति श्रीप्रत्यङ्गमश्वारूढा ॥ ३१ ॥**

पाशादित्र्यर्णा आं ह्रीं क्रों । आद्यवर्णद्वयं शिवयोः पाशः, क्रों,—इत्यङ्कुशः । शेषं स्पष्टम् ॥ ३१ ॥

श्रीपादुकां तुरीयमाह—

**तारित्रिकं सप्तममुद्रा शिवशक्तिसंवर्तपुपञ्चमपुरन्दरवरयूं शक्ति-शिवक्षमान्ते वादिवरयीं शिवभृगुत्रिशूलबिन्दुभृगुशिवत्रिशूलविसृष्टयः श्रीपूर्वं स्वगुरुनामतोऽष्टाक्षरी चेति श्रीपादुका च ॥ ३२ ॥**

तारित्रिकं त्रितारी । सप्तममुद्रा तद्बीजमुक्तम्[1] शिवः हः शक्तिः सः संवर्तः क्षः, क्षकारस्य प्रलयस्य [ च ] चरमदशारूपत्वात् क्षकारस्य चरमत्वरूपसंवर्तरूपत्वम् । पुः पवर्गः तस्य पञ्चमोमकारः, पुरन्दरोलः, एतान् पठित्वा ततोवरयूम्—इति पठित्वा ततः शक्तिः सः शिवः हः क्षमौ श्रूयमाणमेव वर्णद्वयम् । अमीषामन्ते अग्रभागे वादिः वात् पूर्ववर्णोमातृकासु लः ततोवरयीं ततः शिवः हः भृगु सः त्रिशूलम् औ बिन्दुः ह्सौं—इति सम्पन्नम् । भृगु शिवत्रिशूलाउक्ताः । विसृष्टिः विसर्गः । ततः स्वगुरोर्दीक्षानाम । ततः श्रीपादुकां० इत्यष्टाक्षरपाठः । अष्टाक्षरे आदौ यः श्रीवर्णः तस्य पूर्वं गुरुनामेत्यर्थः । एषा श्रीपादुका ॥ ३२ ॥

**एताभिश्चतसृभिर्युक्ता मूलविद्या साम्राज्ञी मूलाधारे विलोचनीया ॥ ३३ ॥**

बालादि चतसृभिर्युक्ता मूलविद्या वक्ष्यमाणा मूलाधारे विलोचनीया ध्येयेति यावत् ॥ ३३ ॥

---

१ इदं-५-खण्डे-९ सूत्रे-तद्भाष्ये च दृश्यम्-१६०-पत्रे—

मूलविद्यामाह—

**मादनशक्तिबिन्दुमालिनीवासवमायाघोषदोषाकरकन्दर्पगगनमघवद्भुवनभृगुपुष्पबाणभूमायेति सेयं तस्यामहाविद्या ॥ ३४ ॥**

तस्याः साम्राज्ञीनामिकायाः ॥ ३४ ॥

अङ्गादियुक्ता श्यामाविद्या

अथ हृच्चक्रे ध्येयश्यामाऽङ्गविद्यामाह—

**वाङ्नतिरुच्छिष्टचाण्डालिमातङ्गि सर्वपदाद्वशङ्करि वह्निवामलोचनेति श्यामाऽङ्गं लघुश्यामा ॥ ३५ ॥**

वाक् ऐं, नतिः नमः, एतदुत्तरं–उक्त्वा पदादिति त्यक्त्वा स्वाहाऽन्तोयथाश्रुतोमन्त्रः। इयं लघुश्यामा श्यामाऽङ्गभूता ॥ ३५ ॥

उपाङ्गमाह—

**कुमारीमुच्चार्य वदद्वन्द्वं वाक्पदं वादिनि वह्निप्रियेति श्यामोपाङ्गं वाग्वादिनी ॥ ३६ ॥**

कुमारी बाला। ततो वदेति द्विवारम्। ततः पदमिति वर्णद्वयं त्यक्त्वा स्वाहाऽन्तं पठेत्। इयं वाग्वादिनी विद्या त्रयोदशवर्णा ॥ ३६ ॥

अथ श्यामाप्रत्यङ्गमाह—

**प्रणव ओपिनाकुदंपवृपसस्यैचशाचामाहदशब्दाः, ष्ठाधानलीतैःरिताविःवेवाईनारुमिवायेच्छेखरा, नकुली श्यामाप्रत्यङ्गम् ॥ ३७ ॥**

ओ इत्यारभ्य दान्ताये शब्दावर्णाः षोडश तेषां क्रमेण ष्ठावर्णमारभ्य येत्–इतिपर्यन्तं षोडशवर्णाः शेखरे अग्रभागे येषां ते। इदं दशब्दा इत्यस्य विशेषणम्। इत्थं च, ओं इत्यारभ्य ये दवर्णान्ताः षोडश तेषां क्रमेण एकैकवर्णस्याग्रे, ष्ठादिषोडशसु वर्णेषु क्रमेणैकैकं पठेत्। यथा आदौ प्रणवः, ततः ओ, ततः ष्ठा, ततः पि, ततः धा,–एवं क्रमेण सर्वान् वर्णान् योजयेत्। एवं च द्वात्रिंशदक्षरा नकुली श्यामाप्रत्यङ्गं भवतीति भावः ॥ ३७ ॥

श्यामापादुकामाह—

**ललितापादुकादित्रिकस्थाने कुमारी योज्या शिष्टं तद्वत्–इति श्यामापादुका च ॥ ३८ ॥**

ललितापादुका योद्धृता पूर्वं श्रीपादुके[१]ति तस्याः प्रथमबीजत्रयस्थाने बाला योज्या। शेषं पूर्ववत्। इयं श्यामापादुका ॥ ३८ ॥

१ श्रीललिताक्रमे–२–३–७–८–९–सूत्रादौ–

**चतसृभिर्युक्ता हृच्चक्रे श्यामा यष्टव्या ॥ ३९ ॥**

उक्ताभिश्चतसृभिर्युक्ता वक्ष्यमाणा श्यामाविद्या हृच्चक्रे अनाहते यष्टव्या ॥ ३९ ॥

अथ श्यामाविद्यामाह—

**तद्विद्या तु त्रितारी कुमारी नभवश्रीतंश्वसजमहासमुरंनिमाया-सरावकसक्लीरुवकसदुमृवकससवकसलोवकअकंवमायहावर्णा ओंमो-गतिमागीरिर्वनमोरिर्वखजिमदनश्रींर्वजशंरिर्वपुषशंरिर्वष्टगशंरिर्वत्वशं-रिर्वकशंरिमुमेशनस्वाऽन्त, मन्त्रादि बीजषट्कं प्रातिलोम्यमिति अष्ट-नवतिवर्णाः ॥ ४० ॥**

तद्विद्या तु श्यामाविद्या त्वित्यर्थः। त्रितारीकुमारी च [1]प्रागुक्ते। नश्च भश्चेति हावर्णपर्यन्तं द्वन्द्वः। इत्थं ओं—इत्यारभ्य स्वा—वर्णपर्यन्तं द्वन्द्वः। इत्थं च नकारमारभ्य हाऽन्ताः ये वर्णाः तेषु क्रमेणैकैकवर्णोत्तरं योजयेत्। यथा—ओम्, तदुत्तरं नवर्णः, तदुत्तरं मो, एतदुत्तरं भ, इत्युच्चरेत्। एवंक्रमेण वर्णान् योजयित्वा स्वाहाऽन्तं पठेत्। नभइत्यादिहावर्णान्तकूटे मायापदेन ह्रीं—इति गृहीत्वा अष्टनवतिवर्णान्तर्गतषट्त्रिंशद्वर्णः ह्रीं—इति योज्यः। एवं,—ओं—इत्यारभ्य स्वावर्णान्ते द्वितीयकूटे कामपदे क्लीं—इति वर्णं गृहीत्वा अष्टनवतिवर्णान्तर्गतपञ्चत्रिंशद्वर्णः क्लीं—इति योज्यः। कूटद्वयेऽपि शेषवर्णाः उक्तरीत्या यथाश्रुताएव पठितव्याः। एवंग्रथनपूर्वकं स्वाहाऽन्तं मन्त्रं पठित्वा ततः प्रथमषड्बीजानि विपरीतानि पठेत्। एवं च सर्वं मिलित्वा अष्टनवति-वर्णाभवन्ति। अत्र ग्रथिते मन्त्रे द्व्यशीतित्र्यशीतिचतुरशीतिवर्णाः—अमुकं—इति भवन्ति। तत्स्थाने विवक्षितनामनिर्देशः, सर्वनामत्वात् "आशास्ते यं यजमानोऽसौ" इतिवत्। विवक्षितनामप्रक्षेपे वर्णन्यूनाधिकभावोन दोषाय, सङ्ख्यावाचकशब्दस्यानुवादकत्वात् ॥४०॥

**अङ्गादियुक्ता वाराहीविद्या**

अथ अनाहते ध्येयाया वाराहीविद्यायाअङ्गमाह—

**हरः सबिन्दुर्वापूर्वराहि स्थाणुः सबिन्दुरुन्मत्तपदं भैशब्दोरवि-पादुकाभ्यां नमइति वार्ताल्यङ्गं लघुवार्ताली ॥ ४१ ॥**

हरः अग्रे स्थाणुरिति दशमस्वरवाचकौ। इत्थं च प्रथम ॡं ततः पूर्व इत्यंशं त्यक्त्वा हिवर्णान्तः। पुनः ॡं ततः पदं शब्दः इत्येतावदंशमपहाय नमोऽन्तं यथाश्रुतम्। इयं लघुवाराहा वाराह्यङ्गभूता ॥ ४१ ॥

अथ वार्ताल्युपाङ्गविद्यामाह—

---

[1] त्रितार्युद्धारः—३ खण्डे-८ सूत्रभाष्ये-प्रत्यक्षा च ९२-१३६ पत्रयोः- ॥ बाला च त्र्यक्षरी १०२-१९५-पत्रयोः—अस्ति.

**वेदादि[I] भुवनं नमोवाराहिघोरे स्वप्नं ठद्वितयं अग्निदारा—इति वार्ताल्युपाङ्गं स्वप्नवार्ताली स्वप्ने शुभाशुभफलवक्त्री ॥ ४२ ॥**

वेदादि प्रणवः । भुवनं ह्रीम् । ठद्वितयं ठद्वयम् । अग्निदारा स्वाहा । शेषं यथाश्रुतम् । इयं वार्ताल्युपाङ्गम् । स्वप्ने शुभाशुभफलवक्त्रीत्यनेन तादृशकामनावता स्वतन्त्रतया इय मुपास्येति सूचितम् ॥ ४२ ॥

तत्प्रत्यङ्गविद्यामाह—

**वाग्घृदयं भगवति तिरस्करिणि महामाये पशुपदाज्जनमनश्चक्षुस्तिरस्करणं कुरुद्वितयं वर्मफट्पावकपरिग्रहइति वार्तालीप्रत्यङ्गं, तिरस्करिणी ॥ ४३ ॥**

वाक् ऐम् । हृदयं नमः । ततः पदादिति त्यक्त्वा तिरस्करणमित्यन्तं यथाश्रुतम् । ततः कुरु इति द्विवारम् । ततः वर्म, हुम् । ततः फट पावकपरिग्रहः स्वाहा । इयं तिरस्करिणी विद्या प्रत्यङ्गभूता ॥ ४३ ॥

अथ वाराहीपादुकां दर्शयति—

**श्यामापादुकामन्त्रादित्रिबीजमपहाय वाग्ग्लौम्—इति योज्यम् । एषा वार्तालीपादुका ॥ ४४ ॥**

श्यामापादुकायाआद्यबीजत्रयमपसार्य तत्स्थाने ऐं ग्लौं—इति पठित्वा शेषं—अधिकृतं पठेत् । इयं वाराहीपादुका भवति ॥ ४४ ॥

**विद्याभिरेताभिर्युक्ता फालचक्रे परिपूज्या भगवतीयं भूदारमुखी ॥ ४५ ॥**

एताभिरुक्ताभिर्विद्याभिर्युक्ता भूदारमुखी वाराही तद्विद्येत्यर्थः । सा फालचक्रे आज्ञाय परिपूज्या ध्येयेत्यर्थः ॥ ४५ ॥

अथ वाराहीविद्यामाह—

**मनुरिदमीयोऽयं वाक्पुटितं ग्लौं नभववालितावाहिरावहखिरामुअंअंनिमःधेधि नजं जंनिमःहेहिन स्तं स्तंनिमःर्वष्टदुनांर्वेसवाकत्तक्षुखतिह्वाभकुकुशीवशब्दा यथाक्रमं मोगतितांवालिरावाहिरामुवहखिधेधिनरुंरुंनिभःभेभिनमोमोनिमःभेभिनसदुप्रष्टासषांर्वेचिचमुर्गजिस्तंनंरुरुघ्रंद्रयंशब्दोपेता वाक् ग्लौं विसृष्टयन्ताश्चससमाश्चत्वारोवर्मास्त्रायफाडीति द्वादशोत्तरशताक्षरा ॥ ४६ ॥**

I भुवना—श्री.

अस्यावाराह्याअयं इदमीयः । मनुः मन्त्रः । अयं [1]वक्ष्यमाणः । अयमित्यनेन निर्दिष्टमर्थमाह—वाक्पुटितमिति । व्याख्यातं प्राक्[2] । प्रथमं, ऐम् । ततः ग्लौम् । ततः ऐं–इति तदर्थः । ततः नेत्यारभ्य वान्ताः ये वर्णाः तेषु क्रमेणैकैकवर्णोत्तरं मो इत्यारभ्य श्यं–इति वर्णान्ताः क्रमेण पूर्ववत् एकैकान् पठेत् । एवं ग्रथनपूर्वकं वश्यं पर्यन्तं पठित्वा । ततोवाक् ऐम् । ततोग्लौं–इति पठित्वा । ततः,–च वर्णात् सप्तमाः ठकाराः विसृष्टयन्ताः विसर्गसहिताः चत्वारः तान् पठित्वा । वर्म हुम् । ततो अस्त्राय फट्–इति पठेत् । इयं वाराहीविद्या द्वादशोत्तरशताक्षरी ज्ञेया ॥ ४६ ॥

**श्रीपूर्तिविद्या**

अथ ब्रह्मरन्ध्रे यष्टव्यां श्रीपूर्तिविद्यामाह—

**पञ्चमैकादशबीजवर्जा श्रीरेव श्रीपूर्तिविद्या ब्रह्मकोटरे यष्टव्या ॥ ४७ ॥**

[3]पूर्वं मादनशक्तीत्यादिना दर्शिता या श्रीविद्या तस्यां यः पञ्चमः एकादशश्चवर्णौ, माया बीजम्, तावपहाय श्री विद्यैवोर्वरिता श्रीपूर्तिविद्या । सा ब्रह्मकोटरे ब्रह्मरन्ध्रे यष्टव्या ध्येयति यावत् ॥ ४७ ॥

**महापादुका**

श्रीब्रह्मरन्ध्रे ध्येयां महापादुकामुद्धरति—

**श्यामापादुकाप्रथमत्रिकस्थाने तारत्रयं कुमारी वाक् ग्लौं—इति योज्यम् । ततः परस्ताच्छेषं समानम् ॥ ४८ ॥**

स्पष्टम् ॥ ४८ ॥

इमां लोकप्रवृत्तसर्वोत्तमत्वज्ञानाय स्तौति—

**इयं महापादुका सर्वमन्त्रसमष्टिरूपिणी स्वैक्यविमर्शिनी महासिद्धिप्रदायिनी द्वादशान्ते [I]यष्टव्या ॥ ४९ ॥**

सर्वमन्त्रसमष्टिरूपिणी सर्वमन्त्रैः प्रत्येकं यद्यत् साध्यं फलं तत् सर्वं अनेनैव साधितुं शक्यं–इति भावः । एवं–इह लोके क्षुल्लकफलसाधनत्वमुक्त्वा साध्याणिमादिसाधनत्वमप्यस्तीत्याह–महासिद्धिप्रदायिनीति । महासिद्धयः अणिमाऽऽदयः । एवं कृत्रिमपुरुषार्थसाधनत्वमुक्त्वा परमपुरुषार्थसाधनत्वमप्याह–स्वैक्येति । स्वैक्यविमर्शः ब्रह्मात्मैक्यज्ञानं, जनकता-

I वरीवस्या—अ, ब२.

---

१ अत्रैव मूलसूत्रे भाष्ये, वा वक्ष्यमाण:–इत्यर्थः–

२ अत्र प्रागित्यनेनानुगतश्रीवाराही क्रमस्थ-४-मूलसूत्रे तथा च-२०-सूत्रे मूले च इति ज्ञेयम्–

३–पूर्वं, नाम, अत्र खण्डे-२६५-पत्रे-३४-सूत्रे- २–इयं त्रितारी-९२-१३६-पत्रयोः–पत्रे-३-खण्डे-श्रीक्रमे-८-सूत्रे-। अथवा, ४–खण्डे-२-सूत्रभाष्येपि–

सम्बन्धेन तद्वती, ब्रह्मात्मैक्यविमर्शाभासनरूपा, अविद्यालयकर्त्रीति यावत्। अत्र सूत्रे यद्यपि महासिद्धिप्रदायिनीत्यस्मात् पूर्वपठितस्य स्वैक्यविमर्शिनीत्यस्य पश्चाद्व्याख्यानमसङ्गतवद्भाति; तथाऽपि अस्य परमपुरुषार्थरूपस्य कथनानन्तरं सिद्ध्यादिफलकथनं असङ्गतम्। अतः सूत्रकारस्य तत्क्रमेणान्वितवाक्यादेव बोधोऽभिप्रेतः इति पश्चात्पठितस्याऽपि पूर्वं व्याख्यानं ज्ञेयम् ॥ ४९॥

### रश्मिमालाध्यातृप्रशंसा

एवं रश्मिमालामन्त्रकलापमुक्त्वा यथोक्तस्थानेषु उक्तरश्मिमालाध्यानकर्तारं प्रशंसति--

**एवं रश्मिमाला सम्पूर्णा । सर्वगात्रः शुद्धविद्यामयतनुः सएव परमशिवः ॥ ५० ॥**

स्पष्टोर्थः ॥ ५० ॥

### जपविघ्ननिवारकमन्त्राः

अथ जपपूर्वाङ्गभूतान् जपविघ्ननिवारकान् मन्त्रानाह--

**अथ विघ्नदेवताः। इरिमिलिकिरिकिलिपदात् परिमिरोमित्येकः। प्रणवोमाया नमोभगवति महात्रिपुराद्भैवर्णाद्रविपदमनु मम त्रैपुररक्षां कुरु कुरु--इति द्वितीयः। संहर संहर विघ्नरक्षोविभीषकान् कालय हुं फट् स्वाहा--इति तृतीयः। ब्लूं रक्ताभ्योयोगिनीभ्योनमः--इति चतुर्थः। सां सारसाय ब्रह्मशनाय नमः--इति पञ्चमः। दुमुलुघुमुलुषु माया-चामुण्डायै नमः--इति षष्ठः। एते मनवोललिताजपविघ्नदेवताः॥ ५१ ॥**

अथेति प्रकरणान्तरज्ञापकम्। विघ्नहर्त्र्योदेवताः विघ्नदेवताः। मध्यमपदलोपी समासः। अत्र देवतापदेन तत्तद्देवतावाचकमन्त्रालक्षणीयाः। तेन देवताकथनं प्रतिज्ञाय, अग्रे मन्त्रकथनं न सन्दर्भविरुद्धम्। वक्ष्ये इति शेषः। तत्र श्रीविद्याऽङ्गभूताः षण्मन्त्राः, तेष्वाद्यं मन्त्र-माह--इरिमिलीति। अत्र पदादित्यंशमपहाय शेषं यथाश्रुतं पठितव्यम्। द्वितीयमाह--प्रणव इति। प्रणवमायोत्तरं त्रिपुरपर्यन्तं पठित्वा। ततः भै--इति। ततः रवि--इति। मम त्रैपुरेति कुर्वन्तोयथाश्रुतः पठितव्यः। तृतीयमाह--संहरेति, अयं यथाश्रुतः पठितव्यः। चतुर्थ-माह--ब्लूमिति। अयमपि यथाश्रुतः पठितव्यः। पञ्चममाह--सामिति। अयमपि यथाश्रुतः। षष्ठमाह--दुमुलु--इति। षष्ठ्यां माया--इति ह्रींवर्णग्रहणम्। शेषं यथाश्रुतम्। ललितामनु-समाप्तिं द्योतयति--एतइति। एते उक्ताः॥ ५१ ॥

श्यामाविघ्नहरमन्त्रमाह--

**हसन्ति हसितालापे पदं मातमुक्ता (व) गीपरिचारिके मम भयविघ्न-नाशं कुरुद्वितयं सविसर्गठत्रितयमिति श्यामाविघ्नदेवी ॥ ५२ ॥**

हसन्तीत्यारभ्य नाशमितिपर्यन्तम् पदं उक्त्वेत्यंशं–अपहाय शेषं समानम्। नाशं–इत्येतदुत्तरं कुरुद्वयम्। ततः सविसर्गठत्रितयं पठेत्। इयं हसन्ती विद्या श्यामाजपाङ्गम् ॥५२॥

अथ वाराहीविघ्नहरविद्यामाह—

**स्तं स्तम्भिन्यै नमः-इति कोलमुखीविघ्नदेवी ॥ ५३ ॥**

यथाश्रुतं स्पष्टम् ॥ ५३ ॥

एतेषां तत्तज्जपाव्यवहितप्राक्कालेन सम्बन्धं दर्शयति—

**एते तत्तज्जपारम्भे जप्तव्याः ॥ ५४ ॥**

सङ्ख्याया अनुक्तत्वात् जपात् पूर्वं सकृत्पाठः ॥ ५४ ॥

### ललिताऽऽदिजपकालाः

अथ ललिताऽऽदिपराऽन्तानां जपकालमाह—

**ललिता प्राह्णे। अपराह्णे श्यामा। वार्ताली रात्रौ। ब्राह्मे मुहूर्ते परा ॥ ५५ ॥**

एतदव्यवहितसूत्रे जप्तव्या, इत्यनेन जपारम्भ इत्यनेन च जपप्रकरणे सिद्धे अयं कालविधिः जपस्यैवेति सिद्धम्। प्राह्णः सूर्यपरावृत्तिप्राक्कालः। अपराह्णः परावृत्त्यपरभागः। तयोर्मध्यः अतिसूक्ष्मः कालोमध्याह्नः, "प्राह्णापराह्णमध्याह्नाः" इति कोशात्। यद्वा–दिवसं त्रेधा विभज्य प्राह्णादयः समं ज्ञेयाः। त्रेधा विभागश्च श्रुत्या दर्शितः—"ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते।" इति। अयमेव विभागः प्राह्णादिशब्देन कोशेन दर्शितः। अस्तोत्तरं अर्धयामं उदयात् प्रागर्धयामं चापहाय शेषं यामत्रयं रात्रिपदवाच्यम्। अतएव "रात्रिस्त्रियामा" इति पर्यायोऽपि कोशेऽस्ति। ब्राह्मोमुहूर्तः [1]प्रागुक्तः। शेषं स्पष्टम् ॥ ५५ ॥

### श्रीनित्यपूजायां मपञ्चकप्रतिनिधिग्रहणे हेतवः

श्रीनित्यपूजायां मपञ्चकप्रतिनिधिना पूजनं मुख्यालाभे उक्तम्। इदानीं प्रतिनिध्यादरे अन्यानपि हेतूनाह—

**व्यवहारदेशस्वात्म्यप्राणोद्वेगसहायामयवयांसि प्रविचार्यैव तदनुकूलः पञ्चमादिपरामर्शः ॥ ५६ ॥**

व्यवहारः पूजाऽव्यवहितोत्तरकाले पशुजनैः सह कर्तव्योलौकिकः आवश्यकः कार्यविशेषः। तत्तद्द्रव्यसेवनाव्यवहितोत्तरं तद्विकारं दृष्ट्वा पशवएनं दूषयेयुः। कृतावावश्यकं रहस्यं भिद्येत। अतः प्रतिनिधिसेवनं–इति भावः। एवं यस्मिन् देशे द्रव्यसेवनेन धातुवैषम्य-

1–प्राङ्नाम-३-खण्डे-श्रीक्रमे-८७-पत्रे-२-सूत्रभाष्ये–

जनितः शरीरविकारः, येन केनचिदपरिहार्यनिमित्तेन तद्देशवासआवश्यकः, तत्र प्रतिनिध्याश्रयः; अयं द्वितीयोहेतुः। किंच समीचीनश्चासावात्मा च स्वात्मा, अत्रात्मा मनः, स्वात्मनोभावः स्वात्म्यम्। तत्त्वं च सात्त्विकवृत्तिमत्त्वम्। सात्त्विकवृत्तिलक्षणमुक्तं गीतायाम्—

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ इति ॥

अयमेवार्थः स्पष्टमुक्तः तन्त्रसारोदाहृतरुद्रयामलवचनेन—

कुलद्रव्यं निषेवेत यदा सत्त्वाधिका मतिः।
अन्यथा सेवनं कुर्वन् पतनायैव कल्पते ॥

इत्यनेन ॥

ननु—इदं वचनं प्रकृतसूत्रं सामयिकपरमास्तां—इति चेत्—नन्न; सामयिकेषु पञ्चमप्रसक्तेरभावेन 'पञ्चमादिपरामर्शः' इति सूत्रविरोधात्। अतएवेमां शङ्कां निराकर्तुं प्रथमादिकमित्यनुक्त्वा पञ्चमादीत्युक्तं सूत्रकारेण। इत्थं च सात्त्विकान्तःकरणवृत्तिश्च स्वैकवेद्या। एवंसति अन्तःकरणशुद्धिं सम्यग्विचार्य पश्चात् पञ्चमादिमुख्यपरामर्शः—इति सिद्धम्। इत्थं च यः पूजाकर्ता तस्यैव सात्त्विकवृत्तिशून्यस्य द्रव्यसेवनं निषेधति शास्त्रं, किमु वक्तव्यं सामयिकस्य तद्विचारे ॥

एवंसति इदानीन्तनाः कौलिकाभासाः वयं कौलिका,इति प्रतिष्ठावन्तः अधिकारस्वरूपं अधिकारगन्धमप्यजानन्तः पानपात्रं कक्षे गृहीत्वा गेहाद्गेहमटन्ति। तांश्च शिष्टाभासांश्च मण्डले प्रवेश्य हविश्शेषं पात्रसङ्ख्यामुलङ्घ्य पाययन्ति। तेभ्यः दातृभ्यश्च भूयोभूयोनमः—इत्यलमसदावेशेन ॥

प्राणस्योद्वेगः सहनशक्तिः। सहायाः प्रसिद्धाः। आमयः रोगः। वयांसि बाल्यादि। एतानि सर्वाणि पञ्चमादिपरिग्रहे अनुकूलानि; उत प्रतिकूलानि; इति प्रविचार्य सम्यग्विचार्य अनुकूलत्वयाथार्थ्यग्रहएव मुख्यपञ्चमादिपरिग्रहः। अन्यथा प्रतिनिधिनैव नित्यक्रमविमृष्टिः—इति भावः ॥ ५६ ॥

### सर्वभूताविरोधादयः उपासकधर्माः

प्रसङ्गात् [1]पूर्वोक्तशेषान् उपासकधर्मान् वक्तुमारभते—

**सर्वभूतैरविरोधः ॥ ५७ ॥**

---

१ पूर्वोक्तशेषान्-नाम-१ खण्डस्थ-४-सूत्रतः-३१ सूत्रोक्तेभ्योऽन्यान्-इत्यर्थः—

सर्वभूतैरविरोधः स्वमार्गगुप्त्यर्थम् । अन्यथा द्वेषेण एतदीयं दोषं गुप्तरूपेण छद्मना वा दृष्ट्वा सभायां प्रकटं कुर्युः । अविरोधे तादृशदोषान्वेषणयत्नं न कुर्युः । दैवात् कदाचित् ज्ञाते वा अविरोधात् सभायां प्राकट्यं न कुर्युरिति भावः ॥ ५७ ॥

ननु सर्वभूतैरविरोधेन वर्तमानेऽपि "मक्षिकाव्रणमिच्छन्ति" इति न्यायेन कश्चन दोषान्वेषणन्यायेन प्रवृत्तश्चेत् तत्र किं कार्यम्–? अतआह—

**परिपन्थिषु निग्रहः ॥ ५८ ॥**

तादृशदुर्जनेषु निग्रहः । यथा तन्नाशः स्यात् तथा वर्तितव्यम् । लौकिकेन अलौकिकेन व्यापारेण तस्य निरासः कार्यः इति भावः ॥ ५८ ॥

एवमुदासीनेषु विरोधाभावं परिपन्थिषु निग्रहं प्रदर्श्य भक्तिभूमिकामारुरुक्षूणां सेवाऽऽदिना सम्यक् श्रितानां प्रसादं सम्पादितवतामुपरि किं कार्यमित्याशङ्कायामाह—

**अनुग्रहः संश्रितेषु ॥ ५९ ॥**

संश्रितेषु चिरकालं प्रसादितेषु तेषु अनुग्रहः, विद्याप्रदानादिना तेषां मनोरथपूरणं कर्तव्यमिति शेषः ॥ ५९ ॥

एवं गुरोर्धर्मानुक्त्वा प्राप्तविद्येन शिष्येण कथं वर्तितव्यम्–इति तं प्रकारमाह—

**गुरुवत् गुरुपुत्रकलत्रादिषु वृत्तिः ॥ ६० ॥**

आदिपदेन गुरुपूज्यानां ग्रहणम् । अत्र यद्यपि गुरुवृत्तिः तत्कलत्रादिष्वतिदिष्टा गुरुवृत्तिश्च नोक्ता, तथाऽपि अतिदेशेनैव ज्ञापितोगुरुधर्मः तन्त्रान्तरोक्तोऽस्यानुमतइति । गुरौ यथा वर्तितव्यं तत्प्रकारः कुलार्णवादिषु—

एकग्रामे क्रोशदूरे चार्धयोजनके स्थितः ।
गुरोस्त्रिसन्ध्यैकसन्ध्ये पञ्चपर्वसु दर्शनम् ॥
एकयोजनमारभ्य योजनद्वादशावधि ।
तत्तद्योजनसङ्ख्याकैः मासैःस्यात् गुरुदर्शनम् ॥
अतिदूरे नमेच्छिष्यस्तद्दिशाऽभिमुखोगुरुम् ।
रिक्तहस्तोनैव चिरात् पश्येदेवं गुरुं स्वकम् ॥
गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धिताम् ।
न कुर्याद्यन्त्रमूर्त्यादौ शिलाबुद्ध्यादिकं तथा ॥
गुरुं पश्येत् सदा भक्त्या साक्षाच्छिवमयं बुधः ।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥

ऋणदानं तथाऽऽदानं तथैव क्रयविक्रये ।
न कुर्यात् गुरुभिः सार्धं तदाज्ञां नैव लङ्घयेत् ॥
शिरसा न वहेत् भारं पादुकाभावनापरः ।
नाभिमानं गुरोः कार्ये लज्जां कुर्यात् कदाचन ॥
गुरुमित्रसुहृद्दासीदासाद्यान् मानयेत् सदा ।
वाहनं पादुकां चैव चामरं व्यजनं तथा ॥
ताम्बूलभक्षणं सेव्यभावं गुर्वग्रतः त्यजेत् ।
पादप्रक्षालनं दन्तधावनं मलमूत्रयोः ॥
विसर्गं क्षौरमभ्यङ्गं शयनं स्त्रीनिषेवणम् ।
दुर्वाक्यं रोदनं हास्यं प्रपदोद्घाटनं तथा ॥
दूषणं कलहं वादमधोवायुं दुराग्रहम् ।
अङ्गभङ्गं न कुर्याद्वै गुरुसंमुखतः क्वचित् ॥
गुरोरासनवस्त्राङ्गच्छायां नोलङ्घयेत् क्वचित् ।
अधस्स्थे तु गुरावूर्ध्वं न तिष्ठेन्नाग्रगोभवेत् ॥
न विशेदुत्थिते तस्मिन् स्वाङ्गच्छायां न पातयेत् ।
गुरुनाम न गृह्णीयात् जपाच्छ्राद्धादृते क्वचित् ॥

इत्यादिवचनैः या गुरौ वृत्तिरुक्ता सा गुरुपुत्रे तत्पत्न्यां च कार्या । आदिपदेन गुरोर्मान्याः ये स्वज्येष्ठाश्च ते ग्राह्याः,

गुरुपत्नीसुतज्येष्ठान् गुरुवत् पूजयेत् सदा ॥

इति तन्त्रान्तरवचनात् । स्वज्येष्ठानां मानार्हता कुलार्णवेऽप्युक्ता—

पूजामध्ये गुरौ ज्येष्ठे पूज्ये वाऽपि समागते ।
नत्वा ब्रूयात् स्थितः शेषमाचरेत् तदनुज्ञया ।
आसीनः प्रह्वभावेन श्रेष्ठभावमदर्शयन् ॥ इति ॥

ज्येष्ठलक्षणमुक्तं [1]प्राक् । इत्थं चैव सर्वेषु गुरुवद् वर्तितव्यम् । तत्राप्येकयोजनादिदूरे दर्शनादि, स्वशिरसि ध्यानादि, काश्चन वृत्तयः गुर्वतिरिक्ते हेयाः । यौवनशालिन्यां गुरुपत्न्यां पादस्पर्शपूर्वकाभिवन्दनं निषिद्धम्,

गुरुपत्नी च युवती नाभिवाद्या हि पादयोः ॥

इति वचनात् । इत्यलं विस्तरेण ॥ ६० ॥

---

१ प्राक्-नाम-१८३ पत्रे, ५-खण्डे २२, सूत्रभाष्ये, बालोपिदीक्षितः पूर्वमित्यादिना—
३५ प.

### आदिमस्वीकारे ग्राह्याग्राह्यद्रव्यविवेकः

शिष्टैःसार्धमितिवाक्येन[1] प्राप्तं आदिमस्वीकारमनूद्य त्याज्यांशं विधत्ते—

**आदिमस्य स्वयं सेवनमागमदृष्ट्या दोषदं त्याज्यम् ॥ ६१ ॥**

आगमाः तन्त्राणि तेषां दृष्ट्या यद् दोषदं तत् त्याज्यम्। पूर्वं क्रत्वर्थत्वेन आदिमसेवनं कर्तव्यमिति तन्त्रे प्रतिपादितम। तथाऽपि यत् दोषदं तत् त्याज्यम्। यथा स्वयं साधकः स्वस्य अधिकारमविचार्य केवलं "आगलान्तं पिबेत्" इति वचनं पुरस्कृत्य वृथा अनुतिष्ठन् दुष्टः पतेदेव न श्रेयसे इति। अतएव कौलोपनिषद्भाष्ये "यावन्न चलते दृष्टिः" "आगलान्तं पिबेच्छिवे" इत्यादितन्त्रवचसां सिद्धिमात्रपरत्वं व्यवस्थापितम्। अयं विषयः विस्तरतः प्राक्[2] निरूपितोऽस्माभिः ॥ ६१ ॥

अथ प्रसङ्गात् आदिमं कीदृशं किंप्रकृतिकं ग्राह्यम्;—इति परिशिष्टाकाङ्क्षायां वचनेन पूरयति—

**सानन्दस्य रुचिरस्यामोदिनोलघुनोवार्क्षस्य गौडस्य पिष्टप्रकृतिनः, अन्धसोवाल्कलस्य कौसुमस्य वा यथादेशसिद्धस्य वा तस्य परिग्रहः ॥ ६२ ॥**

द्रव्ये आनन्दसाहित्यं जनकतासम्बन्धेन आनन्दविशिष्टत्वं, आनन्दाविर्भावसाधनम्—इति यावत्। रुचिरस्य यद्दर्शनमात्रेण मनःप्रसादः तस्य। आमोदिनः सुगन्धयुक्तस्य। लघुनः धातुवैषम्याजनकस्य। इमएवोक्तगुणाः योगिनीतन्त्रे—

अत्यन्तशीघ्रबोधाढ्यं दुष्टामोदविवर्जितम्।
सुगन्धाढ्यं प्रीतिकरं अविकारकरं तथा ॥ इति ॥

अथ तत्प्रकृतीराह—वार्क्षस्येत्यादिना। वार्क्षस्य ताललाङ्गल्यादिवृक्षोद्भवस्य गौडस्य गुडभवस्य अन्धसः अन्नप्रकृतिकस्य, "भिस्सा स्त्री भक्तमन्धोऽन्नम्" इत्यमरः। वाल्कलं वृक्षत्वक्सम्बन्धि "त्वक् स्त्री वल्कलमस्त्रियाम्" इत्यमरः। कौसुमस्य मधुकादिपुष्पोद्भवस्य। यथादेशसिद्धस्य यस्मिन् देशे यद्यत्प्रकृतिकं द्रव्यं तद्वा ग्राह्यमित्यर्थः। एतेन दर्शितादन्याऽपि द्रव्यप्रकृतिरस्तीति दर्शिता। अन्याः प्रकृतयोदर्शिताः योगिनीतन्त्रे—

द्राक्षोद्भवा च खार्जूरी माध्वी गौडी तथाऽन्नजा।
मधुपुष्पभवा वार्क्षी ख्याता सप्तप्रकारतः।
यथोत्तरं ह्रासगुणमाद्यमाद्यं तथोत्तमम् ॥ इति ॥

---

१ इदं-शिष्टैः सार्धमित्यादि ज्ञेयं, १७६—पत्रे ५ खण्डे—श्रीललिताक्रमे २२—सूत्रतदूभाष्यान्तग्रन्थेऽस्ति—
२ इदमपि—उपर्युक्तस्थले—एवास्ति—

यद्यपि सूत्रे सर्वेषां तुल्यविकल्पइव दृश्यते, तथाऽपि लिखितयोगिनीतन्त्रवचनानुसारेण क्रमं धृत्वा पूर्वाभावे परं ग्राह्यम्। गुणह्रासानुसारेण भवन्ति शेषव्यवस्थाः। ताः सर्वाः दर्शिताः [1]प्राक्। तस्य आदिमस्य ॥

**आदिमप्रतिनिधिः**

अथ प्रसङ्गात् सूत्रानुक्तं आदिमप्रतिनिधिं तन्त्रान्तरोक्तं दर्शयिष्यामः। तच्चोक्तं परमानन्दतन्त्रे—

अथानुकल्पाः प्रोच्यन्ते शृणु देवि समाहिता।
हेतुद्रव्यं द्वितीयं च तृतीयं चाष्टगन्धकम् ॥
समानं वटकं कृत्वा संशोष्य स्थापयेच्छिवे।
अनूद्घृष्योदके तत्तु योजयेदर्घ्यपात्रके ॥
नारिकेलोदकं कांस्ये ताम्रे क्षीरं तु तक्रकम्।
गुडमिश्रं जलं वाऽपि जलं चन्दनमिश्रितम् ॥
मुख्यालाभे चानुकल्पः . . . . . ॥ इति ॥

प्रथमद्वितीयतृतीयान् अष्टगन्धं च समानभागं मेलयित्वा वटकं शुष्कं स्थापितं तज्जलेन घृष्ट्वा अर्घ्यपात्रे मेलयेत्। गुडमिश्रमित्यस्य देहलीदीपकन्यायेन तक्रेण जलेन चान्वयः, "गुडोदकं तथा तक्रं"—इति त्रिपुरार्णववचनात्, "गुडमिश्रेण तक्रेण" इति कुलार्णववचनाच्च ॥ ६२ ॥

**द्वितीयतृतीयसम्पादनप्रकारः**

अथ द्वितीयतृतीयसम्पादनप्रकारं दर्शयति—

**तदनन्तरं मध्यमयोरस्वयमसुविमोचनम्। उपादिमे नायं नियमः। मध्यमे तु स्वयं संज्ञपने तत्रायं मन्त्रः—**

**उद्बुध्यस्व पशो त्वं हि नाशिवस्त्वं शिवोह्यसि।**
**शिवोत्कृत्तमिदं पिण्डं मत्तस्त्वं शिवतां व्रज ॥**

**इति ॥ ६३ ॥**

तदनन्तरं प्रथमसम्पादनानन्तरम्। मध्यमयोः द्वितीयतृतीययोः। अस्वयं—आत्मभिन्नम्। असुविमोचनं प्राणविमोचनं प्राणमोचनसाधनम्। कुर्यादिति शेषः। द्वितीयतृतीयप्रकृतिभूतपशुप्राणवियोगं स्वयं न कुर्यात् इति फलितोऽर्थः ॥

---

१ प्राक्-नाम ३ खण्डे-श्रीक्रमे ३१-सूत्रभाष्यादौ १३१-पत्रतः—

अथान्यस्य संज्ञप्तुरभावे किं कार्यम्-।- तत्राह — उपादिम०- इति। उपादिमस्य द्वितीयस्य असुविमोचनं स्वयमप्यन्याभावे कुर्यात्। तृतीयस्य स्वयमसुविमोचने "उद्बुध्यस्व"०- इति मन्त्रं पठित्वा असुविमोचनं कुर्यात्–इति भावः॥

**द्वितीयप्रकृतिः**

द्वितीयतृतीयौ किंसम्बन्धिनौ ग्राह्यौ;–इत्याकाङ्क्षायां सूत्रे अनुक्तत्वात् तन्त्रान्तर-वचनानि लिख्यन्ते। तत्र द्वितीयप्रकृतिः योगिनीतन्त्रे—

द्वितीयभेदं वक्ष्यामि द्विविधं तच्छृणु प्रिये।
भूचरं खेचरं चैव पुनस्तद्द्विविधं स्मृतम्॥
ग्रामजं वनजं चापि ग्रामजं छागमेषकौ।
वराहः शल्यकोरोजोरुरुर्हरिणएव च॥
खड्गी गोधा च शशकः दशधा भूचराः स्मृताः।
रोगिणः कालविहताः परित्याज्यामहेश्वरि॥
कोमलाः पुष्टसर्वाङ्गाः भवेयुश्चोत्तमोत्तमाः।
ग्राम्यारण्यौ कुक्कुटौ च मयूरस्तित्तिरिस्तथा॥
चक्रवाकः सारसश्च राजहंसस्तथैव च।
जलकुक्कुटहंसौ च चटकोदश खेचराः॥ इति॥

तत्संस्कारप्रकारस्त्रिपुरार्णवे—

मधुराम्लहिङ्गुबीजमरीच्याज्यसुपाचितम्।
सुगन्धं मृदु पक्कं च सुस्वादु च मनोहरम्॥ इति॥

एतेषामलाभे प्रतिनिधिरुक्तोडामरतन्त्रे—

मांसानुकल्पोऽपूपः स्यान्मत्स्यस्य तु कदल्यपि॥

**तृतीयप्रकृतिः**

अथ तृतीयमुख्यभेदोयोगिनीतन्त्रे—

मत्स्यः कूर्मश्च देवेशि तृतीयं द्विविधं स्मृतम्॥ इति॥

तत्पाकस्त्रिपुराऽर्णवे—

अल्पकण्टकसंयुक्तं सुपक्कं स्वादुसंयुतम्।
लिकुचाम्लादिसंयुक्तं विधिना संस्कृतं तथा॥ इति॥

तदनुकल्पोरहस्यार्णवे—

संवित्संयुक्तचणकपिष्टजं वटकं शिवे ।
मीनाकृतिकृतं वाऽपि मूलकं वाऽपि वा शिवे ॥ इति ॥

तन्त्रान्तरे—

अलाभे तु तृतीयस्य द्वितीये त्र्यम्बकं जपेत् ॥

इति द्वितीयं स्पृष्ट्वा 'त्र्यम्बकं यजामहे०'—इति मन्त्रं जपेत्। तेन तृतीयकार्यसम्पत्तिर्भवतीति तद्भावः ॥

## चतुर्थद्रव्यम्

चतुर्थमुक्तं योगिनीतन्त्रे—

चणकोत्थामाषजावा मुद्राः स्युर्घृतपाचिताः ।
तैलपक्वाअपि शिवे मधुराश्च सुसंस्कृताः ॥
लवणाद्यैः संस्कृतावा गोधूमैस्तण्डुलादिभिः ।
निर्मितारुचिराकाराः स्वादुयुक्तामहेश्वरि ॥ इति ॥

इदं द्वितीयादिपर्युषितं वर्ज्यम् । तदुक्तं त्रिपुराऽर्णवे—

एतत्पर्युषितं सर्वमनर्हं पूजनादिषु ।
तत्पूजया प्रकुप्यन्ति योगिन्यस्त्वतिभीषणाः ॥ इति ॥

तन्त्रान्तरे प्रथमस्यापि हेयत्वमुक्तम्—

प्रथमादि चतुर्थान्तं यामात् पर्युषितं भवेत् ।
प्रथमादि चतुर्थान्तं सर्वं त्याज्यं सुसाधकैः ॥ इति ॥

पर्युषितस्य परित्यागः। सति सम्भवे, अन्यथा ग्राह्यं क्रयक्रीतमपीति तन्त्रसारे लिखितनील-तन्त्रवचनविरोधात् क्रयक्रीतमपर्युषितं सम्भवति। दोषदुष्टं सर्वदा त्याज्यम्। तन्त्रे प्रतिपादिताः दोषायथा—

तथा विकृतिमापन्नं मार्जाराद्यैरुपाहृतम् ।
केशाश्रुनखनिष्ठिवदूषितं च परित्यजेत् ॥ इति ॥

चकारेण कृमिकीटादिसंमिश्रं पिपीलिकादिदूषितादि एतत्सदृशं सर्वं ग्राह्यम् ॥

### प्रथमादीनां मण्डलादन्यत्र ग्रहणप्रकारः

प्रथमादि सर्वं मण्डलात् बहिः न ग्राह्यं—इत्युक्तं [1]प्राक्। तस्यापवादः क्वचित्तन्त्रे—

[1] प्राक् नाम–५–खण्डे श्रीललिताक्रमे १८३ पत्रतः–२२–सूत्रभाष्ये.

देव्यै निवेदितं सर्वं प्रथमादिकमद्रिजे ।
येन केनापि संस्पृष्टं समानीतं सुसंस्कृतम् ॥
उद्वासानन्तरं वाऽपि मण्डलात् बाह्यतोऽपि वा ।
आदरेण समादेयं सर्वैः पर्वतगोत्रजे ॥
उपवासपरैश्चापि स्वीकर्तव्यं सुभक्तितः ।
भोजनादौ तथा सर्वैः स्वीकर्तव्यं प्रसादकम् ॥
निवेदितं यत् प्रथमं सर्वैरापोशनान्ततः ।
चुलुकेन समादेयं मूलं स्वाहाऽन्तमुच्चरेत् ।
एतत्सर्वं तदमृतं करोति शृणु शङ्करि ॥ इति ॥

मपञ्चकेषु यदनुकल्पः तदुत्तरस्य मुख्यस्य लाभेऽपि न ग्रहणम् । यथा द्वितीयस्यानुकल्पे तृतीयं मुख्यं न । एवं,–अग्रेऽपि । तदुक्तं परमानन्दतन्त्रे—

पूर्वानुकल्पे तु परं मुख्यं नैव तु योजयेत् ॥ इति ॥

### पञ्चमप्रकारः

पञ्चममुख्यस्य प्रकारस्त्रिविधः । तत्राद्यं दूतीयजनरूपम् । तत्राधिकारिणः सदाशिवादयः एव, न मनुष्याः । तदुक्तं परमानन्दतन्त्रे—

अद्वैतज्ञाननिष्ठोयोयोऽसौ संसारपारगः ।
सएव यजने दूत्याअधिकारी तु नापरः ॥ इति ॥

अतस्तदनुष्ठानस्य सम्प्रत्यभावात् तदितिकर्तव्यतां परित्यज्य द्वितीयप्रकारमारभ्योच्यते । तदुक्तं रहस्यार्णवे—

त्रिधा तु पञ्चमं प्रोक्तं दूतीयागस्तदादिमः ।
एषप्रकारोदेवेशि योगिराजैकगोचरः ॥
द्वितीयं तु समर्चाऽन्ते [1]दूती पूज्या यथाविधि ।
योनिकुण्डे शिवात्माग्नौ मन्त्रमावर्तयन् क्रमात् ।
रेतोहविर्हावयित्वा देवताप्रीतिमाप्नुयात् ॥

समर्चाऽन्ते शक्तिपूजाऽन्ते । अयं पञ्चमद्वितीयप्रकारः स्वयोषित्स्वेव । तदुक्तं स्वतन्त्रतन्त्रे—

आद्यं तत्र कलौ देवि त्रिसहस्रान्तमिष्यते ।
द्वितीयं तु भवेत् देवि स्वयोषित्सु सुरेश्वरि ॥ इति ॥

1 दूतीं पूज्य—श्री.

पञ्चमस्य तृतीयप्रकारोरहस्यार्णवे—

अथवा शिष्यभूतां वा चान्यां वाऽपि महेश्वरि ।
प्रार्थितोवा तया स्वेन प्रार्थितां वाऽपि शङ्करि ॥
सम्पूजयित्वा पूजाऽन्ते भोगपात्रं निवेद्य च ।
मनसा तां समागच्छन् देवतायै निवेदयेत् ॥ इति ॥

मनसा तया कृतं संभोगं देव्यै समर्पयेत् इत्यर्थः । एवं त्रिप्रकारं मुख्यम् । अमीषामभावे तत्प्रतिनिधिरुक्तोयोगिनीतन्त्रे—

रक्तं तु करवीरं वै तथा कृष्णाऽपराजिता ।
एतत् प्रोक्तं लिङ्गयोन्योः पुष्पं तत्र तु योजयेत ॥ इति ॥

परमानन्दतन्त्रे—

कुसुमे लिङ्गयोन्योर्वा सकाश्मीरं च चन्दनम् ॥ इति ॥

शुक्रस्थाने चन्दनं शोणितस्थाने काश्मीरं योजयित्वा तत्र मैथुनबुद्धिं विभाव्य श्रीदेव्यै अर्पणं कुर्यात् इति भावः । अयं प्रकारोऽपि सामयिकपूजाऽन्ते शक्तिपूजाऽन्ते वा । अर्घ्यपात्रे पञ्चमप्रतिनिधिमेलनमपि योगिपरम् । तेषामपि कलौ त्रिसहस्रवर्षपर्यन्तं ज्ञेयम् ॥

एवमुक्तोमपञ्चकप्रकारः ॥ ६३ ॥

**अवशिष्टकुलाचारधर्माः**

अथ [1]पूर्वोक्तावशिष्टाः ये कुलाचारधर्माः तानाह—

**सर्वत्र वचनपूर्वं प्रवृत्तिः ॥ ६४ ॥**

सर्वत्र कुलशास्त्रविहितक्रियासामान्ये अस्मिन् शास्त्रे विहितं किं अविहितं किम्—इति परिशोध्य सप्रमाणं कर्म अनुष्ठेयमिति भावः ॥ ६४ ॥

अन्यं धर्ममाह—

**दशकुलवृक्षानुपल्लवः ॥ ६५ ॥**

श्लेष्मातककरञ्जाम्रनिम्बाश्वत्थकदम्बकाः ।
बिल्वोवटोदुम्बरौ च तिन्त्रिण्या सहितादश ॥

इति तन्त्रान्तरे प्रसिद्धाः ये कुलवृक्षाः तेषामनुपल्लवः अच्छेदनम् ॥ ६५ ॥

धर्मान्तरमाह —

---

१. अत्र पूर्वोक्तावशिष्टाः, नाम–१ खण्डस्थ-२७-पत्रतः-४३-पत्रान्तं-३०-सूत्रान्तं यावत्-ये कुलधर्माः उक्तास्तेभ्योऽन्ये-इत्यर्थः-

**स्त्रीवृन्दादिमकलशासिद्धलिङ्गिक्रीडाऽऽकुलकुमारीकुलसहकाराशोकैकतरुपरेतावनिमत्तवेश्याश्यामारक्तवसनामत्तेभानां दर्शने वन्दनम् ॥ ६६ ॥**

स्त्रीवृन्दं सुवासिनीवृन्दम्, न तु विधवानाम्,
सुवासिनीकुमारीणां समूहं मदिराघटम् ॥

इति तन्त्रान्तरवचनात् । आदिमकलशं मदिरापूर्णघटः । सिद्धाः मन्त्रसिद्धिमन्तः, तेषां लिङ्गानि पूर्वं वाराहीप्रकरणे लिखितानि,[1]–तच्छालिनः सिद्धलिङ्गिनः । क्रीडासु आकुलाः व्याकुलाः व्यासक्ताः कुमार्यः कन्याः तासां कुलं समूहः । सहकारोऽतिसुगन्धिचूतः, "आम्रश्चूतोरसालोऽथ सहकारोऽतिसौरभः" इत्यमरः । अशोकः प्रसिद्धः । एकतरुः योवाकोवा अद्वितीयः नेत्रसञ्चारपर्यन्तं तरुः । न च सहकाराशोकात्मक एकतरुः इति शङ्कनीयम्,

मत्तेभं सहकारेच्छाऽप्यशोकं पुष्पितद्रुमम् ।
श्मशानं द्रव्यसौगन्ध्यमेकवृक्षं च कीलकम् ॥

इति तन्त्रान्तरवचनात् । परेतावनिः श्मशानम् । मत्तवेश्या यौवनभरा वेश्या । यद्वा–पानादिना मत्ता । श्यामा यौवनमध्यस्था तारुण्यनिर्भरेति यावत् । रक्तवसना रक्तवस्त्रपरिधानवती । मत्तेभः प्रसिद्धः । एतेषां दर्शने वन्दनं नमनं कुर्यात् । तदपि मानसे, स्वधर्माणां प्राकट्ये निरयश्रवणात् ॥ ६६ ॥

**पञ्चपर्वसु नैमित्तिकी पूजा**

अथ नैमित्तिकपूजामाह––

**पञ्चपर्वसु विशेषार्चा ॥ ६७ ॥**

पञ्च पर्वाणि–कृष्णाष्टमी कृष्णचतुर्दशी अमा पूर्णिमा सङ्क्रान्तिः इति ।

तदुक्तं तन्त्रे–

कृष्णाष्टमीचतुर्दश्यौ पूर्णिमाऽमा च सङ्क्रमः ।
एतानि पञ्च पर्वाणि...............इति ॥

श्रीदेवीभागवते––

[1]कृष्णाष्टमी च तद्भूता पूर्णिमा सङ्क्रमोरवेः ।
एतानि पञ्चपर्वाणि दुर्लभं तत्र पूजनम् ॥ इति ॥

1 अत्र श्लोकार्धं गलितं स्यात्

१ पाश्चात्य ७ खण्डे–वाराहीक्रमे ३७–सूत्रभाष्यतः २३०-पत्रात् २३३-पत्रान्तं–सिद्धिमल्लक्षणमुक्तम्–

एतेषु पञ्चपर्वसु विशेषेण विशेषद्रव्येण मुख्यपञ्चकेन न तु प्रतिनिधिनेति यावत् । नैमित्तिकपूजायां कृष्णाष्टम्यादितिथयः प्रदोषव्यापिन्यः ग्राह्याः । तदुक्तं नित्यातन्त्रे—

प्रदोषव्याप्ततिथ्यादौ कुर्यान्नैमित्तिकार्चनम् ।
विषमे त्वधिकं ग्राह्यं समे परदिनं तथा ।
रात्रिव्याप्तेरलाभे वै पर्वयोगे दिवैव तु ॥ इति ॥

रात्रिव्याप्तेरलाभे इत्यत्र रात्रिपदं प्रदोषपरम् । उभयदिने अव्याप्तौ सङ्क्रान्त्यादौ दिवा पर्वयोगे च परदिने दिवैव पूजनं कुर्यादित्यर्थः ॥

प्रतिनिधिना नैमित्तिकपूजा न कार्या इत्यत्र प्रमाणमुक्तं " मपञ्चकालाभेऽपि नित्यक्रमप्रत्यवमृष्टिः " इत्यस्य व्याख्याने प्रथमखण्डे[1] । नैमित्तिकपूजायामशक्तिः—द्विविधा, द्रव्यालाभात् शरीरदेशसम्पत्त्यभावाच्च । एवमशक्तौ पूजाप्रतिनिधित्वेन कर्मोक्तं परमानन्दतन्त्रे—

नैमित्तिके यद्यशक्तौ जपेदष्टोत्तरं शतम् ॥ इति ॥

अस्यापि कालः सएव । सङ्क्रान्तिपर्वकालोज्योतिर्निबन्धे—

प्रागूर्ध्वं दश चैव मेषतुलयोः सिंहे वृषे वृश्चिके
कुम्भे षोडश पूर्वतोऽथ मिथुने मीने धनुःकन्ययोः ।
ऊर्ध्वाः षोडश कीर्तिताः प्रथमतः त्रिंशत्तु कर्काटके
चत्वारिंशदधोऽपरास्तु मकरे पुण्यप्रदा नाडिकाः ॥ इति ॥

पञ्चपर्वस्विति कथनात् पञ्चपर्वसु सूत्रानुयायिनः पूजनमावश्यकम् । दमनपवित्रारोपणाद्यकरणे न प्रत्यवायः, करणे अभ्युदयः—इति सिद्धम् ॥ ६७ ॥

### आरम्भादयः सप्तोल्लासाः

अथैषां कुलधर्माणां अनुष्ठानविधिं वक्तुं तदुपोद्घातभूतान् उल्लासान् विभजते—

**आरम्भतरुणयौवनप्रौढतदन्तोन्मनानवस्थोल्लासेषु प्रौढान्ताः समयाचाराः । ततः परं यथाकामी । स्वैरव्यवहारेषु वीरावीरेष्वयथामननादधःपातः ॥ ६८ ॥**

आरम्भः, तरुणः, यौवनः, प्रौढः, तदन्तः, उन्मनः, अनवस्थः, उपासकस्य सप्त दशाविशेषाः । तत्र आरम्भोनाम उपासनाविषयकेच्छामात्रवत्त्वे सति तन्त्रशास्त्रानभिज्ञत्वम् ।

1. इदं सूत्रं-३९-पत्रेस्ति—

सम्यग्गुरुं सम्पाद्य दीक्षितस्तदनन्तरं तन्त्रशास्त्रपिपठिषाशालित्वं तरुणोल्लासः। ततस्तच्छास्त्रविषयकज्ञानवत्त्वं यौवनोल्लासः। ततः तच्छास्त्रविषयकतत्त्वज्ञानं सम्पाद्य शास्त्रप्रतिपादितध्यानं कर्तुमीहमानत्वं प्रौढोल्लासः। तदिच्छाऽनन्तरं किंचिदभ्यस्ते ध्यानवत्त्वं तदन्तोल्लासः। ततोध्यानेन कंचित्कालं मनोलयशक्तिमत्त्वं उन्मनोल्लासः। पूर्णारूढत्वमनवस्थोल्लासः। अत्र प्रमाणं परमानन्दतन्त्रे--

यस्य यावत् पात्रमुक्तमारम्भस्तस्य तावता।
तत्पश्चात् तरुणोदेवि ईषद्बोधोदये सति॥
तत्पश्चान्मध्यबोधस्य चोदयाद्यौवनोमतः।
यत्नान्मनोलयोदेवि यदा स्याद्यावता शिवे॥
अयत्नात्तु लयोयत्र प्रौढइत्युच्यते शिवे।
ईषच्चलोलयश्चापि प्रौढान्तः समुदाहृतः॥
यदा यत्नात् सञ्चलनं तदा स्यादुन्मनः शिवे।
निश्चलत्वं सर्वथा चेत् तदात्यन्तिकईरितः॥ इति॥

अस्यार्थः-पूर्वं श्रीप्रकरणे अधिकारिभेदेन पात्रसङ्ख्याव्यवस्था सप्रमाणमुक्ता[1]। तावत्पात्रस्यैव व्यवस्थया ग्रहणम् आरम्भोल्लासः। तदनन्तरं पात्रवृद्धिः ईषदुन्मादरूपबोधाय क्रियते सतरुणः। ततोऽपि पात्रवृद्धिं सम्पाद्य मध्यमबोधजननं यौवनः। यावता पात्रसेवनेन स्वाभाविकतया चञ्चलस्य मनसः। शास्त्रोक्तध्यानेन स्वप्रयत्नसाध्येन स्थिरता भवेत् तावत् पात्रसेवनं प्रौढः। अयत्नादेव ईषच्चलनं मनसः, अयत्नादेव स्थिरीभावः, ईदृशं यावत् भवति तावत् पात्रसेवनं तदन्तः। यावताऽयत्नान्मनसः स्थिरीभावः मनसश्चलनं तावत्पात्रसेवनं उन्मनः। यावता यत्नेनापि मनश्चालयितुं न शक्नोति सोऽनवस्थः-इति॥

एवं पात्रसेवनवृद्धिं उल्लासभेदेन प्रदर्श्य सप्तसूल्लासेषु मध्ये कस्मिन् कोऽधिकारीति विवक्षायां अधिकारिव्यवस्थाऽप्युक्ता परमानन्दतन्त्रे--

अशक्ताबुधबालानामारम्भः परिकीर्तितः।
तरुणोनूतनानां स्याद्भक्तिमात्रस्य यौवनः॥
प्रौढः स्यादारुरुक्षोर्वै मध्यारूढस्य तत्परः।
पूर्णारूढस्योन्मनश्च तद्वदात्यन्तिकोऽपि वा॥ इति॥

इत्थं च अमीषां वचसां तत्त्वे निर्मथ्यमाने उल्लासलक्षणं मदुक्तमेव पर्यवस्यति। उपासकस्य निरुक्तोल्लासरूपाः दशाविशेषाः स्वान्तःकरणैकवेद्याः। स्वयं विद्वान् स्वीयां दशां सूक्ष्मधिया

1. पाश्चात्य० ५-खण्डे श्रीललिताक्रमे २२ सूत्रभाष्ये १७६-पत्रतः तत्सूत्रभाष्यान्तं-१८६-पत्रान्तम्-इत्यर्थः-

सम्यक् परिशोधयेत् । एवं परिशोध्य तुरीयप्रौढोल्लासपर्यन्तं शास्त्रप्रथिताः समयाचाराः कार्याः । अतऊर्ध्वं यथाकामी विहरेत्—इतिभावः ॥

एवं समयाचारपरिग्रहः त्यागश्चोक्तः अधिकारिभेदेन । तमधिकारं स्वबुद्ध्या अविचार्य यदि कामचारी भवेत् तर्हि पतेदेवेत्याह—स्वैरव्यवहारेष्विति । वीराः पञ्चमषष्ठसप्तमोल्लासिनः । अवीराः पञ्चमोल्लासवन्तः । अनयोः अयथामननात्—याथार्थ्यं अविदित्वा यदि स्वैरचारी भवेत् तर्हि पतेदेव निरयइत्यर्थः ।

उल्लासभेदमज्ञात्वा प्राप्य मूढत्वमम्बिके ।
[1]जिह्वालोलुपभावेन चेन्द्रियप्रीणनाय च ।
यः पिबेत् तं तु तामिस्रे मातृकाः पातयन्ति हि ॥

इत्यनेनोक्तएवार्थः प्रकटीकृतः स्वतन्त्रतन्त्रे । इत्यलमतिविस्तरेण ॥ ६८ ॥

**अवशिष्टाउपासकधर्माः**

एवं प्रसङ्गात् आचारविधिमुक्त्वा पुनः शिष्टान् धर्मान् वक्तुं प्रक्रमते—

**रक्तात्यागविरक्ताऽऽक्रमणोदासीनाप्रलोभनवर्जनम् ॥ ६९ ॥**

रक्ता आत्मना साकं भोगे आसक्ता तां न त्यजेत् । एवं स्वस्मिन् विरक्ता या तां बलात्कारेण नोपभुञ्जीत । या चोदासीना तां धनादिना प्रलोभ्य तदुपभोगोऽपि न कार्यः ॥ ६९ ॥

**घृणाशङ्काभयलज्जाजुगुप्साकुलजातिशीलानां क्रमेणावसादनम् ॥ ७० ॥**

घृणा दया । शङ्का विधिविहितहिंसायां द्वितीयादिसम्पादनविषये, एवं प्रथमादिग्रहणे संशयः । जुगुप्सा द्वितीयादिविषयकस्तिरस्कारः अन्तःकरणवृत्तिविशेषः । कुलं गोत्रम् । जातिः ब्राह्मणत्वादिः । शीलं स्वभावः । इमान्यविद्यामूलानि अनेकजन्मस्वनुवृत्तानि क्रमेण तत्तद्भूमिकां प्राप्य अवसादनं त्यागः कार्यइति शेषः ॥

प्रथमभूमिकामारूढः, हेयं किं ग्राह्यं किं?—इति परिशोधयेत् । ततः यत् हेयं तस्य त्यागेच्छां द्वितीयभूमिकाऽऽरूढः कुर्यात् । तृतीयभूमिकाऽऽरूढः त्यागसाधनानि सम्पादयेत् । चतुर्थभूमिकाऽऽरूढः सम्पादितसाधनैः सह यत्नं कुर्यात् । पञ्चमभूमिकाऽऽरूढः उक्तधर्मान् मनसि त्यजेत्, न बाह्यतः । षष्ठभूमिकाऽऽरूढः सर्वथा त्यजेत् । एवं स्वस्य तत्तद्भूमिकाऽऽ-

1 "क्षयोगिनीनां सततं पशुः स्यादन्यथा पिबन्" इत्यधिकः—अ.

रूढत्वज्ञानं सम्यग्विचार्य निश्चित्य पश्चात् तद्धर्मान् अनुसरेत् । न त्वन्यथा । अन्यथा कुर्वन् पतनायैव कल्पेत । तदुक्तं भागवते—

स्वेस्वेऽधिकारे या निष्ठा सगुणः परिकीर्तितः ।
विपर्ययस्तु दोषः स्यादुभयोरेषनिश्चयः ॥ इति ॥

अधिकारिभेदेन गुणदोषौ व्यवस्थितौ न वस्तुनि नियतौ—इति तच्छ्लोकभावः ॥ ७० ॥

धर्मान्तरमाह—

**गुरुप्रगुरुसन्निपाते प्रगुरोः प्रथमं प्रणतिः तदग्रे तदनुरोधेन तन्नतिवर्जनम् ॥ ७१ ॥**

गुरुः प्रसिद्धः । प्रगुरुः गुरोः गुरुः । तयोः सन्निपाते एकत्र वासे प्रगुरोः प्रथमं नमस्कारः कार्यः । यावत्पर्यन्तं प्रगुरुसन्निधौ गुरुस्तिष्ठति तावत्पर्यन्तं तं गुरुं न नमेत्, नमस्कारः गुरोः न कार्यः—इति भावः । प्रगुरोरनुरोधेनैव तिष्ठेत् ॥

ननु प्रथमं नतिः, इत्यनेन नमस्कारानुवादेन प्राथम्यं विधीयते ?, उत " वषट्कर्तुः प्रथमभक्षः " इतिवत् क्रमविशिष्टं नमनं विधीयते ? नाद्यः, उभयोः नतिप्राप्तौ कस्य प्रथममिति क्रमाकाङ्क्षायां प्रकृते गुरुनमननिषेधे परिशिष्टप्रगुरुनतौ क्रमाकाङ्क्षाऽभावात् प्रथममित्यस्य वैय्यर्थ्यापत्तेः । न द्वितीयः, दृष्टान्तवैषम्यात् । तथा हि वषट्कर्तुरित्यत्र भक्षस्य समासघटकत्वेन समासमध्ये अर्धेनानुवादः अर्धेन विधिः न सम्भवति—इति गत्यभावात् विशिष्टमपूर्वं विधीयते—इत्युक्तम्, इह तथात्वाभावात् ॥

वृद्धान्नमस्कुर्यात्, इत्यनेन प्राप्तानुवादसम्भवे विशिष्टविधिकल्पनायाः असम्भवात्—इति । सूत्रे नतिवर्जनम्—इत्यनेन न नतिसामान्यं निषिध्यते, किं तर्हि कायिकं दण्डवन्नमनं निषिध्यते । मानसं गुरुनमनं भवत्येव ॥

कथं सामान्येन श्रुतस्य नतिवर्जनम्—इत्यस्य सङ्कोचः प्रमाणमन्तरेति चेत्—न वयं स्वेच्छया सङ्कोचं कुर्मः, किं तु सप्रमाणम् । तदुक्तं परमानन्दतन्त्रे—

गुरोर्गुरौ समीपस्थे प्रगुरुं पूजयेच्छिवे ।
गुरोः पूजाऽऽदिकं सर्वं मनसैव प्रकल्पयेत् ॥ इति ॥

आदिपदेन नमस्कारोग्राह्यः ॥

तत्र आदौ प्रगुरोः कायिकोनमस्कारः, गुरोश्च मानसः । द्वयोः प्राप्तौ आदौ किं कार्यम्; इति जिज्ञासायां तत्पूरकतया प्रथममिति पदस्य सार्थक्यसम्भवात् केवलक्रममात्रविधायकमिदं,

न विशिष्टापूर्वविधिः। तथा च उभयसन्निपाते प्रगुरुं दण्डवत् प्रथमं प्रणम्य—गुरुं मनसा प्रणमेत्—इति फलितम् ॥

अत्र विधौ निषेधे च नतिपदेन पूजासामान्यं लक्ष्यते, पूर्वलिखितपरमानन्दतन्त्रवचनात्। गुरुप्रगुरुपदं प्रगुरुपूर्वपरम्परासन्निपातेऽपि तुल्यत्वलक्षकम्,

गुरूणां सन्निपाते तु सर्वाद्यं तत्र पूजयेत् ॥

योगिनीतन्त्रवचनात् ॥ ७१ ॥

धर्मान्तरमाह—

**अभ्यर्हितेष्वपराङ्मुख्यम् ॥ ७२ ॥**

अभ्यर्हितेषु श्रेष्ठेषु। श्रेष्ठत्वं चात्र ज्ञानाधिक्येन ग्राह्यम्। अपराङ्मुख्यं औदासीन्याभावः। तेन मम किं कार्यम्—इति औदासीन्यं न कार्यम्। स्वापेक्षया ज्ञानाधिक्यात् ज्ञेयांशं तस्मादवगच्छेत् ॥ ७२ ॥

धर्मान्तरमाह—

**मुख्यतया प्रकाशविभावना ॥ ७३ ॥**

प्रकाशः परशिवः तत्त्वातीतः, यदुपनिषत्प्रतिपाद्यं ब्रह्मेति व्यवह्रियते सः तस्य विभावना मुख्यतया सकलशास्त्राभ्यासफलमिति जानीयादित्यर्थः। तादृशभावनासिद्ध्युपायमेव सर्वं शास्त्रं ब्रूते—तदन्यदफलमिति ब्रूते—इति तत्त्वार्थं जानीयादिति सूत्ररहस्यतात्पर्यं ज्ञेयम् ॥ ७३ ॥

धर्मान्तरमाह—

**अधिजिगमिषा शरीरार्थासूनां गुरवे धारणम् ॥ ७४ ॥**

अत्रापि पूर्वसूत्रात् मुख्यतयेत्यनुषज्यते। अधिजिगमिषा यत्र क्वचित् कार्योद्देशेन गमनेच्छा। सा हि द्विप्रकारा, स्वार्था गुर्वर्था च। तत्र द्वयोः सन्निपाते मुख्यतया गुर्वर्थं या जिगमिषा तदनुरोधेन स्वार्थजिगमिषां साधयेत्। एवं शरीरधारणं, अर्थस्य द्रव्यस्य धारणं प्राणधारणं च गुर्वर्थं मुख्यं, स्वार्थं गौणम्। यदि स्वशरीरपातेन गुरोर्हितं भवति तर्हि देहं पातयेत्, न तु स्वोपभोगार्थं शरीरधारणं कुर्यात—इति भावः। अर्थप्राणयोरप्येवमेव ज्ञेयम् ॥ ७४ ॥

धर्मान्तरमाह—

**एतदुक्तकरणम् ॥ ७५ ॥**

एतदुक्तं गुरूक्तं नीचकार्यमपि अभिमानमुत्सृज्य कार्यम् ॥ ७५ ॥

**अपरीक्षणं तद्वचने व्यवस्था ॥ ७६ ॥**

तद्वचने गुरुलक्षणविशिष्टगुरुवचनं स्वबुद्ध्या न परीक्षयेत्, सदसद्वेति न विचारयेत्। व्यवस्था अयं सर्वतन्त्रार्थवित् अन्यथा न वदिष्यति, किं तु शास्त्रयुक्तमेव वदिष्यति, इति निश्चयं कुर्यात् ॥ ७६ ॥

**सर्वथा सत्यवचनम् ॥ ७७ ॥**

सर्वथा सङ्कटेऽपि। यद्वा—सर्वथा सहसा सङ्कटमन्तरेत्यर्थः। तेन सङ्कटे विवाहादौ अनृताभ्यनुज्ञा स्मृतिप्राप्ता न बाधिता ज्ञेया ॥ ७७ ॥

**परदारधनेष्वनासक्तिः ॥ ७८ ॥**

स्पष्टम् ॥ ७८ ॥

धर्मान्तरमाह—

**स्वस्तुतिपरनिन्दामर्मविरुद्धवचनपरिहासधिक्काराक्रोशत्रासनवर्जनम् ॥ ७९ ॥**

स्वस्तुतिपरनिन्दे प्रसिद्धे। "द्वन्द्वान्ते श्रूयमाणं प्रत्येकं सम्बध्यते" इति न्यायेन विरुद्धपदोत्तरवृत्तिवचनशब्दस्य स्तुतौ निन्दायां मर्मणि चान्वयः। इत्थं च स्तुतिवचनं निन्दावचनं मर्मवचनं विरुद्धवचनं चेति फलितम्। मर्मवचन गुढदोषप्रकाशकशब्दः। विरुद्धवचनं तव मरणं भूयात् इत्यादिरूपं श्रवणकटुवचः। परिहासोहेलनं, दरिद्रं दृष्ट्वा, त्वं महाराजः तव किङ्कराः वयं स्मः, इत्याद्याक्षेपरूपम्। धिक्कारस्तु तुच्छीकरणम्। आक्रोशः रोदनादि। त्रासनं परस्य भयजनकम्, इदानीं तव शिरश्छेदनं करोमि इत्यादिरूपम्। उक्तानाम् अमीषां वर्जनं कार्यम् ॥ ७९ ॥

एवं सामयिकधर्मेषु अत्यन्तमावश्यकं मुख्यं धर्ममाह—

**प्रयत्नेन विद्याऽऽराधनद्वारा पूर्णख्यातिसमावेशनेच्छा चेत्येते सामायिकाचाराः ॥ ८० ॥**

प्रयत्नेन सावधानेन जितेन्द्रियेणेति यावत्। श्रीविद्याऽऽराधनद्वारा प्राक्प्रपञ्चितामपूर्णख्यातिं व्युदस्य पूर्णख्यातिः जीवस्य स्वतस्सिद्धा या पूर्णख्यातिः सा प्रकटा भवतीत्याकारिका इच्छा,

तां सदा कुर्यात्। एते इच्छाऽन्तानिरूपिताधर्माः सामयिकाः, समये कुलशास्त्रमर्यादायां वर्तमानाः, ते कुलशास्त्रप्रतिपादिताउपासकधर्मा, इति यावत् ॥ ८० ॥

पूर्वोक्तान् इच्छाऽन्तान् आचारान् कण्ठरवेणोक्त्वा ग्रन्थविस्तरभयात् शेषधर्मान् शास्त्रान्तरोक्तान् ग्राह्यत्वेन अतिदिशति—

**परे च शास्त्रानुशिष्टाः ॥ ८१ ॥**

ये पूर्वोक्ताः तेभ्यः परे अन्यधर्माः ते शास्त्रे तन्त्रान्तरे अनुशिष्टाः तेऽपि ग्राह्याः, इति शेषः ॥

### तन्त्रान्तरात् ग्राह्यधर्मपरिगणनम्

ते च धर्माः तन्त्रान्तरे प्रसिद्धाः सङ्गृह्यन्ते—

अशोकपुष्पितवृक्षकोकिलमांसकुलशास्त्रपुस्तकानां दर्शने नमनम् ॥

न नग्नां स्त्रियमीक्षेत कुरूपां प्रकटस्तनीम्।
दृष्ट्वा तु विकृतां वाऽपि नोपहासं समाचरेत् ॥
योषितामप्रियं नैव कुर्यात् कार्यं प्रियं सदा।
न स्वपेत् कुलवृक्षाधः तत्पत्रे नैव भोजनम् ॥
वृथा छेदं न कुर्याच्च नमस्कुर्याच्च दर्शने।
शपथं नैव कुर्वीत कार्ये क्वापि समुत्थिते ॥

इत्येवंरूपाः। तानप्यनुतिष्ठेत्। इत्युक्ताः समयाचाराः ॥

अथ प्रसङ्गात् यद्वचनं मुख्यत्वेन पुरस्कृत्य अन्यानि प्रमाणानि तदुपोद्बलत्वेन स्वीकृत्य तन्त्रान्तरस्पर्शस्त्यक्तः तद्वचनं त्रिपुरारहस्ये—

क्वचित्तन्त्रेषु विस्तारः क्वचित्तन्त्रेषु सङ्ग्रहः।
एकतन्त्रं समाश्रित्य सम्यक् कर्म कृतं तथा ॥
सर्वं तेन कृतं राम तच्च श्रीगुरुमार्गतः।
तन्त्रानुक्तं सूचितं च तथाऽन्येष्वतिदूषितम् ॥
अकृतं यत् कर्म राम विकल्पेन विवर्जितम्।
तदन्यस्मादुपादेयं एषशास्त्रविनिर्णयः ॥ इति ॥

अस्मिन् वचने तन्त्रान्तरात् ग्राह्याणां परिगणनं कृतम्। सूचितं यथा—षोढाचक्रे न्यसेत्। एतावत्सूचनया षोढाचक्रन्यासानुष्ठानक्रमः, तन्त्रान्तरात् ग्राह्यः। तथा यदकरणे तन्त्रान्तरे

अतिनिन्दा श्रूयते तदपि कस्यचित् अनङ्गभूतम्, परप्रयोगोऽनन्तः, न स्वतन्त्रम्, तदपि परतन्त्रात् ग्राह्यम्। एतद्विस्तरः प्रपञ्चितः [1]प्राक् श्रीक्रमे॥

तदुदाहरणरूपाणि सूत्रानुयायिभिः कानि कानि कर्तव्यानि इत्याकाङ्क्षायां सूत्रानुयायिनां आवश्यकं परतन्त्रस्थमुच्यते—

नित्यं रहस्यनामसहस्रपाठः। तदपाठे निन्दा अतीव श्रूयते। तत् दर्शितं [2]प्राक्॥

एवं दीक्षितस्य मृतस्यान्त्येष्टिः तन्त्रप्रतिपादिता आवश्यकी—

अन्त्येष्टिविधिना हीनोमण्डलस्थोन जायते॥

इति तन्त्रे निन्दाश्रवणात् पूर्वोक्तत्रिपुरारहस्योदाहरणरूपत्वात॥

### अन्त्येष्टिविधिः

अन्त्येष्टिविधिस्त्रिकूटारहस्ये—[3]

ईश्वरउवाच—

अथातः सम्प्रवक्ष्यामि विधिमन्त्येष्टिसंज्ञितम्।
अवश्यं तत् साधकोवै कुर्यात् गुर्वादिषु प्रिये॥ १॥
अन्त्येष्टिविधिना हीनोमण्डलस्थोन जायते।
तस्मात् कुर्यात् प्रयत्नेन चान्त्येष्टिविधिमुत्तमम्॥ २॥
यस्य न क्रियते देवि न दीक्षाकुलमश्नुते।
नैव कृत्वाऽन्त्येष्टिविधिं कौलश्राद्धे न चार्हता॥ ३॥
सूतकान्ते तदाद्ये वा मासे वर्षेऽपि वा शिवे।
अन्त्येष्टिमेवं कुर्वीत मण्डलान्तर्गताय वै॥ ४॥
यस्यान्त्येष्टिर्न क्रियते प्रमादेनापि हेतुतः।
तन्नाम्ना मूलमयुतं जप्त्वा श्राद्धं ततश्चरेत्॥ ५॥
न ज्ञायते यस्य नाम तस्य श्राद्धविधौ शिवे।
मानवौघाद्यनाम्ना तु सर्वं देवि समाचरेत्॥ ६॥
मृतेऽह्नि पर्वसु तथा तीर्थश्राद्धं समाचरेत्।
उपासकोहि तद्वंश्योवीरत्वं गच्छतीश्वरि॥ ७॥

---

१. श्रीक्रमे ३—खण्डे-३०-सूत्रभाष्ये—११२-पत्रतः-१२१-पत्रान्तम्—

२. इदमप्युपर्युक्त—॥ ॥ ॥ ॥ ॥

३. अस्यान्त्येष्टिविधेः-३७ कारिकाः सन्ति-तदनु च तासां कतिपयकारिकाणां गोलार्थोऽप्यस्ति—। तत्र प्रतिश्लोकगतसूक्ष्मार्थस्फोटश्च कृतोस्ति—

बाह्यसंस्कारयोगेन प्रेतत्वाच्च विमुक्तितः ।
मण्डलान्तः प्रवेशार्थमन्त्येष्टिं तु समाचरेत् ॥ ८ ॥
एकान्ते तु शुचौ देशे सङ्कल्प्योदङ्मुखः शिवे ।
आचार्यं चापि ब्रह्माणं वृणुयात् तत्र शक्तितः ॥ ९ ॥
आचार्यस्तु समर्च्याथ नैवेद्यान्ते विधानतः ।
हस्तसम्मितवेद्यां तु सिन्दूररजसा लिखेत ॥ १० ॥
श्रीयन्त्रं तत्र चावाह्य देवतां शक्तितो[1]यजेत् ।
वितस्तिसम्मितां तत्र कुशपुत्तलिकां न्यसेत् ॥ ११ ॥
अवाक्शीर्षं तत्र वीरं नाम्नाऽऽवाह्य विधानतः ।
आगच्छ वीरपुरुष तिष्ठ चात्र कृतक्षणः ॥ १२ ॥
विनियुक्तोमया पश्चात् परं धाम प्रपत्स्यसि ।
मण्डलेषु निविष्टः सन् भुवनेषु चिरं स्थितः ॥ १३ ॥
निर्वृत्तिं परमां प्राप्य याहि तत् परमं पदम् ।
एतज्जपित्वा तत्कर्णे न्यसेत् तस्मिन् षडङ्गकम् ॥ १४ ॥
तन्मात्राकर्षिणीः पञ्च श्रोत्रादिषु तु विन्यसेत् ।
हृदि चित्ताकर्षिणीं तु मूर्ध्नि काळीं तु बीजतः ॥ १५ ॥
मर्मकृन्तनिकां कण्ठे चाङ्कुशाद् ब्रह्मरन्ध्रके ।
प्राणाकर्षिणिकाम् आं ह्रीं मुखे कृत्वा तु विन्यसेत् ॥ १६ ॥
ततस्तु मन्त्रं संश्राव्य निष्प्राणं तु [2]विलापयेत् ।
कालधर्मं तु सम्प्राप्य न क्लेशं प्राप्तुमर्हसि ॥ १७ ॥
न ते मृत्युः शिवोयस्मात् साक्षात् त्वं बहुशक्तिमान् ।
स्वशक्त्या स्वस्वरूपस्य गोपनारूपया ननु ॥ १८ ॥
स्वातन्त्र्याख्यमहाशक्त्या पशुत्वं प्राप्तवानसि ।
गुरोर्वाक्यं स्मर क्षिप्रं भव श्रीशिवरूपकः ॥ १९ ॥
देहाश्रितात् समुत्क्रम्य सर्वकर्तृत्वमाप्नुहि ।
शिवाग्नौ देहसंस्कारं ततः सङ्कल्पयेच्छिवे ॥ २० ॥
पादजानूरुनाभीषु हृत्कण्ठमुखलोचने ।
मूर्ध्नि विन्यस्य चक्रेशीं मन्त्रं चक्रात्मकं स्मरन् ॥ २१ ॥

1 जपेत्-अ,-श्री,
2 विभावयेत्-ब?

सम्पूज्य च विशेषार्घ्यात् तन्नाम्ना तर्पयेत् त्रिधा ।
पार्श्वे मृताग्नि[1] संस्थाप्य यन्त्राद्देवीं समावहेत् ॥ २२ ॥
सम्पूज्य तु विशेषार्घ्यात् त्रिधा सन्तर्प्य वै ततः ।
पलाशसमिधा मूलेनाष्टोत्तरशतं हुनेत् ॥ २३ ॥
घृतेन स्रुचमापूर्य वीरं तत्र तु निक्षिपेत ।
दक्षपादं तदोत्तानं स्रुवेणाच्छादयेत् ततः ॥ २४ ॥
गृहीत्वोत्थाय तद्धस्ते वौषडन्ते हुनेत् ततः ।
पराशक्तिस्वरूपस्य मृतवह्नेर्महामुखे ॥ २५ ॥
पूर्णाहुतिं प्रदास्यामि तन्नाम कथयेत् ततः ।
पश्चात् तस्य तु वीरस्य पूर्णताप्राप्तिहेतवे ॥ २६ ॥
त्वं वीराग्नौ हुतोऽस्मिन् वै मलं भौतिकरूपकम् ।
कार्मं मानसमप्येवं मायिकं चान्तरं तथा ॥ २७ ॥
आणवं च विसृज्याग्नौ धूममार्गेण चाथवा ।
तेजोमार्गेणोर्ध्वलोकं प्राप्त ते परमं पदम् ॥ २८ ॥
पुनरावृत्तिरहितं व्रज मन्त्रप्रभावतः ।
मूलं च पादुकामुक्त्वा तत्राग्नौ तद्विनिक्षिपेत् ॥ २९ ॥
तत्सङ्ख्ययाऽमृतैर्हुत्वा होमतन्त्रं समापयेत् ।
सम्पूज्य सामयिकान् पश्चादाचार्यादीन् विसर्जयेत् ॥ ३० ॥
पुनर्दिनद्वयं देवि गुर्वादिद्वारतोऽर्चयेत् ।
कुर्याच्छ्राद्धं चतुर्थेऽह्नि देवि मण्डलमेलनम् ॥ ३१ ॥
वीरपात्रं च संस्थाप्य विश्वान् देवान् प्रपूजयेत् ।
पितामहादित्रितयं वीरं प्रत्यङ्मुखं यजेत् ॥ ३२ ॥
त्रिकोणं मण्डलं तस्य जलमुत्सृज्य वै ततः ।
अद्यप्रभृत्ययं वीरोमण्डलत्रयमध्यगः ॥ ३३ ॥
तेन मित्रेशतां प्राप्तोविहरेच्च यथासुखम् ।
पठन्नेवं वीरपात्रं पितृपात्रे विनिक्षिपेत् ॥ ३४ ॥
ततोमित्रेशरूपाय पित्रे चेति पुनर्हुनेत् ।
सर्वत्र क्रमतोदेवि वृद्धे तु त्रितयात्मना ॥ ३५ ॥

१. एतदग्निस्थापनाय-पुरस्तन-३० श्लोकोक्तोत्तरतन्त्रसमाप्तये च-पुरस्तने२९१-पत्रे गोळार्थो दृश्यः–

पित्रादीनां चतुर्णां तु ततः पूजां समाचरेत् ।
सः पृथग्वीरशब्देन सर्वमेवं समापयेत् ॥ ३६ ॥
एषोऽन्त्येष्टिविधिः प्रोक्तः सर्वतन्त्रेषु गोपितः ॥ ३७ ॥

इत्यन्त्येष्टिमूलं दर्शितम् ॥

अथास्यैव संक्षेपेण भावं दर्शयामि—दीक्षिताः मृताः, बाह्यसंस्कारविहीनवीरदूताः, बाह्यसंस्कारेण संस्कृतावीराः, बाह्यसंस्कारेण संस्कृताः उक्तसंस्कारसंस्कृताः, मण्डलान्तःप्रविष्टाः-इति तन्त्रशास्त्रप्रसिद्धिः। बाह्यसंस्कारमन्तरा नेदं कर्म ॥ १-३ ॥ सूतकान्ते सपिण्डीकरणान्ते, तदुत्तरमेव वीरत्वप्राप्तेः ॥ ४-८ ॥ आचार्यब्रह्मोभयवरणाशक्तौ आचार्यस्यैव वरणमित्याह—शक्तितः—इति ॥ ९ ॥ नैवेद्यान्ते आवरणपूजोत्तरनैवेद्यान्ते ॥१०॥ श्रीचक्रदेवताऽऽवाहनोत्तरं यथाविभवं पूजा कार्येत्याह—शक्तितोयजेदिति। तत्र निर्मितश्रीयन्त्रे। कुशपुत्तलिकां कुशपुरुषम् ॥११॥ नाम्ना अमुकानन्दनाथं वीरं नमः। अज्ञाने गगनानन्दनाथं वीरमिति ॥ १२-१४ ॥ तन्मात्राकर्षिणीः शब्दाकर्षिण्यादयः पञ्च, श्रोत्रादिपञ्चसु ज्ञानेन्द्रियेषु। बीजतः काळीबीजोत्तरं, क्रीं काळ्यै नमः—इति ॥ १५ ॥ अङ्कुशात् क्रौं—एतदुत्तरं मर्मक्रन्तिन्यै नमः—इति। आं ह्रीं प्राणाकर्षिण्यै नमः—इति ॥ १६ ॥ श्राव्यमन्त्रश्च कालधर्ममित्यादिः ॥ १७-२१ ॥ तन्नाम्ना अमुकानन्दनाथाय वीराय नमः। षोडशपञ्चान्यतमोपचारैरभ्यर्च्य—अन्ते देवतानाम द्वितीयान्तं तर्पयामीति पठित्वा विशेषार्घ्येण तर्पयेत्। वेद्याः पार्श्वे [1]होमप्रकरणोक्तविधिना विवाहान्ते मरणसंस्कारेणापि संस्कृतमग्निं संस्थाप्य यन्त्रात् कल्पितयन्त्रस्थामग्नौ देवीमावाहयेत् ॥२२॥ सम्पूज्य पञ्चोपचारैः तां सन्तर्प्य ॥२३॥ घृतेन स्रुचं सम्पूर्य हविषः स्थाने स्रुच्येव वीरं निक्षिप्य ॥ २४-२९ ॥ तत्सङ्ख्यया समित्सङ्ख्यया। मूलेनैव होमतन्त्रं समापयेत् इति। अनेन होमप्रकरणोक्तोत्तराङ्गप्राप्तिः[2] ॥३०॥ कुर्याच्छ्राद्धमिति नाम्ना कौलश्राद्धीययावद्धर्मातिदेशः। मण्डलमेलनश्राद्धमित्यस्य नाम। अत्र विश्वेदेवा वीराः। वीरात् प्राक्तनास्त्रयः पुरुषाश्च देवताः। वीरात् प्राक् पुरुषाः अपि तान्त्रिकान्त्येष्टिसंस्कृताः यदि स्युः, तर्हि मित्रेशादिस्वरूपताप्राप्तिसिद्ध्यै एकैकोद्देशेन मण्डलप्रवेशलाभाय अन्त्येष्टिप्रतिनिधिभूतमयुतं मूलं जप्त्वा पश्चात् वीरं संस्कृत्य मण्डलमेलनश्राद्धं कुर्यात्। दीक्षितवंशग्रहणात् अदीक्षितस्यापि तद्वंश्यस्य मुख्यं प्रतिनिधिरूपं वा इदं कर्म भवति। ॥ ३१ ॥ अथ कौलश्राद्धाद्योविशेषः तमाह—वीरपात्रमित्यादिना। वीरस्य पूजा प्रत्यङ्मुखस्य पूजनं विशेषः ॥ ३२ ॥ वीरस्य पाद्यमण्डलं त्रिकोणं, तथा तत्पात्रासादन-

१. अत्रानुगत-९-खण्डोक्त होमसामान्यविधिना-एवमर्थोज्ञेयः–
२. इदमपि- ,, ,, ,,

मण्डलमपि । पितृपात्रासादनानन्तरं वीरपात्रासादनं तद्दक्षिणतः । अत्र ब्राह्मणपञ्चकं सति संभवे । अशक्तौ त्रयं–विश्वेदेवार्थमेकः, पितामहाद्यर्थमेकः, वीरार्थमेकः । कौळश्राद्धवत् पात्रहवनम् । वीरस्यापि कौळश्राद्धे " संविन्मये " इत्यारभ्य " तद्भवेच्छिवं " इत्यन्तेन[1] विहितो यो जलोत्सर्गः तदनन्तरं " अद्यप्रभृति " मन्त्रपठने वीरपात्रस्थं कुलद्रव्यं पितृपात्रे क्षिपेत् ॥ ३३–३४ ॥ वीरस्य प्रथमहवनं दीपान्तपूजोत्तरं, पात्रसमर्पणमपि अमुकाय वीराय स्वाहेति । तदूर्ध्वं वीरपदं त्यक्त्वा मित्रेशरूपाय स्वाहेति पठेत् । पितामहे षष्ठीशरूपाय प्रपितामहे ओ[उ]ड्डीशरूपाय, वृद्धप्रपितामहे मित्रेश–षष्ठीशओ[उ]ड्डीशरूपाय इति पठेत् । क्रमस्तु पूर्ववत् । अस्मिन् श्राद्धे इदं द्वितीयं हवनम् ॥ ३५ ॥ शेषं इतःपरं कौलश्राद्धवदासमाप्ति ज्ञेयम् ॥ ३६–३७ ॥

## कौलश्राद्धविधिः

अथ कौलश्राद्धधर्माणां अत्रातिदिष्टत्वात् तज्ज्ञानाय कौलश्राद्धविधि रुच्यते । सोऽपि रुद्रयामळान्तर्गतदेवीरहस्ये पञ्चषष्टितमे पटले अस्ति—

[2]अधुना श्रोतुमिच्छामि कौलश्राद्धविधिं तथा ।

इति पार्वतीप्रश्ने ईश्वर उवाच—

श्रृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
यस्य [1]स्मरणमात्रेण देवताप्रीतिमाप्नुयात् ॥ १ ॥

कौलश्राद्धमकृत्वा तु चान्यैः श्राद्धसहस्रकैः ।
नैव तृप्ति र्भवेद्देवि पितृणां परमेश्वरि ॥ २ ॥

मृताहे तद्द्वितीये वा कृतनित्यक्रियः शुचिः ।
चतुरो ब्राह्मणान् द्वौ वा दीक्षायुक्तान् निमन्त्रयेत् ॥ ३ ॥

संकल्प्याथ विशेषार्घ्यपुरतः पात्रयुग्मकम् ।
विश्वेषां चैव देवानां पितृणां च क्रमाच्छिवे ॥ ४ ॥

आवृतिं पूज्य नैवेद्यं कृत्वा शक्तिं प्रपूज्य च ।
चर्यानाथस्वरूपान् वै विश्वान् देवांस्तु पूजयेत् ॥ ५ ॥

मित्रेशादिस्वरूपांश्च पितॄन् संपूजयेत् क्रमात् ।
व्यष्ट्या वाऽथ समष्ट्या वा पूर्वोत्तरमुखान् शिवे ॥ ६ ॥

1. श्रवण—श्री.

१. अधोलिखितकौलश्राद्धविधिकारिकातः–११–श्लोकात्–१४ ॥-श्लोकान्तेन-इत्यर्थोऽवधेयः-

२. अस्यकौलश्राद्धविधेः–२३ कारिकासन्ति–तदनु च तासां चकतिपयकारिकाणां गोलार्थोप्यस्ति–

आसनावाहने कृत्वा प्रार्थयेत्तु कृताञ्चलिः ।
विश्वेदेवाः स्वागतं वो यज्ञेऽस्मिन् स्थीयतां क्षणम् ॥ ७ ॥
सावधानेन मनसा स्वीकुर्वन्तु सभाजनम् ।
चतुरश्रे तथा वृत्ते मण्डले पूज्य पादयोः ॥ ८ ॥
क्षाळनं वाऽथ सामान्या दर्घ्यादर्घ्यं विनिक्षिपेत् ।
आचामयेत्तान् वस्त्रादिदीपान्तेन पितॄन् यजेत ॥ ९ ॥
स्वाहाऽन्तनाम्ना तत्पात्रात् तेभ्यः पात्रं प्रकल्पयेत् ।
पर्ववन्मण्डलं कृत्वा पूज्य भोजनपात्रकम् ॥ १० ॥
परिवेष्याभ्युक्ष्य तद्वै दत्वा हस्ते तथोदकम् ।
संविन्मये महापात्रे आनन्दमयभोज्यकम् ॥ ११ ॥
भोक्ता त्वं पुरुषः साक्षी महाशक्ति र्महेश्वरः ।
सर्वमन्नं शक्तिमयं भोक्ता साक्षात् परः स्वयम् ॥ १२ ॥
तस्मात् सर्वं शिवः साक्षात् भोक्ता दाता च भोज्यकम् ।
विश्वेदेवा देवता नो भुञ्जन्त्वत्र मखे मम ॥ १३ ॥
यावच्छक्यं तावदिह भोक्तव्यं स्वस्थमानसैः ।
पेयं खाद्यं भक्ष्यभोज्यं सर्वं वस्तु समर्पितम् ॥ १४ ॥
पितॄणां परमानन्दहेतवे तद्भवेच्छिवम् ।
इत्येवं तोयमुत्सृज्य पितृस्थानेऽपि चोत्सृजेत् ॥ १५ ॥
तत आपोशनं दत्वा यथेष्टं भोजयेत् ततः ।
यथासंभवपक्काद्यैः तृप्ता यूयं भविष्यथ ॥ १६ ॥
कुलद्रव्यै श्चर्वणैश्च पितॄणां शान्तिहेतवे ।
प्रार्थ्यैवं भोजनस्यान्ते प्रार्थयेत् पुनरेवच ॥ १७ ॥
विश्वेदेवाश्च पितरस्तृप्ताश्चास्मिन् महामखे ।
सर्वं समिष्टं संपन्नं भवत्वत्र यथेप्सितम् ॥ १८ ॥
उत्तरापोशनं दत्वा तथा ताम्बूलदक्षिणाः ।
विश्वान् देवांस्तथा पितॄन् देवतारूप मास्थितान् ॥ १९ ॥
नमः पुरस्तात् पश्चाच्च पार्श्वयोरपि वो नमः ।
अनेन कौळश्राद्धेन विधिना पितृमुख्यकाः ॥ २० ॥

परमं पदमास्थाय भुञ्जन्त्वेते सुनिर्वृताः ।
परिक्रम्य नमस्कृत्य चैवं पश्चाद्विसर्जयेत् ॥ २१ ॥

यथाऽऽगतं च पितरो गच्छन्त्वस्मान्महामखात् ।
विश्वैर्देवैश्च सहिताः प्रसन्नाः सन्तु मे चिरम् ॥ २२ ॥

ततः सामयिकान् पूज्य कर्म देव्यै समर्पयेत् ।
इत्येवं कथितो देवि कौलश्राद्धविधिः परः ॥ २३ ॥ इति ॥

अस्यापि संक्षेपेण गूढमर्थं प्रकटयामि । श्राद्धसंकल्पानन्तरं ब्राह्मणान् वृत्वा द्वारपूजाऽऽदिसामान्यविशेषार्घ्यपात्रासादनोत्तरं विशेषार्घ्यपुरतः अग्रभागे देवीविशेषार्घ्यपात्रमध्ये इति निष्कर्षः । विशेषार्घ्यपात्रासादनप्रकारेण विश्वेदेवपात्रं पितृपात्रं चासादयेत् ॥ ३–४ ॥ ततः सुवासिनीपूजाऽन्तपूजाशेषमनुष्ठाय एकस्मिन् विप्रे चर्यानाथस्वरूपान् विश्वान् देवान् प्रपूजयेत् ॥ ५ ॥ मित्रेश स्वरूपं पितरं षष्ठीशस्वरूपं पितामहं ओ[उ]ड्डीशस्वरूपं प्रपितामहं प्रत्येकब्राह्मणपक्षे । एकब्राह्मणपक्षे मित्रेशषष्ठीशोड्डीशरूपान् पितृपितामहप्रपितामहान्—इत्यावाहनं कृत्वा, आसनं दत्वा, उक्तमन्त्रेण प्रार्थ्य, विहितपात्रमण्डले पादौ प्रक्षाल्य, सामान्यार्घ्योदर्घ्यं दत्वा, आचमनं दत्वा, दीपान्तं यथाविभवं विश्वान् देवान् पितॄंश्च पूजयेत् । पितृपदं देवानामप्युपलक्षकम् ॥ ६–९ ॥ ततः चर्यानाथस्वरूपेभ्यः विश्वेभ्यो देवेभ्यः स्वाहा इति विश्वेदेवपात्रं तद्विप्रस्य अर्पयेत् । एवमेव पित्रादेरपि पात्रसमर्पणम् । ते त्वमन्त्रमेव होमं कुर्युः, होममन्त्रस्य स्वाहाऽन्तस्य श्राद्धकर्त्रा पूर्वमेव पठितत्वात् । अमन्त्रकहोमनिषेधशास्त्रं सामयिकप्रकरणस्थं तत्रैव विश्रान्तम्, नात्र प्रवर्तते । वस्तुतोऽत्र स्वाहाऽन्तमन्त्रपाठात् नामन्त्रकं हवनम् । पाद्ये देवस्य चतुरश्रं पितॄणां वृत्तमुक्तं प्राक्[1] । तत्तद्देवभोजनपात्राधः मण्डलम् ॥ १०–१४ ॥ पितृस्थाने चोत्सृजेत् इति चकारेण विश्वेदेवपात्रस्याप्युत्सर्गः सूचितः । तत्र पितृस्थाने विश्वेदेवपदप्रक्षेपः ॥ १५ ॥ शेषं स्पष्टम् ॥ १६–२३ ॥

### अन्त्येष्टिकौलश्राद्धयोरावश्यकत्वम्

कौलश्राद्धमपि सूत्रानुसारिणा मावश्यकं, अकरणे निन्दाश्रवणात् । यद्यपि त्रिपुरारहस्ये "तथाऽन्त्येष्वतिदूषितं" इति श्रवणात्—अन्त्येष्टिकौलश्राद्धयोः नातिदोषः श्रूयते, अतिदूषितं नाम पुनः पुनः असकृन्निन्दाश्रवणं, प्रकृते सकृदेव निन्दा श्रूयते, रहस्यनामपाठे निन्दा त्वसकृत् श्रूयते, तद्वदत्राभावात्—सूत्रानुयायिनामनावश्यकमिति प्रतिभाति । अन्यथा

१. प्राक्–नाम–उपरितनकौलश्राद्धीय–८–कारिकायामित्यर्थः–

अतिदूषितमित्यत्र अतिपदानर्थक्यं स्यात् । तथाऽपि आपस्तम्बादयः स्वसूत्रे अनुक्तं अन्य-सूत्रोक्तं अन्यत् किमपि न गृह्णन्ति, भारद्वाजोक्तं अन्त्येष्टिप्रयोगं तु जगृहुः । ततएव ज्ञायते अन्त्येष्टिसंस्कार आवश्यक इति । तद्वदत्रापीत्युन्नेयम् ॥

किं च अतिदूषितमित्यस्य नासकृन्निन्दाश्रवणमर्थः । किं तु अकरणे महानिष्टफल-साधनत्वप्रतिपादनम् । तच्च प्रकृतेऽप्यस्ति । जन्मप्रभृति उपासनासंपादनं मण्डले प्रवेशार्थम्। मण्डलं नाम पुनरावृत्तिरहितः ब्रह्मलोकादपि वरिष्ठः ओघत्रयनिवासाधारभूतः स्थानविशेषः। अन्त्येष्ट्यकरणे तल्लाभाभावे महापुरुषार्थहानिसाधनत्वप्रतिपादनात् अतिदूषितमित्यवश्यं अनुष्ठेयम् । एवमेव श्राद्धेऽपि । इत्यलं भूयसा ॥

### प्रायश्चित्तविधिः

अथ विहितकर्मसु पुरुषदोषेण अन्यथाभावोऽवश्यंभावी । तदर्थं तत्प्रायश्चित्ताकाङ्क्षायां प्रायश्चित्तं प्रसङ्गाल्लिख्यते । तदुक्तं स्वतन्त्रतन्त्रे त्रयोदशपटले—

[1]देव्युवाच—

देवेश श्रोतुमिच्छामि नित्यनैमित्तिकादिषु ।
प्रायश्चित्तं तु सन्ध्याऽऽदिपूजाकर्मसु च स्फुटम् ॥ १ ॥

श्रीभैरव उवाच—

श‍ृणु देवि प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम् ।
अङ्गाङ्गिभेदात् द्वैविध्यं कर्मणः परमेश्वरि ॥ २ ॥
अङ्गेऽपि देवि द्वैविध्यं मुख्यगौणत्वभेदतः ।
गौणाङ्गलोपे मूलस्य दशधा जपतः शुचिः ॥ ३ ॥
मुख्याङ्गलोपे शतधा अङ्गिलोपे पुनःक्रिया ।
अङ्गाङ्गिभेदं देवेशि श‍ृणु विस्तरतः शिवे ॥ ४ ॥
जपे षडङ्गन्यासस्तु गौणाङ्गं परिकीर्तितम् ।
ध्यानमृष्यादिकं पूजा मुख्याङ्गमिति कथ्यते ॥ ५ ॥
सन्ध्यायां मूलदेव्यर्घ्ये जपे चाङ्गित्वमिष्यते ।
मार्ताण्डवाग्भवाद्यर्घ्ये मुख्याङ्गत्वं प्रकीर्तितम् ॥ ६ ॥
आकालमङ्गिलोपे तु पुनः कर्म भवेदिह ।
आपद्यङ्गस्य लोपे तु कालत्यागेऽपि नास्त्यघम् ॥ ७ ॥

---

१ अत्र प्रायश्चित्तविधौ-१०२-श्लोकाः-सन्ति-तदनु च तेषां मध्यतः केषां चिच्छ्लोकानां गोलार्थोऽप्यस्ति-पत्रतः पत्रान्तम्

सन्ध्याऽन्तरे तु संप्राप्ते शतमष्टोत्तरं जपेत् ।
आशौचद्वितये देवि प्रधानं मानसं चरेत् ॥ ८ ॥
पूजाऽऽदिकं समानं वै बाह्यमन्येन कारयेत् ।
क्षयाशौचे देवताया मण्डले न व्रजेच्छिवे ॥ ९ ॥
अज्ञानेन गतश्चेद्वै देवताशापमाप्नुयात् ।
तद्दोषपरिहारार्थं पुनर्मण्डलमाचरेत् ॥ १० ॥
देवतां पयसा स्नाप्य मूलात्तर्पणमाचरेत् ॥ ११ ॥
पञ्चवारं घृतेनैव होमं कुर्याद्वरानने ।
ब्राह्मणान् भोजयेत् पश्चात् देवताशान्तिमाप्नुयात् ॥ १२ ॥
त्रिरात्रं सन्ध्यया हीनः सहस्रं जपमाचरेत् ।
अहोरात्रमनश्नन् वै ततः शुद्धो भविष्यति ॥ १३ ॥
अष्टरात्र मसन्ध्यो वै त्रिरात्रोपोषणाज्जपात् ।
मासेऽतीते तु देवेशि पतितश्च बहिष्कृतः ॥ १४ ॥
मण्डलाद्बाह्यगः सर्वकर्मायोग्यो महेश्वरि ।
एषएव जपे मार्गः मासादूर्ध्वं पतत्यधः ॥ १५ ॥
पूजायां शृणु देवेशि भेदमङ्गाङ्गिनोः स्फुटम् ।
आवृति र्गुरुनित्याऽर्चा समयाम्नाययोरपि ॥ १६ ॥
पूजात्रयं जपश्चैव प्रधानं पूजने मतम् ।
पात्रसंस्था पीठपूजा बलिर्होमस्तथैव च ॥ १७ ॥
अर्पणं देहशुद्धिश्च मुख्याङ्गं संप्रकीर्तितम् ।
शक्तिसामयिकार्चादि गौणाङ्गमिति कथ्यते ॥ १८ ॥
नित्यकर्मण्यङ्गलोपे न वैगुण्यं तु कर्मणः ।
काम्ये तदेकदेशस्य लोपे वैगुण्यमेव हि ॥ १९ ॥
अङ्गलोपे तु मूलेन तर्पणाष्टकमुच्यते ।
अष्टोत्तरशतावृत्त्या मुख्याङ्गे शृणु पार्वति ॥ २० ॥
शतधा तर्पणं जापः सहस्रं वा स्मृतं शिवे ।
व्यत्यासे कर्मणोऽप्येव मङ्गाङ्गेषु स्मृतिः सकृत ॥ २१ ॥
अङ्गं तन्त्रेण वा कुर्यात् कार्यकारणयोर्विना ।
अन्तरे च न कुर्वीत भिन्नार्थेष्वपि चेश्वरि ॥ २२ ॥

बिन्दुतर्पणव्यत्यासे प्रायश्चित्तं श्रृणु प्रिये ।
मुख्याद्गौणार्पणे देवि पुनस्तर्पणमाचरेत् ॥ २३ ॥
मूलाष्टकस्मृतिर्वाऽपि व्युत्क्रमे श्रृणु पार्वति ।
देवतां शङ्खतोयेन मूलेनाभ्युक्ष्य वै शिवे ॥ २४ ॥
पुष्पाञ्जलिं समभ्यर्च्य त्रिः सन्तर्प्य च प्रार्थयेत् ।
पुनर्यथोक्तं सन्तर्प्य जपेदष्टोत्तरं शतम् ॥ २५ ॥
मुख्यगौणविभेदं च श्रृणु देवेशि तत्त्वतः ।
मूलदेवीतर्पणात्तु सर्वं गौणं महेश्वरि ॥ २६ ॥
ततः परं गुरोः पङ्क्तिं नित्यामण्डलके ततः ।
आवृतिश्च ततोदेवी क्रमाद्गौणं भवेच्छिवे ॥ २७ ॥
एतद्विभेदमज्ञात्वा यः कुर्यात् तर्पणं शिवे ।
तं भैरवीगणाः क्रुद्धाः विकुर्वन्ति पदे पदे ॥ २८ ॥
नवपात्रे व्यवस्थैव सप्तपात्रेऽपि पार्वति ।
पञ्चपात्रेऽपि तुल्या स्यात् त्रिपात्रे मनसा स्मरेत् ॥ २९ ॥
पात्रद्वयं तु प्रत्यक्षपूजने नैव कारयेत् ।
आद्यप्रतिनिधिर्यत्र तत्र पात्रद्वयं स्मृतम् ॥ ३० ॥
तत्र द्वयाधिकं नैव कार्यं पात्रं सुरेश्वरि ।
द्रव्यप्रतिनिधिं चात्र प्रसङ्गात् कथयामि ते ॥ ३१ ॥
आद्याभावे तु घुटिकासारयुक्तजलार्पणम् ।
मत्रयं चाष्टगन्धेन समानघुटिका भवेत् ॥ ३२ ॥
तदभावे नारिकेलजलं पात्रे तु कांस्यके ।
तदभावे ताम्रपात्रे क्षीरं वाऽथ गुडोदकम् ॥ ३३ ॥
अथवा गन्धतोयेन पूजां नैव तु लोपयेत् ।
द्वितीयभेदं देवेशि श्रृणु संयतमानसा ॥ ३४ ॥
पूर्वोक्तभेदान्यतमा पलाण्डुर्वाऽऽर्द्रकं तु वा ।
प्रत्यक्षाद्ये द्वितीयादिप्रत्यक्षं देवि योजयेत् ॥ ३५ ॥
द्रव्यप्रतिनिधौ देवि तर्पणं कुसुमेन वै ।
स्वात्मीकारादिकं नास्ति अक्षतैर्गुरुपूजनम् ॥ ३६ ॥

सम्पूर्णमन्त्रपाठेन स्वात्मीकारं तु भावयेत् ।
पूर्णपूजां भावयन् वै बाह्यपूजां समाचरेत् ॥ ३७ ॥
घुटिकायामार्द्रकं स्यात् स्वात्मी[1]कारेऽपि विद्यते ।
तत्र पात्रद्वयं देवि न्यूनं नैव तु कारयेत् ॥ ३८ ॥
शक्तिपूजा विना तत्त्वशोधनं सम्भवेच्छिवे ।
प्रत्यक्षे तु त्रिपात्रं वै गौणात् गौणतरं भवेत् ॥ ३९ ॥
आनुकूल्ये त्रिपात्रादि नैव कर्तव्यमीश्वरि ।
प्रत्यक्षयुग्मपात्रं वै कृत्वा शापमवाप्नुयात् ॥ ४० ॥
क्वचिन्मयैवोपदिष्टः परमापत्तिकालिकः ।
तृतीयभेदं देवेशि प्रोक्तेष्वन्यतमं स्मृतम् ॥ ४१ ॥
वटिका चणपिष्टस्य विजयायुक्तदाकृतिः ।
मूलकं वा महादेवि पलाण्डवधिकोवटिः ॥ ४२ ॥
आर्द्रकान्तं मूलकं स्यात् क्षीरादौ मन्त्रसंजपः ।
प्रत्यक्षतोद्वितीये तु एतत्प्रत्यक्षमिष्यते ॥ ४३ ॥
द्वितीयादिकपर्यायं स्थापयेदष्टदिक्ष्वथ ।
अथवा मन्त्रजापोवै नित्यं तुर्यं तु सर्वदा ॥ ४४ ॥
पञ्चमे शृणु देवेशि द्वैविध्यं चोक्तमेव ते ।
आद्यं तत्र कलौ देवि त्रिसहस्रान्तामिष्यते ॥ ४५ ॥
द्वितीयं तु भवेत् देवि स्वयोषिति सुरेश्वरि ।
अथवा लिङ्गयोन्योश्च कुसुमं तत्र योजयेत् ॥ ४६ ॥
काश्मीरपङ्के मूलेन श्वेतचन्दनपङ्ककम् ।
संयोज्य योजयेत् देवि मूलाष्टजपएव वा ॥ ४७ ॥
द्रव्यं साक्षात् पञ्चमं तु दुर्लभं तु कलौ युगे ।
जितेन्द्रियाणां धीराणां योगिनां सुलभं भवेत् ॥ ४८ ॥
कदाचिच्छक्तितः पूर्वं क्षोभे जाते शिवस्य वै ।
शक्त्यसंतोषतोदेवि नाशमेति सवै पुमान् ॥ ४९ ॥
तस्मात् स्वस्यां परस्यां वा अन्त्यं नैव समाचरेत् ।
प्रतिनिध्यैव कर्तव्यं कलौ देवि सुनिश्चितम् ॥ ५० ॥

[1] कारोऽपि–ब२.

उपासकोनु नित्यं वै परिवारार्चनं चरेत् ।
नित्यामण्डलकं चैव गुरुमण्डलकं तथा ॥ ५१ ॥
पञ्चिकां समयां चैव आम्नायसमयां यजेत् ॥ ५२ ॥
अथवा दिननित्यास्तु नित्यां च गुरुमण्डलम् ।
समष्टया पञ्चिकां चापि पूजयेदापदादिषु ॥ ५३ ॥
परमापत्तिकाले तु आवृतेः पञ्चकं त्रिकम् ।
समष्टया चेतरत् सर्वं परमापत्तिगोचरम् ॥ ५४ ॥
पूजाऽन्तरे महाविघ्ने प्राप्ते संशृणु निश्चितम् ।
पूर्वं सङ्कल्पतोदेवि न दोषस्तत्र विद्यते ॥ ५५ ॥
सङ्कल्पानन्तरं देवि विसृज्योपोषणं चरेत् ।
सपर्यां मानसीं कुर्वन् पुनः पूजां समाचरेत् ॥ ५६ ॥
आवाहनानन्तरं तु महाविघ्नोभवेद्यदि ।
पात्रादिकं समुद्वास्य देवतां स्थापयेत् तथा ॥ ५७ ॥
कार्यान्ते तत्र पात्रादिस्थापनं संविधाय च ।
सङ्कल्पेन विना देवि आवृत्तिं तु समापयेत् ॥ ५८ ॥
यावन्तोदिवसादेवि व्यतीतास्तावदावृतिम् ।
पायसेन हुनेत् तस्य दोषस्येहापनुत्तये ॥ ५९ ॥
मूलेनाष्टोत्तरशतं हुत्वा पूज्य च सामयान् ।
क्षमापयेत् ततोदेवीं गुरुं चापि सुखी भवेत् ॥ ६० ॥
उद्वासनात्तु पूर्वं वै पूजाऽन्ते सङ्कटे स्थिते ।
झटित्युद्वास्य देवेशीं विसृजेन्मण्डलं ततः ॥ ६१ ॥
अतीतविघ्ने देवेशि सहस्रं प्रजपेन्मनुम् ।
अपराधान्मुच्यते वै दोषस्तत्र न विद्यते ॥ ६२ ॥
अथोपघातदोषस्य प्रायश्चित्तं शृणु प्रिये ।
देवताहेतुकलशविशेषार्घ्योपघाततः ॥ ६३ ॥
कर्तुर्मृत्युस्तु षण्मासात् तस्य शान्तिं ब्रवीमि ते ।
यस्योपघातः संस्थाप्य पुनस्तत् पूजयेत् ततः ॥ ६४ ॥
पश्चात् त्र्यहमनश्नन् वै जपेत् दशसहस्रकम् ।
पूजयेच्च यथाशक्ति देवीं क्षीरेण स्नापयेत् ॥ ६५ ॥

अष्टोत्तरशतं हुत्वा गुरुं पूज्य च मुच्यते ।
आवाहनस्थापनाच्च पूर्वं जपसहस्रकम् ॥ ६६ ॥
उपघातात्तत्स्फुटिते महासांतपनं चरेत् ।
उपघाते तु शङ्खस्य [1]धीर[ह्य]ष्टोत्तरसहस्रकम् ॥ ६७ ॥
दीक्षाऽऽदिष्वप्येवमेव शान्तिः स्यादुपघातके ।
दीपोपघाते देवेशि [2]पुनर्मण्डलमाचरेत् ॥ ६८ ॥
साधकानां दत्तपात्रस्योपघाते शतं जपः ।
पूजकानां साधकानां तुल्यमेतद्विधीयते ॥ ६९ ॥
प्रसङ्गादत्र सर्वेषां आचारं कथयामि ते ।
विप्रार्चायां तु सर्वेषां स्वात्मीकारोविधीयते ॥ ७० ॥
अनन्तरस्य पूजायां पूर्वस्यानर्हतेष्यते ।
न्यूनदीक्षावतां चापि व्यवस्थैषा सुसम्मता ॥ ७१ ॥
दीक्षाभेदमथोवक्ष्ये बाला प्रथमतोमता ।
द्वितीया पञ्चदश्युक्ता चतुराम्नायजा परा ॥ ७२ ॥
पञ्चाम्नाया चतुर्थी स्यात् षोडश्यन्ता तु पञ्चमी ।
षष्ठी चरणविद्याऽन्ता सप्तमी वासनान्तका ॥ ७३ ॥
रहस्यान्ता चाष्टमी स्यात् [1]नवमी षोडशी परा ।
षड्दर्शनान्ता दशमी महावाक्यान्तिमा ततः ॥ ७४ ॥
द्वादशी श्रीपादुकाऽन्ता न्यूनं तत्पूर्वमुच्यते ।
विप्रक्षत्रिययोर्देवि सर्वदीक्षाऽर्हता भवेत ॥ ७५ ॥
रहस्यान्ता तु वैश्यस्य षोडश्यन्ता तु शूद्रके ।
श्रेष्ठवर्णाद्दीक्षणं स्यादभावे तुल्यवर्णतः ॥ ७६ ॥
शूद्रोनैव गुरुर्देवी तस्माद्दीक्षां परित्यजेत् ।
अनर्हाद्दीक्षणं लब्ध्वा परित्यागोमनोः स्मृतः ॥ ७७ ॥
न्यूनाश्रमेऽनन्तरे वा गुरुशक्त्योस्तु सम्मतः ।
स्वात्मीकारोमहादेवि निषेध[षिद्ध]स्त्वितराश्रमः ॥ ७८ ॥

विद्याषोडशका परा—ब२.

---

१. अत्राशुद्धं-भाति-ततोधीरइत्यक्षरद्वयं विहाय, वाच्यम्—

२. अत्र-पुनर्मण्डलविधिरग्रे-एतच्छ्लोकगोलार्थं; द्रष्टव्यः—

अन्येषां तु प्रमादेन स्याच्चेज्जपसहस्रकम् ।
उच्छिष्टभक्षणेऽप्येषा व्यवस्था देवि सम्मता ॥ ७९ ॥
न्यूनवर्णाश्रमाणां तु त्रिरात्रोपोषणं तथा ।
शक्त्यभीष्टे तु नैषा स्याद्व्यवस्था तत्र चोत्तमा ॥ ८० ।
दीक्षिता यदि लभ्येत दीक्षाहीनां परित्यजेत् ।
अलभ्या यदि चान्या स्यात्तदा संस्कारमाचरेत् ॥ ८१ ॥
मूलशङ्खोदकैः प्रोक्ष्य पञ्चबाणषडङ्गके ।
विन्यस्य तस्यादेहे तु दक्षकर्णे श्रियं वदेत् ॥ ८२ ॥
कन्यायानास्ति संस्कारः विधवां तु परित्यजेत् ।
मातरं गुरुपत्नीं च ज्येष्ठपत्नीमृते शिवे ॥ ८३ ॥
बालोपदेशिनां पात्रत्रितयं तत्त्वशोधनम् ।
पात्रं दक्षकरे गृह्य वामहस्तेन तर्पणम् ॥ ८४ ॥
महावाक्यान्तयोग्यानां तत्त्वपात्रचतुष्टयम् ।
तर्पणं पूजनं च स्यात पादुकाऽन्ते तु पूजनम् ॥८५॥
आत्मविद्याशिवाख्यादितत्त्वपात्राणि वै शिवे ।
समष्टिरथपूर्णं च साङ्कर्यं त्रितये भवेत् ॥ ८६ ॥
समष्टिपूर्णके देवि साङ्कर्यं बहुदोषकृत् ।
तस्मात् प्रक्षाल्य देवेशि समष्टिं पूर्णपात्रकम् ॥ ८७ ॥
स्वीकुर्यादन्यथा देवि जपेदष्टसहस्रकम् ।
आत्मतत्त्वं शक्तिशेषं सर्वेषां देवि सम्मतम् ॥ ८८ ॥
पञ्चाम्नायोर्ध्वगानां तु पश्चाद्वा पञ्चपात्रतः ।
प्रथमं शक्तिशेषं स्यात् द्वितीयादित्रयं शिवे ॥ ८९ ॥
वीरोच्छिष्टं तु ज्येष्ठस्य अन्यथा पापमाप्नुयात् ।
गुरोस्तु सर्वं सङ्ग्राह्यं शक्तिशेषादनन्तरम् ॥ ९० ॥
स्वशेषं नैव शक्त्यै तु देयं शिष्यामृते शिवे ।
अत्र प्रमादोयदि चेज्जपेदष्टसहस्रकम् ॥ ९१ ॥
आत्मशेषं तु ज्येष्ठेषु दत्वा त्र्यहमुपोषणम् ।
उभयोरपि तुल्यं स्यात् प्रायश्चित्तं वरानने ॥ ९२ ॥
अभुक्त्वैव तु तत्त्वानां शोधनं त्वाचरेच्छिवे ।
पूजनं चापि देवेशि अन्यथा पतितोभवेत् ॥ ९३ ॥

गुर्वादीनां यथा चाज्ञा स्वात्मतत्त्वं तु शोधयेत् ।
सद्यः काले स्वयं पक्षः ज्ञात्वा मुक्तोबहिष्कृतः ॥ ९४ ॥
भक्त्वा तत्त्वं शोध्य देवि जपद्युतसङ्कम् । ह्य
अज्ञानेऽप्येवमेव स्यादशक्तौ गौणमाचरेत् ॥ ९५ ॥
क्षताङ्गोज्वरिताङ्गश्च मण्डलाद्बाह्यतः स्थितः ।
मलाङ्गोमलवस्त्रश्च उष्णीषी कञ्चुकी तथा ॥ ९६ ॥
कुष्ठी क्षताङ्गी कुनखी पूतिगन्धी ज्वराङ्गकः ।
क्रोधी कुटिलभावश्च नास्तिकोऽप्यजितेन्द्रियः ॥ ९७ ॥
पातकी भ्रमचित्तश्च गुरुद्रोही च वञ्चकः ।
प्रविष्टोमण्डलं यस्य तस्य शापोभवेत् तव ॥ ९८ ॥
तद्दोषपरिहारार्थं पुनर्मण्डलमाचरेत् ।
वीरासनं कुक्कुटं च नाचरेन्मण्डले शिवे ॥ ९९ ॥
न प्रदर्श्यौ च चरणौ न वदेदुच्चभाषणम् ।
कलहोरोदनं निद्रा पारुष्यं मर्मभाषणम् ।
न वदेच्छिवभावेन सर्वं तत्र तु भावयेत् ॥ १०० ॥
विहाय जिह्वाचापल्यं इन्द्रियाणि निगृह्य च ।
शिवोऽहमिति पूर्णं वै भावयन् शिवतां व्रजेत् ॥ १०१ ॥
इत्येतत्ते मयाऽऽख्यातं गोप्यात् गोप्यतरं शिवे ।
प्रायश्चित्तविधौ देवि किं पुनः श्रोतुमिच्छसि ॥ १०२ ॥

इति श्रीस्वतन्त्रतन्त्रे त्रयोदशःपटलः ॥

अस्मात् पटलात् सुखं बालानामर्थलाभाय कठिनांशं किंचिद्वितनोमि — [1]पुनःक्रियेत्यन्तोग्रन्थः सन्ध्यामात्रप्रायश्चित्तपरः, पूजायां पृथग्वक्ष्यमाणत्वात् ॥ ४—७ ॥ सन्ध्याऽन्तरे द्वितीयसन्ध्याकाले प्राप्ते पूर्वसन्ध्यानिवृत्तिः, विहितप्रायश्चित्तमात्रम् ॥ ८—९ ॥ पुनर्मण्डलमाचरेत् इति अग्रे दीपनाशप्रायश्चित्ते विविच्यते ॥ १०—१६ ॥ पूजात्रयमिति आवरणार्चनं ओघत्रयतिथिनित्याऽर्चनं समयाम्नायार्चनं चेत्यर्थः । पीठपूजा धर्मादिपूजा ॥ १७ ॥ अर्पणं उपचारार्पणम् । देहशुद्धिः भूतशुद्धिः । सामयिकादीत्यादिना आरादुपकारकनिखिलशेषाङ्गानां ग्रहणम् ॥ १८—१९ ॥ मूलेन तर्पणाष्टकमित्यत्र तर्पणं प्रथमेनैव । तदवसरश्च नवावरणपूजाऽनन्तरं, ततः प्राग्वा, श्रौते प्रधानात् प्राक् तदनन्तरं वा नैमित्तिकप्राय-

१. नाम उपर्युक्तप्रायश्चित्तकारिकादिश्लोकतः—१ ॥—श्लोकपर्यन्तोक्तमित्यर्थः—

श्रितानां दृष्टत्वात् ॥ २० ॥ सहस्रं वेत्यत्र वाकारएवकारार्थे । व्यत्यासे वैपरीत्ये । एवं [1]पूर्वोक्तप्रायश्चितम् । अङ्गाङ्गेषु अङ्गभूतेषु कर्मसु अङ्गत्वेन विहितानि, यथा पात्रासाद-नादिरूपप्रधानाङ्गमुद्दिश्य तदङ्गत्वेन मण्डलादिकरणं, ईदृशानां लोपे स्मृतिः भगवत्स्मरणम् ॥ २१ ॥ अङ्गं तन्त्रेणेति —यत् पूजाद्वयं एककाले प्राप्तं तदङ्गानामप्येककालिकत्वात् कालैक्ये कर्त्रैक्ये दर्शपूर्णमासयोः प्रयाजाद्यनुष्ठानवत् तन्त्रेण पात्रासादनं कुर्यात् । तत्रापि कार्यकारणयोः विना निमित्ते सति नैमित्तिकं यत् तत्र नाङ्गानां तन्त्रम् । यथा दर्शपूर्ण-मासमध्ये पवित्रनाशे पवित्रेष्टिः । तदीयप्रयाजानां दर्शपूर्णमासमध्ये न तन्त्रम् । तथाऽत्रापि । तथा अन्तरे कालान्तरे । यथा नित्यपूजा प्रातः नैमित्तिकी रात्रौ तत्र न तन्त्रम् । एवं भिन्नार्थेषु भिन्नफलकेषु—यथा दीक्षायां पञ्चदेवतापूजा युगवत् प्रसक्ता तत्र पात्रासादने न तन्त्रं तत्तद्देवतातर्पणरूपभिन्नत्वात् । यथा दर्शपूर्णमासयोः पुरोडाशभेदः ॥ २२ ॥ बिन्दुतर्पणव्यत्यासे इति —व्यत्यासोद्विविधः, मुख्यदेवतापात्रादमुख्यदेवतातर्पणं तद्विपरीत ममुख्यपात्रान्मुख्यदेवतातर्पणं च । द्वयोर्मध्ये आद्यस्य प्रायश्चित्तमाह—पुनस्तर्पणमिति ॥२३॥ द्वितीये आह—व्युत्क्रमे इति । विपरीतइत्यर्थः ॥ २४–२५ ॥ तन्त्रान्तरानुयायिनां मुख्यदेवतागुरुमण्डलावरणदेवतादि पात्राणां पृथग्विहितत्वात् एतत्प्रायश्चित्तनिमित्तज्ञानाय देवतासु मुख्यगौणभावं दर्शयति—मूलदेवीतर्पणादित्यादिना ॥ २६–३५ ॥ मुख्याभावे द्रव्यप्रतिनिधियोजने अनुष्ठाने योविशेषस्तमाह—तर्पणमिति । द्वितीयद्रव्यप्रतिनिधौ तर्पणं कुसुमेन । आद्यद्रव्यप्रतिनिधौ आवाहनात् प्राक् स्वात्मीकारोयोविहितः सनास्ति । गुरुपूजनमक्षतैः नतु प्रतिद्रव्येण तर्पणम् ॥ ३६ ॥ अक्षतैः गुरुमर्चयित्वा सम्पूर्णमन्त्रं पठन् मनसा स्वात्मीकारं भावयेदिति तदर्थः । बाह्यपूजा यथोक्ता कर्तव्याः ॥ ३७ ॥ यदा घुटिका[2] पूजासाधनत्वेन कल्पिता तदा द्वितीयस्थाने आर्द्रकमेव ॥ ३८ ॥ त्रिपात्रन्यूनं न कार्यम् । इदं त्रिपात्रविधानं द्विपात्रनिन्दातन्त्रानुयायिपरं, न सूत्रानुयायिपरम् । उक्तं चैतद्वि-तत्य[3] प्राक् । न ह्येतत्तन्त्रे प्रत्यक्षे युग्मपात्रे निन्दाश्रवणेन, सर्वथा अननुष्ठेयं भवति तथा सति " यदनुदिते सूर्ये प्रातर्जुहुयात् उभयमेवाग्नेयꣳ स्यात् " इत्यनुदितहोमे निन्दा श्रूयते । एवमग्निहोत्रे " यद्वे समिधावादध्यात् भ्रातृव्यमस्मै जनयेत् " इति समिन्द्वये निन्दा श्रूयते । तथासति अग्निहोत्रे अनुदितहोमः समिन्द्वयं त्रयं चतुष्टयं च शाखाऽन्त-रप्रतिपादितमननुष्ठेयं स्यात् । तस्मात् यत्र निन्दा श्रयते तच्छाखिनामेव तदावश्यकता नान्येषाम् । स्वशाखाविरुद्धं तु आकाङ्क्षितं तन्त्रान्तरात् ग्राह्यमित्युक्तं [4]प्राक् । अतः

---

१. पूर्वोक्तं नाम, एतदेकविंशतिश्लोकपूर्वार्धोक्तमित्यर्थः–

२. इयं घुटिका अत्रैव १०–खण्डे ६२ सूत्रभाष्यान्ते, २७६ पत्रे अथवा पूर्तनन–३२ कारिकायामस्ति २९७-पत्रे–

३. ३-खण्डे–श्रीक्रमे–३०–सूत्रभाष्ये–११३ पत्रत पत्रान्तमिति ज्ञेयम्–

४. प्राक्, नाम–अत्रैव १० खण्डे–अन्त्येष्टिकौलश्राद्धयोरावश्यकत्वंलेखे–

प्रायश्चित्ताकाङ्क्षायां यावदुपयुक्तं ग्राह्यं, विरुद्धं हेयम्। "मपञ्चकालाभेऽपि नित्यकर्मप्रत्यवमृष्टिः" इति सूत्रेण[1] अलाभे कर्मविधानात् प्रतिशास्त्रं तन्त्रान्तरस्थं प्रतिनिधिशास्त्रं प्राप्तम्। तेन सह स्वात्मीकारादिनिषेधोऽपि प्राप्तोऽपरिहार्यः। एवं प्रतिनिध्यर्चने शक्तिपूजाऽपि तत्त्वशोधनं विहाय कार्या ॥ ३९–६० ॥ झटित्युद्वास्येति—उत्तराङ्गलोपं कृत्वोद्वास्येत्यर्थः ॥ ६१–६२ ॥ अथोपघातदोषस्येति—उपघातशब्दार्थउक्तोबृहद्वामकेश्वरतन्त्रे—

उच्छिष्टरक्तमूत्रादिसम्पर्कोयदिजायते।
पूजनायोग्यताहेतोरुपघातः सउच्यते।
स्थानात् भ्रंशेष्वेवमेव महादोषकरः स्मृतः ॥ इति ॥ ६३–६६ ॥

स्फुटिते भेदने अवयवभङ्गइति यावत्। महासान्तपनमुक्तं तन्त्रे—

महासान्तपनाख्यं च करिष्ये देवताव्रतम्।
ततः शिवालये पुण्ये नदीतीरे रहःस्थले ॥
तिथिसङ्ख्य शतं मूलं जप्त्वा होमं [1]समाचरेत्।
घृताक्तबिल्वपत्रैश्च ततोरात्रौ सुभक्तितः ॥
चक्रराजार्चनं देवि कारयित्वा यथाविधि।
पूजां सामयिकांतां च निर्वर्त्य च ततः प्रिये ॥
स्वीकृत्य च यथायोग्यं त्रिचतुःपञ्चपात्रकम्।
ग्रासं हि पात्रस्यान्ते वै प्रत्येकं भक्षयेत् प्रिये ॥
शुद्ध्यादिचर्वणोन्मिश्रं पूर्वसङ्ख्याऽनुरोधतः।
मयूराण्डमितोग्रासः सङ्ख्यया तदपः पिबेत् ॥
पश्चात् जलं पिबेत् देवि जपेन्मूलशतत्रयम्।
रात्रौ स्थण्डिलशायी च ब्रह्मचर्ययुतः सदा ॥
पूजाऽन्ते भोजयेत् पश्चात् यथाविभवमम्बिके।
एवं त्रिरात्रं निर्वर्त्य चतुर्थे पूजयेत् गुरुम् ॥
यथाशक्ति ततोदेवि तदाज्ञावशतः शिवे।
व्रतं निवेदयेत् देव्यै ब्राह्मणान् भोजयेत् ततः ॥
यएवमाचरेत् देवि तस्य पापक्षयोभवेत् ॥

1. समं च—ब२.

१. इदं सूत्रं ३९-पत्रे, दीक्षाविधौ-२४ सङ्ख्यम्- ॥

इति तन्त्रान्तरोक्तं महासान्तपनं व्रतम् ॥ ६७ ॥

नित्यपूजोक्तान्येव प्रायश्चित्तानि स्थलान्तरे अतिदिशति—दीक्षाऽऽदिष्वप्येवमेवेति आदिपदेन नैमित्तिककाम्यपूजापरिग्रहः । दीपोपघाते दीपनाशे पुनर्मण्डलमाचरेत्–इति ॥ यथा पूर्वं मण्डलं द्वारपूजाऽऽदिना देशपरिचितिं कृत्वा देवयजनभूमिं सम्पाद्य यागः सम्पादितः, तथा तत्समाप्तौ तथैव दीपोपघातानिमित्तं पुनर्मण्डलपूजां करिष्ये–इति सङ्कल्प्य मण्डलोद्वासनान्तं पुनर्यजेत् । श्रौते कर्मण्यपि परिश्रयणादेरिदमेव फलं श्रुतं अर्थवादे "परिश्रयत्यन्तर्हितोहि देवलोकोमनुष्यलोकात" इत्यादिना । अत्रापि द्वारपूजनमेव परिश्रयणं मण्डलकरणम् । यद्वा—मण्डललक्षणमुक्तं योगिनीतन्त्रे—

कुमार्या वटुकेनापि सुवासिन्या द्वयेन च ।
पञ्चसामयिकैश्चैव युक्तं मण्डलमुच्यते ।
एतन्न्यूनं तु देवेशि केवलं पूजनं स्मृतम् ॥ इति ॥

ईदृशगुणविशिष्टं वा पूजनं मण्डलमाचरेदित्यनेन ग्राह्यम् । दीपघातेऽपि कश्चन विशेः बृहद्वामकेश्वरतन्त्रे—

दीपान्तरस्य सत्त्वे तु दीपनाशोन दोषदः ।
तस्मात् दीपाननेकान् वै ज्वालयेत् परितः शिवे ॥ ६८ ॥

शेषं स्पष्टम् ॥

एतत्प्रयोगरचनं सूक्ष्मबुद्ध्या विभाव्य रचनीयम् । ग्रन्थविस्तरभयान्नेह लिख्यते ॥

एवं प्रायश्चित्तं कर्मवैगुण्ये प्रायोदर्शितम् । अनुक्तविषये प्रायश्चित्तं साधारणतयोक्तं योगिनीतन्त्रे—

अनुक्तानां च दोषाणां दशधा मूलसंस्मृतिः ॥ इति ॥

तथा बृहद्वामकेश्वरेऽपि—

ज्ञाताज्ञातकृतानां तु पापानां परमेश्वरि ।
पादुकां तु त्रिधा स्मृत्वा तत्क्षणादेव नश्यति ॥ इति ॥

एवं प्रसक्तानुप्रसक्त्या । इत्यलं भूयसा ॥ ८२[1] ॥

### कुलमार्गनिष्ठप्रशंसा

एतावत्पर्यन्तमनुष्ठेयक्रियामुक्त्वा तदनुष्ठातारं स्तौति—

**इत्थं विदित्वा विधिवदनुष्ठितवतः कुलनिष्ठस्य सर्वतः कृतकृत्यता शरीरत्यागे श्वपचगृहकाश्योर्नान्तरं जीवन्मुक्तः ॥ ८२ ॥**

---

१. अथमङ्कः–पूर्वोक्त–१०२–प्रा.–श्लोकसङ्ख्या<sup></sup>न्तर्गतोन–सूत्रस्येति–ज्ञेयम्–

इत्थमेतावत्पर्यन्तमुक्तप्रकारं विदित्वा सम्यग्विदित्वा विधिवद्यथाशास्त्रमनुष्ठितवतः अनुष्ठानं कुर्वतः कुलनिष्ठस्य कुलमार्गे श्रद्धाभक्तिमतः । कुलमार्गश्चैतावत्पर्यन्तं दशखण्डैरुक्तः ज्ञेयः । सर्वतः सर्वप्रकारैः कृतकृत्यता अनुष्ठेयशेषरहितता सम्पन्नेति शेषः । एवं शरीरस्थितिकाले फलमुक्त्वा देहत्यागेऽपि फलमाह—शरीरत्यागइति । एतदनुष्ठातृभिन्नानां काश्यां देहत्यागे मुक्तिः, कीकटे नरकः, पुण्यदेशे स्वर्गः, इति फलतारतम्यम् । अस्य तु श्वपचः चण्डालः तद्गृहकाश्योर्न किंचिदन्तरम् । अत्र हेतुमाह—जीवन्मुक्तइति । यतोऽयं जीवन्नेव मुक्तः अतोऽविद्यालेशाभावात् स्वर्गनरकयोरप्राप्तिः, कारणाभावे कार्यासम्भवात्, स्वर्गनरकयोरविद्याकार्यत्वात् । नापि मुक्तिः काशीमरणेन भवितुमर्हति, तस्य जीवतएव लब्धत्वात् । अतः अयं देहः यत्र क्वचन वा पतितः न ततोदुःखं सुखं वा भवितुमर्हति । अतोद्वयोः नान्तरमिति भावः । एतेन एतत्सदृशं परमपुरुषार्थसाधनं नान्यदिति भावः । प्रथमखण्डे श्रुतं फलं दीक्षायाएव । एवं तत्तत्करणावसाने दर्शितं फलं तस्य तस्यैव, इदं तु विशिष्टानुष्ठानस्यैव इति बोध्यम् ॥ ८२ ॥

### अध्येतृप्रशंसा

एवं दशखण्डैर्विहितानुष्ठानकर्तारं स्तुत्वा दशखण्डाध्येतारं स्तौति—

**यइमां दशखण्डीं महोपनिषदं महात्रैपुरसिद्धान्तसर्वस्वभूतामधीते सः—सर्वेषु यज्ञेषु यष्टा भवति यं यं क्रतुमधीते तेन तेनास्येष्टं भवति इति हि श्रूयते इत्युपनिषत्—इति शिवम् ॥ ८३ ॥**

इमां पूर्वोक्तां दशखण्डीं महोपनिषदं दशखण्डसमुदायात्मिकाम् । उपनिषदिति ब्रह्मस्वरूपप्रतिपादकवेदस्य संज्ञा । तत्र ब्रह्मप्रतिपादनं साक्षात् परम्परया चेति द्विविधम् । तत्र साक्षात्प्रतिपादिका महोपनिषत् । अस्यापि साक्षात्प्रतिपादकश्रुत्यर्थानुवादकत्वात् महोपनिषत्त्वमौपचारिकम् । एतेन केवलब्रह्मप्रापकशास्त्ररूपत्वात् परमपुरुषार्थसाधनमेतदध्ययनमिति ध्वनितम् । त्रैपुरसिद्धान्तमिति—त्रिभ्यः सृष्टिस्थितिलयेभ्यः पुरा पूर्ववर्तिनी नित्येति यावत् सा, त्रिपुरेति । तदुक्तं त्रैपुरसिद्धान्ते "त्रिभ्यः पुरा त्रिपुरा" इति । कालिकापुराणेऽपि—

त्रिकोणं मण्डलं चास्य भूपुरं च त्रिरेखकम् ।
मन्त्रोऽपि त्र्यक्षरः प्रोक्तः तथा रूपत्रयं पुनः ॥

त्रिविधा कुण्डलीशक्तिः त्रिदेवानां च सृष्टये ।
सर्वं त्रयं त्रयं यस्मात् तस्मात्तु त्रिपुरा मता ॥ इति ॥

त्रिपुरारहस्येऽस्य पदस्य निरुक्तयोबह्व्यः सन्ति, ग्रन्थविस्तरभयात अतिप्रयोजनाभावाच्च न लिख्यन्ते। त्रिपुरासम्बन्धी त्रैपुरः स चासौ सिद्धान्तश्च तस्मिन् सर्वस्वभूतां दध्नः नवनीतवत् सारभूतां तां योऽधीते सः सर्वयज्ञेषु गणपत्यादिपराऽन्तेषु यज्ञेषु यष्टा भवति। क्रियाऽननुष्ठानेऽप्यध्ययनमात्रेणैव तावदनुष्ठानफलं भवतीत्यर्थः। एतस्मिन्नर्थे आरण्यकश्रुतिं प्रमाणत्वेनोपन्यस्यति—यं यं क्रतुमधीते, इति श्रूयते, इत्यन्तेन। इत्युपनिषदिति उपनिषत्प्रतिपादकमिति उपसंहारद्योतकम्,

इतीदं ते मयाऽऽख्यातं दिव्यं नाम्नां शतत्रयम्।
इत्येतन्नामसाहस्रं कथितं ते घटोद्भव ॥

इत्यादिस्थले तथा दृष्टत्वात् ॥ शिवमिति कल्याणवाचि ॥

### खण्डादिपरिपठनम्

आपस्तम्बादिसूत्रवत अत्रापि सूत्ररूपत्वम् "[1]'अथातोदीक्षां व्याख्यास्यामः" इत्यनेन ज्ञापितम्। अतः उपसंहारवेलायामपि तत्सम्प्रदायेन वैपरीत्येन खण्डादीन् परिपठति—

**अथातः सर्वेषां मन्त्राणाम्, अथ स्वेष्टमन्त्रस्य, इति विधिवत्, इत्थं साङ्गाम्, इयमेव महती विद्या, अथ प्राथमिके चतुरस्रे, अथ हृच्चक्रस्थिताम्, एवं गणपतिमिष्ट्वा, इत्थं सद्गुरोः, अथातोदीक्षां व्याख्यास्यामः अथ, एवम्, अथ, इत्थम्, अथ स्वेष्टेति पञ्च ॥८४॥**

"अथातः सर्वेषां मन्त्राणाम्" इत्यादि "अथातोदीक्षाम्" इत्यन्तेन खण्डविभागमुक्त्वा पटलानुक्रमणिकां दर्शयति—अथैवमिति। अथेत्यारभ्य खण्डद्वयानन्तरं तृतीयखण्डारम्भः एवमिति। अथ १, एवं २, अथ ३, इत्थं ४, अथ स्वेष्ट ५। एवम् एकैकं पटलं खण्डद्वयात्मकं ज्ञेयम् ॥ ८४ ॥

### ग्रन्थकर्तृप्रशंसा

ग्रन्थकर्तारं तद्गुणोत्कर्षं च प्रकटयति—

**इति श्रीदुष्टक्षत्रियकुलकालान्तकरेणुकागर्भसम्भूतमहादेवप्रधानशिष्यजामदग्न्यश्रीपरशुरामभार्गवमहोपाध्यायमहाकुलाचार्यनिर्मितं कल्पसूत्रं सम्पूर्णम् ॥**

दुष्टक्षत्रियकुलकालान्तकेत्यनेन दुष्टनिग्रहपूर्वकधर्मव्यवस्थापकत्वं दर्शितम्। रेणुकागर्भेत्यनेन जामदग्न्यस्योभयकुलशुद्धत्व दर्शितम्। महादेवेत्यनेन सम्प्रदायप्रवर्तकशुद्धिर्दर्शिता।

---

१. इदं सूत्रं-२-पत्रे-दीक्षाविधौ-१-सूत्रम्-

कुलाचार्य—इत्यनेन स्वस्य सर्वतन्त्रस्वतन्त्रता सूचिता । एतैः सर्वैर्विशेषणैः स्वप्रणीतग्रन्थे अप्रामाण्यशङ्काकलङ्कलेशाभावः सूचितः ॥ ८५ ॥

### व्याख्यानरचनकालः

एषोऽपराजितानन्दनाथः श्रीगुरुसेवया ।
सम्पन्नसूक्ष्मविज्ञानः श्रीदेवीप्रेरितः कृती ॥
जामदग्न्यकल्पसूत्रं व्याचख्यौ गूढभावकम् ।
बालानां सुखबोधाय श्रीदेवीप्रीतयेऽपि च ॥
रचितग्रन्थजालं तु साधवोगतमत्सराः ॥
शोधयन्तु विचार्यैव भ्रान्तेः पुरुषधर्मतः ॥
साधुरेषोऽथवाऽसाधुः सौभाग्योदयसंज्ञकः ।
यत्प्रेरणासमुद्भूतः तस्याश्चरणपङ्कजे ॥
अग्निबाणाद्रिभूसङ्ख्ये शाके तपसि गीष्पतेः ।
वासरे शुक्लपक्षस्य दिनआद्ये निशामुखे ॥
अर्पितः श्रीकालिकायामनेन प्रीयतां शिवा ॥

जपोजल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥

अनेन कर्मणा श्रीकामेश्वरीकामेश्वरौ प्रीयेताम् ॥

इति श्रीपण्डितकुलावतंसनिखिलनित्यनैमित्तिकानुष्ठानपुष्टीकृतकलशोद्भवाद्युपासकवर्यामृतेशानन्दनाथप्रेमपात्रसुब्रह्मण्यतनूद्भवरामेश्वरविरचिता सौभाग्योदयसंज्ञिका परशुरामसूत्रवृत्तिः समाप्ता

सूत्रस्य पुनरावृत्तौ शोध्यं सूचयितव्यकम् ॥
परिशिष्टस्थलंचैव पूर्णमाद्याप्रसादतः इति दशमः खण्डः सम्पूर्णः ।

॥ इत्येषः प्रथमोभागः सपन्नः ॥

ॐ—श्रीः—३—

---

श्री

# परशुरामकल्पसूत्रपरिशिष्टम्–१

## ॥ द्वितीयो भागः ॥

### अथैकादशः खण्डः

### अनुबन्धः

अथातोवार्तालीसिद्धियन्त्रं व्याख्यास्यामः ॥ १ ॥

भुवनेश्वरीबीजमध्ये वृत्तद्वयं विधाय, तन्मध्ये व्यतिभिन्नं चतुरस्रद्वयं विधाय, तदन्तर्वृत्तं कृत्वा, तदन्तर्वृत्तसप्तकयुक्तानि सप्तषट्कोणानि यथासम्प्रदायं विदध्यात् ॥ २ ॥

तत्र अष्टसु कोणेषु अष्टस्वन्तरालेषु च दशोत्तरशताक्षरीविद्यायाः षोडशवर्णान् अकारादिककारान्तषोडशस्वररहितषोडशवर्णसहितान् संलिख्य–पूर्वषट्कोणषट्सु कोणेषु षट्सु अन्तरालेषु च, खकारादिडकारान्तान् द्वादशवर्णान् संलिख्य–पुनरग्निकोणस्थषट्कोणे ढकारादिमकारान्तद्वादशवर्णसहितान् द्वादशवर्णान्–राक्षसकोणस्थषट्कोणे यकाराद्याकारान्तद्वादशवर्णयुक्तान् द्वादशवर्णान्–पश्चिमकोणे इकाराद्यौकारान्तसहितान्–वसुकोणे अंकारादिटकारान्तसहितान्–दशकोणे ठकारादिबकारान्तयुतान्–मध्यषट्कोणे भकारादिक्षकारान्तसंयुक्तान् विलिख्य लक्षताद्यद्वयवृत्तान्तरालवीथ्यां शिष्टान् दशवर्णान् ओगजडदबलकृसंयुक्तान् विलिखेत् ॥ ३ ॥

अथ नवग्रहयन्त्रं व्याख्यास्यामः। नवकोष्ठान् विधाय, नवसु कोणेषु वृत्तत्रयं विधाय, नवकर्णिकासु नवकोष्ठान् विलिख्य, नवसु कोष्ठेषु मध्यकोष्ठेषु मध्यकोष्ठवृत्तत्रयं कर्णिकास्थनवकोष्ठं, मध्यकोष्ठे मकारसहितं प्रणवं विलिख्य, शिष्टेष्वष्टसु कोष्ठेषु अकाराद्यृकारान्तानष्टस्वरान् विलिख्य, अन्तर्वृत्तान्तराले मकारसहितान्

१. इतः–१८–खण्डसमाप्तिं यावत्–प्रथमं परिशिष्टं–तदनु च–पुनरावृत्तिसमये, प्रथितं साङ्कं, द्वितीयं परिशिष्टमस्तीति, सुधियोविदन्तु–

षोडशस्वरान् लिखित्वा, बहिर्वृत्तान्तराले अकारादिक्षकारान्तान् मातृकार्णान् विलिखेत् ॥ ४ ॥

एवं भास्करमण्डलं मध्ये कृत्वा-पूर्वकोष्ठवृत्तत्रयकर्णिकास्थितनवसु कोष्ठेषु मध्यकोष्ठे लृकारगर्भं प्रणवं विलिख्य, पूर्वाद्यष्टसु कोष्ठेषु लृकारादिविसर्गान्तानष्टस्वरांश्च विलिख्य, अन्तर्वृत्तान्तराले लृकारसहितान् षोडशस्वरान् संलिख्य, बाह्यवृत्तान्तराले अकारादिक्षकारान्तान् लिखेत् ॥ ५ ॥

एवं चन्द्रमण्डलं विधाय, अग्निस्थितवृत्तत्रयकर्णिकानवकोष्ठमध्यकोष्ठे प्रणवगर्भककारं विलिख्य, ईशानकोष्ठादिराक्षसकोष्ठान्तं कवर्गं विलिख्य, पश्चिमकोष्ठादिसोमकोष्ठान्तकोष्ठत्रये भौमायेति वर्णत्रयं विलिख्य, अन्तर्वृत्तान्तराले ककारसहितान् षोडशस्वरान् संलिख्य, बाह्यवृत्तान्तरालवीथ्यां मातृकां लिखेत्। एवं भौममण्डलं विधाय, बुधमण्डलं लिखेत् ॥ ६ ॥

दक्षिणकोष्ठस्थवृत्तत्रयकर्णिकास्थितनवकोष्ठेषु मध्यकोष्ठे च कागर्भं प्रणवं विलिख्य, ईशानादिपञ्चकोष्ठेषु चवर्गं विलिख्य, कोष्ठत्रये बुधायेति वर्णत्रयं च विलिख्य पूर्ववत् षोडशस्वरसहितं चकारं विलिख्य, मातृकार्णं च विलिख्य, नैर्ऋतिकोष्ठस्थवृत्तत्रयकर्णिकास्थितनवकोष्ठके मध्यकोष्ठे पकारगर्भं प्रणवं विलिख्य, शिवादिकोष्ठपञ्चके पवर्गं विलिख्य, शिष्टकोष्ठत्रये सौरये-इति शनिनामवर्णान् आलिख्य, अन्तरालद्वये पकारं मातृकां च विलिख्य, पश्चिमकोष्ठस्थवृत्तत्रयकर्णिकामध्ये कोष्ठनवकं विधाय, तन्मध्यकोष्ठे टकारगर्भं प्रणवं विलिख्य, ईशानादिकोष्ठपञ्चके टवर्णान् विलिख्य, कोष्ठत्रये गुरव-इति विलिख्य, पूर्ववदन्तरालद्वये टवर्गं मातृकां च विलिखेत् ॥ ७ ॥

एवं गुरुमण्डलं विधाय-वायुकोष्ठे मध्ये यकारगर्भं प्रणवं विलिख्य, ईशानादिकोष्ठपञ्चके यवर्गं विलिख्य, राहव-इति लिखित्वा, सोमकोष्ठमध्ये कोष्ठे तकारगर्भं प्रणवं लिखित्वा, ईशादिकोष्ठेषु तवर्गं शुक्रायेति विलिख्य, ईशानकोष्ठे मध्ये शकारं

विलिख्य, ईशाद्यष्टसु कोष्ठेषु षवर्गं केतव-इति च विलिख्य, अन्तरालद्वये षोडशस्वरसहितं शकारं मातृकां च विलिखेत्—इति नवग्रहचक्रं बिधाय, नवग्रहपूजां कुर्यात्—इति शिवम् ॥ ८ ॥

इत्येकादशः खण्डः

——————

अथ द्वादशः खण्डः

अथातः शिवात्मकान् मन्त्रान् व्याख्यास्यामः ॥ १ ॥

ऐं ह्रीं श्रीं ह्स्ख्फ्रें हसहहरौः—अमृतविग्रहा पञ्चार्णा ५ ॥ २ ॥

ओं जुं सः पालय पालय सः जुं ओं—इति मृत्युञ्जयविद्या द्वादशार्णा १२ ॥ ३ ॥

श्रीं ह्रीं क्लीं—त्रिपुटाविद्या इति, त्रिवर्णा ३ ॥ ४ ॥

ओं ह्रां ह्रीं ह्रूं वैरिमोहि गरुडपक्षि हर हर हिंस हिंस स्वाहा—इति गरुडमन्त्रः त्रयोविंशत्यक्षरात्मकः २३ ॥ ५ ॥

ओं एहि परमेश्वरि स्वाहा—इत्यश्वारूढा दशाक्षरी १० ॥ ६ ॥

ओं नमोभगवति माहेश्वरि अन्नपूर्णे स्वाहा—इत्यन्नपूर्णाविद्या सप्तदशाक्षरी १७ ॥ ७ ॥

हसक्षमलवरयूं—इत्येकाक्षरोनवात्मकोमन्त्रः १ ॥ ८ ॥

सहक्षमलवरयीं—इत्येकाक्षरा नवात्मिका १ ॥ ९ ॥

ओं ह्रीं नमः—इति देवीहृदयविद्या चतुर्वर्णा ४ ॥ १० ॥

ओं रुद्रदयिते योगेश्वरि स्वाहा—इति द्वादशार्णा गौरीविद्या १२ ॥ ११ ॥

इटि इटि मुटि मुटि काकटमुण्डि स्वाहा—इति लक्षसुवर्णप्रदा पञ्चदशाक्षरी १५ ॥ १२ ॥

ओं नवकेशी कनकवती स्वाहा—इति निष्कत्रयप्रदा विद्या द्वादशाक्षरी १२ ॥ १३॥

एकायक्कुणाणातुके—इत्यभीष्टदायिनी विद्याऽष्टाक्षरी ८ ॥ १४॥

ऐं ह्रीं श्रीं मातङ्गिन्यै स्वाहा श्रीं ह्रीं ऐं–इति मातङ्गिनीविद्या द्वादशाक्षरी १२ ॥ १५ ॥

ह्रीं श्रीं क्लीं अ इ राज्यदे राज्यलक्ष्मी सः क्लीं श्रीं ह्रीं-इति राज्यलक्ष्मीविद्या षोडशाक्षरी १६ ॥ १६ ॥

ओं श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः–इति महालक्ष्मीविद्या सप्तविंशतिवर्णा २७ ॥ १७ ॥

ज झ री म हा च ण्ड ते ज स्स ङ्क र्षि णीं का ल मं था ने हः–इति–सिद्धलक्ष्मीविद्या सप्तदशार्णा १७ ॥ १८ ॥

ओं गलयौं ओं, ह्रीं गलयौं ह्रीं, क्लीं गलयौं क्लीं, ऐं गलयौं ऐं, क्लूं गलयौं क्लूं, स्त्रीं गलयौं स्त्रीं, ह्रीं क्लीं ऐं क्लूं स्त्रीं, गलयौं द्रां द्रीं क्लीं क्लूं सः, एते सप्तगोपालमन्त्राः ॥ १९ ॥

एतेषां पारायणात् सर्वसिद्धीश्वरोभवेत् इति शिवम् ॥ २० ॥

इति द्वादशः खण्डः

---

अथ त्रयोदशः खण्डः

अथातः प्रस्तारक्रमं व्याख्यास्यामः ॥ १ ॥

स्वेच्छया कतिचित् ध्रुवाक्षराणि केनचित् प्रकारेण विलिख्य तेष्वन्त्यशिरसि बिन्दुं विलिख्य उपान्त्यवर्णमारभ्य प्रथमवर्णपर्यन्तं व्युत्क्रमेण एकैकस्य वर्णस्य शिरस्येकैकमङ्कं एकद्वित्रिचतुःपञ्चषडादिरूपमेकोत्तराभिवृद्धिं विलिख्य, ततएकेन द्वयं द्वाभ्यां त्रयं त्रिभिश्चतुष्टयमित्येवं क्रमेण तानङ्कान् गुणयेत् ॥ २ ॥

तेन हसकलह्रींरूपेषु ध्रुवेषु मायाबीजस्य शिरसि शून्यं लकारस्य शिरस्येकं ककारस्य द्वौ सकारस्य षट् हकारस्य चतुर्विंशतिः–इति सिध्यति ॥ ३ ॥

ईदृशस्य बिन्द्वाद्यं कवर्गस्य खण्डाङ्क–इति संज्ञा, नष्टोद्दिष्टादिषु व्यवहारार्थं कृता ॥ ४ ॥

ततऔत्तराधर्येण चतुर्विंशतिवारं विलिख्य तदधस्तथैव सकारांस्तदधः ककारांस्तदधः लकारांस्तदधः मायां विलिखेत् ॥ ५ ॥

ततः अनयैव रीत्या सादिचतुष्टयं षट्षड्वारं लिखेत् ॥

कादित्रयं द्विद्विवारं लिखेत् ॥ ७ ॥

लकारमायां च एकैकवारं लिखेत् ॥ ८ ॥

एवं सति द्वितीयपङ्क्तौ एकमक्षरं न्यूनं सम्पद्यते ॥ ९ ॥

तं लकारं पञ्चमस्थाने लिखेत् ॥ १० ॥

प्रथमपङ्क्तिस्तु पूर्वमेव पूर्णास्तीति न तत्र लेखनप्रसक्तिः ॥ ११ ॥

तृतीयादिषु पङ्क्तिषु द्वौ द्वौ वर्णौ न्यूनौ भवतः, तावेकस्यां पङ्क्तौ क्रमाद्विलिख्य तदधस्तनपङ्क्तौ व्युत्क्रमात् तावेव लिखेत् ॥ १२ ॥

पुरस्तनपङ्क्तिद्वये विशिष्टौ ध्रुवौ तौ क्रमान् क्रमाभ्यां लिखेत् ॥१३॥

एवमान्तकरणेनैकः प्रस्तारखण्डोभवति ॥ १४ ॥

यावन्तोध्रुवास्तावन्तएव तत्प्रस्तारस्य खण्डाः समसङ्ख्यावृत्तकाः भवन्ति ॥ १५ ॥

तेष्वाद्ये खण्डे वृत्ताद्योध्रुवाद्यएव, द्वितीये खण्डे ध्रुवद्वितीयः एव वृत्ताद्यः, तृतीये खण्डे ध्रुवतृतीयएवेत्यपि नियमोऽस्ति ॥ १६ ॥

ततश्च द्वितीयखण्डप्रथमवृत्ते पूर्वएव क्लृप्तद्वितीयस्य सकारात् परतः संस्थापयेत् ॥ १७ ॥

एवं तृतीयखण्डादिमवृत्ते कहसलन्हीमिति क्रमः ॥ १८ ॥

चतुर्थखण्डादौ लहसकन्हीं, पञ्चमखण्डादौ न्हीं हसकल-इति क्रमः ॥ १९ ॥

प्रथमखण्डान्ततृतीयवृत्तेऽपि यौ द्वौ शिष्येते तौ द्वावपि कन्हीमिति लेख्यौ प्रथमवृत्ते तयोः पौर्वापर्यस्य क्लृप्तस्य त्यागे मानाभावात् ॥२०॥

एतेन नवमादिवृत्तेष्वपि सकारन्हींकारयोः क्रमेण लेखइत्यादि सिध्यति ॥ २१ ॥

तत्तत्खण्डद्वितीयादिवृत्तानि प्रथमखण्डवदेव लेखनीयानि ॥ २२ ॥

यावत् प्रथमखण्डाद्यवृत्ताक्षराणि व्युत्क्रमेण पतन्ति तावत्पर्यन्तोऽयं प्रस्तारः प्रथमवृत्तप्रथमाक्षरशिरोंकोध्रुवार्णसङ्ख्या गुणितश्चेत् प्रस्तारवृत्तसङ्ख्यापि निष्पद्यते ॥ २३ ॥

तेन पञ्चध्रुवके चतुर्विंशतिः चतुर्ध्रुवके षट् द्वितीयध्रुवके द्वौ एकध्रुवके एकं—इति शिवम् ॥ २४ ॥

इति त्रयोदशः खण्डः

---

अथ चतुर्दशः खण्डः

अथातोनष्टोद्दिष्टं व्याख्यास्यामः ॥ १ ॥

हसकल्ह्रीं—इत्येषां पञ्चानामक्षराणां ध्रुवप्रस्तारे विंशत्यधिकशतं वृत्तानि तेषु चतुरशीतितमवृत्तजिज्ञासायां चतुरशीतिसङ्ख्यैव नष्टोऽङ्कः ॥ २ ॥

खण्डाङ्कास्तु चतुर्विंशतिः षट् द्वे एकं शून्यं चेति पूर्वमेवोक्त्या तेनैकैकेन नष्टाङ्कं विभजेत् ॥ ३ ॥

तथा चतुर्विंशत्या चतुरशीतेर्हरणे त्रयोलब्धाः द्वादशशिष्टास्ततः षड्भिः द्वादशानां हरणे यद्यपि निश्शेषता भवति तथाऽपि विभाजकानां सशेषत्वादत्राप्येकं षट्कमवशेष्यं तेनैकलब्धं षट् षष्ठा ततोद्वाभ्यां षण्णां हरणे सावशेषविभजनेन द्वौ लब्धौ द्वौ शिष्टौ ततएकेन सशेषहरणे एकं लब्धं—एकं शिष्टम् । तस्य शून्येन विभजनेन शून्यं लब्धं शन्यं शिष्टं तेन त्र्येकद्वयेकशून्यानि लब्धाङ्काः—एते प्रत्येकं सैकाः कार्याः । तेन चतुर्द्वित्रिद्वयेकाङ्काभवन्ति ॥ ४ ॥

ततश्च पूर्वक्लृप्तक्रमेषु हसकल्ह्रीं—इत्याकारकेषु ध्रुववर्णेषु चतुर्द्विद्वयेकसङ्ख्यावर्णास्तान् सङ्ख्यायै निष्कास्य पृथक् लिखेत् ॥ ५ ॥

यथ वाग्बीजात्मकबीजचतुर्थे लकारः ॥ ६ ॥

सजिज्ञासितवृत्ते प्रथमोवाग्बीजात्मके द्वितीयः सकारएव तत्र द्वितीयः ॥ ७ ॥

अथानयोः लकारसकारयोः पूर्वलिखितत्वात् परित्यागे गणने वाग्बीजपञ्चमएव तृतीयोभवति ॥ ८ ॥

माययैव जिज्ञासितवृत्ते तृतीया कथककवगार्त् द्वितीयोपात्तसकार-परित्यागेन गणनया ककारएव पूर्वोभवतीति सतत्र चतुर्थः ॥ ९ ॥

वाग्बीजस्य प्रथमोहकारः सतत्र पञ्चमोभवतीति लस्ह्रींकह-इत्याकारकं चतुरशीतितमं वृत्तं निष्पद्यते-इति शिवम् ॥ १० ॥

इति चतुर्दशः खण्डः

---

अथ पञ्चदशः खण्डः

इत्थं कृतनष्टोलस्ह्रींकह-इत्याकारकं वृत्तं पञ्चध्रुवप्रस्तारे कतितममिति जिज्ञासायां तद्वृत्तं भूमौ विलिख्य तच्छिरसि खण्डाङ्कान् लिखेत् ॥ १ ॥

ते यथा-चतुर्विंशतिः षट् द्वे एकं शून्यं चेति ॥ २ ॥

ते च लकारादयः वर्णाः कॢसक्रमेषु हसकलह्रीं-इत्याकारकेषु पञ्चसु ध्रुववर्णेषु पूर्वलिखितपरित्यागेन गणनया चतुर्थद्वितीयतृतीय-द्वितीयप्रथमाः क्रमेण भवन्ति ॥ ३ ॥

तेन तेष्वङ्केषु प्रत्येकमेकाङ्कनिरासे सति त्र्येकद्व्येकशून्यानि सम्पद्यन्ते ॥ ४ ॥

ते चाङ्काः लकारादीनामधः क्रमाल्लेख्याः ॥ ५ ॥

अथ अधोङ्केनोर्ध्वाङ्कं गुणयित्वा तत्तदक्षराधोङ्काधःक्रमेण लिखेत् ॥ ६ ॥

यथा चतुर्विंशतिस्त्रिभिर्हननात् द्वासप्ततिभिः षण्णामेकेन हननात् षट् द्वयोर्द्वाभ्यां घाते चत्वारः एकस्यैकेन हनने एकं शून्यस्य शून्येन गुणने शून्यं-एवमेतेषां सर्वेषां मेलने त्र्यशीतिः तेष्वङ्काङ्कप्रक्षेपे चतुरशीतिः सम्पद्यते-इति शिवम् ॥ ७ ॥

इति पञ्चदशः खण्डः

---

अथ षोडशः खण्डः

अथातो योनियन्त्रं व्याख्यास्यामः ॥ १ ॥

स्वेष्टमानेन त्रिकोणं विलिख्य, तिसृषु रेखासु दश दश चिह्नानि समांशाङ्कानि कृत्वा, तेषु दश दश सूत्राणि पातयेत्—इत्येकविंशत्यधिकशतसङ्ख्याकाः प्रस्तोत्पन्नभेदा भवन्ति ते तत्र लेख्याः सर्वमध्यत्रिकोणे कर्म लेख्यम् ॥ २ ॥

इत्थं योनिचक्रं विधाय, लिङ्गचक्रं व्याकुर्मः ॥ ३ ॥

पूर्वे एकं चतुष्कोष्ठात्मकं कोष्ठं विलिख्य, तदधः कोष्ठत्रयं तदधः पञ्च तदधः पार्श्वयोः षट् षड्विहाय यथासम्प्रदायं चत्वारिंशत्कोष्ठात्मकं लिङ्गं विलिख्य, तत्संलग्नं चतुरस्रद्वयं वह्न्यादिकोणचतुष्टयं कोष्ठचतुष्टयविशिष्टं विलिख्य, तत्र सम्प्रदायेन वाग्भवे बीजभेदान् विंशत्यधिकशतसङ्ख्याकान् प्रस्तारसञ्जनितान् विलिख्य, विशिष्टेषु तृतीयबीजस्य प्रस्तारसञ्जनितचतुर्विंशतिभेदान् विलिखेत् ॥ ४ ॥

अथ चतुरस्रद्वयान्तराले षड्रेखापातनेन सप्तकोष्ठान् संविधाय, तत्र दिननित्यायुगनित्याक्षराणि षट् संविलिख्य, शिष्टे कोष्ठे चोद्याक्षरं विलिख्य तत्रावाह्य पूजयेत्—इति शिवम् ॥ ५ ॥

इति षोडशः खण्डः

---

अथ सप्तदशः खण्डः

अथातः सर्वमङ्गविद्यायाः स्वरूपबाहुल्योपदेशं तद्विनियोगप्रस्तावं च करोति ॥ १ ॥

तत्र वाताद्यैः ग्रासमयान्तैः अकाराद्यैः क्षकारान्तैः मातृकाविसराक्षरैः प्रोक्तसङ्ख्यैरित्यर्थः ॥ २ ॥

शतैः पञ्चभिः अकारादीनां षोडशस्वराणां ककारादीनां च पञ्चत्रिंशतां क्षकारान्तानां प्रत्येकं षोडशस्वरयोजनतः षोडशानां षोडशानामप्येवं षट्सप्तत्यधिकपञ्चशतसङ्ख्यानां मातृकाविसराक्षराणां मूलविद्यायाः आदौ क्रमशः प्रत्येकं योजनतः षट्सप्तत्यधिकपञ्चशत-

सङ्ख्याविद्यारूपाणि सन्तीति तस्यानवस्थाने मूलविद्यायाश्चतुर्दशस्वरस्थाने स्वरान् षोडश योजयेत् ॥ ३ ॥

[1]पूर्वोक्तैर्विद्यादियोजितैः षट्सप्तत्यधिकपञ्चशतैरक्षरैः तत्सङ्ख्यारूपभेदाय अन्त्ये प्रत्येकं क्रमात् षोडशस्वरयोजनतः षोडशाधिकद्विशतोत्तरनवसहस्रसङ्ख्याविद्यारूपाणि भवन्तीति तैः सम्प्रोक्तसङ्ख्यैः विद्यारूपैः प्रयोजयेद्यन्त्रैरिति आदौ वृत्तत्रयं तद्बहिः षट्कोणं तद्बहिरष्टदलं विधाय तद्बहिर्वृत्तत्रयं विदध्यात् ॥ ४ ॥

तेषु विद्याकूटानुक्तक्रमेण न्यसेत् ॥ ५ ॥

तेष्वाद्यं मध्यतः साध्यसमेतं विलिखेत् ॥ ६ ॥

षट्कोणेषु चत्वारि चत्वारि विलिखेत् ॥ ७ ॥

अष्टच्छदेषु प्रत्येकं पञ्च पञ्च समालिखेत् ॥ ८ ॥

बहिर्वृत्तान्तरयुगे मातृकां माययाचितां विलोमामनुलोमां स्वेन सम्यक् समालिखेत् ॥ ९ ॥

अन्तःषडन्तरालेषु पर्यायदिनसम्भवे नित्ये लिखेत् ॥

प्रादक्षिण्येन सर्वतएवं यन्त्राणि जायन्ते ॥ ११ ॥

तैः कूटैरुक्तयोगतः शतं च चत्वारिंशच्च चत्वारि च ततः क्रमादिति वृत्तं, एवमन्यानि कूटानि प्रोक्तानि क्रमेण विलिखेत् ॥ १२ ॥

मध्ये नामसमेतानि तदन्यान्यभितोलिखेत् ॥ १३ ॥

त्रयोदशमितैर्लक्ष्यैः सप्तविंशतिसङ्ख्यकैः सहस्रैश्च शतेनापि चतुर्भिः तानि सङ्ख्या यन्त्राणि जायन्ते ॥ १४ ॥

तैश्च सा सर्वमङ्गला—एवं कामेश्वर्यादिषोडशनित्यानां पृथक् पृथक् यन्त्राणि स्युः ॥ १५ ॥

तस्मादाभिरसाध्यानि न कदाचिच्च कुत्रचित् विद्यन्ते तेषु यत्किंचित् वक्ष्ये कोशेषु तान्यै वदेन्नाथात्मकानि येन स्युस्तेन च मैर्भित्त्वा षोडशधा मन्त्री विदध्यात् ॥ १६ ॥

विनियोजकं विशालमध्यविन्यासं विदध्यात् ॥ १७ ॥

नवकोष्ठकं प्रागादिमध्यपर्यन्तं प्रादक्षिण्यक्रमाल्लिखेत् ॥ १८ ॥

---

१. एतत्खण्डारम्भसूत्रात्—२ सूत्रोक्तैरित्यर्थोज्ञेयः—

नवानि नवसु प्राज्ञस्तेषु ऋक्षाणि चालिखेत् ।
सप्तम्या साध्यसंयुक्तं नाथां देवीश्च तत्क्रमात् ॥ १९ ॥
यद्यद्धि वाञ्छितं कर्म तत्तत्तेषु विलिख्य वै ।
पीठे वा भूतले वाऽपि पूजयेत् प्रोक्तवासरम् ॥ २० ॥
ततः प्राप्ते वाञ्छितार्थे स्वात्मन्युद्वास्य देवताः ।
चक्रं प्रक्षाल्य तत्तोयं केदारादिषु निक्षिपेत् ॥ २१ ॥
एवमन्यानि यन्त्राणि प्रोक्तानि क्रमशोभुवि ।
विनियोज्यान्यभीष्टेषु कार्येषूक्तक्रमेण वै ॥ २२ ॥
परसङ्ख्यासमेतानि तेषु तेष्वप्ययं विधिः ।
सर्वतः सौम्यकर्माणि सिद्ध्यन्ते वाऽनया द्रुतम् ॥ २३ ॥
वश्येषु ज्ञानसम्पत्त्यै सर्वप्रत्यूहशान्तये ।
लक्ष्मीप्राप्तौ तथारोग्यसिद्धौ रोगार्तिशान्तिषु ॥ २४ ॥
विजयाय समस्तापत्तरणायाभिवृद्धये ।
पुत्रावाप्त्यै च रक्षायै पूजयेत् तेषु तत्क्रमात् ॥ २५ ॥
गजाश्वगोखरोष्ट्राजमहिषीणां विवृद्धये ।
तेषां रोगादिपीडासु तच्छान्त्यै च यथाक्रमम् ॥ २६ ॥
निर्माय नवयन्त्राणि तत्र तत्रार्चयेच्छिवाम् ।
तेषु तेषूक्तकार्येषु तत्तत्सम्प्राप्तिहेतवे ॥ २७ ॥
नवप्रकारयुक्तानि षोडशप्रथमादिषु ।
तिथिषु प्रोक्तरूपाणि तत्र तां सर्वमङ्गलाम् ॥ २८ ॥
पूजयेत् काङ्क्षितावाप्त्यै तेन सर्वसिद्धिर्भवेदिति शिवम् ॥ २९ ॥

इति सप्तदशः खण्डः

---

अथातोवासनां व्याख्यास्यामः ॥ १ ॥
तदात्मकं समुदयं मदात्मिकापिविश्रितम् ।
हृयात्मकं आत्मस्वरूपं तैर्भावयेत् ॥ २ ॥
कालेनान्यत्वदुःखार्तिवासनाशतशोध्रुवम् ।
पराहन्तामयं सर्वस्वरूपस्वात्मविग्रहम् ॥ ३ ॥

सदात्मकं स्फुरत्ताख्यं अशेषोपाधिवर्जितम् ।
प्रकाशरूपमात्मत्वे वस्तु सद्भासते परम् ॥ ४ ॥
वरयन्ते एवमतोलोके नान्यन्मन्त्रवदक्षरम् ।
यद्विद्येति हि मन्वीत सर्वधा सर्वतः सदा ॥ ५ ॥

अथ मन्त्रार्थः-

ललितायास्त्रिभिर्वर्णैः सकलार्थोऽभिधीयते ।
शेषेण देवीरूपेण तेन स्यादिदमीरितम् ॥ ६ ॥
अशेषतोजगत् कृत्स्नं हृल्लेखात्मकतः परम् ।
तस्याश्चार्थस्तु कथितः सर्वतन्त्रेषु गोपितः ॥ ७ ॥
व्योम्ना प्रकाशमानत्वं ग्रसमानत्वमग्निना ।
तेजोविमर्शः ईकारः बिन्दुना तन्निफालनम् ॥ ८ ॥

१. ह्रीं श्रीं अं कामेश्वरीपादुकां पूजयामि ।
२. ,, आं भगमालिनीपादुकां पूजयामि ।
३. ,, इं नित्यक्लिन्नापादुकां पूजयामि ।
४. ,, ईं भेरुण्डापादुकां पूजयामि ।
५. ,, उं वह्निवासिनीपादुकां पूजयामि ।
६. ,, ऊं महावज्रेश्वरीपादुकां पूजयामि ।
७. ,, ऋं शिवदूतीपादुकां पूजयामि ।
८. ,, ॠं त्वरितापादुकां पूजयामि ।
९. ,, ऌं कुलसुन्दरीपादुकां पूजयामि ।
१०. ,, ॡं नित्यापादुकां पूजयामि ।
११. ,, एं नीलपताकापादुकां पूजयामि ।
१२. ,, ऐं विजयापादुकां पूजयामि ।
१३. ,, ओं सर्वमङ्गलापादुकां पूजयामि ।
१४. ,, औं ज्वालामालिनीपादुकां पूजयामि ।
१५. ,, अं चित्रापादुकां पूजयामि ।
१६. ,, अः त्रिपुरसुन्दरीपादुकां पूजयामि ॥ ९ ॥

शङ्कुच्छायया दिक्परिज्ञानक्रमं प्रस्तावसंहितं उपदिशति ॥१०॥

तत्र भानोर्गत्या आदित्यदक्षिणोत्तरायणक्रमगतिभेदज्ञानच्छायायेति यावत् ॥ ११ ॥

तन्मध्यं बिन्दुमध्यं—इत्येतत्क्रियाविशेषणम् ॥ १२ ॥

पूर्वापरद्वये पूर्वापरात्मिकयोः दिशोः प्रागवच्छिन्ने कृत्वेत्यर्थः॥१३॥

तदभिमतः तद्द्वयमवष्टभ्य सममानपरिभ्रान्त्या तच्चिह्नद्वयान्तरालमानपरिभ्रान्त्यां स्वेच्छाधिकेनार्धेन मानेन अन्योन्यतुल्येन परिभ्रान्त्यां कृत्वा वृत्तद्वयं कृत्वेत्यर्थः ॥ १४ ॥

तयोः पूर्वापरयोः संश्लेषसञ्जातमध्यदक्षोत्तरस्थितइत्यस्य उत्तरत्र सन्धिद्वये इत्येते विशेषं प्राक्प्रत्यक्सूत्रमध्ये प्राक्प्रत्यगात्मसूत्रमध्ये तु संहारे दक्षोत्तरं दक्षिणोत्तरं तेषां मण्डपादीनामग्रैः सूत्राग्रैः ॥ १५ ॥

एतदुक्तं भवति—जीमूताद्यपरिवेष्टितभानौ दिवसे छायादिभिरनावृतदेशे जलयन्त्रादिभिः सुसमीकृतस्य दर्पणोदरसङ्काशस्य भूतलस्य मध्ये बिन्दुं कृत्वा तदवष्टम्भतः प्रतिदिशं द्वादशाङ्गुलमानेन वृत्तं कृत्वा तत्र षडङ्गुलमानपरिणाहमूलमुत्तरोत्तरपरिणाहापचयेन सूचीमात्रीकृताग्रपरिणाहं मृद्वाकृतिं शङ्कुमूलमानोच्छायसहितं वृत्ताकारं शिल्पिवरेण निर्मितं वृत्तमध्यस्थबिन्दुमध्ये यथा शङ्कुमूलपरिणाहमध्यं भवति तथा तच्छङ्कुच्छायाग्रस्य पूर्वाह्णे तत्तद्वृत्तरेखापश्चिमभागे यत्र सम्पातस्तत्र ततोऽपराह्णे तच्छङ्कुच्छायाग्रस्य तद्वृत्तरेखापूर्वभागे चिह्नं विधाय तच्चिह्नद्वयं प्रापयत् सूत्रं तत्पूर्वापरं परिकल्प्य तच्चिह्नद्वयावष्टम्भेन तच्चिह्नान्तरालमानस्य चेष्टाधिकेनार्धमानेनान्योन्यसमेते किंचिदन्योन्यसंश्लिष्टं पूर्वापरं वृत्तद्वयं विधाय तद्वृत्तरेखादक्षिणोत्तरसन्धिद्वयप्रापि प्राक्पश्चिमसूत्रमध्यगत्या तिर्यग्रूपेण यत् सूत्रं दक्षिणोत्तरं परिकल्प्य तत्प्राक् प्रत्यक्दक्षिणोत्तरसूत्रद्वयसंम्पाताद्वृत्तवक्ष्यमाणमानेन तुल्यरूपपरिकल्पितसूत्राग्रैस्तैस्तेषां मण्डपादीनां प्राक्प्रत्यग्दक्षिणोत्तरात्मकादिक्चतुष्टयं परिकल्पयेत् ॥ १६ ॥

सर्वप्रयत्नेन विद्याराधितद्वारा पूर्णताख्यातिसमावेशनेच्छा चेत्येते समयाचारिकाः परे च शास्त्रानुशिष्ठाः ॥ १७ ॥

इत्थं विदित्वा विधिवदनुष्ठितवतः कुलनिष्ठस्य सर्वतः कृतकृत्यता शरीरत्यागे श्वपचगृहकाश्योर्नान्तरं जीवन्मुक्तोभवति ॥ १८ ॥

यइमामष्टादशखण्डीं महोपनिषदं महात्रैपुरसिद्धान्तसर्वस्वभूतामधीते ससर्वेषु यज्ञेषु यष्टा भवति। यं यं क्रतुमधीते तेन तेनास्येष्टं भवति, इति हि श्रूयते–इत्युपनिषत्–इति–शिवम् ॥ १९ ॥

यएवं वेदेत्युपनिषत् ॥ २० ॥

भद्रं नोअपि वादय मनः ओं शान्तिः शान्तिः शान्तिः ॥ २१ ॥

इत्यष्टादशः खण्डः

इति श्रीपरशुरामकल्पसूत्रे प्राक्तनप्रथमपरिशिष्टं नाम द्वितियभागः सम्पूर्णः ॥ श्रीः–

---

श्री

॥ अथ सभाष्यश्रीपरशुरामकल्पसूत्रस्य पुनरावृत्तिप्रणेत्रा परिग्रथितसविषयाङ्क

# ॥ द्वितीयपरिशिष्टप्रारम्भः ॥

## तृतीयोभागः

अत्र मङ्गलम्—

यच्छिष्याहि पराशरर्षिजमदग्न्यत्र्यात्मजाः पूर्वजाः
स्तोतारश्चकितं मृकण्डजमहेन्द्राद्याः सुराभासुराः ।
संहर्ता सचराचरस्य निलयं विद्यानिधेः संनिधिम्
यः स्मर्तुः कुरुते दयां च सशिवोदिश्यान्महामङ्गलम् ॥ इति ॥

प. क. सू. द्विपरिशिष्टद्विरावृत्तिकर्ता—

**वि. १—॥ श्रीवृत्तिकारविषये ॥**

१ **वृत्तिकारस्य लौकिकाभिधानम्**—एतद्ग्रन्थे १० खण्डान्तगद्ये ३०८—पत्रे—

एतत्सौभाग्योदयापरनामकवृत्तिकारस्य लौकिकाभिधानं तु; **श्रीरामेश्वर**--इति निर्दिष्टम् ॥ इति ॥

२ **वृत्तिकारस्य तान्त्रिकं नाम**। प.क. सू. १० खण्डान्तिमश्लोकेषु तत्रैव पत्रे—

तन्त्रशास्त्रोक्तसरण्या **अपराजितानन्दनाथ**--इति वृत्तिकृतैवाभ्यधायि ॥ इति ॥

३ एतत्प.क.सूत्रोपरितन**टीकाकरणे हेतुः तन्नाम च ॥**

तत्रैव पत्रे--श्लोकेषु—च यथा—

**एषोऽपराजितानन्दनाथः** श्रीगुरुसेवया ।
सम्पन्नसूक्ष्मविज्ञानः श्रीदेवीप्रेरितः कृती ॥
साधुरेषोऽथवाऽसाधुः सौभाग्योदयसंज्ञकः ।
यत्प्रेरणासमुद्भूतः तस्याश्चरणपङ्कजे ॥ इति ॥

४ **एतत्सूत्रोपरितनवृत्तिरचनाकालः**। तत्रैव यथा—

अग्निबाणाद्रिभूसङ्ख्ये शाके तपसि गीष्पतेः ।
वासरे शुक्लपक्षस्य दिनआद्ये निशामुखे ॥ इति ॥

५ **अयं वृत्तिकारः, श्रीपण्डितेन्द्रभास्कररायाभिधपण्डितानां-प्रशिष्यः॥**

प. क. सू. ३ खण्डे श्रीक्रमे ९४–पत्रे–९७–पत्रे ९ सूत्रभाष्ये च यथा—
अयं परशुरामकल्पसूत्रवृत्तिकारः रामेश्वराभिधपण्डितः, श्रीललितासहस्रनामभाष्य श्रीवामकेश्वरतन्त्रोपरि सेतुबन्धव्याख्यादिनानाग्रन्थप्रणेतुर्विद्वद्वरस्य श्रीभास्करायमहोदयस्य शिष्यस्याऽपि शिष्यः--इति अवसीयते ॥

तत्र प्रमाणमुपर्युक्तस्थले वृत्तिकारस्य स्वस्यैव वचनं यथा—
लेखनप्रकारस्याऽस्मत्परमेष्ठिगुरुकृतसेतुबन्धे सविस्तरमुक्तत्वान्नाऽत्र लिख्यते–
इत्याद्यत्रैव भाष्ये स्थलत्रयेऽन्यत्रापि ॥ इति ॥

( इति द्वितीयपरिशिष्टविषयः १ सर्वः सम्पूर्णः )

**॥ द्विपरिशिष्ट वि. २–श्रीजामदग्न्यश्रीपरशुरामध्यानानि ॥**

१ श्रीपरशुरामकल्पसूत्रप्रणेतुर्भगवतोविष्णोरवतारस्य श्रीजामदग्न्यरामस्य श्रीतत्त्वनिधिग्रन्थस्य-११८-पत्रोट्टङ्कितं **सौम्यं ध्यानं** यथाः—

परशूज्ज्वलहस्ताब्जोजटामण्डलमण्डितः ।
ददातु चिरजीवित्वं प्रसन्नात्मा भृगूद्वहः ॥
अत्र पुस्तके स्वर्णवर्णोभगवान्–इत्यपि लिखितम् ॥ इति ॥

२ तत्रैव ग्रन्थे-२९३-पत्रे द्वितीयं-**श्यामलं ध्यानं** यथा—

लसत्परशुरेखाढ्योदुर्वाश्यामस्तथोन्नतः ।
नाभिदेशलसच्चक्रोरामःस्याज्जमदग्निजः ॥ इति ॥

३ तत्रैव ग्रन्थे-५५-पत्रे तृतीयं-**रौद्रं ध्यानं**, यथा—

क्षत्रान्तकारणं घोरमुद्वहन् परशुं करे ।
जामदग्न्यश्च कर्तव्योरामश्शत्रुनिषूदनः ॥
एतच्छ्लोकाधः स्वर्णवर्णोभगवान्–इत्यपि लिखितम् ॥ इति ॥

४ तथैव–**भयङ्करं, ध्यानं**-श्रीमदाध्यात्मरामायणे-बालकाण्डे-७-सर्गे, ५-श्लोकतः-यथा–

ततोव्रजन् ददर्शाग्रे तेजोराशिमुपस्थितम् ॥ ५ ॥
कोटिसूर्यप्रतीकाशं विद्युत्पुञ्जसमप्रभम् ।
तेजोराशिं ददर्शाथ जामदग्न्यं प्रतापवान् ॥ ६ ॥
नीलमेघनिभं प्रांशुं जटामण्डलमण्डितम्– ।
धनुःपरशुपाणिं च साक्षात्कालमिवान्तकम् ॥ ७ ॥
कार्तवीर्यान्तकं रामं दृप्तक्षत्रियमर्दनम्– । इति ॥ वि. २–सं.

**वि. ३— श्रीजमदग्निमहर्षेः शान्तं ध्यानं** तत्रैव ग्रन्थे ९४—पत्रे—

१ शान्तं जितारिषड्वर्गं भृगुपुत्रं महाद्युतिम् ।
दण्डाक्षसूत्रपाणिं च **जमदग्निं** नमाम्यहम्— ॥ इति—
एतच्छ्लोकाधोरक्तवर्णोयमित्यपि—

२ अथ **श्रीजमदग्निमहर्षेः पूर्वजन्मवृत्तान्तः** ॥

श्रीस्मृतिसमुच्चये वृद्धहारीतस्मृतौ—२४८—पत्रे—११—अध्याये वेदोक्तैनैव विधिना भगवदर्चनोपदेशावसरे— ।

कश्चित् पुरा नृपश्रेष्ठ काश्यपोब्राह्मणोत्तमः ।
शाण्डिल्य--इति विख्यातः सर्वशास्त्रविशारदः ॥ १८० ॥
सतु धर्मप्रसङ्गेन विष्णोराराधनं प्रति ।
अवैदिकेन विधिना कृतवान् धर्मसंहताम् ॥ १८१ ॥
अवलम्ब्य मतं तस्य केचिदत्र महर्षयः ।
अवैदिकेन मार्गेण पूजयन्ति स्म केशवम् ॥ १८२ ॥
अशास्त्रविहितं धर्मं सर्वं कुर्वन्ति मानवाः ।
स्वाहास्वधावषट्कारवर्जितं स्यान्महीतलम् ॥ १८३ ॥
ततः क्रुद्धोजगन्नाथः शङ्खचक्रगदाधरः ।
इदमाह मुनिश्रेष्ठं शाण्डिल्यममितौजसम् ॥ १८४ ॥
दुर्बुद्धे मामकं धर्मं परमं वैदिकं महत् ।
अवैदिकक्रियाजुष्टं प्रागल्भ्यात् कृतवानसि ॥ १८५ ॥
यस्मादवैदिकं धर्मं प्रवर्तयसि मां ( त्वं ) द्विज ।
तस्मादवैदिकं लोकं निरयं गच्छ दारुणम् ॥ १८६ ॥
तस्य देवस्य वाक्यात्तु शाण्डिल्योऽभूद्भयाकुलः ।
स्तुवन् प्राह जगन्नाथं प्रणिपत्य पुनः पुनः ॥ १८७ ॥
त्राहि त्राहीति लोकेश मां विभो सापराधिनम् ।
ततः सकृपया विष्णुर्भगवान् भूतभावनः ॥ १८८ ॥
दिव्यं वर्षशतं विप्र भुक्त्वा निरययातनाम् ।
उत्पत्स्यसे भृगोर्वंशे **जमदग्निरितीरितः** ॥ १८९ ॥
तत्राऽऽराध्य पुनर्मां तु वैदिकेनैव धर्मतः ।
गच्छ तस्मिन् मुनिश्रेष्ठ मम लोकं सुनिर्मलम् ॥ १९० ॥

इत्युक्त्वा भगवान् विष्णुस्तत्रैवान्तरधीयत ।
शाण्डिल्योनिरयं प्राप्य पुनरुत्पद्य भूतले ॥ १९१ ॥
वेदोक्तविधिना विष्णुमर्चयित्वा सनातनम् ।
विशुद्धभावात् सम्प्राप्तस्तद्धाम परमं हरेः ॥ १९२ ॥ इति

**एतदुक्तश्लोकगोलार्थोयथा—**

पूर्वस्मिन्काले ब्राह्मणक्षत्रियवैश्यास्त्रयोऽपि शुद्धवैदिककर्माधिकृताअभूवन् । तदर्थमेवेमं ग्रन्थं सार्थयन्तु । अपि तु नेदानींतनसर्वसाधारणत्रैवर्णिकतया ।

किञ्च साम्प्रतिकसमये गच्छता कलिकालेनाऽश्रद्धावेदाध्ययनाभावाऽपश्चात्तापादिकलुषपर्युषिताऽऽत्मानस्तएव त्रैवर्णिकाः प्राक्तनवैदिककर्मविधानानर्हाः स्वयमेव भूत्वा स्वाधिकारनष्टताकारणेन दुन्वन्ति स्वात्मानमस्मदात्मानमपि च ।

अतएतादृकत्रैवर्णिककृते नाऽयं स्मृत्युल्लेखस्तथ्यतया नेयइति—सर्वमनवद्यम् ॥

( द्वि. प.—२ वि. सर्वः सं. )

श्रीः

द्विपरिशिष्ट वि. ३ ॥ **तन्त्रशास्त्रं-श्रीशिवोक्तं,** तत्र प्रमाणानि—॥

(१) श्रीकुलार्णवतन्त्रे, २ उल्लासे २१ पत्रे—यथा—

॥ कुलशास्त्राणि सर्वाणि मयैवोक्तानि पार्वति ।
प्रमाणानि न सन्देहोन हन्तव्यानि हेतुभिः ॥
देवताभ्यः पितृभ्यश्च मधुवाताऋतायते ।
स्वाधिष्ठानमधिष्ठायां क्षीरं सर्पिर्मधूदकम् ॥
हिरण्यपात्रं खादित्वा चाबध्नन् पुरुषं पशुम् ।
सद्योदीक्षयतीत्याद्याः प्रमाणं श्रुतयः प्रिये ॥ इति ॥

(२) वामकेश्वरतन्त्रोपरितनसेतुबन्धव्याख्यायां—५—पत्रे १ विश्रामेऽपि तदेतदुक्तं श्रीमदाचार्यश्रीभगवत्पादैर्यथा—

॥ चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रः पशुपतिः ।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम्—॥ इति ॥

(३) अथ चैतद्विषयप्रचारणाय, सर्वोत्तमं—चाद्यं वैदिकं प्रमाणं यथा—

॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्—। इत्यादि ॥
श्रुतिप्रामाण्यमपि प्रमाणीयतामतन्मन्यैः—॥ इति ॥

(४) अपरं च, अत्रैव, प-क-सूत्रे १ खण्डे-१७ पत्रे २-सूत्रभाष्येऽपि, यथा—

॥ अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् ।
आदिकर्ता शिवः साक्षाच्छूलपाणिर्महेश्वरः ॥ इति स्मृतेः ॥ ॥ इति ॥

(५) उपर्युक्त प-क-सू-ग्रन्थे, एवोपरितनभाष्येऽपि, यथा—

॥ गुरुशिष्यपदे स्थित्वा स्वयमेव सदाशिवः
प्रश्नोत्तरपरैर्वाक्यैस्तन्त्रं समवतारयत् ॥ इति ॥

(६) योगिनीतन्त्रे १० पटले ५५ पत्रे ।

अयमेव गुरुर्देवः श्रीशिवः परमेश्वरः ।
अयं हि वक्ता शास्त्राणां नाप्यन्योऽपि विधिर्हरिः- ॥ इति ॥

(७) तथा च, अत्रैव प-क-सू-८ पत्रे-१ खण्डे १ सूत्रभाष्ये यथा—

॥ श्रुतिपथगलितानां मानुषाणां तु तन्त्रं
गुरुगुरुरखिलेशः सर्ववित् प्राह शम्भुः ।
श्रुतिपथनिरतानां तत्र नैवास्ति किञ्चित्
हितकरमिह सर्वं पुष्कलं सत्यमुक्तम् ॥

एतत्च्छ्लोकगतपूर्वाधोक्त, **श्रुतिपथगलितानां, श्रुतिपथनिरतानाम्**-इत्यनयोर्वाक्ययोस्तात्पर्यं यथा—

इदानीं कलौ, यावज्जीवम् अग्निहोत्रं जुहुयात्-इति श्रुत्युपदिष्टाग्निहोत्रदर्शपौर्णमासेष्ट्यादियागाकरणं, त्विदानींतनद्विजसन्ततौ सर्वत्रैव प्रायोदरीदृश्यते—

अर्थाद् ब्राह्मणकुले, तत्तच्छ्रौतं कर्म कुत्रचिदेव दृश्यते, इति श्रुतिपथनिरतत्वं दुष्प्राप्यमेव। अतः श्रुतिपथगलितत्वस्यानग्निकद्विजातिष्वपि प्रवृत्तिमत्त्वेन, अनन्यगतिकत्वेनापि श्रीशिवोक्तं तन्त्रशास्त्रं शरणीकरणीयमेव, साम्प्रतिकवैदिकैरपीति, सिध्यत्येव—

अन्यथा-श्रीमद्भागवते, ११ स्कन्धे-२७-अध्याये—

वैदिकस्तान्त्रिकोमिश्रः इति मे त्रिविधोमखः
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥
एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिं मत्तोविन्दत्यभीप्सिताम् ॥ इति ॥

॥ श्रीशिवार्चनचान्द्रिकायामपि ॥

वैदिकोमिश्रितोवापि विप्रादीनां विधीयते ।
तान्त्रिकोविप्रभक्तस्य शूद्रस्यापि प्रकीर्तितः ॥ इति ॥

अन्यच्च । वामकेश्वरतन्त्रोपरितनसेतुबन्धव्याख्यायां, ५-पत्रे १ विश्रामे यथा—

श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः
क्रमेण श्रुतिसिध्य्यर्थं मनुष्यस्तन्त्रमाचरेत् (इदं वीरमीत्रोदये २४ पत्रे-)

सन्ध्यावाहने गायत्रीं त्र्यक्षराम्बालां—इत्यादि, देवीभागवतस्थतन्त्रवाक्यम्—

इत्यादीन्यनल्पप्रमाणानि, **श्रुतिपथगलितानाम्**—इत्युपर्य्युक्तश्लोकेन सह विरुध्येरन्—

तथा च इदानींतनानग्निकत्रैवर्णिकादिषु, तान्त्रिकविधिप्रतिपादनरूपश्रीदुर्गोपासना-शास्त्रानुमतसम्प्रदायश्च, विनश्यदवस्थः स्यात्—

तस्मात्—**श्रुतिपथगलितानां**—इत्यादिनिषेधवचश्चारितार्थ्यं जङ्गमधर्मप्रतिपादक ताद्दक्शैवागमपरं समर्थनीयमित्यलं पल्लवितेन तद्विदां पुरतः—

**वैदिकैरपि वेदाविरुद्धतन्त्रमाश्रयणीयं तत्र** प्रमाणम्- ॥

॥ **श्री-दे-भा-देवीगीतायां यथा** ॥

तत्र वेदाविरुद्धांऽशोऽप्युक्तएव क्वचित् क्वचित् ।
वैदिकैस्तद्ग्रहे दोषोन भवत्येव कर्हिचित् ॥ इति ॥

३।९ **श्रीमहानिर्वाणतन्त्रे-२-उल्लासारम्भे-१६ पत्रे**
**तन्त्रशास्त्रमाहात्म्यगौरवयोः-**

इति देव्यावचः श्रुत्वा शङ्करोलोकशङ्करः ।
कथयामास तत्वेन महाकारुण्यवारिधिः ॥ १ ॥

**श्रीसदाशिवउवाच**

साधु पृष्टं महाभागे जगतां हितकारिणि ।
एताद्दशः शुभः प्रश्नोन केनापि कृतः पुरा ॥ २ ॥
धन्यासि सुकृतज्ञासि हितासि कलिजन्मनाम् ।
यद्यदुक्तं त्वया भद्रे सत्यं सत्यं यथार्थतः ॥ ३ ॥
सर्वज्ञा त्वं त्रिकालज्ञा धर्मज्ञा परमेश्वरि ।
भूतं भवद्भविष्यं च धर्मयुक्तं त्वया प्रिये ॥ ४ ॥
यथातत्वं यथान्यायं यथायोग्यं न संशयः ।
कलिकल्मषदीनानां द्विजादीनां सुरेश्वरि ॥ ५ ॥
मेध्यामेध्याविचाराणां न शुद्धिः श्रौतकर्मणा ।
न संहिताद्यैः स्मृतिभिरिष्टसिद्धिर्नृणां भवेत् ॥ ६ ॥

सत्यं सत्यं पुनः सत्यं सत्यं सत्यं मयोच्यते ।
विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये ॥ ७ ॥
श्रुतिस्मृतिपुराणादौ मयैवोक्तं पुरा शिवे ।
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः ॥ ८ ॥
कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्तते ।
न तस्य गतिरस्तीति सत्यं सत्यं न संशयः ॥ ९ ॥

**तत्रैव**

॥ सर्वैर्वेदैः पुराणैश्च स्मृतिभिः संहितादिभिः ।
प्रतिपाद्योऽस्मि नान्योऽस्ति प्रभुर्जगति मां विना ॥ १० ॥
आमनन्ति च ते सर्वे मत्पदं लोकपावनम् ।
मन्मार्गविमुखालोकाः पाखण्डाब्रह्मघातिनः ॥ ११ ॥
अतोमन्मतमुत्सृज्य योयत् कर्म समाचरेत् ।
निष्फलं तद्भवेद्देवि कर्तापि नारकी भवेत् ॥ १२ ॥
मूढोमन्मतमुत्सृज्य योऽन्यमतमुपाश्रयेत् ।
ब्रह्महा पितृहा स्त्रीघ्नः सभवेन्नात्र संशयः ॥ १३ ॥
कलौ तन्त्रोदितामन्त्राः सिद्धास्तूर्णफलप्रदाः ।
शस्ताः कर्मसु सर्वेषु जपयज्ञक्रियादिषु ॥ १४ ॥
निर्वीर्य्याः श्रौतजातीयाविषहीनोरगाइव ।
सत्यादौ सफलाआसन् कलौ ते मृतकाइव ॥ १५ ॥
पाञ्चालिका यथा भित्तौ सर्वेन्द्रियसमन्विताः ।
अमूरशक्ताः कार्येषु तथाऽन्ये मन्त्रराशयः ॥ १६ ॥
अन्यमन्त्रैः कृतं कर्म वन्ध्यास्त्रीसङ्गमोयथा ।
न तत्र फलसिद्धिः स्यात् श्रमएव हि केवलम् ॥ १७ ॥
कलावन्योदिते मार्गे सिद्धिमिच्छति योनरः ।
तृषितोजाह्नवीतीरे कूपं खनति दुर्मतिः ॥ १८ ॥
मद्वक्त्रादुदितं धर्मं हित्वान्यद्धर्ममीहते ।
अमृतं स्वगृहे त्यक्त्वा क्षीरमार्गं सवाञ्छति ॥ १९ ॥
नान्यः पन्थामुक्तिहेतुरिहामुत्र सुखाप्तये ।
यथा तन्त्रोदितोमार्गोमोक्षाय च सुखाय च ॥ २० ॥

तन्त्राणि बहुधोक्तानि नानाख्यानान्वितानि च ।
सिद्धानां साधकानाञ्च विधानानि च भूरिशः ॥ २१ ॥
अधिकारिविभेदेन पशुबाहुल्यतः प्रिये ।
कुलाचारोदितोधर्मोगुप्त्यर्थं कथितः क्वचित् ॥ २२ ॥ इति ॥

१० **सटीक-म-नि-४ उल्लासे ६५-पत्रेऽपि**—यथा—

मयोक्तेन विधानेन तत् सर्वं साधयेन्नरः ।
न कुर्याद्यदि मोहेन दुर्मत्या श्रद्धयापि वा ॥ ९० ॥
विनष्टः सर्वकर्मभ्योविष्टायां सभवेत् कृमिः ।
यदि मन्मतमुत्सृज्य महेशि, प्रबले कलौ ॥ ९१ ॥
यदा यत् क्रियते कर्म विपरीताय तद्भवेत् ।
मन्मतासम्मता दीक्षा साधकप्राणघातिनी ॥ ९२ ॥
पूजापि विफला देवि हुतं भस्मार्पणं यथा ।
देवता कुपिता तस्य विघ्नस्तस्य पदे पदे ॥ ९३ ॥
कलिकाले प्रवृद्धे तु ज्ञात्वा मच्छास्त्रमम्बिके ।
योन्यमार्गैः क्रियां कुर्यात् समहापातकी भवेत् ॥ ९४ ॥
कलावन्योदितैर्मार्गैः सिद्धिमिच्छति योनरः ।
तृषितोजाह्नवीतीरे कूपं खनति दुर्मतिः ॥ ९८ ॥
दैवे पैत्र्ये कुलाचारे नाधिकारोस्य जायते ।
अशाम्भवेन मार्गेण देवतास्थापनं चरेत् ॥ ९९ ॥
असान्निध्यं भवेत्तत्र देवतायाः कथंचन ।
इहामुत्र फलं नास्ति कायक्लेशोधनक्षयः ॥ १०० ॥ इति ॥

११ **तन्त्रोक्तध्यानमन्त्रयोः कलौ प्राशस्त्ये ॥**

श्रीपुरश्चरणरसोल्लासे,—३—पटलेऽपि—यथा—
तन्त्रोक्तध्यानं मन्त्रश्च प्रशस्तं भारते कलौ ॥
वेदोक्तं चैव स्मृत्युक्तं पुराणोक्तं वरानने ॥
न शस्तं चपलापाङ्गि कदाचिद्भारते कलौ ॥ इति ॥

१२ **चन्द्रिकाकारोपि—एतदेतद्देवान् तान्त्रिकविधिना पूजये-दन्यथा, नरकप्राप्तिः इत्याह**—

शिवं शक्तिं तथा विष्णुं गणपं सूर्यमेव च ।
तान्त्रिकेण विहीना या कृता पूजाभिचारवत् ॥

तान्त्रिकं च परित्यज्य वैदिकं यः समाचरेत् ।
योमोहादर्चयेद्देवं रौरवं नरकं व्रजेत् ॥ इति ॥

१३-अथ **चतुःषष्ठितन्त्राणां नामानि** श्रीवामकेश्वरतन्त्रे-१ विश्रामे २२-२३-पत्रयोः-सेतुबन्धव्याख्यायां पडितेन्द्रः श्रीभास्कररायोयथा—

१ **अथ सार्धैरष्टभिस्तन्त्रनामान्युद्दिशति—**

महामाया शम्बरं च योगिनी जालशम्बरम् ।
तत्त्वशम्बरकं चैव भैरवाष्टकमेव च ॥ १४ ॥
बहुरूपाष्टकं चैव यामलाष्टकमेव च ।
चन्द्रज्ञानं वासुकिं च महासंमोहनं तथा ॥ १५ ॥
महोच्छुष्यं महादेव वातुलं वातुलोत्तरम् ।
हृद्भेदं तन्त्रभेदं च गुह्यतन्त्रं च कामिकम् ॥ १६ ॥
कलावादं कलासारं तथाऽन्यत् कुब्जिकामतम् ।
तन्त्रोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम् ॥ १७ ॥
पञ्चामृतं रूपभेदं भूतोड्डामरमेव च ।
कुलसारं कुलोड्डीशं कुलचूडामणिं तथा ॥ १८ ॥
सर्वज्ञानोत्तरं देव महाकालीमतं तथा
महालक्ष्मीमतं चैव सिद्धयोगेश्वरीमतम् ॥ १९ ॥
कुरूपिकामतं देव रूपिकामतमेव च !
सर्ववीरमतं चैव विमलामतमुत्तमम् ॥ २० ॥
पूर्वपश्चिमदक्षं च उत्तरं च निरुत्तरम् ।
तन्त्रं वैशेषिकं ज्ञानं वीरावलिं तथा परम् ॥ २१ ॥
अरुणेशं मोहिनीशं विशुद्धेश्वरमेव च ॥ इति ॥

**अत्रेदमवधेयम्—**

उपरितनकारिकागणोक्त-६४-तन्त्रगणनास्पष्टतासिध्यै तत्कारिकोपरितनसेतुबन्धव्याख्यैव द्रष्टव्येत्ति-(वि. ३-१३-१ सं.)

३-१३-२ पुनश्च एषएव श्रीभास्कररायः प्रसिद्धः, पण्डितः, **श्रीजगदम्बिकायाः शरीरस्थान् कांश्चित्तन्त्रग्रन्थानाह**-श्री ललितासहस्रनामनि-

सर्वयन्त्रात्मिका सर्वतन्त्ररूपा मनोमयीत्यादि-१०४-श्लोकस्थ**सौभाग्यव्याख्यायां**-६८ पत्रे-यथा—

वामकेश्वरादिसर्वतन्त्राण्येव रूपं शरीरमस्याः । सर्वतन्त्रैर्निरूप्या वा । तदुक्तम्—

बहुधाप्यागमैर्भिन्नाः पन्थानःसिध्धिहेतवः ।
त्वय्येव निपतन्त्येते स्रोतस्विन्यइवार्णवे—इति—

**शरीरपक्षेपि, कामिकागमे—**

कामिकं पादकमलं योगजं गुल्फयोर्युगम् ।
पादद्वयाङ्गुलीरूपे कारणप्रसृताह्वये ॥
अजिता जानुनोर्युग्मं दीप्तमुरुद्वयं विभोः ।
पृष्ठभागेंशुमानस्य नाभिः श्रीसुप्रभेदकम् ॥
विजयं जठरं प्राहुर्निःश्वासं हृदयात्कम् ।
स्वायम्भुवं स्तनद्वन्द्वमनलं लोचनत्रयम् ॥
वीरागमः कण्ठदेशोरुरुतन्त्रं श्रुतिद्वयम् ।
मुकुटं मुकुटं तन्त्रं बाहवोविमलागमाः ॥
चन्द्रज्ञानमुरःप्रोक्तं बिम्बं वदनपङ्कजम् ।
प्रोद्गीततन्त्रं रसना ललितं गण्डयोर्युगम् ॥
सिध्धं ललाटफलकं सन्तानं कुण्डलद्वयम् ।
किरणं रत्नभूषा स्याद्वातुलं रसनात्मकम् ॥
अङ्गोपाङ्गानि रोमाणि तन्त्राण्यन्यानि कृत्स्नशः ।
एवं तत्वात्मकं रुपं महादेव्याविचिन्तयेत् ॥ इति (३-१३-२ सं.)

३—पुनश्च—मद्रदेशमुद्रितश्रीतत्वतिधिगन्थे—३५१—पत्रे—आगमनिधि प्रकरणे—४८ अनुक्रमे—

**अथ वैदिकतान्त्रिकग्रन्थाः—**

आदौ वैदिकतन्त्राणामनुक्रमणिकोच्यते—१
सर्वज्ञानोत्तरं चन्द्रज्ञानं ज्ञानार्णवाभिधम् ।
आरुणेश्वरतन्त्रं च विशुध्धेश्वरनामकम्—२
त्रैपुरं तु महादेवं तन्त्रं न्यायोत्तरं ततः ।
कालासारं कालवादतन्त्रं योगीश्वरीशतम्—३
पूर्वाम्नायाह्वयं दक्षिणाम्नायाख्यमनुत्तम् ।
पश्चिमाम्नायकाभिख्यमुत्तराम्नायनामकम्—४
अनुत्तराम्नायतन्त्रमूर्ध्वाम्नायाह्वयं तथा ।
कुण्डीश्वरमतं वीणातन्त्रं गुह्याह्वयं तथा—५

कुलचूडामणीतन्त्रं कुलासाराह्वयं ततः ।
हृद्भेदं मातृभेदं च वातुलं वातुलोत्तरम्–६
सर्ववीरमतं चैव त्रोतालं त्रोतलोत्तरम् ।
बहुरूपाष्टकं चैव यामलाष्टकमेव च–७
किरणाख्यमहातन्त्रमेकत्रिंशदिमानि हि–
अनुसृत्य तु वेदोक्तकर्माण्यनुचरन्ति हि–८–३१ (वि. ३–१३–३ सं.)

१३।४–तत्रैव ३५१ पत्रे–४९–**अथावैदिक तन्त्राणि**–पु–अन्यत्रापि–

अवैदिकाचारवतां तन्त्राणां क्रमउच्यते ।
महामाया शम्बरं च योगिनीजालशम्बरम्–१
तत्वशम्बरकं चैव कुलार्णवमतः परम् ।
महासंमोहनं चैव रूपिकामतमेव च–२
विरूपिकामतं चैव नित्याषोडशिकाह्वयम् ।
परिशिष्टानन्दतन्त्रममरेश्वरमेव च–३
वामजुष्टं कुलोद्दिष्टं रूपभेदं तु कामिकम् ।
पञ्चामृतं च कल्याणं भूताख्यं वैभवाष्टकम्–४
राजितं गारूडं बालातन्त्रं वासुकिनामकम् ।
महाकालीमतं चैव महावीरावलीमतम्–५
**तत्रैव–३५२ पत्रे**–ललिताज्ञानतन्त्रं च ललितातन्त्रमेव च ।
महाकुलेश्वरी चूडामणितन्त्रमनुत्तमम्–६
त्रयस्त्रिंशत् **प्रभेदानि** ह्यवैदिकवतां नृणाम् । ३३–(३–१३।४ सं. )

३।१३।५–तत्रैव–३५२ पत्रे–**प्रकारान्तरम्**–

चतुःषष्टिश्चतन्त्राणि मातृणामुत्तमानि हि ।
मयामायाशम्बरं च योगिनी जालशम्बरम्–१
तत्वशम्बरकं चैव भैरवाष्टकमेव च ।
बहुरूपाष्टकं चैव पातलाष्टकमेव च–२
चन्द्रज्ञानं मालिनी च महासंमोहनं तथा ।
वामजुष्टं महादेवं वातूलं वातुलोत्तरम्–३
हृद्भेदं तन्त्रभेदं च गुह्यतन्त्रं च कामिकम् ।
कलावादं कलासारं तथान्यत् कुण्डिकामतम्–४

मतोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम् ।
पञ्चामृतं रूपभेदं भूतोड्डामरमेव च—५
कुलसारं कुलोद्देशं कुलचूडामणिस्तथा ।
सर्वज्ञानोत्तमं चैव महाकालीमतं तथा—६
आरुणेशं मोहिनीशं त्रिकुटीश्वरमेव च ।
पूर्वपश्चिमदक्षं चाप्युत्तरं च निरुत्तरम्—७
विमलं विमलोर्जं च देवीमतमतः परम्—इति ६४ (वि. ३—१३—५ सं.)

६ तत्रैव—५० पत्रे—**भैरवाष्टक**तन्त्राणि—

सिध्धभैरवतन्त्रं च मायिकं भैरवं तथा ।
कङ्कालभैरवं तन्त्रं कालाग्न्याख्यं च भैरवम्—१
शक्तिभैरवतन्त्रं च योगिनीभैरवं तथा ।
महाभैरवतन्त्रं च तथा भैरवनाथकम्—२—८

७ तत्रैव—५१—**बहुरूपाष्टक**तन्त्राणि—

ब्राह्मी माहेश्वरी चैव वाराही चैव वैष्णवी ।
इन्द्राणि चैव चामुण्डा शिवदूती कुमारिका ।
एतन्नामानि तन्त्राणि बहुरूपाष्टकानि हि—८—इति

८ अन्यत्र **स्तोत्रसरिता**—

२—विभागपुस्तिकायां च सुन्दरलहरी ३० श्लोके—३१-पत्रे—

**चतुःषष्ठया तन्त्रे सकलमभिसन्धायभुवनम्**—इत्यस्य—गौर्जरटीकायां—गणितानि—६४—तन्त्रनामान्येव—

महामाया शम्बर, योगिनी जालशम्बर, तत्वशम्बर, भैरवाष्टक, बहुरूपाष्टक, यामलाष्टक, चन्द्रज्ञान, मालती, महासंमोहन, वामजुष्ट, महादेव, वारुल, वारुलोत्तर, हृद्भेद, तन्त्रभेद, गुह्यतन्त्र, कामिका, कलावाह, कलासार, अन्यकुण्डिकामत, मतोत्तर, वीणाख्य त्रोतल, त्रोतलोत्तर, पञ्चामृत, रूपभेद, भूतोड्डामर, कुलाचार, कुलोद्देश, कुलचूडामणि, सर्वज्ञानोत्तम, महाकालीमत, अरुणेश, मोहिनीश, त्रिकुटीश्वर, पूर्व पश्चिम दक्ष उत्तर, निरुतर—विमल, विमलोच्छ, देवीमत,—

एवमुपर्युक्त नामानि—६४ तन्त्राण्युक्तानि—इति ॥

अत्र गुर्जरटीकायां—तत्तत्तन्त्रगन्थस्थाः विषयाअपि संक्षेपेण उन्नीताः—इति (३—१३—८ वि. तथा च द्वि. परिशिष्ट ३ वि. सर्वोपि सम्पन्तः)

## ॥ द्वि० परिशिष्टविषयः-४ आम्नायविषये ॥

**एतत्परिशिष्टलेखे मूलग्रन्थपङ्क्तिः-पत्रं च-**

४।१-प. क. सू. १ खण्डस्थ-२ सूत्रतद्भाष्ययोः १६-पत्रतः-आम्नायविषयोऽस्ति-तत्र दृश्यम् ॥ इति ॥

१ **आम्नायावश्यकत्वे** ॥ श्रीकुलार्णवतन्त्रे १६ उल्लासे १४६ पत्रे यथा

आम्नायभेदं सङ्कोचं पुष्पसङ्कोचमेव च ।
गुरुत्रयं सम्प्रदायं ज्ञात्वा कर्माणि साधयेत् ॥

एतावता, ममोपास्यदेवता, तन्मन्त्रोवा-किमाम्नाये, वर्तते,ः-
इत्याकारकज्ञानावश्यकत्वं सूचितम् ।
अन्यथा — तत्साधकस्य श्रीशिवाज्ञोल्लङ्घनकलङ्कः सिद्धत्येव,
परंचेदानींतनानां गुरुसेवाविमुखानां केषांचिदिदं ज्ञानं नोज्जृम्भते-तत्-शोच्यमेवेति ॥
( हा. हन्त साधकगता, बुधता क्व याता-इति-पुनरा०-(वि ४-१-सं.)

**आम्नायविषये**

४।२-**आम्नायोत्पत्तिस्थलम्** ॥ प. क. सू. १ खण्डे १६-पत्रे २ सू. गत २-टिप्पण्याम् ।

१-**इमे आम्नायाः कुत्र ग्रन्थे केन च पठितास्तत्र**-कुलार्णवतन्त्रे-२२ पत्रे-३, उल्लासारम्भे यथा—

**श्रीदेव्युवाच ।**

कुलेश ! श्रोतुमिच्छामि सर्वधर्मोत्तमोत्तमम् ।
ऊर्ध्वाम्नायस्य माहात्म्यं तन्मन्त्रं वद मे प्रभो ॥

**ईश्वरउवाच ।**

श्रृणुदेवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण देवता सुप्रसीदति ॥
न कदाचिन्मया प्रोक्तं इतः पूर्वं कुलेश्वरि ।
कथयामि तव स्नेहादूर्ध्वाम्नायं श्रुणु प्रिये ॥ इति ॥

२- अपरा चोत्पत्तिः-॥ श्रीवामकेश्वरतन्त्रे १ विश्रामे-२०-पत्रे,-१२ श्लोकस्थ-सेतुबन्धव्याख्यायामपिद्रष्टव्या ॥ इति ॥

३-तत्रैव ग्रन्थे, २३ पत्रे ६४-तन्त्रगणनायाम्
" पूर्वपश्चिमदक्षं च उत्तरं च निरुत्तरम् " इत्याद्यप्युत्पत्तिस्थलम् ॥ इति ॥

४–**षडाम्नायपद्धति**रित्यप्रसिद्धप्राक्तनपुस्तकेऽपि अन्यत्रापि च, तन्त्रादिष्वप्येतद्विषयप्रतिपादनमस्ति ॥ इति ॥

५–एषां **पञ्चाम्नायानामुत्पत्तिश्च कुलार्णवतन्त्रे**-२२ पत्रे-३ उल्लासे– " मम पञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गताः । " इत्यप्याम्नायोत्पत्तिरवधेयेत्यलं भूयसा ॥ इति ॥

( वि. ४।२ सं. )

**४।३–आम्नायानां वेदतुल्यत्वम् ॥**

१–श्रीवामकेश्वरतन्त्रे–१ विश्रामे–१९ पत्रे–१२ श्लोकस्थसेतुबन्धव्याख्यायाम्– कौर्मे हिमवन्तं प्रति देवीवाक्यं यथा—

" ममैवाऽऽज्ञा पराशक्तिर्वेदसंज्ञा पुरातनी ।
ऋग्यजुःसामरूपेण सर्गादौ सम्प्रवर्तने ॥ "

अत्र भाष्यं, यथा–चतुराज्ञाश्चत्वारआम्नायाः पूर्वदक्षिणपश्चिमोत्तराख्यास्तेषामेवोत्तमत्वात् प्राधान्येनेह निर्देशः ॥ इति ॥

२–॥ ऊर्ध्वाम्नायस्यापि चतुःपदमुपलक्षणम् ॥ इति ॥

३–॥ अत्र सर्वेषां वेदान्तानामद्वैते ब्रह्मणि तात्पर्यात्तदनुयायिनामाम्नायानामप्यखण्डानन्दं ब्रह्मैव प्राधान्येन विषयः । इति सेतुबन्धे–॥

४–**उपरितनग्रन्थस्येदमत्र तात्पर्यमवसेयं** । यथा—

॥ भगवतोवेदस्य यथा श्रुतिप्रसिद्धपुरुषप्रणीतत्वेन तन्निःश्वासरूपत्वेन वा पूज्यत्वम्— तथैवाऽऽम्नायानामाम्नायप्रदर्शकतन्त्रग्रन्थानामपि श्रीशिवोक्तत्वात् पौरुषेयत्वसाधर्म्येण पौरुषेयत्वं, पूज्यत्वं, वेदतुल्यत्वञ्च सम्पादितमेवेति निश्चिन्वन्तु श्रद्धालवः ॥ इति ॥

५–तत्रैव वामकेश्वरतन्त्रे, २४-पत्रे-१ विश्रामे, २२-श्लोकस्थसेतुबन्धव्याख्यायामपि ।

**आम्नायानां वेदतुल्यत्वमङ्गीकृतं विद्वन्मणिना भास्कररायपण्डितेन** यथा—

॥ तन्त्राणां तु साक्षादेव वेदवद्भगवदाज्ञारूपत्वाच्छास्त्रत्वे न कोऽपि विवादः । अतएव प्रामाण्येऽपि न विप्रतिपत्तिः । वैदिकत्वादेव । **भगवान्परशुरामोऽप्याह**— १–खण्डे–२–सू. भा. १८–पत्रे–

॥ पञ्चाऽऽम्नायान् परमार्थसाररूपान् प्रणिनायेति । एतावताप्याम्नायानां वेदधर्मत्वं शतशः प्रमाणीकृतमेवेति ॥ ( ४-३–सं. )

४।४ ॥ **आम्नायशब्दार्थः** ॥

१–कुलार्णवतन्त्रे-१५५ पत्रे १७ उल्लासे यथा—

॥ आदित्वात् सर्वधर्माणां मनोल्लासप्रवर्तनात् ।

यज्ञादिधर्महेतुत्वाद**आम्नाय**इति कीर्तितः ॥ इति ॥

२–परशुरामकल्पसूत्रे–१ खण्डे, दीक्षाविधौ-१८-पत्रे–२ सूत्रभाष्ये, वृत्तिकारोऽपि । आम्नायशब्दोवेदे यद्यपि मुख्यः, " श्रुतिः स्त्री वेदआम्नायः " । इति कोशात् । तथापि आम्नायसारप्रतिपादकत्वादत्राप्याम्नायशब्दउपचर्यते । इत्यादि ॥ ( ४–४-सं. )

४।५ ॥ **आम्नायानां सङ्ख्या नामानि च** ॥

१–**आम्नायानामनेकत्वे** ॥ कुलार्णवतन्त्रे–२३ पत्रे, ३ उल्लासे, श्रीशिवोक्तिर्यथा—

आम्नायाबहवोगुप्ताश्चतुराम्नायभेदजाः ।

अस्मिंस्तन्त्रे समाख्याताः पूर्वत्र कुलनायिके ॥ इति ॥

२–**आम्नायानां चतुष्टयत्वे तत्रैव** यथा—

॥ एकाऽऽम्नायं च योवेत्ति समुक्तोनात्र संशयः ।

किं पुनश्चतुराम्नायवेत्ता साक्षाच्छिवोभवेत् ॥ इति ॥

एतदुपर्युक्ताऽऽम्नायचतुष्टयत्वप्रतिपादनेन 'आम्नायानामधस्तनविषयप्रतिपादितपञ्चषडादिसङ्ख्याकत्वविरोधोन कल्पनीयः ।

यतः सङ्ख्याचतुष्कस्य पञ्चषडादिसङ्ख्यास्वन्तर्भावादिति–प. क. सू. पुनरावृत्तिकारः

३–**पञ्चाम्नायानां नामानि** । कुलार्णवतन्त्रे-३ उल्लासे–२२ पत्रे–श्रीशिवांप्रति श्रीशिवोक्तिर्यथा—

॥ पूर्वश्च पश्चिमश्चैव दक्षिणश्चोत्तरस्तथा ।

ऊर्ध्वाम्नायश्च पञ्चैते मोक्षमार्गाः प्रकीर्तिताः ॥ इति ॥

४–वामकेश्वरतन्त्रान्तर्गतनित्याषोडशिकार्णवे–१ विश्रामे–२३ पत्रे–२१ श्लोकोत्तरार्धे–यथा–

॥ पूर्वपश्चिमदक्षञ्च उत्तरञ्च निरुत्तरम् । इति

॥ अत्र–सेतुबन्धव्याख्याकारमहोदयोयथा–

पूर्वादित्रयस्य समाहारद्वंद्वः । पूर्वाम्नायादिसंज्ञाभिः प्रसिद्धाश्चत्वारआम्नायाः । निरुत्तरपदेनोर्ध्वाम्नायतन्त्रं तस्यानुत्तराम्नायपदेनापि व्यवहारः ॥ इति ॥

**५-आम्नायानां षट्कत्वे ॥**

एवमुपर्युक्तया विधयाऽऽम्नायानां पञ्चसङ्ख्याकत्वमुपपद्यते, तथैव, अधोलिखित-प्रमाणेनाऽऽम्नायानां षट्कत्वमपि । यथा—

श्रीतत्वनिधौ—३५१ पत्रे-वैदिकतान्त्रिकग्रन्थगणनावसरे ४८ अङ्के-४-५ श्लोकयोर्यथा

१ पूर्वाम्नायाह्वयं दक्षिणाऽऽम्नायाख्यमनुत्तमम् ।
पश्चिमाम्नायकाभिख्यमुत्तराम्नायनामकम् ॥
अनुत्तराम्नायतन्त्रमूर्ध्वाम्नायाह्वयं तथा ॥ इति ॥

२ आम्नायानां षट्कत्वे, प्राक्तनाऽप्रसिद्धषडाम्नायपद्धतौ, श्रीनाथाद्या-म्नायपद्धतौ च, यथा—

॥ पूर्वं दक्षिणपश्चिमोत्तरमनु चौर्द्ध्वं ततोऽनुत्तरम् ।
स्त्रोतद्वन्द्वपरान् गुरोश्च चरणान् रक्तादिमिश्रान्तकान् ॥
पञ्चाम्बानवनाथषोडशषडाधारं च षड्दर्शनं ।
वागाद्यष्टकसप्तविंशतिरहस्यान्तान् न्यसेत् पूजयेत् ॥ इति ॥

उपर्युक्तग्रन्थद्वयस्थैतच्छ्लोकानुसारेणाऽऽम्नायगणनायां त्वाम्नायषट्कत्वं च प्रतीयतएव ।

३—अत्र प्रायः उपर्युक्तषट्कत्वप्रतिपादकविषयद्वयेऽनुत्तराम्नायस्य पार्थक्येनोपादाने आम्नायानां षट्कत्वं सुसिद्ध्यति । अत्र च षडाम्नायपद्धतिरपि द्रश्या ।

॥ अन्यथा षडाम्नायपद्धतिरिति संज्ञास्थः षटशब्दोऽपि व्यर्थतामियात् ॥ इति ॥

अन्यच्च आम्नायानां पञ्चसङ्ख्याकत्वे चोपर्युक्तवामकेश्वरतन्त्रस्थसेतुबन्धव्याख्यायां

**"निरुत्तरपदेनोर्ध्वाम्नायतन्त्रं, तस्यानुत्तराम्नायपदेनापि व्यवहारः"**

इति श्रीभास्कररायपण्डितकृतोल्लेखएव प्रमाणम् ।

अर्थात्—"श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ"। इति न्यायेन वचन-विप्रतिपत्तिः परिहार्येति सुधियोविभावयन्तु—इति । (४।५ वि. सं.)

४।६—**आम्नायानां प्रयोजने मुक्तिप्रदत्वे च** । प. क. सू. १८—पत्रे—१—खण्डे—२ सूत्रभाष्ये वृत्तिकारोयथा—

ननु अष्टादशसु विद्यासु सतीषु पुनराम्नायप्रणयनं व्यर्थं,—अतआह संविन्मय्येति । **अयमभिप्रायः**—पुरुषार्थः सुखं, तच्च नैसर्गिकं कृत्रिमं चेति । नैसर्गिकं मोक्षरूपम् । कृत्रिमं यस्तृतीयपुरुषार्थः कामइत्युच्यते । उभयोः साधनं धर्मः । तस्यापि साधनमर्थः ।

एवं साक्षात् परम्परया वा पुरुषैरभिलषणीयाअर्थाश्चत्वारः। तत्र कृत्रिमपुरुषार्थसाधनान्येव अष्टादशविद्याभिः प्राकट्येन प्रतिपादितानि। अकृत्रिमपुरुषार्थोयः तत्साधनं अकृत्रिमं स्पष्टं न प्रतिपादितम्। कृत्रिमोपदेशश्चाऽकिञ्चित्करोलोकानामिति जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुराम्नायविद्यां प्रणिनाय। यद्वा निखिलवेदार्थानभिज्ञानां तत्रानधिकारिणां च मुक्त्युपायं निखिलवेदसारामाम्नायविद्यां प्रणिनाय।

एतावता च निदितमेव स्याद्विदुषामाम्नायस्य मुक्तिप्रदत्वाऽवधिकं प्रयोजनम्॥ एतद्विषयेऽधस्तनः समष्टिविषयोऽपि दृग्गोचरीकार्यः॥ इति॥ (४।६ वि. सं.)

**४।७–अथाऽऽम्नायानां प्रयोजनमाहात्म्यरहस्यादिसमष्टिविषयेऊर्ध्वाम्नायफलातिशये च।**

श्रीकुलार्णवतन्त्रे–३–उल्लासे–२२–पत्रे यथा—

**श्रीदेव्युवाच।**

कुलेश–श्रोतुमिच्छामि सर्वधर्मोत्तमोत्तमम्।
ऊर्द्ध्वाम्नायस्य माहात्म्यं तन्मन्त्रं वद मे प्रभो॥ १॥

**ईश्वरउवाच।**

शृणुदेवि–प्रवक्ष्यामि यन्मां त्वं परिपृच्छामि।
तस्य श्रवणमात्रेण देवता सुप्रसीदति॥ २॥
न कदाचिन्मया प्रोक्तं इतः पूर्वं कुलेश्वरि।
कथयामि तव स्नेहादूर्द्ध्वाम्नायं शृणु प्रिये॥ ३॥
वेदशास्त्रपुराणानि प्रकाश्यानि कुलेश्वरि।
शैवाचारागमाः सर्वे रहस्याः परिकीर्त्तिताः॥ ४॥
रहस्यातिरहस्यानि कुलशास्त्राणि पार्वति।
रहस्यातिरहस्यानां रहस्यमिदमम्बिके॥ ५॥
ऊर्द्ध्वाम्नायञ्च तं वेद्मि पूजाहन्तात्मकं परम्।
(ऊर्द्ध्वाम्नायार्थतत्त्वं हि इति वा पाठः॥ ६॥)
सुगोपितं मया यत्नादिदानीं तु प्रकाश्यते।
मम पञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गताः॥ ७॥
पूर्वश्च पश्चिमश्चैव दक्षिणश्चोत्तरस्तथा।
ऊर्द्ध्वाम्नायाश्च पञ्चैते मोक्षमार्गाः प्रकीर्त्तिताः॥ ८॥
आम्नायाबहवः सन्ति नोर्द्ध्वाम्नायस्य ते समाः।
सत्यमेतद्वरारोहे! नात्र कार्य्या विचारणा॥ ९॥

आम्नायावहवोगुप्ताश्चतुराम्नायभेदजाः ।
अस्मिंस्तन्त्रे समाख्याताः पूर्वत्र कुलनायिके ? ॥ १० ॥
उत्तराम्नायवेत्तारोबहवः सन्ति मानिनः ।
ऊर्द्धाम्नायात्मतत्त्वज्ञाविरलावीरवन्दिते ॥ ११ ॥
यावन्तः पांसवोभूमेस्तावन्तः समुदीरिताः ।
एकैकाम्नायजामन्त्राभुक्तिमुक्तिफलप्रदाः ॥ १२ ॥
उपमन्त्राश्च तावन्तः सारदाः समुदीरिताः ।
मयैव कथितास्ते तु लोकानुग्रहकाङ्क्षया ॥ १३ ॥
सर्वेषामपि मन्त्राणां देवतास्तत्फलप्रदाः ।
आवयोरंशसम्भूताः समुद्दिष्टाः शुचिस्मिते ? ॥ १४ ॥
सर्वमन्त्रानहं वेद्मि नान्योजानाति कश्चन ।
मत्प्रसादेन यः कश्चिद्वेत्ति मानवकोटिपु ॥ १५ ॥
एकाम्नायञ्च योवेत्ति समुक्तोनात्र संशयः ।
किं पुनश्चतुराम्नायवेत्ता साक्षाच्छिवोभवेत् ॥ १६ ॥
चतुराम्नायविज्ञानादूर्द्धाम्नायः परः प्रिये ।
तस्मात्तदेव जानीयाद् यदीच्छेत् सिद्धिमात्मनः ॥ १७ ॥
ऊर्द्धत्वात् सर्वधर्माणा मूर्द्धाम्नायः प्रशस्यते ।
ऊर्द्धं नयत्यधःस्थञ्चेदूर्द्धाम्नायइति स्मृतः ॥ १८ ॥
ऊर्द्धतत्वात् कुलेशानि ? ध्वस्तसंसारसागरात् ।
ऊर्द्धलोकनिषेव्यत्वादूर्द्धाम्नायइति स्मृतः ॥ १९ ॥
तस्माद्देवेशि ? जानीहि साक्षान्मोक्षैकसाधनम् ।
सर्वाम्नायाधिकफलमर्द्धाम्नाय परात्परम् ॥ २० ॥
तस्माद्देवेशि ? जानीहि साक्षान्मोक्षैकसाधनम् ।
सर्वलोकेषु सर्वेभ्योह्यहं पूज्योयथा प्रिये ॥ २१ ॥
आम्नायेषु च सर्वेषु ऊर्द्धाम्नायस्तथा प्रिये ? ।
॥ देवतानां यथा विष्णुर्ज्योतिषां भास्करोयथा ॥ २२ ॥
तीर्थानाञ्च यथा काशी स्वर्णदी सरितां यथा ।
पर्वतानां यथा मेरुस्तरुणां चन्दनं यथा ॥ २३ ॥
अश्वमेधः क्रतूनाञ्च पाषाणानां यथा मणिः ।
यथा रसानां माधुर्य्यं धातुनां काञ्चनं यथा ॥ २४ ॥

चतुष्पदां यथा धेनुर्यथा हंसस्तु पक्षिणाम् ।
आश्रमाणां यथा भिक्षुर्वर्णानां ब्राह्मणोयथा ॥ २५ ॥
मनुष्याणां यथा राजाऽवयवानां यथा शिरः ।
आमोदानाञ्च कस्तूरी यथा काञ्चीपुरी पुराम् ॥ २६ ॥
तथैव सर्वधर्माणां ऊर्द्धाम्नायोऽधिकः प्रिये ।
नानाजन्मार्जितापारपुण्यकर्मफलोदयात् ॥ २७ ॥
ऊर्द्धाम्नायं विजानीयान्नान्यथा वीरवन्दिते ! ।
धन्योमनुष्यलक्षेषु जानाति कुलसाधनम् ॥२८॥
तेषां लक्षेषु यः कश्चिदूर्द्धाम्नायं प्रवेत्ति च ।
न वेदैर्नागमैः शास्त्रैर्न पुराणैः सुविस्तरैः ॥ २९ ॥
न यज्ञैर्न तपोभिर्वा न तीर्थव्रतकोटिभिः ।
अन्यैरुपायैर्देवेशि ! मन्त्रौषधिपुरःसरैः ॥ ३० ॥
आम्नायोज्ञायते चोर्ध्वः श्रीमद्गुरुमुखं विना ।
विधातव्यस्त्वया देव्या सततञ्च पुनः स्वयम् ॥ ३१ ॥
तमेवान्वेषयेत्तत्र सर्वज्ञं करुणानिधिम् ।
आम्नायं योनरोदेवि ! विजानाति च तत्त्वतः ॥ ३२ ॥
सर्वलक्षणसम्पूर्णऊर्द्धाम्नायात्मकोविदः ।
तस्माद्देवेशि ! जानीयादूर्द्धाम्नायं कुलेश्वरि ॥ ३३ ॥
लभते काङ्गितां सिद्धिं सत्यं सत्यं वरानने ! ।
ऊर्द्धाम्नायं विजानाति यः कश्चित् श्रीगुरोर्मुखात् ॥ ३४ ॥
शास्त्रमार्गेणैव नरोजीवन्मुक्तोन संशयः ।
आम्नायं योनरो देवि विजानाति च तत्त्वतः ॥ ३५ ॥
सवन्द्यः सद्गुरुः सोऽर्च्यः सदैवज्ञः समान्त्रिकः ।
ससेव्यः सच संस्तुत्यः सइष्टव्यः ससात्त्विकः ॥ ३६ ॥
सव्रती सतपस्वी च सोऽनुष्ठाता सपूजकः ।
सवदागमशास्त्रादिसर्वविद्याविशारदः ॥ ३७ ॥
सआचार्य्यः समतिमान् सयतिः सच कौलिकः ।
सयज्वा सच पूतात्मा सजापी सच साधकः ॥ ३८ ॥
सयोगी तज्ज्ञतार्थस्तु सवीरः सच सत्तमः ।
सपुण्यात्मा ससर्वज्ञः समुक्तः सशिवः प्रिये ! ॥ ३९ ॥

तत्कुलं पावनं देवि ? धन्या तज्जननी स्मृता ।
तत्पिता च कृतार्थः स्यान्मुक्तास्तत्पितरः प्रिये ? ॥ ४० ॥
पुण्यास्तद्वंशजाः सर्वे पूतास्तन्मित्रबान्धवाः ।
बहुनेह किमुक्तेन ऊर्द्ध्वाम्नायपरस्य च ॥ ४१ ॥
स्मरणं कीर्त्तनं वापि दर्शनं स्पर्शनं तथा ।
सम्भाषणञ्च कुरुते राजसूयाधिकं फलम् ॥ ४२ ॥
सयत्र वसते देवि ? तत्र श्रीर्विजयोभवेत् ।
अनामयं सुभिक्षञ्च सुवृष्टिर्निरुपद्रवम् ॥ ४३ ॥
तस्मादगुरुप्रसादेन ऊर्द्ध्वाम्नायं नरोत्तमः ।
योवेत्ति तत्त्वतोदेवि समे प्रियतमोभवेत् ॥ ४४ इति ॥
पूर्वाम्नायः सृष्टिरूपः स्थितिरूपश्च दक्षिणः ।
संहारः पश्चिमोदेवि उत्तरोऽनुग्रहोभवेत् ॥ ४५ ॥
मन्त्रयोगं विदुः पूर्वं भक्तियोगञ्च दक्षिणम् ।
पश्चिमं कर्मयोगञ्च ज्ञानयोगं तथोत्तरम् ॥ ४६ ॥
पूर्वाम्नायस्य सङ्केतश्चतुर्विंशतिरीरितः ।
दक्षिणाम्नायसङ्केतः पञ्चविंशतिरीरितः ॥ ४७ ॥
पश्चिमाम्नायसङ्केतोद्वाविंशत् समुदाहृतः ।
उत्तराम्नायसङ्केतः षट्त्रिंशत् समुदाहृतः ॥ ४८ ॥

**पुनरपि श्रीभगवान् ऊर्द्ध्वाम्नायमाहात्म्यं वक्ति—**

ऊर्द्ध्वाम्नायस्य चैतानि वसन्ति कुलनायिके ? ।
साक्षाज्ज्ञानस्वरूपत्वात् न किञ्चित् कर्म विद्यते ॥ ४९ ॥
ऊर्द्ध्वाम्नायस्य महात्म्यमहं वेद्मि न चापरः ।
मत्स्नेहात्त्वं च जानासि सत्यमेतद्वरानने ? ॥ ५० ॥
ऊर्द्ध्वाम्नायस्य माहात्म्यमिति ते कथितं मया ॥ इति ॥

( ४।९ सं. )

## ४।१० ॥ आम्नायज्ञानफले ॥

१—कुलार्णवतन्त्रे-३-उल्लासे-२३-पत्रे यथा—

एकाऽऽम्नायं च योवेत्ति समुक्तोनाऽत्र संशयः ।
किं पुनश्चतुराम्नायवेत्ता साक्षाच्छिवोभवेत् ॥ इति ॥

२–कुलार्णवे तत्रैवोल्लासे पूर्वलिखिताम्नायसमष्टिविषयगत–३२–श्लोके यथा—

"आम्नायं योनरोदेवि, विजानाति च तत्त्वतः।"

इत्यादिनोर्द्ध्वाम्नायज्ञानफलेन सहैवाऽऽम्नायज्ञानफलमभिहितमेवेति ततोज्ञेयं, दृश्यञ्च॥

३–एवं सामान्यतः आम्नायज्ञानमभिहितम्। सर्वाम्नायशिरोमुकुटरूपोर्ध्वाम्नाय-ज्ञानफलातिशयोऽपि–उक्तः–

अत्र लिखिताऽऽम्नायसमष्टिविषयः सर्वोऽपि बुद्धिदृग्गोचरीकर्तव्यः।

अथवा ततोऽधिकजिज्ञासुत्वे च प्राक्तनाऽप्रसिद्धषडाम्नायपद्धतौ प्रत्येकाऽऽम्नाय-भेदेन तत्तदाम्नायगतमन्त्रविभागपूर्वकं तत्तद्देवतानां सर्षिच्छन्दोमन्त्रोल्लेखादिकं सुस्पष्टमस्तीति विनिवेदयाम्याप्तवर्यान् विशिष्टसाधकान्।

किं बहुना श्रीयोगिनीतन्त्रादितन्त्रेषु अस्योर्ध्वाम्नायस्य भूयोभूरि माहात्म्यं भगवता श्रीशिवेनैव प्रतिपादितं स्पष्टतरमिति ग्रन्थविस्तृतिभिया न विशेषतयात्र-विवृणोमि।

४–**आम्नायज्ञानाभावे श्रीशिवाज्ञोल्लङ्घनकलङ्कः॥**

अन्यदप्यत्र निवेद्यते यत्—

ममोपास्यदेवता तन्मन्त्रश्च किमाम्नाये वर्तते; इत्याकारकज्ञानस्याऽऽवश्यकत्वमेव। अन्यथा तादृक्साधकस्य शिवाज्ञोल्लङ्घनकलङ्कः स्यादेवेति विनिवेदयामि–॥

**शिवमस्तु सर्वेषाम्**॥ (४।१० तथा च ४–वि–सर्वोपि सं.)

५।१–द्वि. परिशिष्ट वि. ५–**श्रीवेदस्य पौरुषेयत्वे॥ पौरुषेयशब्दार्थे च**–

अत्र पौरुषेय–इति शब्दार्थः अस्मदादिपुरुषप्रणीत्यर्थकोन; अपि तु—

१–सहस्रशीर्षा पुरुषः.। यजु. सं. ३१–१

२–पुरुष एवेदं सर्वम्.। य. सं. ३१–२

३–ततोविराडजायत.। य. सं. ३१–५

४–छन्दांढंसिजज्ञिरे तस्मात्० य–सं–३१–७–

इत्यादिश्रुतिप्रसिद्धः पुरुषस्तेन प्रणीतः पौरुषेयइत्याकारकोर्थोग्राह्यः, इत्थं शास्त्र-शिष्टाचारोभयसत्त्वात्॥ इति॥

॥ प्रस्तुमोऽधस्तात् पौरुषेयत्वं वेदभगवतः॥ इति॥

२–ननु वेदस्य नित्यत्वेन अपौरुषेयत्वात् ईश्वरनिर्मितत्वं कथम्?

इति वादप्रतिवादयोः विद्वदग्रणीर्वृत्तिकारउत्थाप्यशङ्कां करोति नन्वित्यादिना

१–खण्डे–१७–पत्रे–**अयमत्र संक्षिप्तोऽर्थः—।**

ननु–न कश्चित् वेदकर्ता तु वेदस्मर्ता चतुर्मुखः।

वेदोनारायणः साक्षात् स्वयम्भूरिति सुश्रम—इति पाराशरस्मृतेः—वेदस्तु नित्यः, नित्यपदार्थस्य च न कश्चित् कर्ता अपेक्ष्यते नित्यत्वात्।

तस्माद्वेदस्य श्रतिप्रसिद्धपुरुषप्रणीतत्वमपि अयुक्तमेवाऽऽभाति। तस्मादपौरुषेयत्वं स्वीक्रियतामिति ( पूर्वपक्षोवादिनः )।

पुनश्चाप्यत्र कश्चिच्छङ्कते, यथा—

**वेदस्य नित्यत्वमेव वयं न मन्यामहे—**

**तत्रोत्तरम्—**

" वाचा विरूपनित्यया " इति श्रुत्या वेदस्य नित्यत्वमस्त्येवेति दूरतोऽपास्तं वादिमतम्।

**३—एवञ्च वेदस्य नित्यत्वं समर्थ्य, पौरुषेयत्वमपि सम्पादयति—**

प.-क.-सू.-१—खण्डे—१७—पत्रे—**वृत्तिकारः।**

" वेदास्तु ईश्वरेण निर्मिताः, " छन्दाᳲसि जज्ञिरे तस्मात् " इति श्रुतेः,

अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम्।
आदिकर्ता शिवःसाक्षाच्छूलपाणिर्महेश्वरः॥

इति स्मृतेः। वेदः पौरुषेयः वाक्यसमूहत्वात् भारतादिवत् इत्यनुमानस्यापि प्रमाणत्वात्। अतएव " ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् " इति श्रुतौ ईशानत्वं कर्तृत्वरूपमेव।

१—"छन्दाᳲसि जज्ञिरे तस्माद्यजुस्तस्मादजायत। य. सं. ३१—७ इति श्रुत्या,

२—अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम्।
आदिकर्ता शिवः साक्षाच्छूलपणिर्महेश्वरः॥

इति स्मृत्या च,

३—ईशानः सर्वविद्यानामित्यादिसुप्रसिद्धश्रुत्या च,

तेने ब्रह्महृदा यआदिकवये. इति श्रीमद्भागवताद्यश्लोकस्थश्रीव्यासभागवतोक्तेश्च,

वेदस्येश्वरकर्तृत्वं सुसिद्धमेवेति—दूरं पलायन्तां वेदस्याऽपौरुषेयत्ववादिनः।

( ५।३ वि. सं.)

४—न च तस्य पौरुषेयत्वे पुरुषदोषाणां भ्रमप्रामादविप्रलिप्साकरणापाटवानां सम्भवात् अप्रामाण्यशङ्कास्पदत्वं स्यादिति वाच्यम्।

अत्रोपरितनसिद्धान्तसाधितेऽपि वेदस्य पौरुषेयत्वे पुनरपि विप्रतिपत्तिं ददाति वादी यथा—

यद्युपरितनप्रमाणगणेन वेदस्य पौरुषेयत्वाऽङ्गीकारस्तदा—

पुरुषदोषाणां भ्रमप्रमादविप्रलिप्साकरणापाटवानां सम्भवात् अप्रामाण्यशङ्कास्पदत्वं स्यादिति वाच्यम् ।

अर्थात् पुरुषे सामान्येन तादृग्भ्रमादिदोषास्पदत्वात् तद्दोषवत्पुरुषप्रणीतत्वधर्मवत्त्वेन वेदस्यापि दोषवत्त्वं स्यादिति; वेदस्याऽप्रामाण्यशङ्काप्रसङ्गः स्यादेव तस्मादास्तां अपौरुषेयत्वं वेदस्येति (वादी) ।

**अत्रोत्तरम्—यथा—**

ईश्वरे दोषसाधनानामविद्याऽऽदीनामभावेन दोषाऽसम्भवात् ।

अस्माभिरुच्यमाने श्रुत्युपनिषत्प्रसिद्धपुरुषे ईश्वरे दोषसाधनानामविद्याऽऽदीनामभावेन दोषाऽसम्भवात् ।

अर्थात्—ईश्वरे पुरुषे दोषोत्पादकाऽविद्यादीनि किञ्चित्त्वेनाऽपि न प्रसरन्तीति सिद्धत्वात् वादिनस्तवोक्तिरसाध्व्येवेति आस्तां तूष्णींभावोऽपौरुषेयत्वसम्पादनाय । एतावता चाऽस्मदुक्तोपरितनग्रन्थेन भगवतोवेदस्य पौरुषेयत्वं सुसिद्धमेव सञ्जातम् ॥ इति ॥

५—एवञ्च **तन्त्रशास्त्राणामपि श्रीशिवोक्तेः पौरुषेयत्वं वेदतुल्यत्वञ्चे**त्युभयमप्यव्याहतमेवेत्यलम् ।

अतएवैतत्पौरुषेयत्वसमर्थनलेखप्रतिपादकपत्रान्तिमपङ्क्तौ १—खण्डे—१७—पत्रे प.-क.-सू. वृत्तिकृदादिशति—यथा—तस्मात् सर्वाअपि विद्याः पुरुषप्रणीताएव । सम्पन्नोऽत्रैतत्पत्रीयवृत्तिकारलेखोज्जीवनोल्लेखः ॥ ( ५।५ वि. सं. )

६—साम्प्रतं **प्रणवात् महाव्याहृतिभ्योऽपि च वेदोत्पत्तौ** किञ्चिदुच्यते ॥

१—आथर्वणीयगोपथब्राह्मणे--९--पत्रे पूर्वार्धे—१—प्रपाठके यथा—

ब्रह्म ह वै ब्रह्माणं पुष्करे ससृजे। स खलु ब्रह्मा सृष्टश्चिन्तामापेदे; केनाऽहमेकेनाक्षरेण सर्वांश्च कामान्, सर्वांश्च लोकान्, सर्वांश्च देवान्, सर्वांश्च वेदान्, सर्वांश्च यज्ञान्, सर्वांश्च शब्दान्, सर्वांश्च व्युष्टीः, सर्वाणि च भूतानि स्थावरजङ्गमान्यनुभवेयमिति—सब्रह्मचर्यमचरत् ।

सओमित्येतदक्षरमपश्यद्द्विवर्णं चतुर्मात्रं सर्वव्यापि सर्वविभ्वयातयामं, ब्रह्म, ब्राह्मीं व्याहृतिं ब्रह्मदैवतम् ।

तया सर्वांश्च कामान्, सर्वांश्च लोकान्, सर्वांश्च देवान्, सर्वांश्च वेदान्, सर्वांश्च यज्ञान्, सर्वांश्च शब्दान्, सर्वांश्च व्युष्टीः, सर्वाणि च भूतानि स्थावरजङ्गमान्यभवन् ।

तस्य प्रथमेन वर्णेन आपः स्नेहश्चान्वभवत् ।

तस्य द्वितीयेन वर्णेन तेजोज्योतींष्यभवन् । १६

तस्य प्रथमया स्वरमात्रया पृथिवीमग्निमोषधिवनस्पतीन् ऋग्वेदं भूरिति । १७

तस्य द्वितीयया स्वरमात्रया अन्तरिक्षं वायुं यजुर्वेदं भुवइति । १८

तस्य तृतीयया स्वरमात्रया दिवमादित्यं सामवेदं स्वरिति । १९

तस्य वकारमात्रयाऽऽपश्चन्द्रमसमथर्ववेदं नक्षत्राण्योमिति स्वमात्मानं जनयदित्यङ्गिरसामानुष्टुभं छन्दः । २०

२–**केवलादोङ्काराद्वेदोत्पत्तिमाह**–स्मृतिसमुच्चये–३२६–पत्रे १०–अ. वृद्धहारीतः ।

ओंकारः स्यात् परं ब्रह्म सर्वमन्त्रेषु नायकः ।
त्र्यक्षरं तत् त्रयाणाञ्च वेदानां बीजमुच्यते ॥ ३५ ॥
अजायन्त ऋचः पूर्वमकाराद्विष्णुवाचकात् ।
श्रीवाचकादुकारात्तु यजूंषि तदनन्तरम् ॥ ३६ ॥

३–**अथर्ववेदीयमुण्डकोपनिषदि**–२–मुण्डके च यथा—

तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवोदक्षिणाश्च ।
संवत्सरं च यजमानश्च लोकाः सोमोयत्र पवते यत्र सूर्यः ॥ ६ ॥

४–**स्मृतिसमुच्चये वृद्धहारीतस्मृतौ**–२४९–पत्रे–६–अध्याये यथा—

सर्वेषामेव मन्त्राणां कारणं प्रणवः स्मृतः ।
तस्माद्व्याहृतयोजातास्ताभ्योवेदत्रयं तथा ॥ ८८ ॥
भूरित्येव हि ऋग्वेदोभुवइति यजुस्तथा ।
स्वरिति सामवेदः स्यात् प्रणवोभूर्भुवः सुवः ॥ ८९ ॥

इत्थं च भगवतोवेदस्य परमपुरुषाद्वा प्रणवमहाव्याहृतिभ्योऽप्याविर्भावं भावयेत् ॥ इति ॥ ( ५।६ सं. )

७–साम्प्रतं च वेदस्य **परमपुरुषनिःश्वासरूपतां** प्रतिपादयामि यथा—

बृहदारण्यकोपनिषदि–२–अध्याये–४–ब्राह्मणे–१७१–पत्रे–१० सूत्रं यथा—अस्य महतोभूतस्य निश्वसितमेतद्यदृग्वेदोयजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि ॥ १० ॥

## ॥ आर्यविद्यासुधाकरग्रन्थस्थं परिशीलनम् ॥

८—इतोऽप्यधिकत्वेन वेदस्य पौरुषेयत्वजिज्ञासुना स्वर्गस्थाऽस्मच्छास्त्राऽध्यापक गुरुमहामहोपाध्यायरामकृष्णशास्त्रिमहोदयानां गुरुपितृपादैः श्रीयज्ञेश्वरशास्त्रि-महोदयैः सङ्ग्रथिताऽऽर्यविद्यासुधाकरनामकं पुस्तकमप्येतत्सिद्धान्त-द्योतकम् प्रेक्षणीयमित्यलं भूयसा ।

एतदुपरितनोल्लेखश्रमश्च साम्प्रतिकानां वेदेष्वमान्यमतीनामतिकलुषितनास्तिक-धियां वेदाऽप्रामाण्यवादिनाममानदानायैवाऽत्र विहितोऽपि तु न स्वविद्या-प्रागल्भ्यायेति वेदानुसारिभ्योविज्ञापयामि ॥ इति—द्वि. प. ५—वि. सर्वोपि सं. ॥

---

द्वि. प. वि. ६—**अथ**कुसच्छिष्यनिदर्शकं **श्रीमद्गुरुदैवतपरिशिष्टम्** श्री सटीकशारदातिलके १ पटले ११ पत्रे—

६।१—श्रीमङ्गलम् ॥ संसारसिन्धोस्तरणैकहेतून्

दधे गुरून् मूर्ध्नि शिवस्वरूपान् ।

रजांसि येषां पदपङ्कजानां

तीर्थाभिषेकश्रियमावहन्ति ॥ ३ ॥

अत्रभाष्यम् ॥ यस्य देवे परा भक्ति यथा देवे तथा गुरौ ।

तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः ॥

इत्यागमात् परदेवताभक्तिवद्गुरुभक्तेरपि विद्याप्राप्तावन्तरङ्गसाधनत्वावगमात् परदेवतायाः स्मरणानन्तरं गुरुनमस्कारमाह,—संसारेति ।

शिवस्वभावान् गुरुन् मूर्ध्नि दधे—इत्यन्वयः । शिवस्वभावान् शिवस्वरूपानित्यर्थः । एतेन गुरुध्यानं तत्तद्देवतारूपतया कर्त्तव्यमित्युक्तं भवति ।

तदुक्तम्—गुरुं न मर्त्यं बुध्येत यदि बुध्येत तस्य तु ।

कदापि च भवेत् सिद्धिर्न मन्त्रैर्देवपूजनैः ॥ इति ॥

अन्यत्रापि—तस्मादेवं विदित्वा तु गुरुं देवञ्च नान्यथा ।

त्रिकालप्रणिपातेन ध्यानयोगेन संयजेत् ॥ इति ॥

अन्यत्रापि—ललाटे नयनं चान्द्रीं कलामपि च दोर्द्वयम् ।

अन्तर्निधाय वक्ष्यामि गुरुर्मर्त्यैं महीयते ॥ इति ॥

**मूर्ध्नि दधे** इत्यनेन **गुरुध्यानं मूर्धनि कर्त्तव्यमित्युक्तं** भवति। तदुक्तम्—

प्रातः शिरसि शुक्लेऽब्जे द्विनेत्रं द्विभुजं गुरुम् ।

प्रसन्नवदनं शान्तं स्मरेत्तन्नाम पूर्वकम् ॥ इति ॥

अन्यत्रापि—श्रीमद्गुरुपदाम्भोजं मूर्द्धन्येव सदास्थितम् ।

यः स्मरेत् सात्त्विकैर्भावैः सोऽचिरात् खेचरोभवेत् ॥ इति ॥

कीदृशान् संसारसिन्धोस्तरणैकहेतून्। अनेन विना गुरूपदेशं—संसारतरणमशक्यमित्यप्युक्तम्। तथा च श्रुतिः—"आचार्य्यवान् पुरुषोवेद" "सगुरुमेवाभिगच्छेत्" इति ॥

आगमश्च—अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।

चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ इति ॥

**गुरुप्रणाममाहात्म्यमाह** रजांसीति। एतेन पादोपसङ्ग्रहणपूर्व्वकं गुरुनमस्कारः कर्त्तव्यः—इत्युक्तं भवति ॥ इति ॥ ( ६-१-वि. सं. )

## ६।२—॥ अनर्हशिष्यविषये ॥

कुलार्णवतन्त्रे—१३—उल्लासारम्भतः—११८—पत्रतः—श्रीशिवं प्रति श्रीजगदम्बिकाप्रश्ने—श्रीशिवोक्तोत्तरं यथा—

**देव्युवाच।**

१—कुलेश—श्रोतुमिच्छामि करुणामृतवारिधे ।

वक्तुमर्हसि देवेश लक्षणं गुरुशिष्ययोः ॥ १ ॥

**ईश्वरउवाच।**

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।

तस्य श्रवणमात्रेण गुरुभावः प्रजायते ॥ २ ॥

नष्टान्नयवजं क्षेत्रं गुणहीनं निरूपितम् ।

परशिष्यञ्च पाषण्डं षण्डं पण्डितमानिनम् ॥ ३ ॥

हीनाधिकविकाराङ्गं विकलावयवान्वितम् ।

पङ्गुमन्धञ्च बधिरं मलिनं व्याधिपीडितम् ॥ ४ ॥

उत्सृष्टं दुर्मुखं चापि स्वेच्छावेशधरं परम् ।

दुर्विकाराङ्गचेष्टादिगतिभीषणभीषणम् ॥ ५ ॥

निद्रातन्द्राजडालस्यद्यूतादिव्यसनान्वितम् ।

अन्तर्भक्तिकरं क्षुद्रं **राज्यभक्तिविवर्जितम्** ॥ ६ ॥

व्यलिकवादिनं शुष्कं प्रेषितं प्रेरकं शठम् ।

धनस्त्रीशुद्धिरहितं निषेधविधिवर्जितम् ॥ ७ ॥

रहस्यभेदकं वापि देवि कार्य्यविनाशकम् ।

मार्जारबकवृत्तिञ्च रन्ध्रान्वेषणतत्परम् ॥ ८ ॥

मायाविनं कृतघ्नञ्च प्रच्छन्नान्तरदायकम् ।
विश्वासघातिनं द्रोहकारिणं पापकर्मिणम् ॥ ९ ॥
आततायिनमेकाक्षं कुत्सितं कूटसाक्षिणम् ।
सर्वप्रतारकं देवि सर्वोत्कृष्टाभिमानिनम् ॥ १० ॥
असत्यं निष्ठुरासक्तं ग्राम्यादिबहुभाषिणम् ।
कुविचारकुतर्कादिकारकं कलहप्रियम् ॥ ११ ॥
वृथाक्षेपकरं मूर्खं चार्वाकं वाग्विडम्बकम् ।
परोक्षे दूषणकरं प्रत्यक्षे प्रियवादिनम् ॥ १२ ॥
वाग्ब्रह्मवादिनं विद्याचौरमात्मप्रशंसकम् ।
गुणासहिष्णुमहितमात्मक्रोधनमम्बिके ॥ १३ ॥
इत्यादिदोषसयुक्तं गुरुः शिष्यं न कारयेत् । ( ६–२।१ वि. सं.)

## ६–२।२–अपरं च कुशिष्यलक्षणम्—

सटीकप्रपञ्चसारे–३६ पटले ३७८ पत्रे ४२ श्लोकतोयथा—

अलसं मलसंक्लिन्नं क्लिष्टं कष्टान्यवायजम् ।
दम्भान्वितमगम्भीरं चण्डं पण्डितमानिनम् ॥ ४२ ॥
रागिणं रोगिणं भोगलालसं बालसम्मितम् ।
रौद्रं दरिद्रं निद्रालुमायूनं क्षुद्रचेष्टितम् ॥ ४३ ॥
नृशंसमन्धं बधिरं पङ्गुं व्यङ्गममङ्गलम् ।
अतिदीर्घमतिह्रस्वमतिस्थूलं कृशात्मकम् ॥ ४४ ॥
परदारपरं भीरुं दारुणं वैरिणं सताम् ।
तुच्छं त्वलब्धवैराग्यं स्तब्धं लुप्तकबान्धवम् ॥ ४५ ॥
आदित्सुं कुत्सितं वत्सं बीभत्सं मत्सरात्मकम् ।
सुखिनं मुखरं दुष्टं दुर्मदं मूर्खमानसम् ॥ ४६ ॥
प्रत्यग्रमुग्रं व्यग्रहेमग्रगण्यं दुरात्मनाम् ।
भ्रष्टव्रतं तमःस्पृष्टं क्लिष्टमिष्टापहं नृणाम् ॥ ४७ ॥
स्वार्थकृत्ये प्रसक्तार्थं निरर्थारम्भणं शठम् ।
ईदृग्विधं गुरुः शिष्यं न गह्णीयात् कथञ्चन ॥ ४८ ॥
यदि गृह्णाति तद्दोषः प्रायोगुरुमपि स्पृशेत् ।
॥ मन्त्रिदोषोयथा राज्ञि पत्यौ जायाकृतोयथा ॥ ४९ ॥

तथा शिष्यकृतोदोषोगुरुमेति न संशयः ।
स्नेहाद्वा लोभतोवापि योऽनुगृह्णाति दीक्षया ।
तस्मिन् गुरौ सशिष्ये तु देवताशापआपतेत् ॥ ५० ॥ इति ॥
( ६-२।२ सं. )

६-३।१-**सच्छिष्यलक्षणमुक्तं**-कुलार्णवे-११ उल्लासे १०२ पत्रे--**चक्रधर्म-**
कथने यथा—
रिपुणापि न कर्त्तव्योवाग्वादश्चक्रमध्यतः ।
पितृमातृसमं पश्येत्तेनोक्तं परुषं सहेत् ॥
यथा दृष्वा प्रहृष्येत स्वजनं मित्रसुप्रियम् ।
तथा च कौलिकान् दृष्टवा सभवेद्योगिनीप्रियः ॥
ब्रह्मादिस्तम्बपर्य्यन्तं यस्य मे गुरुसन्ततिः ।
तस्य मे सर्वशिष्यस्य कोन पूज्योमहीतले ॥
इतिनिश्चितबुद्धिर्यः सभवेदावयोः प्रियः ।
अहं गुरुरहं ज्येष्ठस्त्वहं वेद्मीति गर्वितः ॥
अहमेव गतिर्येषां कौलिकान भवन्ति ते ।
श्रीगुरुं कुलशास्त्राणि पूज्यस्थानानि यानि च ॥
भक्त्या श्रीपुर्वकं देवि प्रणम्य परिकीर्त्तयेत् ।
गुरुं नाम्ना न भाषेत जपकालादृते प्रिये ॥
श्रीनाथदेवस्वामीति विवादे साधने वदेत् ।
श्रीगुरोः पादुकां देवि मूलमन्त्रं स्वपादुकाम् ॥
शिष्यादन्यत्र देवेशि न वदेद्यस्य कस्यचित् ।
पारम्पर्य्यं समास्थाय मन्त्राचारादिकं प्रिये ॥
सर्वं गुरुमुखाल्लब्धं सफलं स्यान्नचान्यथा ।
श्रीशास्त्राश्रयभूतञ्च पुस्तकं परमेश्वरि ॥
नित्यं समर्चयेद्भक्त्या पशुहस्ते न निक्षिपेत् ।
स्वदारवन्निषेवेत कुशास्त्राणि पार्वति ॥
पशुशास्त्राणि सर्वाणि वर्जयेत् परदारवत् ।
श्वचर्मस्थं यथा क्षीरमपेयं स्याद् द्विजोत्तमैः ॥
तथा पशुमुखात् सर्वं न श्रोतव्यं हि कौलिकैः ।
यः श‍ृणोति कुलाचारं यथाशास्त्रञ्च योवदेत् ॥

तावुभौ गच्छतः साक्षाद्योगिनीवीरमेलनम् ।
अश्रद्दधानाये चात्र कुलधर्मं कुलेश्वरि ॥
नरकान्नोनिवर्त्तन्ते यावदाभूतसम्प्लवम् । इति ॥ ( ६–३।१ वि. स. )

## ६–३।२–सच्छिष्यलक्षणम् ॥

अत्रैव, प–क–सूत्रे. १–खण्डे–दीक्षाविधौ–३१-पत्रे–यथा—
सच्छिष्ये रहस्यकथनम्–१६–सूत्रम्–
अत्र भाष्य यथा–

कर्तव्यमिति शेषः । परिसङ्ख्याविधिरयम् । आत्मरहस्यं न वदेदितिनिषेधस्यापवादोऽयं नतु गुप्त्यार्चनमित्यस्यापवादः, तथासति शिष्यातिरिक्तेषु सामयिकेषु पूजाप्राकट्यानापत्तेः । अतइदमात्मरहस्यं स्वसिध्धान्तरूपं सामायिकेषु शिष्यभिन्नेषु न कथयेत् । सच्छिष्ये कथयेदित्यर्थः ।

## ६–३।३–शिष्ये सत्वं प्रतिपादितं तन्त्रराजे—

सुन्दरः सुमुखः स्वच्छः श्रद्धावानू सुस्थिराशयः ।
अलुब्धःस्थिरगात्रश्च प्रेक्ष्यकारी जितेन्द्रियः ॥
आस्तिकोदृढभक्तिश्च गुरौ मन्त्रेऽथ दैवते ।
एवंविधोभवेच्छिष्यइतरोदुःखकृद्गुरोः ॥ इति ॥

## ६–३।४–आत्मपुराणेऽपि—

ब्रह्मविद्यातिसंखिन्ना ब्रह्मिष्ठंब्राह्मणं यथौ ।
गोपाय मां सदैव त्वं कुलजामिव योषितम् ॥
इत्यारभ्य
एवमाद्यायेषु दोषास्तेभ्योवर्जय मां सदा ।
एवं हि कुर्वतोनित्यं कामधेनुरिवास्मि ते ॥ इति ॥

## ६–३।५–सच्छिष्यधर्मः अथवा तत्कर्तव्यता–॥

कुलार्णवतन्त्रे १२ उल्लासे १११ पत्रतः उल्लाससमाप्तिं यावत् श्रीमच्छिवोक्तिर्यथा–
गुर्वर्थं धारयेद्देहं गुर्वर्थं धनमर्जयेत् ।
निजप्राणान् परित्यज्य गुरुकार्य्यं समाचरेत् ॥
गुरूक्तं परुषं वाक्यमाशिषं परिचिन्तयेत् ।
तेन सन्ताडितोवापि प्रसादमिति संस्मरेत् ॥

भोगभोज्यानि वस्तूनि गुरवे च समर्पयेत् ।
तच्छेषमिति सञ्चिन्त्य चानुभूयात् सुरेश्वरि ॥
गुर्वग्रे न तपः कुर्य्यान्नोपवासादिकं व्रतम् ।
तीर्थयात्रां न कुर्य्याच्च न स्नायादात्मशुद्धये ॥
न नियोगं गुरौ दद्याद् युष्मदा नैव भाषयेत् ।
ऋणदानं तथादानं वस्तूनां क्रयविक्रयौ ॥
न कुर्यादूगुरुभिः  सार्द्धं शिष्योभूत्वा कदाचन ।
न कुर्य्यान्नास्तिकैः सार्द्धं सम्भाषणमपीश्वरि ॥
विलोक्य दूरतोगच्छेन्नासीत सह तैः क्वचित् ।
गुरौ सन्निहिते यस्तु पूजयेदन्यमम्बिके ॥
स याति नरके घोरे सा पूजा निष्फला भवेत् ।
शिरसा न बहेद्भारं गुरुपादाब्जधारिणा ॥
तदाज्ञया तु कर्त्तव्यमाज्ञारूपोगुरुः स्मृतः ।
मन्त्रागमाद्यमन्यत्र श्रुतं तस्मै निवेदयेत् ॥
गुर्वाज्ञया तु गृह्णीयात्तदानिष्टं विवर्जयेत् ।
स्वशास्त्रोक्तं रहस्याद्यं न वदेद्यस्य कस्यचित् ॥
यदि ब्रुयात् ससमया वाच्यएव न संशयः
अद्वैतं भावयेन्नित्यमद्वैतं गुरुणा सह ॥
आत्मवत् सर्वभूतेषु हितं कुर्य्यात् कुलेश्वरि ।
आत्मात्ममान्यसद्भावैः सुक्रिया स्याच्चतुर्विधा ॥
शुश्रूषया धिया देवि शिष्यः सन्तोषयेद्गुरुम् ।
पदे पदेऽश्वमेधस्य फलं माप्नोत्यसंशयः ॥
शुश्रूषणपरोयस्तु गुरुदेवमहात्मनाम् ।
केवलं गुरुशुश्रषा त्वत्कृपाकारिणी प्रिये ॥
तद्भक्तिसहिताः सर्वे सर्वकामफलप्रदाः ।
क्षीयन्ते  सर्वपापानि वर्द्धन्ते पुण्यराशयः ॥
सिध्यन्ति सर्वकार्य्याणि गुरुशुश्रषया प्रिये ।
यद्यदात्महितं वस्तु तत्तद्धितमुपाचरेत् ॥
गुरुदेवार्च्चकोयस्तु तस्य पुण्यं न गण्यते ।
भक्त्या वित्तानुसारेण गुरुमुद्दिश्य यत् फलम् ॥

अल्पे महति वा तुल्यं पुण्यमाढ्यदरिद्रयोः ।
सर्वस्वमपि योदद्यादूगुरौ भक्तिविवर्जतः ॥
शिष्योन फलमाप्नोति भक्तिरेव हि कारणम् ।
यस्मिन् द्रव्ये गुरोरस्ति स्पृहा नानुभवेत्तु तत् ॥
अवश्यं यदि चेच्छा स्यादनुभूयात्तदाज्ञया ।
यस्तिलार्द्धं तदर्द्धं वा गुरुस्वमुपजीवति ॥
लोभान्मोहात् सपच्येत नरके च त्रिसप्तकम् ।
अत्यल्पं हि गुरुद्रव्यमदत्तं स्वीकरोति यः ॥
तिरश्चां योनिमापन्नः क्रव्यादैर्भक्षयेत् प्रिये ।
गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः ॥
पतितस्य खलु तस्य प्रायश्चितं न विद्यते ।
आज्ञाभङ्गोऽर्थहरणं गुरोरप्रियदर्शनम् ॥
गुरुद्रोहमिदं प्राहुर्यः करोति स पातकी ।
सुद्रव्यविनियोगश्च नानिवेद्य गुरोश्चरेत् ॥
अनिवेद्य तु यः कुर्यात् सभवेद् ब्रह्मघातकः ।
गुरोः स्थानसम्प्रदाये तद्धनं योविनाशयेत् ॥
गुरुभिः सबहिष्कार्य्योदण्डयोऽधन्यः सपातकी ।
गुरुकोपाद्विनाशोऽन्योगुरुद्रोहान्न पातकम् ॥
न मृतिर्गुरुनिन्दायागुर्वनिष्टान्न चापदः ।
जीवदग्निप्रविष्टोवा नरः पीतविषोऽपि वा ॥
मृत्युहस्तगतोवापि नापराधकरोगुरौ ।
यत्र श्रीगुरुनिन्दा स्यात् पिधाय श्रवणेऽम्बिके ॥
सद्यस्तस्मादुपक्रामेद्दूरं न श्रृणुयाद् यथा ।
गुरोर्नाम जपेत् पश्चात् श्रवणे सा प्रतिक्रिया ॥
गुरुमित्रसुहृत्पत्नीपुत्राद्यं नावमानयेत् ।
न निन्देदस्य समयान्नैतच्छास्त्रागमादिकान् ॥
गुरुश्रीपादुकापूजा गुरुनामस्स्मृतिर्जपः ।
गुर्वाज्ञाकरणं कृत्यं शुश्रुषा भजनं गुरोः ॥
विविक्षुर्देशिकोभूयात् शान्तचित्तोऽतिभक्तिमान् ।
वाहनं पादुका छत्रं चामरं व्यजनादिकम् ॥

ताम्बूलमूलकोष्णीषमुत्सृज्य प्रविशेच्छनैः ।
पादुकामासनं वस्त्रं वाहनं छत्रचामरम् ॥
दृष्ट्वा गुरोर्नमस्कुर्य्यान्नानुभोगाय कामयेत् ।
पादप्रक्षालनं स्नानं अभ्यङ्गं दन्तधावनम् ॥
मूत्रनिष्ठीवनं क्षौरं शयनं स्त्रीनिषेवणम् ।
वीरासनं सुदुर्वाक्यं शासनं हास्यरोदनम् ॥
केशमोचनमुष्णीषं कञ्चुकं नग्नतां तथा ।
पादप्रसारणं वादकलहं दुषणं प्रिये ॥
अङ्गभङ्गाङ्गवाद्यादिकरास्फालनधूननम् ।
द्यूतकुक्कुटमल्लादियुद्धमित्यादि चाम्बिके ॥
गुरुयोगिमहासिद्धिपीठक्षेत्रायुमेषु च ।
मा चरेदाचरेन्मोहाद्देवताशापमाप्नुयात् ॥
उपचारेण सन्तिष्ठेद्गुर्वग्रे नेच्छया विशेत् ।
अथावलोकी सेवेत तदुक्तञ्च समाचरेत् ॥
गुरूक्तानुक्तकार्य्येषु नोपेक्षां कारयेत् प्रिये ।
शिरसा यद्गुरुर्ब्रूयात् तत्कार्य्यमविचारतः ॥
निग्रहोऽनुग्रहोवापि गुरुः सर्वस्य कारणम् ।
निर्गतं यद्गुरोर्वक्त्रात् सर्वं शास्त्रं तदुच्यते ॥
गुरुकार्य्ये स्वयं शक्तोनापरं प्रेषयेत् प्रिये ।
बहुत्वे तत्परैर्भृत्यैः सहितोऽप्यतिभक्तिमान् ॥
गच्छन् तिष्ठन् स्वपन् जाग्रत् जपन् जुह्वत् प्रपूजयन् ।
गुर्वाज्ञामेव कुर्वीत तद्गतेनान्तरात्मना ॥
अभिमानोन कर्त्तव्योजातिविद्याधनादिभिः ।
सदा च निवसेन्नित्यं शिष्यः श्रीगुरुसन्निधौ ॥
कामक्रोधपरित्यागी विनीतः स्तुतिभक्तिमान् ।
देवि भूम्यासने तिष्ठन् गुरुकार्य्यं समाचरेत् ॥
स्वकार्य्यमन्यकार्य्यं वा शिष्यः स्वगुरुचित्तवित् ।
गुरुपार्श्वगतोनम्रः प्रच्छन्नास्योमितं वदेत् ॥
सामान्यतोनिषेधञ्च सद्गुरोर्यदि सन्निधौ ।
आचरेत्तस्य सर्वस्यदोषः कोटिगुणोभवेत् ॥

अनादृत्य गुरोर्वाक्यं श्रृणुयाद्यः पराङ्मुखः ।
अहितं वाहितं वापि रौरवं नरकंव्रजेत् ॥
गोब्राह्मणवधं कृत्वा यत्पापं समवाप्नुयात् ।
तत्पापं समवाप्नोति गुर्वग्रेऽनृतभाषणात् ॥
आत्मनान्तगतेनाथ व्यसने विषमे स्थिते ।
श्रीगुरुं न त्यजेत् क्वापि तदादिष्टोव्रजेत् प्रिये ॥
न गच्छेदग्रतस्तस्य न वसेदुत्थिते गुरौ ।
शक्तिच्छायां सुरच्छायां गुरुच्छायां न लङ्घयेत् ॥
न तेषु कुर्य्यात् स्वच्छायां न स्वपेद् गुरुसन्निधौ ।
भाषणं पाठनं ज्ञानं भोजनं शयनादिकम् ॥
अनादिष्टोन कुर्वीत न चावन्दनपूर्वकम् ।
ब्रह्महत्याशतं कुर्य्याद् गुर्वाज्ञां प्रतिपालयेत् ॥
विना गुर्वाज्ञया शिष्योविश्वसेन्नान्यशासनम् ।
सर्वं गुर्वाज्ञया कुर्य्यान्न निन्देत् तस्त्रियं प्रिये ॥
भक्त्या प्रणम्य चोत्तिष्ठेत् कृताञ्जलिपुटः प्रिये ।
पश्चात्पदेन निर्गच्छेन्नमस्कृत्य गुरोर्गृहात् ॥
एकासने नोपविशेद् गुरुणा तत्समैः सह ।
न वसेदासने देवि देवतागुरुसन्निधौ ॥
गुरोः श्रेष्ठासनं देयं ज्येष्ठानामुत्तमासनम् ।
देश्यासनं कनिष्ठानामितरेषां समासनम् ॥
यदि विद्याधनाढ्योवा दूरे दृष्ट्वा स्तवादिना ।
दण्डप्रणामं कुर्वीत त्रिः प्रदक्षिणमाचरेत् ॥
तत् त्रिंशद्वा द्वादश वा ज्येष्ठादिष्वेकमेव च ।
गुरुस्तद्गुरुयोगेन वन्देत् श्रीगुरुपादुकाम् ॥
ततोनमेद्गुरुं वापि गुर्वाज्ञां न विचारयेत् ।
श्रीगुरोः सन्निधौ शिष्योन गुरुं मनसा नमेत् ॥
गुरुबुद्ध्या नमेत् सर्वं देवतां तृणमेव वा ।
न नमेद्देवबुद्ध्या तु प्रतिमां लौहमृण्मयीम् ॥
गुरोः प्रणामत्रितयं ज्येष्ठानामेकमेव च ।
पूज्यानामञ्जलिं तद्वदन्येषां वाक्यवन्दनम् ॥

देवान् पितॄन् कुलाचार्य्यान् ज्ञानवृद्धान् तपोधनान् ।
विद्याधिकान् स्वकर्मस्थान् **प्रणमेत् कुलनायिके** ॥

**एतान्न नमेत्** स्त्रीजितं गुरुभिः शप्तं पाषण्डं पण्डितं शठम् ।
विकर्माणं कृतघ्नञ्च नाश्रमिणञ्च नो नमेत् ॥
अनिवेद्य गुरौ भुङ्क्ते यस्त्वेकगृहसंस्थितौ ।
अमेध्यं तद्भवेदन्नं शूकरोजायते मृतः ॥
एकग्रामस्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद्गुरुम् ।
क्रोशमात्रस्थितः शिष्यो**गुरुं प्रतिदिनं नमेत्** ॥
अर्द्धयोजनगः शिष्यः प्रणमेत् पञ्चपर्वसु ।
एकयोजनमारभ्य योजनद्वादशावधिम् ॥
तत्सङ्ख्यादिगतैर्मासैः श्रीगुरुं प्रणमेत् प्रिये ।
दूरदेशे स्थिते शिष्ये भक्त्या तत्सन्निधिं गतः ॥
तत्र योजनसङ्ख्यातोविशेषात् प्रणमेदगुरुम् ।
अतिदूरगतः शिष्योयदेच्छा स्यात्तदाव्रजत् ॥
रिक्तहस्तश्च नोपेयाद्राजानं देवतां गुरुम् ।
फलपुष्पाम्बराकल्पैर्यथाशक्त्या समर्च्चयेत् ॥
एवं योन चरेद्देवि ब्रह्मराक्षसतां व्रजेत् ।
॥ गुरुशक्तिश्च तत्पुत्रोज्येष्ठभ्राता गुरोः समः ॥
आत्मवच्च कनीयांसं पालयेत् पुत्रवत् कुलम् ।
कुलाचार्य्यस्य देवेशि गुरुज्येष्ठकनिष्ठयोः ॥
गुरुकल्पस्य कुर्वीत प्रणामं स्वगुरोर्यथा ।
स्वज्येष्ठश्च क्रमज्येष्ठः कुलज्येष्ठस्तृतीयकः ॥
गुरुज्येष्ठस्ततोदेवि इति **ज्येष्ठचतुष्टयम्** ।
यावद्ज्येष्ठानुवादेन क्रमिकाष्टाङ्गयोगतः ॥
गुरोश्च कुलवृक्षस्य वन्दनानि विधानतः ।
पितृमात्रादिसर्वेषु पूज्यकोटिषु बन्धुषु ॥
अभ्युत्थानप्रणामाद्यैरव्यग्रक्रोधलाघवैः ।
तद्यदाचार्यरूपेण चात्मानं सम्प्रकाशयेत् ॥
अभ्युत्थानप्रणामाद्यैर्द्वेषभाक् सन जायते ।
पतिर्भूत्वा पशुन् पश्चात प्रणमेत पशुदेशिकः ॥

समहापशुरित्युक्तोदेवताशापमाप्नुयात् ।
योगुरुस्थानमालम्ब्य गुरुदाराभिवन्दनम् ॥
गुरुवत् सतु मन्तव्योज्येष्ठपुत्रेषु च प्रिये ।
इति ते कथितं किञ्चित् पादुकाभक्तिलक्षणम् ।
समासेन कुलेशानि किम्भूयः श्रोतुमिच्छसि ॥

॥ इति श्रीकुलर्णावे महारहस्ये पादुकाकथनं नाम द्वादशोल्लासः ॥ (६।३ वि सं.)

## ६/४—अन्यत् सच्छिष्यलक्षणम् ॥

सटीकशारदातिलके—२—पटले १२२ पत्रे—यथा—

॥ शिष्यः कुलीनः शुद्धात्मा पुरुषार्थपरायणः ।
अधीतवेदः कुशलोदूरमुक्तमनोभवः ॥ ॥ १४५ ॥
हितैषी प्राणिनां नित्यमास्तिकस्त्यक्तनास्तिकः ।
स्वधर्म्मनिरतोभक्त्या पितृमातृहितोद्यतः ॥ १४६ ॥
वाङ्मनःकायवसुभिर्गुरुशुश्रूषणे रतः ।
त्यक्ताभिमानोगुरुषु जातिविद्याधनादिभिः ॥ १४७ ॥
गुर्व्वाज्ञापालनार्थं हि प्राणव्ययरतोद्यतः ।
विहत्य च स्वकार्य्याणि गुरुकार्य्यरतः सदा ॥ १४८ ॥
दासवन्निवसेद्यस्तु गुरौ भक्त्या सदा शिशुः ।
कुर्व्वन्नाज्ञां दिवारात्रौ गुरुभक्तिपरायणः ॥ १४९ ॥
आज्ञाकारी गुरोः शिष्योमनोवाक्कायकर्म्मभिः ।
योभवेत् सतदा ग्राह्योनेतरः शुभकाङ्क्षया ॥ १५० ॥
मन्त्रपूजारहस्यानि योगोपयति सर्व्वदा ।
त्रिकालं योनमस्कुर्य्यादागमाचारतत्त्ववित् ॥ १५१ ॥
सएव शिष्यः कर्त्तव्योनेतरः स्वल्पजीवनः ।
एतादृशगुणोपेतः शिष्योभवति नापरः ॥ १५२ ॥
॥ एकाब्देन भवेद्योग्योब्राह्मणोऽब्दद्वयान्नृपः ।
वैश्योवर्षैस्त्रिभिः शूद्रश्चतुर्भिर्वत्सरैर्गुरोः ॥
सशुश्रूषुः परिग्राह्योदीक्षायागव्रतादिषु ॥ १५३ ॥ इति ॥

**मन्त्रविद्यादिदानार्हः शिष्यः—** ॥

अत्र भाष्यम्—**शिष्यलक्षणमाह,** शिष्य—इति। कुलीनः शुद्धमातृपितृजः। अन्यथा कुण्डगोलादेरशुचित्वात् सर्व्वदा स्प्रष्टव्यत्वाभावात्। शुद्धात्मा अक्रूरचित्तः। क्रूरस्य विद्यानुपदेशात्। यत् श्रुतिः—

विद्या ह वै ब्राह्मणमाजगाम। गोपाय मा शेवधिष्टेऽहमस्मि।
असूयकायाऽनृजवेऽयताय न मा ब्रूया वीर्य्यवती तथा स्याम् ॥ इति ॥

॥ पुरुषार्थपरायणः, अनेनास्य व्यसनहीनतोक्ता अन्यथा उपदेशानर्थक्यात्। अधीतवेदः—इत्यनेनास्य शुद्धतोक्ता। यदुक्तम्—

योऽनधीत्य द्विजोवेदमन्यत्र कुरुते श्रमम्।
सजीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ इति ॥ मनुः—

कुशलः, अमुग्धः। मुग्धस्य मन्त्रबोधनाक्षमत्वात्। दूरमुक्तमनोभवः, कामिनः सपापत्वादशुद्धचित्तत्वात् मन्त्राराधनानधिकारः। हितैषी प्राणिनां नित्यम् इति। अन्यथा उपदिष्टमन्त्रात् अभिचारादिकर्म्मरतस्य तस्य पापं गुरुमपि स्पृशेत्।

आस्तिकः-अस्ति परलोकइति बुद्धिर्यस्य, अन्यथा नास्तिकतायां मन्त्रदेवतानाराधनात् गुरौ देवताकोपः भवेत्। त्यक्तनास्तिकः, नास्तिकसंसर्गत्यागी, अन्यथा संसर्गजोदोषः स्यात्। स्वधर्म्मनिरतः आचारवान्-अनाचारिणोऽनधिकारात्। भक्त्या मातृपितृहितोद्यतोन तु दम्भादिना। असावेवास्य परमोधर्म्मउक्तोव्यासादिभिः।

वाङ्मनः—इत्यादिना अवञ्चकतोक्ता। एतादृशः—इत्यनेन युवा विनियताशेषकरणः करुणालयः। इत्यादि ग्रन्थान्तरोक्तं द्रष्टव्यम् ॥ ( ६।४ वि. सं. )

६—यत् प्रयोगसारे—तत्रापि भक्तियुक्ताय पुत्राय वसुदाय च। इति।

५
॥ ६—नारायणीयेऽपि— सच्छिष्यलक्षणम्—
६

॥ कुर्व्वन्नाचार्य्यशुश्रूषां मनोवाक्कायकर्म्मभिः।
शुद्धभावोमहोत्साहोबोद्धा **शिष्य—इति स्मृतः** ॥
नतूपदेश्यः पुत्रश्च व्ययी वसुदस्तथा ॥ इति ॥

**अनर्हः शिष्यः—शिष्यपरीक्षावश्यत्वं च—**

नापर—इत्यनेनाऽन्यस्य निषेधउक्तः। तथा चान्यत्र शिष्यदोषानुक्त्वा

एवमादिगुणैर्युक्तं न शिष्यन्तु परिग्रहेत्।
गृह्णीयाद्, यदि तद्दोषः प्रायोगुरुमपि स्पृशेत् ॥

॥ अमात्यदोषोराजानं पतिं जायाकृतोयथा ।
तथा ।शिष्यकृतोदोषोगुरुं प्राप्नोत्यसंशयः ॥
स्नेहाद्वा लोभतोवापि यदि गृह्णाति दीक्षया ।
तस्मिन् गुरौ सशिष्ये तु देवताशापआपतेत् ॥
तस्माच्छिष्यं गुरुर्नित्यं परीक्ष्य तु परिग्रहेत् ॥ इति ॥
( ६–६–वि. सं. )

॥ ६/७–भुवनेशीपारिजातेऽपि–

अशिष्ये कथयेद् यस्तु समहापातकी भवेत् । इति ॥

॥ ६/८–सच्छिष्याचारः–ग्रन्थान्तरे तु विशेषः–

॥ गुरूच्यमाने वचने वदेदित्थं वचस्तदा ।
प्रसीद नाथ देवेति तथेति च कृतादरम् ॥
प्रणम्योपविशेत् पार्श्वे तथा गच्छेदनुज्ञया ।
मुखावलोकी सेवेत कुर्य्यादादिष्टमादरात् ॥
असत्यं न वदेदग्रे न वहु प्रलपेदपि ।
कामं क्रोधं तथा लोभं मानं प्रहसनं स्तुतिम् ॥
चापलानि न जिह्मानि कार्य्याणि (नर्म्माणि) परिदेवनम् ।
॥ ऋणदानं तथाऽऽदानं वस्तूनां क्रयविक्रयम् ॥
न कुर्य्याद् गुरुणा सार्द्धं शिष्योभूष्णुः कदाचन ॥ इति ॥

॥ ६/९–प्रयोगसारेऽपि–

॥ गुरुर्माता पिता स्वामी बान्धवाः सुहृदः शिवः ।
इत्याधाय मनोनित्यं भजेत् सर्व्वात्मना गुरुम् ॥
असत्यं न गुरौ ब्रूयाद्गुरुनिन्दां न कारयेत् ।
प्रारब्धां वारयेदन्यैरशक्तस्तत्पदं त्यजेत् ॥
गुरौ यथैव शुश्रूषा गुरुभार्य्यासु ताञ्चरेत् ।
ज्येष्ठांश्च गुरुवत् पश्येत् आत्मवच्च कनीयसः ॥
गुरुणा यद्यदादिष्टमिष्टं वाऽनिष्टमेव वा ।
तदा तदाशु सन्तिष्ठेदकौटिल्येन चेतसा ॥
मनोवाक्कर्म्मभिर्नित्यं पूजयेद्भाविनं गुरुम् ॥ इति ॥

**६-देव्यागमेऽपि** शिवावाक्यम्—
१०

गुरोरग्रे पृथक् पूजामौद्धत्यञ्च विवर्जयेत् ।
दीक्षां व्याख्यां प्रभुत्वादि गुरोरग्रे विवर्जयेत् ॥ इति ॥

तत्रैव—आसनं शयनं वस्त्रं भूषणं पादुकां तथा ।
छायां कलत्रमन्यच्च यत्तत् स्पृष्टं तु पूजयेत् ॥ इति ॥

अन्यत्रापि—यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ ।
यथा गुरौ तथा स्वात्मन्येवं भक्तिक्रमः स्मृतः ॥ इति ॥

(अत्र ६।१० वि. तथा च १५२-श्लो. टी-च-सं.)

**६ -शिष्यस्य परीक्षावधिकालमाह**-एकेति ।
११

१-गुरोर्योग्योभवेद्देवि इति सर्व्वत्र सम्बद्ध्यते । शूद्रश्चतुर्भिरिति ।

**ननु शूद्रस्य दीक्षादौ कथमधिकारः** । इति चेत् मैवम् ।

। वेदाध्ययनतदुक्तकर्म्मस्वेव स्मृतावनधिकारप्रतिपादनादन्यत्राधिकारात् । अतएव शूद्रप्रकरणे स्मृतिः—नमस्कारेण मन्त्रेण पञ्चयज्ञान् न हापयेत् ॥ इति ॥ याज्ञवल्क्यः—

२-मन्त्रास्त्वीश्वरप्रोक्तास्तत्र भगवतैव यथायथमधिकारिता दर्शिता ।

यथा प्रासादमन्त्रप्रकरणे भगवानाह—

स्त्रीशूद्राणामयं मन्त्रोनमोऽन्तस्तु शुभावहः ।
एतज्ज्ञात्वा महासेन चाण्डालानपि दीक्षयेत् ॥ इति ॥

३-पिङ्गलामतेऽपि-चतुर्णां ब्राह्मणादीनां दीक्षां कुर्व्वीत मन्त्रवित् ॥ इति ॥

४-अन्यत्रापि-ब्रह्मक्षत्रविशः शूद्राअर्चायां शुद्धबुद्धयः ।
गुरुदेवद्विजार्चासु र ताः स्युरधिकारिणः ॥ इति ॥

तेन साक्षाद्वैदिकेषु मन्त्रेषु रामषडक्षरसौराष्टाक्षरमन्त्रराजप्रभृतिषु प्रणवादिषु च न तस्याधिकारः । तथा च

५-श्रीपद्मपादाचार्य्यैः प्रणवव्याख्याने-अकारोकारमकारात्मेत्यनेन भेदत्रयेण प्रणवादि-मन्त्रेषु त्रैवर्णिकाएवाधिकारिणोन स्त्रीशूद्राइत्यपि सूचितम्-इत्युक्तम् ।

६-तथा च **नृसिंहतापनीये**—

सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति । सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात् स्त्रीशूद्रः स्मृतोऽधोगच्छति ॥ इति ॥

**७-महाकपिलपञ्चरात्रे** नारायणाष्टाक्षरमधिकृत्योक्तम्-

श्रीवेदमन्त्रतत्परता-यज्ञसाधनं च-वेदमन्त्रा एव तत्र-

॥ न वेदः प्रणवं त्यक्त्वा मन्त्रोवेदसमुच्छ्रितः।

तस्माद्वेदपरोमन्त्रोवेदाङ्गश्चागमः स्मृतः ॥

वश्याकर्षादिकं काम्यं दृष्टादृष्टफलप्रदम्।

वेदेन साध्यते सर्व्वं ग्रहयज्ञादिभिः किल ॥

न वेदेन विना यज्ञाः न यज्ञावेद(मन्त्र) वर्जिताः

तस्माद्वेदः परोमन्त्रोन मन्त्रोवेदमुज्झितः ॥

न मन्त्रे चाधिकारोऽस्ति शूद्राणां नियमः परः।

मन्त्राभावादमन्त्रेण भाषितं सर्व्वकर्म्म हि ॥ इति ॥

८-**नारदपञ्चरात्रे** नारायणाष्टाक्षरमधिकृत्योक्तम्।

ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते।

शूद्रादीनां न तत् श्रोत्रपदवीमपि गच्छति ॥ इति ॥

॥ तथा श्रवणे-त्रपुजतुभ्यां कर्णपूरणं-उच्चारणे जिह्वाच्छेदः-धारणे शरीरभेदः-इति वेद-विषये तस्य, स्मृतिषु दण्डोपदेशादित्यलम्। ( ६।११-१ तः ६।११-८ वि. सं. )

६-११ अन्यत्र वत्सरमात्रं सामान्यतउक्तम्--

९-१

गुरुता शिष्यता वापि तयोर्वत्सरवासतः। इति।

२-सारसङ्ग्रहेऽपि-सद्गुरुः संश्रितं शिष्यं वर्षमेकं परीक्षयेत्। इति।

केचन इदं ब्राह्मणविषयमित्यूचुः।

३-दशपटल्यांतु-

अब्दं परीक्ष्य चार्द्धं वा अन्यथा न कदाचन। इति।

४-प्रयोगसारे तु-वर्षेषु त्रिषु विप्रस्य षट्सु वर्षेषु भूभृतः।

विशोनवसु वर्षेषु परीक्षा तत्र शस्यते ॥

समास्वपि द्वादशसु तेषां ये वृषलादयः। इति ॥ ( ६-११ वि. सर्वः सं. )

६/१२ सिद्धान्तसारसङ्ग्रहे **गुरुदाक्षिणायां विशेषः**-

॥ यथोक्तां दक्षिणां दद्याद् ब्राह्मणः क्षत्रियस्तथा।

द्विगुणां वैश्यवर्य्यस्तु त्रिगुणां शूद्रसत्तमः ॥

चतुर्गुणां प्रयच्छेत मन्त्रासिद्धिविधिच्छया ॥ इति ॥ १५३ ॥

( उपरितन १४५ श्लोकतः १५३ श्लोकभाष्यं ( ६।१२ वि. च. सं.)

६ ॥ गुरुकृतशिष्यपरीक्षा ॥
१३

सटीकप्रपञ्चसारे—३६ पटले ३७७ पत्रे—३२ श्लोकतोयथा—

॥ शिष्यस्तदावर्जनकृद्देहेन द्रविणे न च ॥ ३२ ॥
तस्य पादारविन्दोत्थरजःपटलभूषणः ।
स्नानमप्राप्य न प्राप्यं प्रायोबुद्धिमतेप्सितम् ॥ ३३ ॥
नित्यशः कायवाक्चित्तैस्त्रिद्व्येकाब्दाधिकावधि ।
परिचर्यापरः शिष्यः स्यात् सुसंयतमानसः ॥ ३४ ॥
तं तथाविधमालक्ष्य तथाऽवितथवादिनम ।
मातृतः पितृतः शुद्धं बुद्धिमन्तमलोलुपम् ॥ ३५ ॥
अस्तेयवृत्तिमास्तिक्ययुक्तं मुक्तिकृतोद्यमम् ।
अकलङ्कं मृषाहीनमहीनद्रव्यमानसम् ॥ ३६ ॥
ब्रह्मचर्यरतं नित्यं परिचर्यापरं गुरोः ।
अल्पाशनिद्रं पूजायामनल्पकृतकल्पनम् ॥ ३७ ॥
अधीतवेदं स्वाधीनमनाधिं व्याधिवर्जितम् ।
तरुणं करुणावासं परितोषकरं गुरोः ॥ ३८ ॥
सुवेषमेषणातीतममलं विमलाशयम् ।
सुप्रसन्नमसन्नाङ्गं सदा सन्निहितं गुरोः ॥ ३९ ॥
परोपकारनिरतं विरतं परदूषणे ।
मातृवद्गुरुपत्नीञ्च भ्रातृवत् तत्सुतानपि ॥ ४० ॥
स्मरन्तमस्मराबाधं स्मितोपेतमविस्मितम् ।
**परिग्रहेत् परीक्ष्यैवं शिष्यमेवङ्गुणं गुरुः** ॥ ४१ ॥ इति ॥

(६।१३ वि. सं.)

वि. ६।१४ ॥ **अथाचार्यगुरुलक्षणम्** ॥

॥ उपर्युक्तदुःशिष्यदर्शकश्रीशिवप्रणीतकारिकोक्तं—**लक्षणं गुरुशिष्ययोः**—इत्यत्रोक्तः, **गुरुः कीदृशः कार्यस्तत्र**, गुरुलक्षणे च, कुलार्णवे-१३ उल्लासे-११९ पत्रतोयथा—

६-१४ ॥ श्रीगुरुः परमेशानि शुद्धवेशोमनोहरः ।
१

सर्वलक्षणसम्पन्नः सर्वावयवशोभितः ।
सर्वागमार्थतत्वज्ञः सर्वतन्त्रविधानवित् ॥

लोकसम्मोहनाकारोदेववत्प्रियदर्शनः ।
सुमुखः सुलभः स्वच्छोभ्रमसंशयनाशकः ॥
इङ्गिताकारवित् प्राज्ञः ऊहापोहविचक्षणः ।
अन्तर्लक्ष्योबहिर्दृष्टिः सर्वज्ञोदेशकालवित् ॥
आज्ञासिद्धिस्त्रिकालज्ञोनिग्रहानुग्रहक्षमः ।
वेधकोबोधकः शान्तः सर्वजीवदयाकरः ॥
स्वाधीनेन्द्रियसञ्चारषड्वर्गविजयप्रदः ।
अग्रगण्योऽतिगम्भीरः पात्रापात्रविशेषवित् ॥
शिवविष्णुसमः साधुमनुभूषणभूषितः ।
निर्ममोनित्यसन्तुष्टः स्वतन्त्रोऽनन्तशक्तिमान् ॥
सद्भक्तवत्सलोधीरः कृपालुः स्मितपूर्णवाक् ।
भक्तप्रियः समोदेवि गम्भीरः शिष्टसाधकः ॥
ज्येष्ठोदेवगुरुश्रेष्ठोवनितापूजनोत्सुकः ।
नित्यनैमित्तिके काम्ये रतः कर्मण्यनिन्दिते ॥
वाग्विद्वेषभयक्लेशदम्भाहङ्कारवर्जितः ।
स्वविद्यानुष्ठानरतोधर्मज्ञानार्थदर्शकः ॥
यदृच्छालाभसन्तुष्टोगुणदोषविभेदकः ।
स्त्रीधनादिष्वनासक्तोदुःसङ्गोव्यसनादिषु ॥
सर्वाहम्भावसन्तुष्टोनिर्द्वन्द्वोनियतव्रतः ।
अलोलुपोह्यसङ्गश्च पक्षपाती विचक्षणः ॥
वित्तविद्यादिभिर्मन्त्रयन्त्रतन्त्राद्यविक्रयी ।
निःसङ्गी निर्विकल्पश्च निर्णीतात्मातिधार्मिकः ॥
तुल्यनिंदास्तुतिर्मौनी निरपेक्षोनियामकः ।
**इत्यादिलक्षणापेतः श्रीगुरुः कथितः प्रिये ॥**
यः शिवः सर्वगः सूक्ष्मोनिष्कलश्चोन्मनाव्ययः ।
व्योमाकारोह्यजोऽनन्तः सकथं पूज्यते प्रिये ॥
अतएव गुरुः साक्षाद्गुरुरूपं समाश्रितः ।
भक्त्या सम्पूजयेद्देवि भुक्तिं मुक्तिं प्रयच्छति ॥
शिवोऽहमाकृतिर्देवि नरदृग्गोचरोनहि ।
तस्मात् श्रीगुरुरूपेण शिष्यान् रक्षति सर्वदा ॥

मनुष्यचर्मणा नद्धः साक्षात् परशिरः स्वयम् ।
स्वशिष्यानुग्रहार्थाय गूढं पर्य्यटति क्षितौ ॥
सद्भक्तरक्षणायैव निरहङ्कारमाकृतिः ।
शिवः कृपानिधिर्लोके संसारीव हि चेष्टितः ॥
ललाटलोचनं वा स्त्री कलामपि च दोर्द्वयम् ।
अन्तर्ध्याने च वर्त्मोऽयं गुरुरूपोमहीतले ॥
अत्रिनेत्रशिवः साक्षादचतुर्बाहुरच्युतः ।
अचतुर्वदनोब्रह्मा श्रीगुरुः कथितः प्रिये ॥
**नरवदृदृश्यते लोके श्रीगुरुः पापकर्मणा।**
**शिववदृदृश्यते लोके भवानि पुण्यकर्मणा ।**
श्रीगुरुं परमं तत्त्वं तिष्ठन्तं चक्षुरग्रतः ॥
मन्दभाग्यान पश्यन्ति उलूकाः सूर्य्यमिवोदितम् ।
गुरुः सदाशिवः साक्षात् सत्यमेव न संशयः ॥
शिवरूपोगुरुर्नोचेद् भुक्तिं मुक्तिं ददाति कः ।
सदाशिवस्य देवस्य श्रीगुरोरपि पार्वति ॥
ऊभयोरन्तरं नास्ति यः करोति सपातकी ।
देशिकाकृतिमास्थाय पशुपाशानशेषतः ॥
छित्वा परं पदं देवि नयत्येवमतोगुरुः ।
सर्वानुग्रहकर्तृत्वादीश्वरः करुणानिधिः ॥
आचार्य्यरूपमास्थाय दीक्षया मोक्षयेत् पशून् ।
यथा घटश्च कलशः कुम्भश्चैकार्थवाचकः ॥
तथा देवश्च मन्त्रश्च गुरुश्चैकार्थउच्यते ।
यथा देवस्तथा मन्त्रोयथा मन्त्रस्तथा गुरुः ॥
देवमन्त्रगुरूणाञ्च पूजायाः सदृशं फलम् ।
शिवरूपं समास्थाय पूजां गृह्णाति पार्वति ॥
गुरुरूपं समादाय भवपाशान्निकृन्तयेत् ।
सिद्धान्तसारवेत्ताहं बीजोऽहमिति बोधकृत् ॥
अविच्छिन्नसमाहृष्टहृदयोगुरुरुच्यते ।
योविलङ्घ्याश्रमान् वर्णानात्मन्येव स्थितः सदा ॥

ज्योतिर्वर्णाश्रमी योगी सगुरुः कथितः प्रिये ।
षडध्वानं षडाधारं षोडशारविनिर्णयम् ॥
योजानाति विधानेन सगुरुः कथितः प्रिये ।
**दृश्यं विना स्थिरा दृष्टिर्मनश्चालम्बनं विना ॥**
**विनायासं स्थिरोवायुर्यस्य स्यात् सगुरुः प्रिये ।**
सत्त्वसंवित्तिजननं परानन्दसमुद्भवम् ॥
तत्त्वं विदितं येन सगुरुः कुलनायिके ।
भूतभव्यौ मन्त्रतन्त्रौ शक्तिशाम्भववित्तमः ॥
वेधञ्च षड्विधं देवि सहि, वेत्ति परोगुरुः ।
पदमन्त्रकलायन्त्रसत्तत्त्वं तद्गुणाह्वयम् ॥
शोधयेद्यः षड्ध्वानं सगुरुः कथितः प्रिये ।
वेधं पदं निरोधञ्च ग्रहणं मोक्षणं तथा ॥
योवा सम्यग्विजानाति सगुरुः कथितः प्रिये ।
जाग्रत्स्वप्नसुषुप्तीश्च सगुरुः परमोमतः ॥
आत्मविद्या शिवः सर्वमिति विद्याचतुष्टयम् ।
योवेत्ति परमेशानि सगुरुः परमोमतः ॥
पशुस्तोमं वेधदीक्षां पशुप्रहरमेव च ।
त्रिविधं योविजानाति सगुरुः परमोमतः ॥
पदपाशं पशूनाञ्च रहस्यात्मविधानतः ।
योजानाति वरारोहे सगुरुः परमोमतः ॥
चक्रसङ्केतकं मन्त्रपूजासङ्केतकं तथा ।
त्रितयं योविजानाति सगुरुः परमोमतः ॥
बाणेतरस्वयम्भ्वाख्य–लिङ्गत्रितयसंस्थितिम् ।
तत्त्वतोयोविजानाति सगुरुः परमोमतः ॥
आणव्यं कार्मणञ्चैव मायिकञ्च मलत्रयम् ।
योविशोधयितुं शक्तः सगुरुः परमोमतः ॥
आरक्तशुक्लमिश्राख्यचरणत्रयवासनाम् ।
योजानाति महादेवि सगुरुः परमोमतः ॥
महामुद्रां नभोमुद्रां उड्डीयानं जलन्धरम् ।
मूलबन्धञ्च योवेत्ति सगुरुः परमोमतः ॥

शिवादिक्षितिपर्य्यन्तं षट्त्रिंशत्तत्त्वनिर्णयम् ।
योविजानाति तत्त्वेन सगुरुः परमोमतः ॥
अन्तर्यागं बहिर्यागं कालज्ञानं स्थितं प्रिये ।
त्रिविधानञ्च योवेत्ति सगुरुः परमोमतः ॥
पिण्डब्रह्माण्डयोरैक्यं स्थितं योवेत्ति तत्त्वतः ।
शिरास्थिरोमसङ्ख्यादि सगुरुः परमोमतः ॥
पद्मादिचतुरशीतिनानासनविचक्षणः ।
यमाद्यष्टाङ्गयोगज्ञः सगुरुः परमोमतः ॥
घृणा लज्जा भयं शोकोजुगुप्सा चेति पञ्चमम् ।
कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्तिताः ॥
पाशबद्धः पशुर्ज्ञेयः पाशमुक्तोमहेश्वरः ।
तस्मात् पाशहरोयस्तु सगुरुः परमोमतः ॥
बन्धनं योनिमुद्रायामन्त्रं चैतन्यसंज्ञकम् ।
यन्त्रमन्त्रस्वरूपञ्च योवेत्ति सगुरुः प्रिये ॥
विनिक्षिप्तां गतायातां संश्लिष्टां संविनीतकाम् ।
चतुर्विधां मनोऽवस्थां योजानाति गुरुः प्रिये ॥
मूलादिब्रह्मरन्ध्रान्तं सप्ताम्भोजं कुलेषु यः ।
जीवाचारफलं वेत्ति सगुरुर्नापरः प्रिये ॥
शिवादिगुरुपर्य्यन्तं पारम्पर्य्यक्रमेण यः ।
अवाप्ततत्त्वसम्भारः सगुरुः परमोमतः ॥
येन वा दर्शिते तत्त्वे तत्क्षणात्तन्मयोभवेत् ।
धन्यं तदुक्तमखिलं सगुरुः परमोमतः ॥
योवेत्ता सच्चिदानन्दं हरेदिन्द्रियजं सुखम् ।
**सेव्यास्ते गुरवः शिष्यैरन्ये त्याज्याः प्रतारकाः ॥**
संसारभयभीतस्य भयहा गुरुरादरात् ।
व्रतोपवासनियमैर्नियन्ता सगुरुर्मतः ॥
यः प्रसन्नः क्षणार्द्धेन मोक्षरत्नं प्रयच्छति ।
दुर्लभं तं विजानीयाद् भवसागरतारकम् ॥
यः क्षणे नात्मसामर्थ्यं स्वशिष्याय ददाति हि ।
प्रियायासादिरहितः सगुरुर्दैवदुर्लभः ॥

यः सद्यः प्रत्ययकरं सुलभं चात्मसौख्यदम् ।
ज्ञानोपदेशं कुरुते सगुरुर्देवदुर्लभः ॥
द्वीपाद्वीपान्तरं देवि सञ्चरेत्तद्यथा तथा ।
योदद्यात् सगुरुर्ज्ञानमभ्यासादिविवर्जितम् ॥
क्षुधितस्य यथा तुष्टिराहाराद्दृश्यते यथा ।
तथोपदेशमात्रेण ज्ञानदोदुर्लभोगुरः ॥
गुरवोबहवः सन्ति दीपवच्च गृहे गृहे ।
दुर्लभोऽयं गुरुर्देवि सूर्य्यवत् सर्वदीपकः ॥
गुरवोबहवः सन्ति वेदशास्त्रादिपारगाः ।
दुर्लभोऽयं गुरुर्देवि परतत्त्वार्थपारगः ॥
गुरवोबहवः सन्ति योगेनान्यत्पदाभुवि ।
दुर्लभोऽयं गुरुर्देवि लोके स्वात्मप्रकाशकः ॥
गुरवोबहवः सन्ति समन्त्रोषधिवेदिनः ।
निगमागमशास्त्रोक्तमन्त्रज्ञोदुर्लभोभुवि ॥
गुरवोबहवः सन्ति शिष्यवित्तापहारकाः ।
दुर्लभोऽयं गुरुर्देवि शिष्यदुःखापहारकः ॥
वर्णाश्रमकुलाचारनिरतागुरवोभुवि ।
सर्वसङ्कल्पहीनोयः सगुरुर्देवि दुर्लभः ॥
गुरोर्यस्यैव संस्पर्शात् परानन्दोऽभिजायते ।
गुरुं तमेव वृणुयान्नापरं मतिमान्नरः ॥
यस्यात्मभवपर्य्यन्तं बुद्धिस्तस्य प्रवर्त्तते ।
तस्यालोकनमात्रेण, मुच्यते नात्र संशयः ॥
शङ्कया भक्षितं सर्वं त्रैलोक्यं सचराचरम् ।
सा शङ्का भक्षिता येन सगुरुर्देवदुर्लभः ॥
यथा वह्निसमीपस्थं नवनीतं विलीयते ।
तथा पापं विलीयेत सदाचार्य्यसमीपतः ॥
यथा दीप्तानलः काष्ठं शुष्कमात्रञ्च निर्दहेत् ।
तथा गुरुकटाक्षस्तु शिष्यपापं दहेत् क्षणात् ॥
यथा महानिलोद्धूतं तूलं दश दिशोव्रजेत् ।
तथैव गुरुकारुण्यात् पापराशिः प्रलीयते ॥

दीपदर्शनमात्रेण प्रणश्यति तमोयथा ।
सद्गुरोर्दर्शनाद्देवि तथाऽज्ञानं विलीयते ॥
सर्वलक्षणसम्पन्नोवेदशास्त्रविधानवित् ।
सर्वोपायविधातैव तत्त्वज्ञानी गुरुः सहि ॥
पूजाहोमाश्रमाचारस्तपस्तीर्थव्रतादिकम् ।
**मन्त्रागमादिविज्ञानं तत्त्वहीनस्य निष्फलम्॥**
सुसंवेद्यं परे तत्त्वे, स्वात्मानं वेत्ति निश्चलः ।
आत्मनोऽनुग्रहोनास्ति परस्यानुग्रहः कुतः ॥
षट्प्रकारं मनोरूपं प्रत्यक्षं स्वतनुस्थितम् ।
योन जानाति चान्यस्य कथं मोक्षं ददात्यसौ ॥
सर्वलक्षणहीनोऽपि तत्त्वज्ञानी गुरुः स्मृतः ।
तस्मात्तत्त्वविदेवेह मुक्तोमोचकएव च ॥
यस्तत्वविन्महेशानि साधूंश्च बोधयत्यपि ।
तत्त्वहीनात् कुतोबोधः कुतोऽध्यात्मपरिग्रहः ॥
तत्त्वज्ञैरुपदीष्टाये तत्त्वज्ञास्ते न संशयः ।
**पशुभिश्चोपदिष्टाये, देवि ते पशवः स्मृताः** ॥
विद्धस्तु वेधयेद्देवि नाविद्धोवेधकोभवेत् ।
मुक्तस्तु मोचयेदुर्ध्वं न मुक्तोमोचकः कथम् ॥
अभिज्ञश्चोद्धरेन्मूर्खं **न मूर्खोमुर्खमुद्धरेत्** ।
शिलां सन्तारयेन्नौर्हि न शिला तारयेच्छिलाम् ॥
तत्त्वहीनं गुरुं लब्ध्वा केवलं भवतत्परः ।
इहामुत्रफलं किञ्चिन्नापरोनाप्नुयात् प्रिये ॥
शिवे गुरुत्रयं प्रोक्तं वैष्णवे गुरुपञ्चकम् ।
वेदशास्त्रेषु शतशोगुरुरेकः कुलप्रियः ॥
प्रेरकः सुचकश्चैव वाचकोदर्शकस्तथा ।
शिक्षकोबोधकश्चैव **षडेते गुरवः स्मृताः** ॥
पञ्चैते कार्य्यभूताः स्युः कारणं बोधकोभवेत् ।
॥ पूर्णाभिषेककर्त्ता योगुरुस्तस्यैव पादुकाः ॥
पूजनीयामहेशानि बहुत्वेऽपि न संशयः ।
श्रीगुरोर्लक्षणोपेतं संशयच्छेदकारकम् ॥

लब्ध्वा ज्ञानप्रदं देवि न गुर्वन्तरमाश्रयेत् ।
अनभिज्ञं गुरुं प्राप्य संशयच्छेदकारकम् ॥
गुर्वन्तरन्तु गत्वा सनैतद्दोषेण लिप्यते ।
मधुलुब्धोयथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ॥
ज्ञानलुब्धस्तथा शिष्योगुरोर्गुर्वन्तरं व्रजेत् ।
इति ते कथितं किंचिल्लक्षणं गुरुशिष्ययोः ॥
समासेन कुलेशानि किम्भूयः श्रोतुमिच्छसि ॥

इत्यादिगुणाऽवगुणोभयसुपरीक्षितमेव गुरुं विदधीतेत्यत्र तात्पर्य्यम्—॥ इति श्री कुलार्णवे महारहस्ये गुरुशिष्यलक्षणं नाम १३ उल्लासः समाप्तः ॥ इति ॥ (६।१४—१ वि. सं.)

**श्री गुरुशब्दनिरुक्तिः—**

—२—कुलार्णवतन्त्रे १७ उल्लासे १५२ पत्रे--आरम्भतोयथा—

॥ श्रीदेव्युवाच । कुलेश, श्रोतुमिच्छामि गुरुनामादिवासनाम् ।
तत्त्वं कुलपदार्थानां वद मे परमेश्वर

ईश्वरउवाच । शृणुदेवि । प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण कुलज्ञानं प्रवर्त्तते ॥
गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधत्वाद् गुरुरित्यभिधीयते ॥ इति ॥

**३—श्रीगुरुमण्डलस्थदेवताः—**

अत्रैव प. क. सू. ५-खण्डे २२-सूत्रभाष्ये १७९-पत्रे-अन्यत्रापि बहुषु तन्त्रेषु यथा—

॥ श्रीनाथादि गुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं बटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान् द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥ इति ॥

**६-१४/४—गुरुदेवतामन्त्राणामैक्यं—**

श्रीकुलार्णवे-७-उल्लासे ६७ पत्रे-श्रीमच्छिववचोयथा—

१ ॥ गुरुदैवतमन्त्राणामैक्यं सञ्चिन्तयेद्धिया ॥ इति

॥ अन्यत्र—मानसपूजायामपि यथाः—

गुरुदेवतामनुमहामन्त्रात्मनामैक्यताम् ॥ इति ॥ ( ६।१४—४।१ वि. सं. )

६–१४–एवं श्रीगुरुभक्तिमतां कृते, एकं गुरुलक्षणमभिधाय, सुजनतायै,
४-२
अन्यप्रकारमपि श्रीमद्गुरुसौजन्यामृतं **गुरुलक्षणमुद्योतयामि** तत्प्रीत्यै–
सटीकशारदातिलके २ पटले-११९ पत्रे-यथा—

**आगमसम्मतोगुरुः**

॥ पुरुषार्थसमावाप्त्यै सच्छिष्योगुरुमाश्रयेत् ।
मातृतः पितृतः शुद्धः शुद्धभावोजितेन्द्रियः ॥ १४१ ॥
सर्व्वागमानां सारज्ञः सर्व्वशास्त्रार्थतत्त्ववित् ।
परोपकारनिरतोजपपूजादितत्परः ॥ १४२ ॥
अमोघवचनः शान्तोवेदवेदार्थपारगः ।
योगमार्गानुसन्धायी देवताहृदयङ्गमः ॥ १४३ ॥
इत्यादिगुणसम्पन्नोगुरुरागमसम्मतः ॥ १४४ ॥ इति ॥

३–अत्र भाष्यम्–एतादृशोगुरुर्निषिध्यते-आदिशब्दान्महाकपिलपञ्चरात्रोक्तनिषिद्धगुरुरपि–

**॥ नातिबालोन वृद्धश्च न खञ्जोन कृशस्तथा ।**
**नाधिकाङ्गोन हीनाङ्गोन खल्वाटोन दन्तुरः ॥**

४–**योग्यगुरुः** ॥ कुल(कृत)ज्ञं वाग्मिनं शूरं प्रतिष्ठागमपारगम् ।
वास्तुविद्याकृताभ्यासं शल्योद्धारविवेकिनम् ॥
क्रियानुक्रमवेत्तारं मुद्रातन्त्रविवेकिनम् ।
शुचिः सुवेशस्तरुणः सर्व्वभूतसमानधीः ॥
धीमाननुद्धतमतिः कृतज्ञः शिष्यवत्सलः ।
श्रद्धावाननसूयश्च गृहस्थोगुरुरुच्यते ॥

इत्यादिग्रन्थान्तरोक्तश्च द्रष्टव्यम् ।

**इमेऽपि षड्गुरवः**–गुरुलक्षणं च–
आचार्य्यमातुलौ ऋत्विक् पितृव्यः श्वशुरोनृपः । इति
॥ संसारसागरे मग्नान् यस्तारयति देहिनः ।
तत्त्वप्लवप्रदानेन सएवेह गुरुः स्मृतः ॥ इत्युक्तेः । (६।१४-४।४ वि. सं.)

५–॥ प्रतिष्ठासारस्वते तु विशेषः–

**एवंविधोगुरुर्योग्यः** )
आर्य्यावर्त्तोद्भवोऽन्योवा ककाराष्टकवर्जितः ।
शैवसिद्धान्तनिपुणः प्रतिष्ठामन्त्रपारगः ॥ इति ॥

६–**आचार्यलक्षणं वीरागमे**–

॥ कुमारीहिमवन्मध्ये स्वतः कृष्णमृगान्विते ।

देशे जातस्तु योविद्वान् **आचार्य्यत्वम**थार्हति ॥ इति ॥

७–**योगशिवपद्धतावपि**–तत्तद्देशवासपरत्वेन गुरुषूत्तममध्यमाधमधर्मत्वम्–

॥ मध्यदेशकुरुक्षेत्रनाभोज्जयिनिसम्भवाः ।

अन्तर्व्वेदिप्रतिष्ठानादावन्त्याश्च **गुरूत्तमाः** ॥

॥ गौडदेशोद्भवाश्चौलामागधाः केरलास्तथा ।

कौशलाश्च दशार्णाश्च गुरवो**मध्यमा**मताः ॥

॥ कर्णाटकोङ्कणाकीर(श्चैव)कच्छतीरोद्भवास्तथा ।

कालिङ्गाः कामरूपाश्च काम्बोजा**श्चाधमाः** स्मृताः ॥ इति ॥

( इति शा. ति. टीकायाम् )

८–**देवीमते च– अयं देशिकः**—

॥ आचार्य्यः शैवशास्त्रज्ञः शिवदेशसमुद्भवः ।

ब्रह्मचारी गृहस्थोवा शिवभक्तिपरायणः ।

यजमानानुकूलर्क्षजन्मा **देशिक**उच्यते ॥ इति ॥

९–हयशीर्षपञ्चरात्रेऽपि—

॥ गृहस्थं ब्रह्मचर्य्यस्थं ककारा(पाटा)ष्टकवर्जितम् ।

गुरुं कुर्व्वीत सततमुपवासव्रते रतम् ॥ इति ॥

सर्व्वत्र व्यतिरिक्तन्तु आत्मानं वेत्ति योद्विजः ।

सर्व्वलक्षणहीनोऽपि सगुरुर्नात्र संशयः ॥

पञ्चरात्रप्रबुद्धस्तु सिद्धान्तार्थस्य तत्त्ववित् ।

सर्व्वलक्षणहीनोऽपि **आचार्य्यः सनिगद्यते** ॥

यस्य विष्णौ परा भक्तिर्यथा विष्णौ तथा गुरौ ।

**सएव देशिकोज्ञेयः** सत्यमेतद्ब्रवीमि ते ॥ इति ॥

१०–शैवदीक्षायाम्–अतीतागमे–विशेषः–

॥ **अयमाचार्यः** ॥

जटी मुण्डी शिखी वापि शस्तदेशसमुद्भवः ।

**शिवशास्त्रार्थतत्त्वज्ञः** श्रुतवृत्तान्वितोद्विजः ॥

शिवमेवाश्रितोनित्यं वाङ्मनःकायकर्म्मभिः ।

**आचार्य्यः** ससदोद्दिष्टः शिवदीक्षादिकर्म्मसु ॥ इति ॥

११–**शान्तिके च** अयं गुरु**रुच्यते**

॥ अनूचानः प्रसन्नात्मा शिवदीक्षाभिषेचितः ।
शिवागमज्ञोमतिमान् शिवपूजापरायणः ॥
रुद्राक्षमालां बिभ्राणस्त्रिशूलाङ्कितविग्रहः ।
विशुद्धदेशकुलजः शीलाचारसमन्वितः ।
वेदशास्त्रार्थतत्त्वज्ञोज्ञानवान् **गुरुरुच्यते** ॥ इति ॥

१२–प्रतिष्ठापद्धतावपि—

॥ लिङ्गी वि(ज्ञादि)लक्षणज्ञानी निपुणः कर्म्मसन्ततौ ।
देवताव्याप्तितत्वज्ञः षड्विधाध्वविशारदः ॥
शुभाशुभनिमित्तज्ञस्त्वथवा विस्तरेण किम् ।
सम्यग्जातिपरिज्ञानं वृत्तन्त्वाद्यास्त्रयोगुणाः ।
यस्यैते **सगुरुः श्रेष्ठः** सर्व्वकामफलप्रदः ॥ इति ॥

१३–**यतेरपि गुरुतोक्ता,** मोहशूरोत्तरे—

चीर्णा(तीर्था)चारव्रतोमन्त्री ज्ञानवान् सुसमाहितः ।
नित्यनिष्ठोयतिः ख्यातोगुरुः स्याद्भौत्तिकोऽपि च ॥ इति ॥

१४–बातुलोत्तरेऽपि–॥ **गुरुगौरवे** ॥

॥ विद्ययाऽभयदातारं लौल्यचापलवर्जितम् ।
एवंविधं **गुरुं प्राप्य** कोन मुच्येत बन्धनात् ॥ इति ॥

१५–पौष्करे तु–तत्वज्ञान्येव गुरुः

॥ सर्व्वलक्षणहीनोऽपि ज्ञानवान् **गुरुरु**च्यते ।
ज्ञानञ्च तत्त्व**विज्ञानं** षडध्वज्ञानसंश्रयम् ॥ इति ॥ १४३ १४४ ॥

१६–अथापरमपि **सद्गुरुलक्षणं**

**सटीकप्रपञ्चसारे ३६ पटले ३७७ पत्रे २२ श्लोकतोयथा—**

॥ अथ संक्षिप्य वक्ष्यामि **लक्षणं गुरुशिष्ययोः** ॥ २२ ॥
**स्वच्छः** स्वच्छन्दचरितोऽतुच्छधीस्त्यक्तहृच्छयः ।
देशकालादिविद्देशे देशे **देशिकउच्यते** ॥ २३ ॥
अग्रगण्यः समग्रज्ञोनिग्रहानुग्रहे क्षमः ।
षड्वर्गविजयव्यग्रोऽनुग्रोविगतविग्रहः ॥ २४ ॥

शुक्लः शुक्लांशुकोऽक्लिष्टकर्माऽविक्लवमानसः ।
वेदवेदाङ्गविद्यादिवेदिता विदितागमः ॥ २५ ॥
इष्टदोऽनिष्टसंहर्ता दृष्टादृष्टसुखावहः ।
रतोऽविरतमर्चासु परं पुरसुरद्विषोः ॥ २६ ॥
दाता दान्तः शान्तमनानितान्तं कान्तविग्रहः ।
स्वदुःखकारणेनापि परं परसुखोद्यतः ॥ २७ ॥
ऊहापोहविदध्यात्मव्याकुलोमोहवर्जितः ।
अज्ञानुकम्पी विज्ञातज्ञानोज्ञातपरेङ्गितः ॥ २८ ॥
निरंशः सांशवित् सर्वसंशयच्छिदसंशयः ।
नयविद्विनयोपेतोविनीतनीतिरात्मवान् ॥ २९ ॥
व्याधिरप्रापितव्याधिः समाधिविधिसंयुतः ।
श्रुतिशूरोऽतिधीरश्च वीरोवाक्यविशारदः ॥ ३० ॥
वर्गोपेतसमारम्भोगभीरोदम्भवर्जितः ।
आदर्शइव विद्यानां न तु दर्शनदूषकः ॥ ३१ ॥
असौ मृग्यश्च दृश्यश्च सेव्यश्चाऽभीष्टमिच्छता ॥ इति ॥

( ६।१४ तथाच ६-१४ वि. सर्वः सं. )
४-१६

॥ सम्पन्नं गुरुलक्षणम् ॥

६-१५ **सर्वेभ्योपि गुरुरधिकः ॥**

॥ कुलार्णवतन्त्रे ३ उल्लासे ३१ पत्रे, श्रीशिववचोयथा
॥ नास्ति गुर्वधिकं तत्त्वं न शिवाधिकदैवतम् ॥
न हि वेदाधिका विद्या न कौलसमदर्शनम् ।
न कुलज्ञाधिकोज्ञानी न हि ज्ञानाधिकं सुखम् ॥
नाष्टाङ्गा चाधिका पूजा न हि मोक्षाधिकं फलम् ।
श्रीप्रासादपरामन्त्रादधिकं नैव विद्यते ॥
इदं सत्यमिदं सत्यं सत्यं **सत्यं न संशयः** ॥ इति ॥ ( ६-१५ वि. सं.)

६-१६ **श्रीदिव्यौघादिगुरुसङ्ख्यानामादौ ॥**

ज्ञानार्णवे-१६ पटले ६४ पत्रे-यथा—
॥ **दिव्यौघे** तु परान् विद्धि सप्तसङ्ख्यान् वरानने ।

आनन्दनाथशब्दान्तागुरवः पुरुषाः प्रिये ॥ ५१ ॥
स्त्रियः पराम्बाशब्दान्ताविज्ञेयावीरवन्दिते ।
परप्रकाशोदेवेशि ततः परशिवोमतः ॥ ५२ ॥
पराशक्तिस्तथादेवि कौलेश्वरइति प्रिये ।
शुक्ला देवि कुलेशानकामेश्वर्यम्बिकाः क्रमात् ॥ ५३ ॥
मुनिसङ्ख्यास्तु गुरवः पराख्यादिव्यरूपिणः ।
भोगक्लिन्नस्तु समयो[1]वेदाख्यः सहजस्तथा ॥ ५४ ॥
॥ परापराख्य**सिद्धौघे,मानवौघे** शृणु प्रिये ।
गगनोविश्वविमलौ मदनोभुवनस्तथा ॥ ५५ ॥
लीला स्वात्मप्रियः पश्चान्नागसङ्ख्यास्तु मानवाः ।
अपराः परमेशानि नियताअक्षराइमे ॥ ५६ ॥
एतत्रयं तु नियतं देशिकानां हिताय च ।
मयोद्धृतं महेशानि पुष्पं सङ्कुचितं प्रिये ॥ ५७ ॥
॥ मानवौघान्तिके पश्चात् स्वगुरुत्रितयं यजेत् ।
परमेष्ठी गुरुः पश्चाद्गुरुः परमसंज्ञितः ॥ ५८ ॥
स्वगुरुश्च महेशानि पूजयेत्तु गुरुत्रयम् ।
अथवा मानवौघान्तएकं स्वगुरुमर्चयेत् ॥ ५९ ॥
॥ अयं प्रकारः कथितः प्रकारान्तरमुच्यते ।
वन्द्यं सर्वप्रकाराणां मानवौघाष्टकादथ ॥ ६० ॥
**गुरवोनवसंख्याका**इह यावद्भवन्ति हि ।
नवचक्रेश्वरी यस्मात्तावत् पुष्पं प्रकाशयेत् ॥ ६१ ॥
मानवौघे सदा देवि दश सप्त भवन्ति हि ।
पश्चात् संङ्कोचयेत् **पुष्पं** नवमं श्रीगुरुं यजेत् ॥६२॥ (६-१६ वि. सं.)

६।१७/१ अज्ञातगुरुशिष्यविषये—**पादुका**मन्त्रः सामान्यगुरुपङ्क्तिश्च—

॥अज्ञातगुरुशिष्याणां कथयामि वरानने ।
गुरुभ्योनमउच्चार्य पादुकाभ्योनमोलिखेत् ॥ ६३ ॥

---

१. सहजोवेदसङ्ख्यकाः—इति पाठान्तरम् ॥

गुर्वन्ते परमान्ते च गुरुभ्योनमइत्यपि ।
एतेषां पादुकास्तद्वदाचार्येभ्योनमोवदेत् ॥ ६४ ॥
आचार्यपादुकास्तद्वत् पूर्वसिद्धास्तु पादुकाः ।
सामान्यगुरु**शिष्याणां** गुरुपङ्क्तिरियं भवेत् ॥ ६५ ॥

२–गुरुपूजाफलं तद्राहित्ये पङ्क्तिबहिष्ट्वम्—

॥ गुरुपङ्क्तिं प्रपूज्याथ **स्वयं श्रीत्रिपुरा** भवेत् ।
गुरुपङ्क्तिविहीनस्तु पुरुषः पङ्क्तिवर्जितः ॥ ६६ ॥
सामान्यगुरुपङ्क्तिस्त्वात्र भवेत् पङ्क्तिवर्जितः ।
पुष्पसङ्कोचमार्गोऽयं मया सिद्धः कृतः प्रिये ॥ ६७ ॥
कृपया परमेशानि साधकानां हिताय च ।
कामराजाख्यगुरवः श्रीविद्याविषये क्रमात् ॥ ६८ ॥
॥ लोपामुद्राख्यविद्यायागुरून् शृणु वरानने ।
परमाद्यशिवश्चाऽऽद्या कामेश्वर्यम्बिका तथा ॥ ६९ ॥
दिव्योघश्च महौघश्च सर्वानन्दस्ततः परम् ।
प्रज्ञा देव्यम्बिका पश्चात् प्रकाशः सप्तमोभवेत् ॥ ७० ॥
दिव्याः पराख्यगुरवोलोपामुद्राप्रभामयाः ।
दिव्यश्चित्रश्च कैवल्यदेव्यम्बा च महोदयः ॥ ७१ ॥
॥ **सिद्धाः परापराज्ञेयामानवौघं शृणु प्रिये ।**
विंद्या शक्तिश्च विश्वश्च चतुर्थः कोमलोभवेत् ॥ ७२ ॥
पञ्चमस्तु परानन्दोमनोहरइति प्रिये ।
स्वात्मानन्दः सप्तमस्तु प्रतिभोऽष्टमउच्यते ॥ ७३ ॥
अपराख्याइमे देवि गुरवः परिकीर्तिताः ।
पूर्ववद्योजयेत् पश्चादष्टानन्तरमेव च ॥ ७४ ॥
त्रयं वा स्वगुरुं वाऽपि नवान्तं वाऽब्जलोचने ।
दक्षिणामूर्तिशिष्याणां गुरुक्रमउदाहृतः ॥ ७५ ॥ इति

**६-१७/३–सशक्तिकदिव्यौघादिगुरुनामसङ्ख्यादिषये ॥**

कुलार्णवतन्त्रे-६-उल्लासे-५७ पत्रेऽपि, यथा—

॥ **दिव्यौघे** चादिनाथश्च तच्छक्तिश्च सदाशिवः ।
तत्पत्नी चेश्वरस्तस्य भार्य्या रुद्रश्च तद्वधूः ॥

विष्णुश्च तत्प्रिया ब्रह्मा तत्कान्ता द्वादशे स्थिता ।

**सिद्धौघे** सनकश्चैव सनन्दश्च सनातनः ॥

सनत्कुमारश्च सनत्सुजातश्च ऋतुः स्मृतः ।

दत्तात्रेयोरैवतकोवामदेवस्ततः परम् ॥

ततोव्यासश्च शुकश्च एकादश समीरिताः ।

**मानवौघे** नृसिंहश्च महेशोभास्करस्तथा ॥

महेन्द्रोमाधवोविष्णुः षडेते च प्रकीर्तिताः ।

॥ नमोऽन्ते पूजयेद्देवि दिव्यौघे परमः शिवः ॥

महाशिवश्च सिद्धौघे मानवौघे सदाशिवः । इत्यपि ॥

( ६।१७ वि. सर्वोपि सं. )

**६।१८-गुरुपङ्क्तिपूजातर्पणस्थलविषये-**

कुलार्णवतन्त्रे-६-उल्लासे-६० पत्रे-यथा—

॥ एवं संतर्प्य देवेशि कुलद्रव्यैर्यथाविधि ।

देवतापुरतोदेवि गुरुपङ्क्तीश्च तर्पयेत् ।

पङ्क्तित्रयक्रमेणाथ ज्ञात्वा सम्यगनन्यधीः—इति ॥ ( ६-१८ वि. सं )

**६।१९ ॥ १ सम्प्रदायानामनेकत्वं-२ सम्प्रदायाभावे पङ्क्तिबहिष्ट्वं ३ गुर्वचनानंतरमाम्नायदेवतार्चनं-४-गुरुमुखात् ज्ञानावश्यकत्वं च ॥**

ज्ञानार्णवे-१६-पटले-६६-पत्रे-यथा—

१ सम्प्रदायाअनेके च ज्ञातव्याः स्वगुरुक्रमात् ।

२ सम्प्रदायविहीनस्य न दद्यात् षङ्क्तिमुत्तमाम् ॥७६ ॥

साधारणास्तु गुरवः सर्वभेदेषु वै समाः ।

३ गुरुक्रमं प्रपूज्याथ यजेदाम्नायदेवताः ॥ ७७ ॥ इत्यादि ॥

४ कुलार्णवतन्त्रेपि-६-उल्लासे-५९-पत्रे, यथा

ज्ञात्वा गुरुमुखात् सर्वं पूजयेद्विधिनाप्रिये ॥

( ६-१९ वि. सर्वः सं. )

६।२०–कस्य कर्मणोऽनन्तरं श्रीगुरुपूजनं कर्तव्यं तत्र प्रमाणम् ॥

ज्ञानार्णवे १६ पटले ६४ पत्रे ४४ श्लोकतोयथा—

॥ तिथिनित्यां त्रिधा देवि पूजयेद्भाग्यहेतवे ।
पुनः श्रीत्रिपुरानित्यां यजेत् सौभाग्यहेतवे ॥ ४४ ॥
एतस्मित् समये देवि गुरून् सम्पूजयेद्बुधः ।
पुष्पसङ्कोचयोगेन कथयामि तवानघे ॥ ४५ ॥
रश्मिवृन्दं दलमितं गुरवस्तु शताधिकाः ।
तस्मात् सङ्कोचयेत् पुष्पममिताः सिद्धिहानिदाः ॥ ४६ ॥
नष्टसन्ततिविज्ञेयाः मिताः सर्वसमृद्धिदाः ।
पुष्पं सङ्कोचयेन्नोचेद्द्वादशे नष्टसन्ततिः ॥ ४७ ॥
सन्तत्या नष्टरूपः सन्न भवेद्देवताप्रियः ।
अतएव मया सम्यक् पुष्पं सङ्कुचितं प्रिये ॥ ४८ ॥
कामराजाख्यविद्यायागुरवस्तु समृद्धिदाः ॥ इत्यादि ॥ ( ६-२० वि. सं. )

## ६।२१ अष्टाक्षरीगुरुमन्त्रे—

सामान्यतः श्रीगुरुनाम्नि मूलमन्त्रान्ते–ॐ अमुकानन्दनाथगुरु—
**श्रीपादुकां पुजयामि–इत्यष्टाक्षरी** । गुरुपूजनमन्त्रोत्र १४४ पत्रे प. क. सू. खण्डे ४ श्रीललिताक्रमे १४४ पत्रे ७-सू. भाष्येऽस्ति ॥ ( ६-२१ वि. सं. )

## ६।२२ शिष्यकर्तव्यगुरुनमस्कारे, क्रियाप्रमाणम् ॥

कुलार्णवे ७ उल्लासे ६६ पत्रे यथा—

१–॥ शिष्योपायनमादाय शुद्धात्मा कुसुमादिकम् ।
यथाशक्ति विनीतात्मा वित्तशाठ्यविवर्जितः ॥
प्रणम्य बहिरष्टाङ्गं प्रविश्यान्तः शनैः प्रिये ।
समर्प्योपायनं भक्त्या शिवाय गुरुरूपिणे ॥
गृहीत्वाङ्गुष्ठकौ कृत्वा करौ नम्राग्रतर्जनी ।
जानुभ्यामवनिं गत्वा पञ्चाङ्गं प्रणमेद्गुरुम् ।
वामाङ्गुष्ठानामिकाभ्यां दक्षहस्तप्रसारितम् ॥
स्पृष्ट्वा विशुद्धहृदयमीषदानतमस्तकम् ॥ इति ॥

६-२२ **गुरुप्रगुरुनमस्कारे विवेकः** ॥ प. क. सू. १० खण्डे २८४ पत्रे-७१
२

सूत्रे तद्भाष्ये च यथा—

धर्मान्तरमाह—

गुरुप्रगुरुसन्निपाते प्रगुरोः प्रथमं प्रणतिः तदग्रे तदनुरोधेन तन्नतिवर्जनम् ॥७१॥

॥ अत्र भाष्यम्—गुरुः प्रसिद्धः । प्रगुरुः गुरोः गुरुः ॥ तयोः सन्निपाते, एकत्र वासे प्रगुरोः प्रथमं नमस्कारः कार्यः । यावत्पर्यन्तं प्रगुरुसन्निधौ गुरुस्तिष्ठति तावत्पर्यन्तं तं गुरुं न नमेत्, नमस्कारः गुरोः न कार्यः इतिभावः । प्रगुरोरनुरोधे नैव तिष्ठेत् ॥

ननु प्रथमं नतिः—इत्यनेन नमस्कारानुवादेन प्राथम्यं विधीयते ? उत "वषट्कर्तुः प्रथमभक्षः, इतिवत् क्रमविशिष्टं नमनं विधीयते ?। नाद्यः—उभयोः नतिप्राप्तौ कस्य प्रथमम्—इति क्रमाकाङ्क्षायां प्रकृते गुरुनमननिषेधे परिशिष्टप्रगुरुनतौ क्रमाकाङ्क्षाऽभावात् प्रथममित्यस्य वैय्यर्थ्यापत्तेः । न द्वितीयः,—दृष्टान्तवैषम्यात् । तथाहि,—वषट्कर्तुरित्यत्र भक्षस्य समासघटकत्वेन समासमध्ये अर्धेनानुवादः अर्धेन विधिः न सम्भवति, इति गत्यभावाद्विशिष्टमपूर्वं विधीयते—इत्युक्तम्, इह तथात्वाभावात् ॥

वृद्धान्नमस्कुर्यात्—इत्यनेन प्राप्तानुवादसम्भवे विशिष्टविधिकल्पनायाः असम्भवात् इति चेत्—न । सूत्रे नतिवर्जनं—इत्यनेन न नतिसामान्यं निषिध्यते, किं तर्हि—कायिकं दण्डवन्नमनं **निषिध्यते** । मानसं गुरुनमनं भवत्येव ॥ इति

कथं सामान्येन श्रुतस्य नतिवर्जनं—इत्यस्य सङ्कोचः प्रमाणमन्तरेति चेत्—न वयंस्वेच्छया सङ्कोचं कुर्मः, किं तु सप्रमाणम् । तदुक्तं परमानन्दतंत्रे—

गुरोर्गुरौ समीपस्थे प्रगुरुं पूजयेच्छिवे ।
गुरोः पूजाऽऽदिकं सर्वं मनसैव प्रकल्पयेत् ॥ इति ॥

अत्र आदिपदेन नमस्कारोग्राह्यः ॥

तत्र आदौ प्रगुरोः कायिकोनमस्कारः, गुरोश्चमानसः । द्वयोः प्राप्तौ—आदौ किं कार्यम्—इति जिज्ञासायां तत्पूरकतया प्रथममिति पदस्य सार्थक्यसम्भवात् केवलक्रममात्रविधायकमिदं, न विशिष्टापूर्वविधिः । तथा च उभयसन्निपाते प्रगुरुं दण्डवत् प्रथमं प्रणम्य—गुरुं मनसा प्रणमेत्—इति फलितम् ॥

अत्र विधौ निषेधे च—नतिपदेन पूजासामान्यं लक्ष्यते, पूर्वलिखितपरमानन्दतन्त्र वचनात् । एवं गुरुप्रगुरुपदं प्रगुरुपूर्वपरम्परासन्निपातेऽपि तुल्यत्वलक्षकम्

गुरुणां सन्निपाते तु सर्वाद्यं तत्र पूजयेत् ॥

इति योगिनीतन्त्रवचनात् ॥ ७१ ॥ इति—

इतोत्र एतद्दशमखण्डस्थ-८२-सूत्रान्तं यावत् २८४-पत्रतः ३०६-पत्रान्तं-सभाष्यं सच्छिष्यकर्तव्यमवश्यमालोक्यमिति सूचयामि ॥

( ६।२२ वि. सर्वः सं. )

**६।२३ स्वदेहे श्रीगुरुपूजनं, कुत्र कर्तव्यम्; ॥**

१—सामान्यतः श्रीसर्वगुरूणां पूजनं स्वशिरसि कर्तव्यं—अत्र प्रमाणम्

योगिनीतन्त्रे-२-पटले-१० पत्रे—यथा

॥ अभ्यर्च्य च शिरःपद्मे श्रीगुरुं करुणामयम् ॥ इत्येवोक्तम्

**२—स्वदेहे गुरुपादुकार्चनस्थानमाराधनशब्दार्थश्च ॥**

अत्रैव प. क. सू. २ खण्डे—श्रीगणनायकपद्धतौ ७९-पत्रे ६ सूत्रान्ते, उक्तं यथा—

तद्बिन्दुभिस्त्रिशः शिरसि गुरुपादुकामाराधयेत् ॥ ६ ॥ इति

**॥ अत्र भाष्यम्—**

तद्बिन्दुभिः संस्कृतप्रथमबिन्दुभिः त्रिशः त्रिवारं शिरसि विधिबिले गुरुपादुकामाराधयेत् । आराधनं नाम गुरुपादुकोद्देशेन द्रव्यत्यागः । तस्याहवनीयादिवत् देशनियमः शिरसि । बिन्दुभिरित्यनेन द्रव्यमाननियमः । सावरणगणपतिपूजायामपि नियमोऽनेन क्रियते ॥ इति ॥

३—तथैवात्र प. क, सू. ३—खण्डे—श्रीक्रमे १२१-पत्रे-३१-सूत्रारम्भेऽपि—यथा—

तद्बिन्दुभिस्त्रिशः शिरसि गुरुपादुकामिष्ट्वा० इत्यादि ॥

**॥ अत्र भाष्यं यथा—**

तद्बिन्दुभिः विशेषार्घबिन्दुभिः त्रिशः त्रिवारं, शिरसि द्वादशान्तस्थाने, गुरुपादुकामिष्ट्वा गुरुपादुकोद्देशेन द्रव्यदानं कृत्वा० इत्यादि ॥

४—तथैव कुलार्णवतन्त्रे—६—उल्लासे-५७—पत्रे ॥ मूर्ध्नि **श्रीगुरुपङ्क्तीश्च** मूलाधारे च पादुकाम् ॥ इति ॥

**५ ॥ गुरुपादुकासामान्यमन्त्रः श्यामागुरुपादुकामन्त्रस्थलमपि ॥**

पुनश्चात्रैव प-क-सूत्रे ६ खण्डे श्रीश्यामाक्रमे १९३ पत्रे ७ सूत्रे मूले—१० खण्डे-२६४-पत्रे—३२—सूत्रे मूले भाष्ये च यथा—

॥ समस्तप्रकटगुप्तसिद्धयोगिनीचक्रश्रीपादुकाभ्योनमः । इति ॥

शिरस्यञ्जलिमाधाय स्वगुरुपादुकापूजां च विधाय ॥ ७ ॥

॥ अत्र भाष्यं यथा–

स्वगुरुपादुकापूजां विधाय । श्रीश्यामागुरुपादुका, [1]वक्ष्यमाणा, तेन स्वमूर्ध्नि पुष्पाक्षतान् निक्षिपेत् ॥ ७ ॥ ( ६।२३–५ वि. सं. )

६–२३/६ ॥ गुरुतर्पणे विशेषार्घसामान्यार्घजलग्रहणे विवादः ॥

अपरं च वामकेश्वरतन्त्रान्तर्गतनित्याषोडशिकार्णवे, सेतुबन्धे-८-विश्रामे-३१४ पत्रे-स्वदेहे गुरुपूजने–यथा—

॥ अनेनैव विशेषार्घ्योदकेन गुरून् पूजयेदित्याह–

गुरुपादालिमापूज्य भैरवाय ददेत् पुनः ।
तदाज्ञाप्रेरितं तत्तु गुरुपङ्क्तौ निवेदयेत् ॥ ११ ॥

तत्पात्रस्थं जलं पात्रान्तरेण गृहीत्वा स्वशिरसि विभावितां परशिवादिस्वगुरुपर्यन्त-परम्परां पादुकामन्त्रेण पात्रान्तरोद्धतार्घ्योदकाक्षतैरभ्यर्च्य स्वहृदयास्थिताय कामेश्वराय कामेश्वरीसहिताय तज्जलं दत्त्वाऽऽज्ञां गृहीत्वा दिव्यसिद्धमानवौघाख्यगुरुपङ्क्तित्रयं पुनः स्वशिरसि पूजयेदित्यर्थः ।

प्राञ्चस्तु–विशेषार्घ्यपात्रमेवाऽऽललाटमुद्धृत्य तज्जलेन स्वशिरसि परशिवादिपरम्परा-मोघत्रयं च संतर्प्य पुनर्भैरवात्मकाय स्वगुरवे शिरस्येव समर्प्य तस्य गुरोराज्ञया प्रत्यक्ष गुरुपङ्क्तौ निवेदयेदिति–व्याचक्षते । तदयुक्तम् ।

यावत् पूजासमाप्तिस्तावत्-अर्घ्यपात्रचालनं न कार्यमिति तन्त्रसारोक्तनिषेधविरोधात् । प्रत्यक्षगुरुपङ्क्तेः कादाचित्कत्वेन नित्यवच्छ्रवणविरोधाच्च । भैरवपदस्य गुरुपरत्वेन व्याख्याने मानाभावाच्च ॥ ११३ ॥

७–॥ श्रीपरापूजने गुरवे अर्घ्यदानप्रसङ्गे सामान्यगुरुपादुका-मन्त्रः ॥

॥ अत्रैव प. क. सू. ८ खण्डे २४४ पत्रे २३ सूत्रे–तद्भाष्ये च–यथा—

॥ मूलमुच्चार्य सामान्यपादुकया स्वमस्तकस्थाय गुरवे अर्घ्यं निवेद्य ॥ २३ ॥

अत्र भाष्यम्—

सामान्यपादुकया दीक्षाप्रकरणे पठितगुरुपादुकामन्त्रेण

चिदग्नेरुद्दीपनम्

पुनश्चिदग्निमुद्दीप्तं विभाव्य ॥ २४ ॥

॥ अत्र भाष्यम्—

उद्दीप्तं विशेषेण दीप्तं विभाव्य

---

1. इयं श्रीमदाद्यामहापादुका, पुरस्तने-१०-खण्डे, सर्वसाधारणक्रमे २६८ पत्रे-४८-सूत्रे-द्रष्टव्या-

ओघत्रयाभ्यर्चनम्

दिव्यौघं तिस्रः पादुकाः सिद्धौघं तिस्रः मानवौघमष्टावभ्यर्च्य ॥ २५ ॥

॥ **अत्र भाष्यम्**—

दिव्यौघसिद्धौघमानवौघानाम्—अर्चनं—आवरणदेवताऽर्चनवद्विशेषार्घ्यद्रव्येण स्वहृदये-एव कार्यम् ॥ २५ ॥

**दिव्यौघादीनाह**—

पराभट्टारिकाऽघोरश्रीकण्ठशक्तिधरक्रोधत्र्यम्बकानन्दप्रतिभादेव्यम्बावीरसंविदानन्दमधुरा-देव्यम्बाज्ञानश्रीरामयोगाइति पराक्रमपादुकाः ॥ २६ ॥

॥ **अत्र भाष्यम्**—

पराभट्टारिका अघोरः श्रीकण्ठः, इति—**दिव्यौघः**। शक्तिधरः क्रोधः त्र्यम्बकः इति—**सिद्धौघः**। आनन्दः प्रतिभादेव्यम्बा वीरः संविदानन्दः मधुरादेव्यम्बा ज्ञानः श्रीरामः योगः—इति **मानवौघः** ॥ २६ ॥ इति ॥

( ६।२३ वि. सर्वः सं. )

**६–२४ ॥ यन्त्रादौ श्रीगुरुपूजनं कुत्र कार्यम् तत्र स्थानं दिक् च ॥**

ज्ञानार्णवे १६ पटले ६४ पत्रे यथा—

१ ॥ मध्यप्राक्त्र्यस्रमध्ये हि गुरुपङ्क्तिं त्रिधाऽर्चयेत् ।

परारूयान् पूजयेदादौ परापरविभक्तिकान् ॥ ४९ ॥

ततोऽपरांस्त्रिधा देवि गुरुन् सम्पूजयेत् प्रिये ॥ इति ॥

२ तथैव ! अत्रैव प. क. सू. ४ खण्डे श्रीललिताक्रमे १४९ पत्रे—१०—सूत्रे—क्रयाङ्ग पूजने यथा——॥ ओघत्रयपूजायाम् ॥

मध्ये प्राक् त्र्यस्रमध्यान्तः । इत्यादि सूत्रं भाष्यं च—दृश्यम् । अत्र च, गुरूणां सङ्ख्याप्यस्तीति ॥

( ६।२४ वि. सर्वः सं. )

**६–२५ ॥ शिष्यस्य तान्त्रिकनामदाने–श्रीगुरुपादुकामन्त्रविषय च ॥**

१ श्रीगुरुपादुकामन्त्रोपदेशात् पूर्वं सङ्केतितशिष्यनामदानविषये अत्रैव प. क. सू. १ खण्डे ६५ पत्रे—ततस्तस्य शिरसीत्यादि—४०—सूत्रे-तद्भाष्ये च, शिष्यनामकरण विधिरुपदिष्टः सोऽवश्यं—दृश्यः ॥ इति

## ॥ शिष्यायात्मपादुकामन्त्रदाने-षट्तारस्थलम् ॥

२ ततस्तस्मै च आत्मपादुकां षट्तारयुक्तां दद्यादित्यपि, तत्रैव पत्रे—बालोपदिष्टैः पूर्वमित्यादि-४१-सूत्रे तद्भाष्ये च सङ्केतिततम् श्री भगवतैव। ततश्च श्रीगुरुपादुकोपयुक्ताः षट्ताराअपि ज्ञेयाः ॥ इति ॥

( ६।२५ वि. सर्वः सं. )

## ६/२६ ॥ श्रीगुरुपङ्क्तिध्यानम्—तत्र स्थलं—तत्पूजा च—

कुलार्णवतन्त्रे ६ उल्लाससमाप्तौ ६०-पत्रे-यथा—

॥ देवतापुरतोदेवि गुरुपङ्क्तींश्च तर्पयेत् ।

पङ्क्तित्रयक्रमेणाथ ज्ञात्वा सम्यगनन्यधीः ॥

॥ स्वहस्ताभ्यां मुद्रां धनुरपि कपालञ्च दधतीम् ।

द्रुतस्वर्णप्रख्यामरुणकुसुमालेपवसनाम् ॥

कृपापूर्णापाङ्गामरुणनयनामम्बरजटा ।

मुपेतां सिद्धौघैर्यजत गुरुपङ्क्तिं क्रमगतिम् ॥

॥ एवं सम्पूज्य धूपञ्च दीपं नैवेद्यमेव च ।

आसवं पिशितोपेतं भक्ष्याणि विविधानि च ॥

कदल्यादि फलान्येव ताम्बूलञ्च समर्पयेत् ॥ इति ॥ ( ६।२६ वि. सं. )

## ६/२७ ॥ श्रीगुरुपादुकामहामन्त्रोद्धारः ॥

श्रीगुरुपादुकामन्त्रोद्धारोत्रैव प-क-सू-१० खण्डे, सर्वसाधारणक्रमे-२६४-पत्रे-३२ सूत्रे भाष्ये च-यथा—

श्रीपादुकां तुरीयमाह—

॥ तारित्रिकं सप्तममुद्राशिवशक्तिसंवर्तपुपञ्चमपुरन्दरवरयूंशक्तिशिवक्षमान्ते वादिवरयीं-शिवभृगुत्रिशूलबिन्दुभृगुशिवत्रिशूलविसृष्टयः श्रीपूर्वं स्वगुरुनामतोऽष्टाक्षरी-चेति-श्रीपादुका च ॥ ३२ ॥ इति ॥

॥ **अत्र भाष्यम्**ः ।

॥ तारित्रिकं त्रितारी । सप्तममुद्रा तद्बीजमुक्तम् । शिवः हः । शक्ति सः । संवर्तः क्षः क्षकारस्य प्रळयस्य(च) चरमदशारूपत्वात् क्षकारस्य चरमत्वरूपसंवर्तरूपत्वम् । पुः पवर्गः तस्य पञ्चमोमकारः-पुरन्दरोलः,-एतान् पठित्वा-ततोवरयूं-इति पठित्वा ततः

शक्तिः सः। शिवः हः। क्षमौ श्रुयमाणमेव वर्णद्वयम्। अमीषामन्ते अग्रभागे वादिः वात् पूर्ववर्णोमातृकासु लः। ततोवरयीं। ततः शिवः हः। भृगुः सः। त्रिशूलं औ–बिन्दुः हसौं- इति सम्पन्नम्। भृगुशिवत्रिशूलाउक्ताः। विसृष्टिः विसर्गः। ततः स्वगुरोर्दीक्षानाम। ततः श्रीपादुकां इत्यष्टाक्षरपाठः। अष्टाक्षरे आदौ यः श्रीवर्णः तस्य पूर्वं गुरुनामेत्यर्थः। एषा श्रीपादुका० ॥ ३२ ॥ ( ६।२७ वि. सं. )

६/२८ ॥ श्रीगुरुपादुकास्मरणमन्त्रमाहात्म्यफलानि ॥

कुलार्णवतन्त्रे १०७-पत्रे–१२ उल्लासारम्भतः, श्रीशिवोक्तिर्यथा—

श्रीदेव्युवाच।

॥ कुलेश। श्रोतुमिच्छामि पादुकां भक्तिलक्षणाम्।

ईश्वरउवाच।

॥ शृणु देवि। प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण भक्तिराशु प्रजायते ॥
वाग्भवामूलवलये सूत्राद्याः कवलीकृताः।
एवं कुलार्णवे ज्ञानं पादुकायां प्रतिष्ठितम् ॥
कोटिकोटिमहादानात् कोटिकोटिमहाव्रतात्।
कोटिकोटिमहाज्ञानात् पराश्रीपादुकास्मृतिः ॥
कोटिमन्त्रजपाद्देवि पुण्यतीर्थावगाहनात्।
कोटिदेवार्चनाद्देवि पराश्रीपादुकास्मृतिः ॥
महारोगे मोहात्पाते महादोषे महाभये।
महापदि महापापे स्मृता रक्षति पादुका ॥
दुराचारे दुरालोके दुःसङ्गे दूष्यसङ्ग्रहे।
दुराहारे च दुर्बुद्धौ स्मृता रक्षति पादुका ॥
तेनाधीतं स्मृतं ज्ञातं दृष्टं दत्तञ्च पूजितम्।
जिह्वाग्रे वर्त्तते यस्य परा श्रीपादुकास्मृतिः ॥
सकृत् श्रीपादुकां देवि योवा वदति भक्तितः।
ससर्वपापरहितः प्राप्नोति परमां गतिम् ॥
शुचिर्वाप्यशुचिर्वापि भक्त्या स्मरति पादुकाम्।
अनायासेन धर्मार्थकाममोक्षान् लभेत सः ॥
श्रीनाथचरणाम्भोजं यस्यां दिशि विराजते।

तस्यै दिशे नमस्कुर्याद् भक्त्या प्रतिदिनं प्रिये ॥
न पादुकापरोमन्त्रोन देवः श्रीगुरोः परः ।
॥ न हि शास्त्रात् परं ज्ञानं न पुण्यं कुलपूजनात् ॥
ध्यानमुलं गुरोर्मूर्त्तिः पूजामूलं गुरोः पदम् ।
मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥
गुरुमूलाः क्रियाः सर्वालोकेऽस्मिन् कुलनायिके ।
तस्मात् सेव्योगुरुर्नित्यं सिद्ध्यर्थं भक्तिसंयुतैः ॥
तावदार्त्तिभयं शोकोलोभमोहभ्रमादयः ।
यावन्नायाति शरणं श्रीगुरुं भक्तवत्सलम् ॥
तावद्भ्रमन्ति संसारे सर्वदुःखमलीमसाः ।
न भवेत् श्रीगुरोर्भक्तिर्यावद्देवेशि देहिनः ॥
सर्वसिद्धिफलोपेतोमन्त्रः शुध्यति शोभनः ।
गुरोः प्रसादमूलोऽयं परतत्त्वमहात्मनः ॥
यदा ददाति सन्तुष्टः प्रसन्नोवरदोमनुम् ।
तदा भक्त्या धनैः प्राणैर्गुरुं यत्नेन तोषयेत् ॥
यदा दद्यात् स्वशिष्येभ्यः स्वात्मानं देशिकोत्तमः ।
तदा मुक्तोभवेच्छिष्यस्ततोनास्ति पुनर्भवः ॥
तावदाराधयेत् शिष्यः प्रसन्नोऽसौ यदा भवेत् ।
गुरौ प्रसन्ने शिष्यस्य सद्यः पापक्षयोभवेत् ॥
मनसापि न काङ्क्षेत यान् कामान्नवजीविनः ॥
सम्पादयन्ति तान् सर्वान् स्वामिनोभक्तवत्सलाः ।
ब्रह्मविष्णुमहेशादिदेवतामुनियोगिनः ॥
कुर्वन्त्यनुग्रहं तुष्ट्या गुरौ तुष्टे न संशयः ।
भक्त्या सन्तुष्टगुरुणा योपदिष्टः कृपात्मना ॥
कर्ममोक्षोभवेत् शिष्योभुक्तिमुक्त्योः सभाजनम् ॥
शिष्येणापि ततोग्राह्यं सदा सन्तोषितोगुरुः ।
प्रियं कुर्य्याच्च देवेशि मनोवाक्कायकर्मभिः ॥
यदि वा परितुष्येत गुरुणा यत्र कुत्रचित् ।
मुक्तोऽसीति समुद्दिष्टः सोऽपि मुक्तिं व्रजेत् प्रिये ॥
अथवा निष्प्रपञ्चेन धार्मिकेण चिदीश्वरि ।
करोति गुरुरूपेण पशुपाशविमोचनम् ॥

**गुरुभक्तिगौरवम्**

॥ न मे प्रियश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः ।
तस्मै देयं ततोग्राह्यं सतु पूज्योह्यहं यथा ॥
विप्रोऽपि गुणयुक्तोवाप्यभक्तोन प्रशस्यते ।
म्लेच्छोऽपि गुणहीणोऽपि भक्तिमान् शिष्यउच्यते ॥
गुरुभक्तिविहीनस्य तपोविद्या कुलं व्रतम् ।
सर्वं नश्यति तत्रैव भूषणं लोकरञ्जनम् ॥
गुरुभक्त्यग्निना सम्यग्दग्ध्वा सर्वगतिर्नर
श्वपचोऽपि परैः पूज्योन विद्वानपि नास्तिक ॥

**गुरुभक्त्या मोक्षः**

॥ धर्मार्थकामैः किं तस्य मोक्षएव करे स्थितः ।
सर्वोपायैर्गुरौ देवि यस्य भक्तिः सदा स्थिरा ॥
सशिवोगुरुरूपेण भुक्तिमुक्तिप्रदोमम ।
इति भक्त्या स्मरेद्यस्तु तस्य सिद्धिरदूरतः ॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैव कथिताह्यर्थाः प्रकाशन्ते कुलेश्वरि ॥
**॥ नारायणे महादेवे मातापित्रोश्च राजनि ।**
**भक्तिर्यथा भवेद्देवि तथा कार्य्या निजे गुरौ ॥**
लक्ष्मीनारायणौ वाणीधातारौ गिरिजाशिवौ ।
श्रीगुरुं गुरुपत्नीञ्च पितराविति चिन्तयेत् ॥
गुरुभक्त्या यथादेवि प्राप्यन्ते सर्वसिद्धयः ।
सर्वदानतपस्तीर्थव्रताद्यैर्न तथा प्रिये ॥
श्रीगुरौ निश्चला भक्तिर्वर्द्धते हि यथा यथा ।
तथा तथान्यविज्ञानं वर्द्धते कुलनायिके ॥
किं तीर्थाद्यैर्महायासैः किं व्रतैः कायशोषणैः ।
निर्व्याजसेवा देवेशि भक्तिर्येषां निजे गुरौ ॥
कायक्लेशेन महता तपसा वापि यत् फलम् ।
तत् फलं लभते देवि सुखेन गुरुसेवया ॥
भोगमोक्षार्थिनां ब्रह्मविष्णवीशपदकाङ्क्षिणाम् ।
भक्तिरेव गुरौ देवि **नान्यः पन्था इति श्रुतिः** ॥इति॥
अशुभानि च कर्माणि सुमहापातकानि च ।
भक्तिः क्षणेन दहति तूलराशिमिवानलः ॥

विश्वासाय नमस्तस्मै सर्वसिद्धिप्रदायिने ।
येन मृद्दारुद्दशदः फलन्त्यविफलं फलम् ॥
न योगोन तपोनार्चाक्रमः कोऽपि प्रलीयते ।
अमायाकुलमार्गेण भक्तिरेव विशिष्यते ॥
साक्षाद्गुरुमये देवि सर्वेऽस्मिन् भुवनान्तरे ।
किन्तु भक्तिमतां क्षेत्रे मन्त्रः केषां न सिध्यति ॥
॥ गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धिकम् ।
प्रतिमासु शिलाबुद्धिं कुर्वाणोनरकं व्रजेत् ॥
गुरुं न मर्त्यं बुध्येत यदि बुध्येत तस्य तु ।
न कदाचिद्भवेत् सिद्धिर्मन्त्रैर्वा देवतार्चनैः ॥
श्रीगुरुं प्राकृतैः सार्द्धं ये स्मरन्ति वदन्ति वा ।
तेषां हि सुकृतं सर्वं पातकं भवति प्रिये ॥
जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः ।
गुरुर्विशेषतः पूज्योधर्माधर्मप्रदर्शकः ॥
गुरुःपिता गुरुर्माता गुरुर्देवोगुरुर्गतिः ।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥
गुरोर्हितं हि कर्तव्यं मनोवाक्कायकर्मभिः ।
अहिताचरणाद्देवि विष्ठायां जायते कृमिः ॥
शरीरवित्तप्राणैश्च श्रीगुरुं वञ्चयन्ति ये ।
कृमिकीटपतङ्गत्वं प्राप्नुवन्ति न संशयः ॥
॥ गुरुत्यागाद्भवेन्मृत्युर्मन्त्रत्यागाद्दरिद्रता ।
गुरुमन्त्रपरित्यागाद्रौरवं नरकं व्रजेत् ॥ इत्यादि ॥

( ६।२८ तथा च-६ वि. सर्वः सं. )

**॥ सप्रश्रयनिवेद्यम् ॥**

अनर्हार्हशिष्यादि तत्सद्गुरूणां
यथाज्ञानतस्तन्त्रतोयत्स्वरूपम् ॥
समाख्यायि विद्यानिधिश्रीशिवाभ्यां
मदीयं वचोलेशतोन प्रकल्प्यम् ॥

प. क. सू. पुनरावृत्तिकारः ॥

सम्पन्नमिदं कुसच्छिष्यनिदर्शकं श्रीगुरुदेवतापरिशिष्टं-६-षडनुक्रमसङ्ख्यम् ॥

ॐ श्रीशिवमस्तु

## द्विपरिशिष्टवि. ७–उपचारविषये ॥

अत्र प. क. सू. वृत्तिकृता विदुषा श्रीपरमानन्दतन्त्रस्थाः १६ उपचाराः निर्दिष्टास्तैरेव आस्तां श्रीदेवतार्चनम्—

परं च एतत्प्रसङ्गेन सदाराधकवर्याणां श्रौतस्मार्तकर्मठानां च विशिष्टानन्दोद्बोधाय, उपचारशब्दार्थः, उपचारसङ्ख्यादिज्ञेयं चोद्ध्रियते नानाग्रन्थेभ्यः—

**वि. ७|१/१–उपचारशब्दार्थः**—अत्रैव प. क. सू. ४ खं. श्रीललिताक्रमे १३८ पत्रे, ४ सूत्रभाष्ये, यथा—

अत्र, उपचारपदार्थश्च कल्प्यमानद्रव्यजनितः सुखविशेषः तं कुर्यात्–उत्पादयेदित्यर्थः ॥ इति ॥

उपचारसमर्पणे अत्र **नास्तिकमतनिरोधनशास्त्रार्थो**ऽपि–यथा—

॥ न च नित्यतृप्तायां देवतायां कल्प्यमानद्रव्येण कीदृशी सुखोत्पत्तिः–इति वाच्यम्, नित्यतृप्ते सुखोत्पत्तिः न भवतीति सत्यं, तथाऽपि परिच्छिन्नशरीरकल्पनवत् तच्छरीरेसुखकल्पनेन स्वात्मन्यदृष्टोत्पत्तिरेव, न तु कल्पितेन परदेवतायाः सुखोत्पत्तिः ।

अत एवोक्तं शिवमहिम्नः स्तोत्रे,—

" न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति " इति ।

अतएवोपचारमन्त्रे कल्पयामीत्येव क्रियापदं योजितम् । शेषं सुस्पष्टम् ॥४॥ इति ॥

७–१/२–सटीक शारदा० ४ पटले २८८ पत्रे ९२ श्लो. टीकायाम्—

**उपचारशब्दार्थो**ज्ञानमालायामुक्तः । यथा—

॥ भक्त्या चैते कृतादेवे साधकं देवसन्निधिम् ।
चारयन्ति यतस्तस्मादुच्यन्ते ह्युपचारकाः ॥
समीपे चारणाद्वाऽपि फलानां ते तथोदिताः ॥ इति ॥

**७–१/३–उपचारशब्दार्थः** आराधनायां सेवायाम्-उत्कोचे, उपचर्यायां, पूजाद्रव्ये वस्त्रे समे-इति शब्दरत्नाकरः इति बङ्गदेशीयभारतीति मासिकपुस्तके ४ अङ्के ॥

( ७|१ वि. सर्वः सं. )

### ७|२–उपचाराणां सङ्ख्याविषये,—

तत्रैव—

**एकोपचारो**यथा–शब्दकल्पद्रुमे पूजाप्रकरणे,

॥ केवलेनैव पुष्पेण........... ।

केवलेनाक्षतेनैव केवलेन जलेन वा—॥ इति ॥

७१३ ॥ **द्वावेवोपचारौ**, तत्रैव—॥ द्व्युपचारौ, गन्धपुष्पाभ्याम् ॥ इति

७१४ ॥ **त्र्युपचारा**अपि तत्रैव—त्र्युपचाराधूपदीपौ विना[1] यदि ॥ इति ॥

( ७१४ वि. सं. )

७१५ ॥ **पञ्चोपचारायथा**ः—

१ ॥ श्रीगा. पु. पद्धतौ ४२ पत्रे–विश्वामित्रसंहितायां यथा—

गन्धादयोनिवेद्यान्ताः पूजा पञ्चोपचारिकी ॥ इति ॥

२ **जाबालिः**—

॥ ध्यानमावाहनं चैव भक्त्या यच्च निवेदनम् ।

नीराजनं प्रणामश्च पञ्च पूजोपचारकाः ॥ इति ॥

३ अन्यच्च—गन्धपुष्पे धूपदीपौ नैवेद्यं पञ्च ते क्रमात् ॥ इति ॥

य. आ. सू. १०८ पत्रे

४ **सटीकशारदातिलके**–४ पटले २८८ पत्रे ९२ श्लो. टीकायाम्–यथा—

॥ गन्धपुष्पे धूपदीपौ नैवेद्यं पञ्च संस्मृताः ॥

सपर्या पञ्चधा प्रोक्ता तासामेकां समाचरेत्—॥ इति ॥

( ७१५ वि. सर्वः सं. )

७१६–**सप्तोपचाराअपि** तत्रैव प्रयोगसारे यथाः–

१ ॥ अर्घ्यं गन्धस्तथा पुष्पमक्षताधूपएव च ।

दीपनैवेद्यसप्ताङ्गी सपर्येत्यपरे जगुः ॥ इति ॥

२ ॥ **सटीकशारदातिलके**, ४ पटले २८९ पत्रे–९२ श्लो.

टीकायाम्–७ उपचारायथाः–

॥ अर्घ्यं गन्धस्ततः पुष्पमक्षताधूपएव च ।

दीपनैवेद्यसप्ताङ्गी सपर्येत्यपरे जगुः ॥ इति ॥

( ७१६–वि. सर्वः सं. )

७१७–**दशोपचारविषये** ॥

१–**दशोपचारा**ज्ञानमालायां यथाः—

---

१. अत्र धूपदीपौ विना-इत्यनेन आगामिवि. गतपञ्चोपचारेभ्यः एतौ त्याज्यौ-अवशिष्टमुपचारत्रय मुपादेयमित्यर्थोज्ञेयः ॥

॥ अर्घ्यं पाद्यं चाचमनं स्नानं वस्त्रनिवेदनम् ।
गन्धादयोनैवेद्यान्ताउपचारादश क्रमात् ॥ इति ॥
य. आ-सू. १०८ पत्रे

२-सटीकशारदा० ४ पटले २८८ पत्रे ९२ श्लो. टीकायां १० उपचारायथाः-
॥ अर्घ्यपाद्याचमान्येव मधुपर्कौचमान्यपि ॥
गन्धादयोनैवेद्यान्ताउपचारादश क्रमात् ॥ इति ॥
( वि. ७१७ सर्वः सं. )

**७१८-द्वादशोपचाराः** अपि तत्रैव यथाः-
॥ आसनस्वागते वस्त्रभूषे [1]त्यक्त्वा तु द्वादश ॥ इति ॥

**वि. ७१९-षोडशोपचारविषये- ॥**

**१-षोडशोपचाराः-**

अत्रैव प. क. सू. २ खण्डे ८२पत्रे ९ सूत्रभाष्ये यथा ॥ षोडशोपचाराश्च परमानन्दतन्त्रे परिगणिताः । यथा-
॥ पाद्यमर्घ्यं चाचमनं स्नानं वस्त्रं च भूषणम् ।
गन्धं पुष्पं धूपदीपौ नैवेद्यं चापि वीटिकाम् ।
नीराजनं चाञ्जलिं च परिक्रामं नतिं शिवे ।
गणयेदुपचारान् वै प्रत्येकं षोडशेश्वरि ॥ इति प. क. सू. वृत्तिकारः

**२-अन्यथाप्यत्रैव** प. क. सू. ७-खं. वाराहीक्रमे २१८ पत्रे, २३-सूत्रे च साक्षाद्भगवतैवोक्ताः-१६-उपचाराः-यथाः-
॥ पाद्यार्घ्याचमनीयस्नानवासोगन्धपुष्पधूपदीपनीराजनछत्रचामरदर्पणरक्षाचमनीयनैवेद्यपानीयताम्बूलाख्यषोडशोपचारकॢप्त्यन्ते ॥ २३ ॥ ॥ इति ॥

**३-ज्ञानमालायाम्**-यथाः-
॥ आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम् । मधुपर्कार्पणं स्नानं वसनाभरणानि च ॥ सुगन्धः सुमनोधूपौ दीपोनैवेद्यमेव च । माल्यानुलेपने चैव नमस्कारोविसर्जनम् ॥ ॥ इति ॥
य. आ. सू. १०९-पत्रे-

**४-नागदेवः-**

आवाहनासने पाद्यमर्घ्यमाचमनीयकम् । स्नानं वस्त्रोपवीते च गन्धमाल्यादिभिः क्रमात् ॥ धूपोदीपश्च नैवेद्यं नमस्कारः प्रदक्षिणा । उद्वासनं षोडशकमेवं देवार्चने विधिः ॥ इति. य. आ. सू. १०९-पत्रे-

---

१-अर्थात् पुरस्तन ७१९ विषयोक्त १६ उपचारेभ्यएषां चतुर्णामग्रहणे-१२ भवेयुरिति ज्ञेयम् ॥

५—आनन्दाश्रमग्रन्थावलि ७३ ग्रन्थाङ्के—श्रीमच्छङ्कराचार्यकृतश्री. गा. पु. पद्धतौ ४२ पत्रे, **विश्वामित्रसंहितायां** यथाः—

॥ आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्कं तथा स्नानवस्त्रालङ्करणानि च ॥
गन्धपुष्पे धूपदीपौ नैवेद्यं मुखवासनम् ।
नमस्कारं षोडशं च कल्पयेद्देवताप्रियम् ॥
प्रयोजयेत् पूजनार्थं द्वाद(षोड)शैताननुक्रमात् । इति ॥

६—कर्मप्रदीपे ॥

आवाहनासनं पाद्यमर्घमाचमनीयकम् ॥ स्नानं वस्त्रोपवीते च गन्धमाल्यान्यनुक्रमात् ॥ १ ॥
धूपोदीपश्च नैवेद्यं ताम्बूलं च प्रदक्षिणा ॥ पुष्पाञ्जलिरिति प्रोक्ताउपचारास्तु षोडश ॥ २ ॥
यजुः सं. भा. १५ पत्रे च

७—सटीकशारदा-४-पटले-२८८ पत्रे. भाष्ये. ९२ श्लो. टीकायाम् षोडश मूले स्पष्टाः ते तत्र द्दश्याः ॥ इति ॥

७—९—१६ [1]सङ्ख्यराजोपचाराः अपि—यजुः सं. भास्करे-यथाः—
/८

ततः पञ्चामृताभ्यङ्गमङ्गस्योद्वर्तनं तथा । मधुपर्कः परिमलद्रव्याणि विविधानि च ।
पादुकान्दोलनादर्शं व्यजनं छत्रचामरे ।
वाद्यार्तिक्यं नृत्यगीतशय्याराजोपचारकाः ॥ इति ॥ य. आ. सू. १०८ पत्रे
( ७।९—वि. सर्वः सं. )

**७।१०—अष्टत्रिंशोपचाराः** । ज्ञानमालायाम्-यथाः—

१—अर्घ्यं पाद्यमाचमनं मधुपर्कमुपस्पृशम् ।
स्नानं नीराजनं वस्त्रमाचामं चोपवीतकम् ।
पुनराचमनं भूषा दर्पणालोकनं ततः ।
गन्धपुष्पे धूपदीपौ नैवेद्यं च ततः क्रमात् ॥
पानीयं तोयमाचामं हस्तवासस्ततः परम् ।
( हस्तवासः करोद्वर्तनम् ) ।
ताम्बूलमनुलेपश्च पुष्पदानं ततः [2]पुनः ॥

---

१. समयश्चेदितोप्यधिकाअवश्यं सम्भावनीयाराजोपचाराअत्रैव द्वि. प. शि. १३ विषयानन्तरमुपात्तास्तैरपि श्रीष्टदेवता सुप्रसादनीयेति विनयामि ॥

२. पुनः पुनरिति शारदायां मूलपाठः ।

गीतं वाद्यं तथा नृत्यं स्तुतिश्चैव प्रदक्षिणा ॥
पुष्पाञ्जलिनमस्कारावष्टत्रिंशत्समीरिताः ॥ इति ॥

य. आ. सू. १०९ पत्रे ॥ (७-१०।१ वि. सं. )

७-१०-सटीकशारदा, ४ पटले २८८ पत्रे, ९३ श्लो. टीकायाम्-ज्ञानमालाया-
२
मन्यथाऽपि-यथाः-

अष्टत्रिंशत्षोडशार्कदशपञ्चोपकारकाः ।
तान् विभज्य प्रवक्ष्यामि के के ते तैः कृतैश्च किम् ॥
आसनं प्रथमं तेषामावाहनमुपस्थितिः ।
सान्निध्यमाभिमुख्यञ्च स्थिरीकृतिः प्रसाधनम् ॥
अर्घ्यञ्च पाद्याचमने मधुपर्कमुपस्पृशम् ।
स्नानं नीराजनं वस्त्रमाचामं चोपवीतकम् ॥
पुनराचामभूषे च दर्पणालोकनं ततः ।
गन्धपुष्पे धूपदीपौ नैवेद्यञ्च ततः क्रमात् ॥
पानीयं तोयमाचामं हस्तवासस्ततः परम् ।
ताम्बूलमनुलेपश्च पुष्पदानं पुनः पुनः ॥
गीतं वाद्यं तथा नृत्यं स्तुतिश्चैव प्रदक्षिणम् ।
पुष्पाञ्जलिनमस्कारावष्टत्रिंशत् समीरिताः ॥ इति ॥

७-१०-तत्रैव मन्त्रतन्त्रप्रकाशेऽपिः-
३
आसनं प्रथमं तेषु ततश्चावाहनं मतम्
उपस्थानञ्च सान्निध्यम् । [1]इत्यादिना
पुष्पाञ्जलि नमस्कारौ विष्णुप्रीत्यै भवन्त्यमी ।
त्रिंशच्चाष्टौ समाख्याताउपचारामनीषिभिः ॥ इत्यन्तेन ॥

( ७।१०-वि. सर्वः सं. )

**७।११ चतुःषष्ठिसङ्ख्योपचाराः।** केवलशक्तिविषये, सिद्धयामलोक्तायथा-
१
१ आसनारोपणम्
२ सुगन्धितैलाभ्यङ्गः ।
३ मज्जनशालाप्रवेशनम् ।
४ मज्जनमणिपीठोपवेशनम्
५ दिव्यस्नानीयकम् ।
६ उद्वर्तनस्नानम् ।
७ उष्णोदकस्नानम्
८ कनककलशस्थितसकलतीर्थाभिषेकः

१. इमे-उपचारामन्त्रतन्त्रप्रकाशग्रन्थे एव विलोक्याः ।

९ धौतवस्त्रपरिमार्जनम् ।
१० अरुणदुकूलपरिधानम् ।
११ अरुणदुकूलोत्तरीयम् ।
१२ आलेपनमण्डपप्रवेशनम् ।
१३ आलेपन(मण्डप)मणिपीठोपवेशनम् ।
१४ चन्दनागरुकुङ्कुमकर्पूरकस्तुरीरोचनादिव्य-गन्धसर्वानुलेपनम् ।
१५ केशमारभ्य कालागरुधूपमल्लिकामालती-जातिचम्पकाशोकशतपत्रपूगकुड्मलीपुन्नाग-यूथीसर्वर्तुकुसुममालाभूषणम् ।
१६ भूषणमण्डपप्रवेशनम् ।
१७ भूषणमणिपीठोपवेशनम् ।
१८ नवमणिमुकुटम्
१९ चन्द्रशकलम्
२० सीमन्तसिन्दूरम्
२१ तिलकरत्नम्
२२ कालाञ्जनम्
२३ नासाभरणम्
२४ अधरयावकम्
२५ ग्रथनभूषणम्
२६ कनकचित्रपदकम्
२७ महापदकम्
२८ मुक्तावलिः
२९ एकावलिः
३० देवच्छन्दकः
३१ केयूरयुगलम्
३२ वलयावलिः
३३ हारावलिः
३४ गर्भकावलिः
३५ काञ्चीदाम
३६ कटिसूत्रम्
३७ शोभनाख्याभरणम्
३८ पादवाटकम्
३९ रत्ननूपुरम्
४० पादागुलीयकम्
४१ एककरे पाशः
४२ अन्यकरेऽङ्कुशम्
४३ इतरकरे पुण्ड्रेक्षुचापः
४४ अपरकरे पुष्पबाणः
४५ श्रीमन्माणिक्यपादुके
४६ स्वसमानवेशाख्यावरणदेवताभिः सह सिंहासनारोहणम् ।
४७ कामेश्वरपर्यङ्कारोहणम्
४८ अमृताशनचषकम्
४९ आचमनीयकम्
५० कर्पूरवीटिका
५१ आनन्दोल्लासविलासहासः
५२ मङ्गलारात्रिकम्
५३ श्वेतछत्रम्
५४ चामरयुगलम्
५५ दर्पणः
५६ तालवृत्तम्
५७ गन्धः
५८ पुष्पम्
५९ धूपः
६० दीपः
६१ नैवेद्यम्
६२ पुनराचमनीयकम
६३ ताम्बूलम्
६४ वन्दनम्

इति चतुष्षष्ट्युपचाराः । श्रीलक्ष्मणशास्त्रिद्रविडकृतबङ्गदेशीयसंस्कृतभारतीयमासिक-पुस्तके ॥ इति ६४-उपचारप्रकार; १ एकः सम्पूर्णः॥

॥२-**अथापरः प्रकारः** अत्रैव प. क. सू. १३८-पत्रे ४ खण्डे, श्रीललिताक्रमे ५ सूत्रे-यथा—

॥ त्रितारीमुच्चार्य पाद्यं कल्पयामि नमः-इति क्रमेण, आभरणावरोपणं सुगन्धितैलाभ्यङ्ग-मज्जनशालाप्रवेशनम्-मज्जनमण्डपमणिपीठोपवेशनं-दिव्यस्नानीयोद्वर्तनं-उष्णोदकस्नानं-कनककलशच्युतसकलतीर्थाभिषेकं--धौतवस्त्रपरिमार्जनं-अरुणदुकूलपरिधानं--अरुणकुचोत्तरीयमालेपमण्डपप्रवेशनमालेपमण्डपमणिपीठोपवेशनं-—चन्दनागरुकुङ्कुम[1]सङ्कुमृगमदकर्पूरकस्तूरीगोरोचनादिदिव्यगन्धसर्वाङ्गीणविलेपनं-केशभरस्य कालागरुधूपं—मल्लिकामालतीजातीचम्पकाशोकशतपत्रपूगकुड्मलीपुन्नागकल्हारमुख्यसर्वर्तुकुसुममालां-भूषणमण्डपप्रवेशनं-भूषणमण्डपमणिपीठोपवेशनं—नवमणिमुकुटं-चन्द्रशकलं—सीमन्तसिन्दूरं-तिलकरत्नं-कालाञ्जनं-पाळीयुगलं-मणिकुण्डलयुगलं-नासाभरणं-अधरयावकं-प्रथमभूषणं-कनकचिन्ताकं पदकं-महापदकं-मुक्तावलिं-एकावलिं-छन्नवीरं-केयूरयुगलचतुष्टयं-वलयावलिं-ऊर्मिकावलिं-काञ्चीदाम-कटिसूत्रं-सौभाग्याभरणं-पादकटकं-रत्ननूपुरं-पादाङ्गुलीयकं-एककरे पाशं-अन्यकरे अङ्कुशं-इतरकरे पुण्ड्रेक्षुचापं-अपरकरेपुष्पबाणान्-श्रीमन्माणिक्यपादुके-स्वसमानवेषाभिरावरणदेवताभिः सह, महाचक्राधिरोहणं-कामेश्वराङ्कपर्यङ्कोपवेशनम्-अमृतासवचषकं-आचमनीयं-कर्पूरवीटिकां-आनन्दोल्लासविलासहासं-मङ्गलारार्तिकं-छत्रं-चामरयुगलं-दर्पणं-तालवृन्तं-गन्धं-पुष्पं-धूपं-दीपं-नैवेद्यं कल्पयामि नमः-इति चतुष्षष्ट्युपचारान् विधाय ॥

॥ अत्र प्रत्येकोपचारपार्थक्यं विदुषा, स्वधियावधेयम् ॥ (७११ वि. सर्वः सं.)

### ७१२-द्विसप्तत्युपचाराः ॥

॥ एतच्चतुष्षष्ट्युपचारापेक्षयापि तन्त्रान्तरस्थाअष्टौ उपचाराः अधिकाः-तत्र प्रमाणं, सभाष्यश्रीललितासहस्रनामग्रन्थे- ७२ पत्रे १०९ श्लोकभाष्ये श्रीपण्डितेन्द्रभास्कररायः-यथा—

॥ चतुरधिकाषष्टिश्चतुष्षष्टिस्तावन्तउपचाराभगवता परशुरामेण कल्पसूत्रे गणिताः । अन्येऽप्यष्टौ तन्त्रान्तरे ।

शिवपादप्रसूनानां धारणं चात्मरोपणम् ।
परिवारविसृष्टिश्च गुरुभक्तार्चनं तथा ।

१-शङ्कुः-शिलारसः-इति टी.

शैवपुस्तकपूजा च शिवाग्नियजनं ततः।
शिवपादोदकादानं साङ्गं प्राणाग्निहोत्रकम्।
एते चतुष्षष्टियुताउपचाराद्विसप्ततिरिति ॥

एवं च उपरितनाः चतुष्षष्ट्युपचाराः इमे चाष्टौ मिलित्वा जाता द्विसप्ततिरुपचाराणा मितिज्ञेयम् ॥ ( ७।१२ वि. सं. )

७।१३–उपर्युक्तेभ्यः १–२–३–५–७–१०–१२–१६–३८–६४–७२-सङ्ख्योपचारेभ्योऽन्ये प्रतिनिध्युपचाराश्चान्यत्रोक्ताअपि अधिकतया समर्पयितुं शक्यन्ते तत्र प्रमाणम् ॥

अत्रैव–प. क. सू. ४ खण्डे १३७-पत्रे-४ सूत्रभाष्ये यथा—

॥ ननु किमयं परिसङ्ख्याविधिः, उत नियमविधिः, उत अपूर्वविधिः, । नाद्यः, केनापि प्रमाणेन नित्यमप्राप्तेः। पक्षेऽपि प्राप्त्यभावेन न द्वितीयः। तर्हि तृतीयः स्यादिति चेदिष्टापत्तिः। तथाऽपि सर्वांशेनापूर्वविधिः, उपचारांशे अपूर्वः चतुष्षष्ठ्यंशे, नियमः। उपचारविधौ उपचाराणामनन्तत्वेन तत्र नानासङ्ख्याप्राप्तौ चतुष्षष्टिसङ्ख्यायाः अपि पक्षे प्राप्तत्वात् न च–एवमेकस्मिन्नियमापूर्वस्वीकारे विधिसाङ्कर्यं, इति–वाच्यम्; इष्टापत्तेः, यदाग्नेयोऽष्टाकपाल–इति–वाक्ये, अग्निपुरोडाशयोः पक्षे प्राप्तौ, तदंशे नियमः, यांगांशे अपूर्वः–इति दृष्टत्वात्।

न च चतुष्षष्ट्युपचारान् विधाय, इत्यग्रिमसूत्रेण[१] परिसङ्ख्याविधिः अनेनोपचारविधिः, इति वाच्यम्,। तथा सति अस्मिन् सूत्रे[२] चतुष्षष्टिपदवैय्यर्थ्यात्। न च–एवं सति [३]चतुष्षषष्टीत्यग्रिमवाक्यं व्यर्थम्-इति शङ्कनीयम्, चतुष्षषष्ट्युपचारानन्द्य, क्रमविशेष-विधानात्। सर्वथा नोपचारस्य सङ्ख्यायाविधायकं तत्। [४]कुर्यादिति स्पष्टविध्यन्तम्-इदमेव सङ्ख्याविशिष्टोपचारविधायकम् ॥

यद्वा–पाठेनैव क्रमसिद्धौ अग्रिमेण चतुष्षषष्ट्युपचारान् विधाय[५], इत्यनेन क्रमविधानासम्भवात् विहितानामेव इति, चतुष्पषष्ट्युपचारान् विधाय, इत्यनुवादकं–उपसंहार-रूपम्। अस्य फलं तु तन्त्रान्तरे,–चतुष्षषष्ट्युपचारानन्तर्भूताः उक्तादन्ये केचन सन्ति[६], तैरर्चनं माभूत्, किं तु प्रतिनिधिं कल्पयित्वा मन्त्रे श्रतद्रव्यनाम्नैवार्पणमेतदर्थम्-इत्थं चोक्तोपचारादधिकैः सम्भवे सति पूजनं कर्तव्यम्।

॥ अतएव त्रिपुरार्णवेः—

उक्तोपचारादधिकैः सम्भवे सति पूजयेत् ॥

१. आगामि–५–सूत्रेण–इत्यर्थः। २. एतत्प्रचलिते–४–सूत्रे–इत्यर्थः। ३. प्रचलित सूत्रस्यादिस्थमित्यर्थः। ४. प्रचलितसूत्रस्थमिदं पदम्। ५. अग्रिमसूत्रेन्तिमं पदमिदम्। ६. एते अन्ये उपचाराअत्रैव परिशिष्टे पाश्चात्यविषये एव १–तः–७२ पर्यन्तानिमदित्ताः–

इति वचनं—उक्तन्यायगर्भमेव । नियमविधेरयोगव्यवच्छेदे तात्पर्यम्, न त्वन्य योगव्यवच्छेदे । तेन, चतुष्षष्ट्युपचारमध्ये एकस्याप्ययोगोमा भवत्वित्यत्रैव तात्पर्यम्, न त्वधिकव्यवच्छेदे । तस्मात्—इतोऽधिकानां शिबिकागजाश्वनृत्यादीनां यावतां सम्भवः तावत् कल्पनं सूत्राविरुद्धं मन्तव्यम् ॥ इति ॥ (७।१३ वि. सं.)

## ७।१४—उपचारसामान्ये ॥

पूर्वमुक्ताः श्रीदेवतोपचारास्तु प्रायोनियताएव, तथापि-तावत्सङ्ख्यतत्तत्सर्वोपचाराणामभावे श्रद्धालूनां तावतोपचारकरणेनापि पूजारम्भपरिसमाप्तिजन्यकर्मफललब्धिः स्यात्तदर्थमयमुपचारसामान्यपरिशिष्टविषयः प्रस्तूयतेः—

१—श्रीकालिकापुराणे-५५-अध्याये—यथाः—

॥ यत्र यत्र नरः पूजां निर्जने कुरुते च यः ।
तस्यादत्ते स्वयं देवी पत्रं पुष्पं फलं जलम् ॥ इति ॥

२—श्रीमद्भागवते-११ स्कन्धे यथाः—

॥ द्रव्यैः प्रसिद्धैर्मद्यागप्रतिमादिष्वमायिनः ।
भक्तस्य च यथा लब्धैर्हृदिभावेन चैव हि ॥ इति ॥

३—पूष्पाभावे भविष्ये यथाः—

॥ अलाभे तु सुपुष्पाणां पत्राण्यपि निवेदयेत् ।
पत्राणामप्यलाभे च तृणगुल्मौषधीरपि ॥
ओषधीनामलाभे तु भक्त्या भवति पूजनम् ।
यत् पुण्यं प्रतिपुष्पे तद्दशधा स्वर्णनिर्मिते ॥ इति ॥ य. आ. सू. १२८

---

॥ अभावे पुष्पपत्राणामन्नाद्येनापि पूजयेत् ।
शालीतण्डुलगो धूमयवैर्वापि समर्चयेत् ॥ इति ॥

४—पिच्छिलातन्त्रे-१२-पत्रे—यथाः—

॥ उपचारैः षोडशभिर्भवेत्तत् पूजनं महत् ।
नित्ये दशोपचारांस्तु पञ्च वा विरचेच्छिवे ॥

(रचयेच्छिवे—इति, साधुः पाठः)

अभावे गन्धपुष्पाभ्यां पुष्पेण तदभावतः ।
तदभावे यजेत् पत्रैस्तण्डुलेन जलेन वा ।
[1]मानसं तदभावे तु न पूजां लङ्घयेत् क्वचित् ॥ इति ॥

---

१—इदं मानसपूजनं अत्रैव ग्रन्थे ८०—पत्रेऽस्ति ततोग्राह्यम्—

**५–पाश्चात्योपचारसामान्ये बाधकं मानसं पूजनम् ॥** अत्रैव. प. क. सू. १४१-पत्रे, ४. खण्डे-श्रीललिताक्रमे ५ सूत्रभाष्ये यथाः—

॥ चतुषष्ट्युपचारमध्ये उक्तस्य अलाभे प्रतिनिधिद्रव्यनियमउक्तस्तन्त्रान्तरे ॥

॥ तत्तद्द्रव्येणोपचारानभावे कुसुमाक्षतैः ।
मनसा भावयन् कुर्यात्तेन पूजाफलं लभेत् ॥ इति ॥

**६–इदं प्रतिनिधिकल्पनमपि गन्धपुष्पधूपदीपनैवेद्यव्यतिरिक्त-विषयमेव ।** तदुक्तं योगिनीतन्त्रे-यथाः—

उपचारानलाभे तु पुष्पाद्यैर्मनसा स्मरेत् ।
गन्धपुष्पधूपदीपनैवेद्यान्यन्महेश्वरि ॥
**गन्धादिपञ्चकाभावे पूजा व्यर्थैव सर्वदा ॥** इति ॥

प. क, सू. ४ खं. ५, सू. भा.–१४२ पत्रे ॥

( ७।१४-वि. सर्वः सं. )

द्वि॰ परि. वि, ८ ॥–**पदार्थानुसमयकाण्डानुसमयविषये ॥**

अनुसन्धानम्–प. क. सू. १ खण्डे ९९ पत्रे ३४ सूत्रभाष्ये–तथा ४ खण्डे १३७–पत्रे ३ सूत्रभाष्ये च–

१–पदार्थानुसमयलक्षणं यथाः—

हेमाद्रौ भविष्योत्तरग्रन्थे च–
॥ सर्वेषामेकतन्त्रेण रव्यादीनां यथाविधि ।
पूजनं तु प्रकर्तव्यं पदार्थोनुप्रकीर्तितः ॥

**इति पदार्थानुसमयः ॥**

२–अथ **काण्डानुसमयलक्षणमपि** तत्रैव–यथाः—

॥ एकैकस्यावाहनादि पुष्पाञ्जल्यन्तपूजनम् ।
समाप्य च ततोऽन्यस्य इति काण्डोऽनुकीर्तितः ॥

**इति काण्डानुसमयः ॥**

अयमत्र फलितार्थः—

यत्राऽनेकदेवतास्थापनेऽनेकदेवतापूजाप्रसक्तिस्तत्राऽनेकदेवतापूजनविधिनियामककाण्डा-नुसमयपदार्थानुसमययोरुभयोरपि प्राप्तिस्सामान्येन भवत्येव ।

परञ्च ताभ्यामुभाभ्यां कतमोऽनुसमयोग्राह्यः स्यात्तदेतच्छङ्कापङ्कनिवारणाय, शास्त्र-सम्प्रदायानुसारप्राप्तव्यवस्थयैव विधीयमाने तत्तत्कर्मणि ।

पदार्थानुसमये गृह्यमाणे स्थापितानां सर्वेषां देवानां एकतन्त्रेण ( युगपत् सहैवेति यावत् ) पूजनादि कर्तव्यमिति सिद्धान्तोऽवधेयः ।

शास्त्रोक्तव्यवस्थया काण्डानुसमये च गृह्यमाणे, स्थापितप्रत्येकदेवस्याऽऽवाहनादि-पुष्पाञ्जल्यन्तपूजनं विधाय–इतरस्य देवस्य पूजनादि कर्तव्यमिति तात्पर्यं ज्ञेयमिति ( पुनरावृत्तिकारः ) ॥

**३–काण्डानुसयपदार्थानुसमयव्यवस्थाज्ञानम्** ॥ इतोऽप्यधिकतया काण्डानुसमयपदार्थानुसमययोर्व्यवस्थाशास्त्रज्ञानाय कात्यायनश्रौतसूत्रे-१-७-१-तः-१-७–८–मूलसूत्राणि तद्गतभाष्याण्यपि चाऽवश्यं दृग्गोचरीकार्याणीति विनिवेदयामि जिज्ञासुभ्यः इति ॥

४–**केवलकाण्डानुसमये** ॥ अन्यच्च प. क. सू. ४-खण्डे, श्रीललिताक्रमे ३-सूत्रभाष्ये १३७-पत्रे-काण्डानुसमयविषयेऽयमेव वृत्तिकारोलिखति यथाः–

॥ चैतन्यमहसोबहिर्निस्सारणं कृत्वा मन्त्रेण परिच्छिन्नां मूर्तिं कल्पयित्वा हस्ते समानीय मन्त्रेण पीठनिवेशनान्तं–आवाहनपदार्थः; अवदानादिप्रदानान्तस्येव बह्वीनां क्रियाणां एकपदार्थत्वे बाधकाऽभावात् ।

तेन यत्र दीक्षादौ नानादेवतानां तन्त्रेण पूजनं, तत्र समुदायस्यैकपदार्थत्वात् काण्डानुसमयस्तावतां सिद्धः ।

एतावता उपर्युक्तप्रसङ्गादावेव काण्डानुसमयग्रहणं–इति द्योत्यते श्रीवृत्तिकृता पण्डितेन इति ॥ ( ८ वि. सर्वः सं. )

परिशिष्ट वि. ९ ॥ **श्रीबालात्रिपुराविषये** ॥

१ इयं श्रीबालात्रिपुरा देवता, श्रीश्रीविद्यवास्ति[1]

२ पुनश्चेयं देवता त्र्यक्षरी–षडक्षरी–नवाक्षरीत्यादिभेदेन अत्रैव प. क. सूत्रे अन्यत्रापि तन्त्रेषु ॥

तथाऽपि त्र्यक्षर्येव प्रायोबहूपलभ्यते तत्स्वतन्त्रोपास्तौ ।

३ इयं देवता पूर्णविद्यानामपि मूलमेव मता किं विशेषेणापि तु, ब्रह्माण्डसौभाग्या, श्रीशिवप्रिया श्रीगौर्येवेयं कुमारी च इति ॥

४ ॥ **श्रीबालात्रिपुरापञ्चाङ्गावरणपूजादिविषये** ॥

॥ एतद्देवतायाः प्रातःकृत्यस्नानादि–तान्त्रसन्ध्या–पात्रस्थापनावरणपूजाहोम-बटुक कुमारीसुवासिनीपूजनप्रार्थना, पात्रोद्वासनादिश्रीबालापञ्चाङ्गादिकर्मकृते, मत्कृतश्री बहुचर-

१ एतत्प्रमाणायाग्रतनपत्रस्थः ९-८ वि. द्रष्टव्यः ॥

चिन्तामण्यपरनामक,—श्रीबालातन्त्रचिन्तामणिनामकोग्रन्थोऽवश्यं विलोक्यः इच्छा चेत् तत्पश्चाङ्गादीनामिति ॥ ( ९।१-वि. सर्वः सं. )

९।२-॥ **श्रीत्र्यक्षरीबालात्रिपुरागायत्र्युद्धारः** ॥ अत्रैव प. क. सू. ३ खण्डे श्रीक्रमे ८९ पत्रे ५ सूत्रे मूले, श्रीभगवद्वाक्यम्—यथा—

१-॥ वाचमुच्चार्य त्रिपुरसुन्दरि विद्महे, काममुच्चार्य पीठकामिनि धीमहि, शक्तिमुच्चार्य तन्नः क्लिन्ना प्रचोदयादिति

॥ अत्र भाष्यं दृश्यम् ९० पत्रे

॥ **श्रीमन्त्रमहोदधौ**-८-तरङ्गे-६३-पत्रेऽपि यथा—

२-कामान्ते त्रिपुरादेवि विद्महे काविषं भगि ॥ बकः खड्गीशमारूढः सनेत्रोग्निश्च धीमहि ॥ ७८ ॥ तन्नः क्लिन्ने प्रचोदांते यादंता कीर्तिता बुधैः । गायत्री त्रैपुरी सर्वसिद्धिदा सुरसेविता ॥ ७९ ॥

अत्र टीका—यथा—

गायत्रीमुद्धरति ॥ कामान्त-इति ॥ कामः क्लीं ॥ भगि एयुतं विषमः मे ॥ बकः शः खड्गीशं वकारमारूढः श्वः ॥ सनेत्रः अग्निः रि ॥ खरूमन्यत् ॥ इति[1]

३-**ज्ञानार्णवे** ४ पत्रे-२ पटले १९ श्लोकतः—यथा—

॥ यथाशक्त्या जपेन्मन्त्रं गायत्रीं परमेश्वरीम् ।
मूलविद्याद्यमुच्चार्य वागीश्वरि च विद्महे ॥ १९ ॥
द्वितीयं बीजमुच्चार्य कामेश्वरि च धीमहि ।
तृतीयं बीजमुच्चार्य तन्नः शक्तिः प्रचोदयात् ॥ २० ॥ इति ॥

४ **रुद्रयामले विश्वसारोद्धारतन्त्रे**। श्रीबालात्रिपुरास्तोत्रारम्भे, यथा—

॥ मान्मथं त्रिपुरादेवि विद्महे पदमीरयेत्। उक्त्वा कामेश्वरिपदं प्रवदेद्धीमहि ततः। तन्दन्ते प्रवदेद्भूयस्तन्नः क्लिन्ने प्रचोदयात् । गायत्र्येषा समाख्याता त्रैपुरी सर्वसिद्धिदा ॥ इति ॥

५-**प्रत्यक्षं यथा**—बालातन्त्रचन्द्रिकायाम् १४८ पत्रे यथा—

१ ॐ ऐं त्रिपुरायै विद्महे क्लीं कामेश्वर्यै धीमहि ॥ तन्नः क्लिन्ना प्रचोदयात् ॥

२ ॐ ऐं त्रिपुरयै विद्महे क्लीं कामेश्वरि धीमहि॥ सौः तन्नः शक्तिः प्रचोदयात्॥

अत्रानवधानतां संशोध्य वाच्या ॥ इति ॥ ( ९-२ वि. सर्वः सं. )

---

१-प्रत्यक्षं-क्लीं त्रिपुरा देवि विद्महे कामेश्वरि च धीमहि ॥ तन्नः क्लिन्ने प्रचोदयात्

**९।३–श्री त्र्यक्षरीबालात्रिपुरामन्त्रोद्धारः,**–कुत्र कुत्र ग्रन्थेऽस्तिः–तत्र ॥ श्री. प. क. सू. १०७ पत्रे, तदुक्तं श्रीदेवीभागवते, ४-स्कन्धे यथाः—

१–वाग्भवं कामराजं च मायाबीजं (शक्तिबीजं इति पाठान्तरम्) तृतीयकम्। चित्ते यस्य भवेत्तं तु न कश्चिद्बाधितुं क्षमः ॥

२–प. क. सू. ग्रन्थे ३ खं. श्री. क्रमे, १०७–पत्रे, यथाः-नित्यारहस्येः–

॥ वाग्भवं प्रथमं देवि कामराजं द्वितीयकम्–इति श्रीबालामन्त्रोद्धारः ॥

॥ अयमुद्धारः प. क. सू. वृत्तिकृतात्र शक्तिबीजोद्धाररहितः सङ्ग्रथितस्तदपि स्वधिया पर्यवसादयितव्यः तृतीयबीजाध्याहारेण ॥ इति ॥ अत्रैव २६३–पत्रं द्रश्यम्

३–प. क. सू. १० खण्डे, २६३–पत्रे, सर्वसाधारणक्रमे, २९ सूत्रभाष्ये, वृत्तिकारः, यथाः–

त्र्यक्षरी तु शुद्धबाला। सैव कुमारीपदवाच्या। तावुभौ पर्यायौ। त्र्यक्षर्याः केवलबालापदवाच्यत्वे, प्रमाणं तु तन्त्रान्तरेः—

श्रृणु देवि प्रवक्ष्यामि बालायामन्त्रसाधनम्।

इत्युपक्रम्य–वाचं कामं समुच्चार्य शक्तिबीजं ततः पठेत्।

इयं बाला त्र्यक्षरी सा या पुरोक्ता तवानघे ॥

( इयं श्रीशिवां प्रति श्रीशिवोक्तिः। )

॥ अत्र-२९ मूलसूत्रे आदावेव श्रीभगवतोद्धृतस्त्र्यक्षरीबालामन्त्रः–इत्यपि ज्ञेयम्–

४–वामकेश्वरतन्त्रे-१ विश्रामे ५७ पत्रे–सभाष्य-१०९ श्लोकोत्तरार्धतः, ११० सङ्ख्यान्तश्लोकैर्विद्वन्मान्यश्रीभास्कररायपण्डितः सुसमीचीनं सफलोद्धारं–यथाह—

॥ वाग्भवं प्रथमं देवि कामराजं द्वितीयकम्।

शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ॥

एषा विद्या महेशानि० ( करशुद्धिकरी स्मृता ) ॥ १०६।

अत्रोद्धरिष्यमाणानव मन्त्राः प्रत्येकं त्रित्रिबीजाः। तत्र प्रथमानां बीजानां वाग्भवमिति नियता संज्ञा। द्वितीयानां कामराजमिति पुराणेषु तन्त्रेषु च तथा-व्यवहारदर्शनात्।

तथा च देवीभागवते चतुर्थस्कन्धे–यथा—

वाग्भवं कामराजं च मायाबीजं तृतीयकम्।

चित्ते यस्य भवेत्तं तु न कश्चिद्बाधितुं क्षमः ॥ इत्यादि।

५–ज्ञानार्णवेऽपि द्वितीयपटले[1]–४–पत्रे–

॥ वाग्भवेनेन्दुमहसा वागीशत्वप्रदायिनी ।

कामराजेन बीजेन शक्रगोपस्फुरत्त्विषा ॥

त्रैलोक्यं मोहयन्तीयं शक्तिबीजेन सुव्रते[2] इत्यादि ।

श्लो. ११-१२–तृतीयानां तु माया, शक्तिरित्यादिरनियता संज्ञा । तत्र नियते द्वे संज्ञे विधातुमाह–वाग्भवमिति ।

प्रथमबीजोद्देशेन वाग्भवसंज्ञाविधिः । एवमुत्तरत्र । वाक्, भवत्यस्मादिति वाग्भवं, कामोराजते यत्र तत् कामराजं, तृतीयबीजस्य संज्ञाद्वयं तु मूलविद्योद्धारदशायां व्यक्तीकरिष्यति । अथवा, वाग्भवोद्देशेन मातृकाप्रथमाक्षरविधिः ॥ कामराजमुद्दिश्य मातृकाद्वितीयाक्षरविधिः । ते चाक्षरे सम्प्रदायात् सबिन्दुके । शुद्धमातृकायाअपि सम्प्रदायात् सबिन्दुकतया ततएव तत्सिद्ध्यभिप्रायेण बिन्दोरनुक्तिः । सम्प्रदायैक सिद्धत्वेन स्वशास्त्रे सबिन्दुकायाएव शुद्धमातृकात्वमिति कण्ठरवेणाकथनात्तदभि प्रायेण तत्र तत्र बिन्दोरुक्तिश्च । तेन तादृशस्थले बिन्दुयुतमातृकान्यासइव बिन्दु-द्वयोच्चारणमिति तु न भ्रमितव्यम् । शक्तिपदमध्याहृत्य तदुद्देशेन तृतीयं बीजमुद्धरति शान्तान्तमिति । शकारस्यान्तः षकारस्तदन्तं सकाराक्षरमैकारस्यान्तओकारस्तदन्त औकारस्तेन योजितं ततः कादिना ककारात् पूर्वेण विसर्गेण योजितं चेत्-सौः, इति-भवति।

९–६ ॥ वामकेश्वरतन्त्रे १ विश्रामे ५८ पत्रेपि यथा—॥

॥ एओमध्यगतं बीजं वाग्विधानाय केवलम् ।

रुद्रयामलतन्त्रे तु निर्दिष्टं परमाक्षरम् ॥ १०७ ।

मादनं शक्रसंयुक्तं चतुर्थस्वरसंयुतम् ।

उर्ध्वमर्धेन्दुबिन्द्वाढ्यं कामराजं समुद्धृतम् ॥ १०८ ।

शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ।

एषा विद्या महाविद्या योगिनीनां महोदया ॥ १०९ ।

कुलविद्या महेशानि सर्वकार्यार्थसाधिनी ।

अनया विद्यया गौरि रक्षामात्मनि कारयेत् ॥ ११० ।

---

१. ज्ञानार्णवे–२–पटले–११–श्लोकोत्तरार्धतः इमे श्लोकाः सन्ति

२. इतोप्यर्धश्लोकोऽधिकस्तत्र, दृश्यः यथा-स्फुरत्सुवर्णवर्णेन सौभाग्यं तस्य मन्दिरे–इति ॥ ज्ञानार्वे-४ पत्रे.

॥ एकारस्य, ओकारस्य च मध्ये पठ्यमानं द्वादशस्वररूपं बीजं सबिन्दुकमैमिति वाग्भवम् । एओङिति माहेश्वरसूत्रइवात्रापि प्रकृतिभावः । तदिदं केवलं बिन्दुहीनमपि वाचः सारस्वतस्य कवित्वस्य विधानाय प्राप्तये भवति किमुत सबिन्दुकमिति भावः ।

॥ तत्रैव ५८ पत्रगतमादनं शक्रेति १०८ श्लोकभाष्यं यथा—

मादनं मदनसम्बन्धि, ककारः । ककारोमदनोब्रह्मा क्रोधीशः कुलपालिनी । इति कोशात् ।

शक्रोलकारस्तेन संयुक्तम् । चतुर्थस्वर ईकारः । तदिदं कामराजाख्यं, क्लीमिति बीजम् । कामराजमित्यनेन राज्यप्रदत्वमुक्तं भवति

॥ **प्रत्यक्षः श्रीबालामन्त्रः** ॥ तत्रैव

॥ शान्तान्तमित्यादि पूर्ववत् । तेन—ऐं क्लीं सौः, इत्याकारकोबालामन्त्रः सिद्धः । कुलविद्येत्येतस्याएव संज्ञान्तरम् ।

तथा च प्रयोक्ष्यते—ततोरक्षां प्रकुर्वीत पूर्वोक्तकुलविद्यया ॥ इति ।

॥ इति वामकेश्वरतन्त्रनित्याषोडशिकार्णवे—१—विश्रामस्थसभाष्य—१०९—श्लोकतः ११० श्लोकसम्बधः सम्पूर्णः । ( ९-४-वि. सं. )

९।७—**श्रीरुद्रयमाले विश्वसारोद्धारतन्त्रे**-श्रीबालात्रिपुरापटले-२-श्लोकतोऽपि यथाः—

**ईश्वरउवाच ।**

॥ अथातः सम्प्रक्ष्यामि गुह्याद्गुह्यतमोत्तमम् ।
येन विज्ञानमात्रेण साधकोभैरवोभवेत् ॥ २ ॥
मन्त्रोद्धारं प्रवक्ष्यामि यथावच्छृणु पार्वति ।
वाग्भवं प्रथमं प्रोक्तं द्वितीयं कामराजकम् ॥ ३ ॥
तृतीयं शक्तिबीजं स्यान्मन्त्रोद्धारः प्रकीर्तितः ।
॥ अथ प्रकाशं—ऐं क्लीं सौः—इतिं मूलमन्त्रः । इति

९।८—सटीक**शारदातिलके**—१ पटले, ८ पत्रेऽपि, यथाः—

यदाहुः—

॥ शिवाष्टमं केवलमादिबीजं भगस्य पूर्वाष्टमबीजमन्यत् ।
परं शिरोन्तं गदिता त्रिवर्णा सङ्केतविद्या गुरुवक्त्रगम्या ॥

शिवउकारस्तस्याष्टमऐकारः । भगम्-एकारः तस्य पूर्वाष्टमश्चतुर्थः स्वरः । शिरोबिन्दुः सोऽन्ते यस्य शिरोऽन्तः औकारः ।

॥ उक्तबीजानां क्रमेण, वाग्भवकामराजशाक्तत्वमाहः—

वाचामधीशम्-( इति पूर्वग्रन्थः[1] ) इत्यनेन आद्यस्य वाग्भवत्वमुक्तम् । चराचरात्मकं मैथुनसृष्टजगतः कामोत्पन्नत्वात् । मध्यमबीजस्य कामराजतोक्ता । सुकृतिनः यदन्त्यबीजं शब्दब्रह्मेत्यूचिरे-इत्यनेनान्त्यस्य शाक्तत्वमुक्तम् । त्रिधामजननी देवी शब्दब्रह्मस्वरूपिणी, इति वक्ष्यमाणत्वात् ॥ इति ॥

९।९–तत्रैव **यदुक्तं सिद्धेश्वरीमते**–

॥ वाग्भवं प्रथमं बीजं कामराजं द्वितीयकम्- ।
शक्तिबीजं तृतीयं तु चतुर्वर्गफलप्रदम् ॥ इति ॥

९।१०–तत्रैव-सटीक**शारदातिलके** । १२-पटले ५३३-पत्रेऽपि-**यथा**:–

अधरोबिन्दुमानाद्योब्रह्मेन्द्रस्थः शशीयुतः ।
द्वितीयं भृगुसर्गाव्योमनुस्तार्तीयमीरितम्- ॥ ७६ ॥
एषा बालेति कथिता त्रैलोक्यवश्यकारिणी ॥ इति ॥

अत्र टीका–यथाः—

बालाबीजैस्त्रिभिरित्युद्दिष्टं बालामन्त्रमुद्धरति, **अधर**–इति । अधरोबिन्दुमान् ऐं । ब्रह्मा ककारः, इन्द्रोलः, शशी-बिन्दुः-ई स्वरूपम् । तेन क्लीं । भृगुः सः सर्गोविसर्गः, **तेन आव्यो** मनुः औ, तेन सौः, इति- । अन्यत्र सबिन्दुरुक्तः,–तदुक्तं **सनत्कुमारे**–

॥ अष्टमस्य तृतीयं तु चतुर्दशसमन्वितम् ।
दण्डकुण्डलमेतद्धि सारस्वतमुदाहृतम् ॥ इति ॥ ( ९।३–१०-वि. सं )

## ९।४–श्रीबालात्रिपुरामन्त्रविनियोगोद्धारौ,

श्रीरुद्रयामले विश्वसारोद्धारतन्त्रे १७ श्लोकोत्तरार्धतः–यथाः–

१–॥ मन्त्रस्यास्य महादेवि ऋषिः प्रोक्तस्तु दक्षिणा[2], ॥ १७ ॥
पङ्क्तिश्छन्दइति ख्यातं देवता त्रिपुरेति च ।
वाग्भवं चैव बीजं स्यात् तार्तीयं शक्तिरीरितम् ॥ १८ ॥
कामराजं कीलकं स्यात् सर्वाभीष्टार्थसिद्धये ।
जपे न्यासे च देवेशि विनियोगः प्रकीर्तितः ॥ १९ ॥

## २–श्रीबालामन्त्रर्षिछन्दः षडङ्गोद्धारश्च ॥

ज्ञानार्णवे २ पटले-५ पत्रे ३६ श्लोकोत्तरार्धतोयथाः—

---

१–अत्र पूर्वतने-७ पत्रे-ध्वनिवर्णाः पदं वाक्यमित्यास्पदचतुष्टयम् । यस्याः सूक्ष्मादिभेदेन वागधीशामुपास्महे । अथं पूर्वग्रन्थश्लोकः शारदा तिलके ।

२.–अत्र दक्षिणाशब्देन, दक्षिणामूर्तिः ऋषिरित्यत्रगम्यम् ॥

॥ ऋषिरस्य महेशानि दक्षिणामूर्तिरव्ययः ॥ ३६ ॥
न्यसेच्छिरसि पूज्यत्वात् पङ्क्तिश्छन्दोमुखे प्रिये ।
देवता हृदये बाला त्रिपुरा परमेश्वरी ॥ ३७ ॥
बीजं तु वाग्भवं शक्तिस्तार्तीयं कीलकं तथा ।
कामराजं महेशानि छन्दोन्यासउदाहृतः ॥ ३८ ॥

## ९।४/३–अथ त्र्यक्षरीश्रीबालात्रिपुरा मूलमन्त्रस्य, ऋषिछन्दआदि ॥

श्रीबालातन्त्रचन्द्रिकायाम्–१४९ पत्रे–यथा—

॥ ॐ अस्य श्रीराजराजेश्वरीबालात्रिपुरसुन्दरीदेवतामूलमन्त्रस्य दक्षिणामूर्तिर्ऋषिः पङ्क्तिश्छन्दः श्रीराजराजेश्वरी बालात्रिपुरसुन्दरी देवता, ऐं बीजं, सौः शक्तिः, क्लीं कीलकम्–मम श्रीराजराजेश्वरीबालात्रिपुरसुन्दरीदेवताप्रीत्यर्थं, यथा ज्ञानेन श्रीराजराजेश्वरीबालात्रिपुरसुन्दरीदेवतामूलमन्त्रजपे विनियोगः ॥

### ॥ श्रीबालात्रिपुरायाः मन्त्रस्य ऋष्यादिषडङ्गन्यासः ॥

ॐ श्रीदक्षिणामूर्तिऋषये नमः, शिरसि ॥ ॐ पङ्क्तिच्छन्दसे नमः, मुखे ॥

ॐ श्रीराजराजेश्वरीबालात्रिपुरसुन्दरीदेवतायै नमः, हृदये ॥

ॐ ऐं बीजाय नमः, गुह्ये ॥ ॐ सौः शक्तये नमः, पादयोः ॥ ॐ क्लीं कीलकाय नमः, नाभौ ॥ ॐ मम श्रीराजराजेश्वरीबालात्रिपुरसुन्दरीदेवताप्रसादसिध्यर्थं जपे विनियोगाय नमः, सर्वाङ्गे ॥

### ॥ करषडङ्गन्यासः ॥

ॐ ऐं, अङ्गुष्ठाभ्यां नमः ॥ ॐ क्लीं, तर्जनीभ्यां नमः ॥ ॐ सौः, मध्यमाभ्यां नमः ॥ ॐ ऐं, अनामिकाभ्यां नमः ॥ ॐ क्लीं, कनिष्ठिकाभ्यां नमः ॥ ॐ सौः, करतलकरपृष्ठाभ्यां नमः ॥

### ॥ अथ हृदयादिषडङ्गन्यासः ॥

ॐ ऐं, हृदयाय नमः ॥ ॐ क्लीं, शिरसे स्वाहा ॥ ॐ सौः, शिखायै वषट् ॥

ॐ ऐं, कवचाय हुम् ॥ ॐ क्लीं, नेत्रत्रयाय वौषट् ॥ ॐ सौः, अस्त्रायफट् ॥

### ॥ अथ श्रीबालात्रिपुराध्यानम् ॥

(१)–ॐ अरुणकिरणजालैरञ्जिताशावकाशा
विधृतजपवटीकां पुस्तकाभीतिहस्ता ॥
इतरकरवराढ्या फुल्लकह्लारसंस्था
निवसतु हृदि बाला नित्यकल्याणशीला ॥ १ ॥

अथवा—

(२)—ॐ रक्ताम्बरां चन्द्रकलावतंसां समुद्यदादित्यनिभां त्रिनेत्राम् ।

विद्याक्षमालावरदानहस्तां नमामि बालामरुणाम्बुजस्थाम् ॥ २ ॥

मानसोपचारैः सम्पूज्य—ॐ ऐं क्लीं सौः—इति—मूलमन्त्रं जपेदिति ॥

( ९।४ वि. सर्वः सं. )

**९।५—श्रीबालात्रिपुरामन्त्रोपास्तिफलम्—एषा बाला—च—श्रीश्रीविद्यैव—इति च ॥**

**१—श्रीवामकेश्वरतन्त्रे—**४ विश्रामे—१४१—पत्रे—

॥ वागीश्वरीज्ञानशक्तिर्वाग्भवे मोक्षरूपिणी

कामराजे कामकला कामरूपा क्रियात्मिका ॥ १७ ॥

शक्तिबीजे पराशक्तिरिच्छैव शिवरूपिणी ।

एवं देवी त्र्यक्षरी तु महात्रिपुरसुन्दरी ॥ १८ ॥

॥ वाग्भवकामराजशक्तिबीजेषु त्रिषु ज्ञानशक्त्यात्मिका वागीश्वरी मोक्षप्रदा, क्रियाशक्त्यात्मिका कामकला कामप्रदा, इच्छाशक्त्यात्मिका पराशक्तिर्धर्मप्रदा क्रमेण तिष्ठति । शिवरूपिणी धर्मप्रदा । एवं प्रकारेण श्रीमहात्रिपुरसुन्दर्येव श्रीविद्यारूपेत्यर्थः ॥ १७ ॥ १८ ॥

२—इदानीं महाज्ञानप्रभावप्रश्नौ समाधत्ते—

॥ पारम्पर्येण विज्ञाता भवबन्धविमोचनी ।

संस्मृता पापहरणी जप्ता मृत्युविनाशिनी ॥ १९ ॥

पूजिता दुःखदौर्भाग्यव्याधिदारिद्र्यघातिनी ।

हुता विघ्नौघशमनी ध्याता सर्वार्थसाधिका ॥ २० ॥

॥ ईदृशं देवीतत्त्वविषयकं महाज्ञानं परमशिवादिस्वगुरुपर्यन्ताविच्छिन्नपारम्पर्योपदेशक्रमेण लब्धं चेदेव भवबन्धं मोचयति । पुस्तकावलोकनादिनोपायान्तरेण लब्धं तु न फलति । प्रत्युतानर्थायैव ।

पारम्पर्यविहीनाये ज्ञानमात्रेण गर्विताः ।

तेषां समयलोपेन विकुर्वन्ति मरीचयः ॥

इत्युत्तरतन्त्रे वक्ष्यमाणत्वात् । पारम्पर्येणेत्युक्त्या विद्यायागुरुमुखात् सप्तविधान्यतमदीक्षापुरःसरमेवोपदेशोग्राह्यइति, ध्वनितम् ।

एवं गुरुमुखाद्विज्ञाय ततः संस्मृता पुनः पुनश्चिन्तिता पापं हरति ।

जपपूजाहोमध्यानैर्मृत्युनाशादिफलप्रदा भवतीत्यर्थः । (९-५।२ वि. सं.)

**तत्रैव** ज्ञानार्णवेऽप्युक्तम्–।

३–॥ एषा विद्या वरारोहे पारम्पर्यक्रमागता ।
भवबन्धं नाशयति स्मृता पापापहारिणी ॥
जप्ता मृत्युञ्जयेशानि ध्याता सर्वार्थसाधिनी ।
दुःस्वदौर्भाग्यदारिद्र्यभयघ्ना पूजिता भवेत् ॥
महाविघ्नौघशमनी हवनान्नात्र संशयः ॥ इति ॥

॥ अत्र विधीयमानाः जपहोमादयः स्वतन्त्राएव । प्रत्येकं फलान्वयात् । पुरश्चर्या होमादयस्तु जपाङ्गमिति सिद्धान्तः । तत्रापि समप्रधानत्वं स्वीकृत्य राजसूयादिवत् परस्पर साहित्य-मात्रमङ्गमित्यपि सुवचम् । इत्यादि तत्रैव-वामकेश्वरतन्त्रे-१४२-पत्रे १९–२० श्लोकभाष्ये ।

॥ अतऊर्ध्वतनग्रन्थे श्रीबालात्र्यक्षराणां पृथक् पृथगुपासनरीतिरस्ति–इति तदुपासकाः विदन्तु ॥ इति ॥

**९–५/४–एतच्छ्रीबालात्रिपुरामन्त्रोपास्तिफलम् ॥**

श्रीरुद्रयामले विश्वसारोद्धारतन्त्रे श्रीबालापटले ४ श्लोकतोयथा—

॥ न तिथिर्न च नक्षत्रं नाङ्गन्यासश्च मन्त्रिणाम् ।
न वारदोषोनो विघ्नोनाशौचं च विधीयते ॥ ४ ॥
यस्य तिष्ठति मन्त्रोऽयं तस्य सिद्धिर्न दूरतः । इति ॥

श्रीबालातन्त्रचन्द्रिका ४०५ पत्रे

**९–५/५–श्रीरुद्रयामले उमामहेश्वरसंवादे श्रीबालास्तवराजे**

आद्यः श्लोकोयथा—

॥ आधारे तरुणार्कबिम्बरुचिरं सोमप्रभं वाग्भवम् ।
बीजं मन्मथमिन्द्रगोपकनिभं हृत्पङ्कजे संस्थितम् ॥
रन्ध्रे ब्रह्मपदे च शक्तिमपरं चन्द्रप्रभाभासुरम् ।
ये ध्यायन्ति पदत्रयं तव शिवे ते यान्ति सूक्ष्मं पदम् ॥ १ ॥ इति ॥

॥ ९-वि. सर्वः सं. ॥

**द्विपरिशिष्ट वि. १० तान्त्रिकरीत्या सामान्यतश्च सङ्कल्पविषये ॥**

**॥ तान्त्रिकसङ्कल्पाङ्गभूताष्टाङ्गोल्लेखे ज्ञेयम् ॥**

एतत्सङ्कल्पविषये–पूर्वं १ खण्डे दीक्षाविधौ ४५-४६ पत्रतः ३१ सूत्रभाष्ये–अष्टाङ्गोलेखनावसरे, श्रीवृत्तिकारविदुषा, बहुशः सुप्रतिपादितम्[1] ।

---

१ सङ्कल्पविषयकज्ञानप्रेप्सुनेदमवश्यमवलोक्यम् ॥

॥ तथापि, तज्जिज्ञासूनां विशिष्टविवेचनानन्दजननाय किंचित्तदेव प्रस्तूयते—यदेतद्ग्रन्थे-नास्ति ॥ इति ॥

**॥ सङ्कल्पावश्यकता तदकरणे दोषश्च ॥**

**१०११—सङ्कल्पेन विना कर्मकरणे दोषउक्तोभविष्ये ॥**

॥ सङ्कल्पेन विना कर्म यत् किञ्चित् कुरुते जनः ।
फलं चाप्यल्पकं तस्य, धर्मस्यार्धक्षयोभवेत् ॥ इति ॥

२—**तथैव प्रपञ्चसारे**, ५-पटले-७५-पत्रे-६१ श्लोके, श्रीमज्जगद्गुरुशङ्कराचार्य पादैरुक्तं यथा—

॥ कालात्मकस्य देवस्य राशेर्व्यक्तिमजानता ।
कृतं समस्तं व्यर्थं स्यादनेन ज्ञानमानिना ॥ इति ॥ ॥६१॥

३—**अन्यच्च-आनन्दाश्रमसंस्कृतग्रन्थावलि** ४०—ग्रन्थाङ्कमुद्रितसन्ध्याभाष्य-समुच्चये, श्रीकृष्णपण्डितविरचितसन्ध्याभाष्ये ४ गुच्छे-१३४ पत्रेऽपि यथा—

१—॥ न च जपादौ सङ्कल्पकरणे मानाभावः । अत्र श्रुतिप्रमाणं तत्रैव दृश्यम्—

२—॥ **सङ्कल्पाभावे कर्मवैफल्यं च स्मर्यते**—

॥ न च श्राद्धं न तद्दानं न होमोन जपस्तदा ।
न प्राप्नोति फलं तस्य सङ्कल्परहितं यदा ॥ इति ॥

एवं सङ्कल्पावश्यकता सार्वत्रिक्येव बोध्या नैकदेशीया—इति ॥

**१०१३—३—सङ्कल्पशब्दार्थोपि सङ्कल्पलक्षणं** च, अत्रैव प. क. सू.-१-खं-३१-सूत्रभाष्ये ४६ पत्रे—यथा । **सङ्कल्पकोनाम**—

विद्यमानदेशकालोल्लेखनपूर्वकफलोल्लेखनसहितप्रकृतकर्मानुष्ठानविषयिणी प्रतिज्ञा । तदुक्तं रहस्यार्णवे—

यत्र देशे साधकस्तु स्थितस्तद्देशमुच्चरन् ।
उल्लिख्य तत्कालमपि प्रतिज्ञा कर्मणस्तु या ।
फलमुद्दिश्याहमिति सङ्कल्पोजलहस्ततः ॥ इति ॥ ( १०१२ वि. सं. )

१०१४—सङ्कल्पावश्यकतादिविषये ॥ य. आ. सू. ११ पत्रे—**यजुःसंहितायां**—१ अध्यायेपि—यथा—

॥ अग्ने व्रतपते व्रतं चरिष्यामि, । इदमहमनृतात् सत्यमुपैमि—सत्यं देवाः अनृतं मनुष्याः—इति श्रुतेः ॥

**५–तथैव बृहद्यमः ॥**

॥सङ्कल्पं च यथा कुर्यात् स्नानदानव्रतादिके ।
अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति च ॥

**६–मार्कण्डेयः–यज्ञव्रतनियमधर्माः–सङ्कल्पजा एव ॥**

॥ सङ्कल्पमूलः कामोवै यज्ञाः सङ्कल्पसम्भवाः ।
व्रतं नियमधर्मौं च सर्वे सङ्कल्पजाः स्मृताः ॥

**७–ऋषिभट्टीये–॥ सङ्कल्पविधा–सङ्कल्पजलमीशान्यां क्षिपेत्तत्र च ॥**

॥ सङ्कल्पश्चेन्मनसि मननं प्रोक्तरीत्याथ वाचा
व्याहर्तव्यं तदनु च करेणाम्बुसेकस्त्रिधेति ।
वाङ्मात्रेण त्वरितकरणे केचिदिच्छन्ति
चाम्बुक्षेपस्थानेऽञ्जलिमुपदिशन्त्यन्यएष्विष्टआद्यः ॥ इति ॥

**८–सङ्कल्पे किं किं वाच्यम् ?** तत्राह भविष्ये– ॥

उच्चार्य मासपक्षादीन् निमित्तानि तथैव च । इदं कर्म करिष्येहमिति सङ्कल्पमाचरेत्–इति ।

९–तथैव श्रीयोगिनीतन्त्रे-२-पटले-१०-पत्रेऽपि

यक्षाशावदनोवापि देवेन्द्रवदनोऽपि वा ॥
मासं पक्षं तिथिश्चैव देवपर्वादिकं तथा ।
आद्यन्तकालमुच्चार्य्य गोत्रं नाम च कामिनाम् ॥
क्रियाद्वयं करिष्येऽहमैशान्यामुत्सृजेत् पयः ॥ इति ॥ ( १०।९ वि. सं. )

**$\frac{१०-१०}{१}$–अष्टाङ्गोल्लेखात्मकसङ्कल्पविषये ॥**

अष्टाङ्गसङ्कल्पविषये अत्रैव प. क. सू. १ खण्डे दीक्षाविधौ ३१ सूत्रभाष्ये ४६-पत्रतः ४८ पत्रान्तमष्टाङ्गोल्लेखे सुबहूक्तम् ॥ इति विदन्तु विवित्सवः॥

१०–१०।२–अथैतत् प. क. सू. द्वि. परिशिष्टविषयावलोकयितृकृते सुरतपत्तनस्थरैकज्ञातीयाऽस्मत्सुहृन्नानाविधज्योतिर्व्याकरणतन्त्रादिशास्त्रनिपुणधिकृष्णशङ्कराभिधेयविदुषा सौभाग्यरत्नाकरग्रन्थोद्धृताष्ठाङ्गसिद्धिपञ्चाङ्गगणितारम्भाद्यत्र प्रदर्श्यते सोदाहरणम्–यथा—

## अथ सोदाहरणमष्टाङ्गसिद्धिपञ्चाङ्गम्

तत्रादौ **अष्टाङ्गक्रमार्थमहर्गणानयनं** सौभाग्यरत्नाकरे–

॥ अथ वक्ष्ये विस्तरेण पारायणविधिं परम् ॥ यस्य विज्ञानमात्रेण साक्षात् परशिवो भवेत् ॥ १ ॥

कालस्वरूपमज्ञात्वा सिद्धये योमनुं जपेत् ॥ कोटिकोटिजपेनापि सिद्धिस्तस्य न जायते ॥ २ ॥ कालस्वरूपविज्ञानमहर्गणविधानतः ॥ अष्टाङ्गक्रमसम्प्राप्तिर्नाल्पस्य तपसः फलम् ॥ ३ ॥ उच्यते प्रथमं तत्र सिद्धकल्पाद्यहर्गणः ॥ अष्टाङ्गक्रमसम्प्राप्तिर्येन तात्कालिकी भवेत ॥ ४ ॥ नभर्तौ ६० शरपक्ष २५ घ्नौ गतवत्सरमिश्रितौ ॥ नवाम्बरधरा १०९ युक्तौ भवेयुः [1]शकवत्सराः ॥ ५ ॥ षष्ठि ६० पूतौ तु चक्राङ्केष्वेकमेवं नियोजयेत् ॥ तेनैव खरसा ६० हन्युः शेषं पूर्ववदेव हिं ॥ ६ ॥ शकोनवाद्रींदुकृशानु ३१७९ युक्तः कलेर्भवेदद्बगणः सुवृक्तः ॥ कल्पाद्यद्बगणः प्रभाकर १२ [2]हतश्चैत्रादि मासैर्युतस्त्रिस्थः खाद्रि ७० हतासयुक् सुर ३३ हतैर्लब्धाधिमासैर्युतः ॥ खत्रिघ्नः ३० सतिथिद्विधा शिवा ११ हतास्त्रिव्योमशैलै ७०३ दूधृतैर्हीनोलब्धदिनावमैः [3]सितनिशार्द्धे सावनोऽहर्गणः ॥ ७ ॥

॥ उक्तं च सौभाग्यतन्त्रे ॥ उदयं पञ्चभिर्हृते नवभिर्नव वासरा ॥

[4]षोडशभिर्भवेन्नित्या खर्शेषे प्रथमा भवेत् ॥ ८ ॥

अथाधुना युगादीनां ज्ञानं हि कथ्यते मया ॥ [5]अङ्काङ्काब्ध्यर्तुवेदाश्वै ७४६४९६ हृते तु युगसन्ततिः ॥ ९ ॥ तच्छेषेङ्गत्र्यश्वपूर्णपक्षै २०७३६ भक्ते परिवृतिः ॥ शेषं रसाद्रिषु ५७५ हृते वर्षाणि तद्गतानि च ॥ १० ॥ तद्वर्षे रसगुणै ३६ भक्ते मासास्तु ते गताः ॥ मासशेषं क्रमाद्ज्ञेयं दिनं (दिननित्याङ्कशेषतः) शून्यादितोभवेत् ॥ ११ ॥ एवमष्टाङ्गसंसिद्धिरस्मात्तात्कालिकी स्मृता ॥ नक्षत्रयोगसंसिद्धिः प्रोक्ता सङ्कल्पवाचने ॥ १२ ॥ शेषमष्टाङ्गकं ज्ञेयं पारायणविदांवरैः ॥ अर्काङ्कशरसन्निभाराशिकरणखेचराः ॥ १३ ॥ पञ्चभूताश्च तद्ज्ञानं स्यादह्नां गणकैः सदा ॥ इति ज्ञात्वा श्रीमतां च विनियोगं समाचरेत् ॥ १४ ॥ तकारः परिवृत्तिश्च खं महायुगमुच्यते ॥ वर्षाक्षराणि षटत्रिंशदकारादीनीत्युदीर्यते ॥ १५ ॥ मासाश्च षोडश प्रोक्ताः स्वराणां षोडशत्वतः ॥ मासस्य दिनसङ्ख्या

---

१. तन्त्रान्तरे—नन्दाद्रीन्दुगुणै ३१७९ र्युतोगतकलिः पक्षेन्दु १२ संवर्धितोयुक्तोऽसौ मधुराद्यकै (गतमासकैः) स्त्रि ३ रुद्धृतः खाश्वै ७० र्हृतैः संयुतः ॥ देवै ३३ राप्तफलैर्युतोनभगणै ३० र्वृद्धः सतिथ्या त्रिकाऽधोष्टौ शून्यनगा ७०८ प्तियुक् श्रुतिरसै ६४ र्लब्धाद्यमैरूनकः ॥ १ ॥ खरामयुक्तोहीनोवा सैकोवापि निरेककः ॥ सुधियाऽहर्गणः कार्योयदि वारोन लभ्यते ॥ २ ॥ एवं संसिद्धमुनिभिस्तन्त्रविद्भिः स्फुटीकृतः ॥ सप्ततष्टोऽपि शुक्रादिः स्यात् प्रतीतावहर्गणः ॥ ३ ॥

तन्त्रान्तरेऽपि च ॥ नन्दसप्तकुगुणान्वितशाको ३१७९ जायते कलियुगं रवि १२ गुण्यम् ॥ यातमाससहितं त्रिविधाऽधः खाश्व ७० लब्धममरा ३३ प्तियुतं तत् ॥ ४ ॥ पूर्णराम ३० गुणितं गततिथ्या सयुतं त्रिरहिपूर्णनगा ७०८ प्त्या ॥ युक्तमब्धिरस ६४ लब्धविहीनं स्याद् भृगोर्दिनगणं भूतले च ॥ ५ ॥

२. चैत्रादिगतमासैरित्यर्थः—

३. शुक्रवारनिशार्धादित्यर्थः—

४. षोडशाख्या नित्यापर्यायनामकाः इतिपाठः ॥

५. षट्त्रिंशद्भि ३६ हृते तद्वद्भवेत् तद्युगयोगकम् ॥ इति ॥

तु षट्त्रिंशच्च प्रकीर्तिता ॥ १६ ॥ अकारादिक्षकारान्ताः षट्त्रिंशद्दिनसंततिः ॥ नित्याश्च षोडश प्रोक्ताः षोडशस्वरसंस्थिताः ॥ १७ ॥[1] कामेश्वर्यादि चित्रान्ता (इदमेकस्मिन् पुस्तके नास्ति) सर्वान्ते षोडशी भवेत् ॥ **पर्यायक्रमतोज्ञेयमिति शास्त्रस्य डिण्डिमः** ॥ १८ ॥

वाराक्षरमथो वक्ष्ये नववर्गाद्यवर्णकान् ॥ अलृकचटतपयशानित्यं त्वेवं विनिर्दिशेत् ॥१९॥ नववारा इति ज्ञेयानव नाथात्मकाः क्रमात् ॥ मासे मासे तु वाराणां चतुरावृत्तयो-भवेत् ॥ २० ॥ घटिकाश्चाथ विज्ञेयाः षष्टिसङ्ख्या दिने दिने ॥ पञ्चाशन्मातृकायाश्च विभागः पञ्चधा भवेत् ॥ २१ ॥ ङकाररहिताः ॥ अएचतयनामानोवर्गाः सम्पद्यते ततः ॥ यस्मिन् दिने तु योवर्णोज्ञात्वा तद्घटिकोदयम् ॥ तदादि गणयेत् धीमान् नाद्यवर्गं जपेत् पुनः ॥

"**अथ चतुरङ्गक्रमः**"—तारत्रयं मूलविद्यां वर्षमासदिनोदयात् ॥ संयोज्य चतुरङ्गाख्योविधिरेषः सुसिद्धिदः ॥ २३ ॥ [2] वारश्च घटिका चैव दिननित्या तथैव च ॥ वर्षमासयुगश्चान्ते परिवृत्तिरिति क्रमात् ॥ २४ ॥ अष्टाङ्गक्रमसंयोगोभृग्वाद्यैः समुपासितः ॥ जपार्चनविधौ ज्ञेयाः शक्तयोऽष्टौ सुसिद्धिदाः ॥ २५ ॥ पुष्पिणी च कुमारी च मोहिनी विमला तथा ॥ जयिनी श्रीकरी चैव पर्वाण्येतानि षट् क्रमात् ॥ २६ ॥ पुष्पिणी वर्षमासाभ्यां मासं दिनं कुमारिका ॥ वर्षं दिनं मोहिनी च विमला मासकोदयात् ॥ २७ ॥ वर्षोदयाभ्यां जयिनी दिनोदयाभ्यां श्रीकरी ॥ इत्येवं पर्वषट्कं स्यात् सोमपानमथो ब्रुवे ॥२८॥

वर्षं मासं तथा प्रोक्तं पक्षं चोदयमेव च ॥ सोमपानमिदं प्रोक्तं बुधैरागमवेदिभिः ॥ २९ ॥ वर्षं दिनं चोदयं च वारं मासं तथैव च ॥ वर्षे पञ्चकसंयोगजपः सूर्योपरागकः ॥ ३० ॥ इत्यष्टाङ्गक्रमः संपूर्णः ॥

## ॥ अथाष्टाङ्गसिद्धिपञ्चाङ्गगणितारम्भः ॥

तत्रादौ प्रणम्य जानकीजानिं गणपं केशवं गुरुम् ॥ अष्टाङ्गसिद्धिपञ्चाङ्गोदाहृतिः क्रियते स्फुटा ॥ १ ॥ स्वस्ति श्रीसंवत् १९६४—आषाढादिसंवत् १९६५—शाके १८३० व्यतीते काले, आश्विनशुक्ल १ प्रतिपदि शनौ अत्र दिने गणितारम्भः ॥

---

१. प्रल्हादानन्दनाथाख्यं सकलानन्दमेव च ॥
कुमारानन्दनाथं च वसिष्ठानन्दनाथकम् ॥ १ ॥
क्रोधानन्दसुरानन्दौ ध्यानानन्दं ततः परं ॥
बोधानन्दशुक्लानन्दौ ध्यायेदेवं कुलोपरि ॥ २ ॥
( इति श्लोकद्वयमधिकमेकस्मिन् पुस्तके ॥ )

२. युगः परिवृत्तिश्चैव वर्षमासदिनानि च ॥
नित्या वारश्च घटिका क्रमादष्टाङ्गकं भवेत् ॥ इति पाठान्तरम् ॥

शकः १८३० नवाद्रीन्दुकृशानु ३१७९ युक्तोजातः कल्पाद्यद्बगणः ५००९ प्रभाकर १२ हतोजातोमासगणः सावनः ६०१०८ चैत्रादिगतमासै ६ र्युतः ६०११४ त्रिस्थस्तन्मध्येऽधः खाद्रि ७० हतालब्धं ८५८—अनेन युक्तोमध्यस्थो ६०११४ मासगणः ६०९७२ अयं सुरै ३३ र्हतोलब्धाः अधिमासाः १८४७—एभिः प्रथमस्थो ६०११४ मासगणोयुक्तोजातश्चान्द्रमासगणः ६१९६१ अयं खत्रि ३० घ्नो जाताश्चान्द्रतिथयः १८५८८३० गततिथ्या युताः १८५८८३०—द्विधा स्थाप्याः ॥ अधः शिवहते ११ जातं, २०४४७१३० त्रिव्योमशैलै ७०३ र्हृते जातान्यवमानि २९०८५ एभिर्हीनाः प्रथमस्थाः १८५८८३० जातोऽहर्गणः सावनः १८२९७४५—अयं सभिप्त ७ भक्तः शेषं १—" सितनिशार्द्धे " इत्युक्तत्वात् शनिवारः ॥ इति ॥

"**अथ वारसाधनम्**"—नवभिर्नव वासराः ॥ अस्यार्थः—अहर्गणे नवभिर्भक्ते शेषं वासरः ॥ शून्यशेषे पथमवासरः ॥ उदाहारणम् ॥ अहर्गणः १८२९७४५ नवभिर्भक्तः शेषं० शून्यशेषे प्रल्हादानन्दनाथनामा वासरः ॥ तद्यथा ॥

| सङ्ख्या | संज्ञा | वारनामानि | तन्त्रान्तरे वारनामानि |
|---|---|---|---|
| ० | अ | प्रल्हादानन्दनाथः | प्रकाशानन्दः |
| १ | ऌ | सकलानन्दनाथः | विमर्शानन्दः |
| २ | क | कुमारानन्दनाथः | आनन्दानन्दः |
| ३ | च | वसिष्ठानन्दनाथः | ज्ञानानन्दः |
| ४ | ट | क्रोधानन्दनाथः | सत्यानन्दः |
| ५ | त | सुरानन्दनाथः | पूर्णानन्दः |
| ६ | प | ध्यानानन्दनाथः | स्वभावानन्दः |
| ७ | य | बोधानन्दनाथः | प्रतिभानन्दः |
| ८ | श | शुकानन्दनाथः | सुभगानन्दः |

## ॥ अथ नित्यासाधनम् ॥

षोडशभिर्भवेन्नित्या खशेषे प्रथमा भवेत् ॥

अस्यार्थः ॥ अहर्गणे षोडशभि १६ भक्ते शेषं नित्या स्यात्—शून्यशेषे प्रथमा ज्ञेया ॥ अहर्गणः १८२९७४५ षोडशभिभक्तः, शेषं ९—एकशेषे, आ संज्ञिका, कपालिनी नाम्नी नित्या ॥ ( अत्र दृश्यमधःकोष्ठम् )

| सङ्ख्या | संज्ञा | नित्यानामानि | तन्त्रान्तरे नामानि १ |
|---|---|---|---|
| ० | अ | काली | कामेश्वरी |
| १ | आ | कपालिनी | भगमालिनी |
| २ | इ | कुल्ला | नित्यक्लिन्ना |
| ३ | ई | कुरुकुल्ला | भेरुण्डा |
| ४ | उ | विरोधिनी | वह्निवासिनी |
| ५ | ऊ | विप्रचित्ता | महावज्रेश्वरी |
| ६ | ऋ | उग्रा | शिवदूतिका |
| ७ | ॠ | उग्रप्रभा | त्वरिता |
| ८ | ऌ | दीप्ता | कुलसुन्दरी |
| ९ | ॡ | नीला | नित्या |
| १० | ए | घना | नीलपताका |
| ११ | ऐ | बलाका | विजया |
| १२ | ओ | मात्रा | सर्वमङ्गला |
| १३ | औ | मुद्रा | ज्वालामालिनी |
| १४ | अं | मित्रा | चित्रा |
| १५ | अः | असिता | श्रीत्रिपुरसुन्दरी |

१ श्रीमद्देशिकेन्द्रश्रीभास्कररायपण्डितप्रणीतसौभाग्यभास्कराख्यभाष्ये–तथैव वामकेश्वरतन्त्रान्तर्गतनित्यषोडशिकार्णवे च समुपलभ्यन्ते[1] नित्यानामानीमानि ॥

**॥ श्रीकालिकोपासकानां काल्याद्यसितान्तानि[2] नित्यानामानि॥**

॥ तथैवान्यासां, बालात्रिपुरसुन्दरीमहात्रिपुरसुन्दरी ललिताम्बोपासकानां, कामेश्वर्याद्यानि नित्यानामानि–इति साम्प्रदायिकोक्तिः एवं वारेपि च ॥

“ **अथ युगसाधनम्** ”–अङ्गाङ्काब्धर्तुवेदाश्वै ७४६४९६ हृते तु युगसंततिः ॥ **अस्यार्थः**–अहर्गणे अङ्गाङ्काब्ध्यर्तुवेदाश्वैर्भक्ते लब्धं युगः (ककारादिर्दृश्यते) उदाहरणम् ॥ अहर्गणः १८२९७४९ अङ्गाङ्काब्ध्यर्तुवेदाश्वैर्भक्ते लब्धं ॥ २ ॥ द्विलब्धे ख–संज्ञकोयुगः, शेषं ३३६७५३ ॥ इति ॥

१. इमानि नित्यानामानि-तत्सम्बन्धश्च-वामकेश्वरतन्त्रे-मूलभाष्ये-८-विश्राम–३१८–३१९–३२०–३३१–३३२–३३३–३३४–पत्रेषु-॥ १ विश्रामे च-२५-२६-पत्रयोः- ॥ ज्ञानार्णवे च, १५-पटले-५६ पत्रे-१-श्लोकतः–॥ सौन्दर्यलहरी-लक्ष्मीधरटीकायां अत्रैव च, प. क. सू.-४-खण्डे-१४७-पत्रे-९-सूत्रभाष्ययोरस्ति-इति–

२. श्रीमदाद्यानित्याकृते-श्रीयोगिनीतन्त्रे-शाक्तप्रमोदे-तत्तत्पूजाप्रयोगे-चापि-द्रष्टव्यम् –

**" अथ परिवृत्तिसाधनम् "**

तच्छेषेऽङ्गत्र्यश्वपूर्णपक्षै २०७३६ र्भक्ते परिवृत्तिः ॥ अस्यार्थः—युगशेषे अङ्गत्र्यश्वपूर्णपक्षैर्भक्ते लब्धं परिवृत्तिः—ककारादिः ॥ उदाहरणम्—युगशेषं ३३६७९३ अङ्गत्र्यश्वपूर्णपक्षैर्भक्ते लब्धं १६ षोडशलब्धे त—संज्ञकपरिवृत्तिः शेषं ४९७७ ॥

**" अथ वर्षसाधनम् "**—शेषं रसाद्रीषु ९७६ हते वर्षाणि तद्गतानि च ॥ ॥ अस्यार्थः—परिवृत्तिशेषं रसाद्रीषुभिर्भक्ते लब्धं गतवर्षाणि दिनसाधने यानि षट्त्रिंशदक्षराणि तान्येवाक्षराणि (अकारादीनि षट्त्रिंशत्) **उदाहरणं**—परिवृतिशेषं ४९७७ रसाद्रीषुभिर्भक्ते लब्धं ८ अष्टौ लब्धे ज—संज्ञकं वर्षं ज्ञेयम् ॥ शेषं ३६९—

**" अथ माससाधनम् "** वर्षशेषे रसगुणैर्भक्ते मासास्तु ते गताः ॥ **अस्यार्थः**—वर्षशेषे षड्त्रिंशद्भिर्भक्ते लब्धं गतमासाः ( ते च अकारादि षोडशस्वराः )

**उदाहरणम्**—वर्षशेषे ३६९ षट्त्रिंशद्भिर्भक्ते लब्धं १० दश लब्धे वर्तमानः ए संज्ञकमासः ॥ शेषं ९ ॥ अकारादि षोडशस्वरायथा ॥ अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः ॥ इति ॥

**" अथ दिनसाधनम् "** मासशेषं क्रमात् ज्ञेयं दिनम् ॥ **अस्यार्थः**—मासशेषमेव गतदिनं शून्यशेषे प्रथमदिनं ज्ञेयं—उदाहरणम्-मासशेषं-९ शेषे झ-संज्ञक ( काल ) नामकदिनं ज्ञेयम् ॥ इति ॥

**॥ अथ षट्त्रिंशद्दिनानि ॥**

| सङ्ख्या | संज्ञा | नामानि | सङ्ख्या | संज्ञा | नामानि | सङ्ख्या | संज्ञा | नामानि |
|---|---|---|---|---|---|---|---|---|
| १ | अ | शिवः | १३ | ठ | प्रकृतिः | २५ | भ | पायुः |
| २ | क | शाक्तः | १४ | ड | अहङ्कारः | २६ | म | उपस्थः |
| ३ | ख | सदाशिवः | १५ | ढ | बुद्धिः | २७ | य | शब्दः |
| ४ | ग | ईश्वरः | १६ | ण | मनः | २८ | र | स्पर्शः |
| ५ | घ | शुद्धविद्या | १७ | त | श्रोत्रम् | २९ | ल | रूपं |
| ६ | ङ | माया | १८ | थ | त्वग् | ३० | व | रसः |
| ७ | च | कला | १९ | द | चक्षुः | ३१ | श | गन्धः |
| ८ | छ | विद्या | २० | ध | जिह्वा | ३२ | ष | आकाशः |
| ९ | ज | रागः | २१ | न | घ्राणः | ३३ | स | वायुः |
| १० | झ | कालः | २२ | प | वाक | ३४ | ह | तेजः |
| ११ | ञ | नियतिः | २३ | फ | पाणिः | ३५ | ळ | सलिलम् |
| १२ | ट | पुरुषः | २४ | ब | पादः | ३६ | क्ष | भूमिः |

## ॥ अथ घटिकासाधनम् ॥

**उदयं पञ्चभिर्हृते ॥ अस्यार्थः**-अहर्गणे पञ्चभिर्भक्ते शेषं घटिकोदयं ज्ञेयम् ॥ **उदाहरणं**-अहर्गणः १८२९७४५ पञ्चभिर्भक्तः शेषं० शून्यशेषे ( अ ) सांज्ञिकं घटिकोदयम् ॥ ङकाररहिताघटिकायाः संज्ञा तु यथा ॥

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | अ | आ | इ | ई | उ | ऊ | ऋ | ॠ | ऌ | ॡ |
| १ | ए | ऐ | ओ | औ | अं | अः | क | ख | ग | घ |
| २ | च | छ | ज | झ | ञ | ट | ठ | ड | ढ | ण |
| ३ | त | थ | द | ध | न | प | फ | ब | भ | म |
| ४ | य | र | ल | व | श | ष | स | ह | ळ | क्ष |

॥ यस्मिन्दिने गणितागतं घटिकोदयं समागतं तस्मादनुक्रमेण षष्ठिघटिकाऽधः लिखितचक्रे ज्ञातव्या ॥

| घटिका | संज्ञा | घ | सं | घ | सं | घ | सं | घ | सं | घ |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | अ | ११ | ए | २१ | च | ३१ | त | ४१ | य | ५१ |
| २ | आ | १२ | ऐ | २२ | छ | ३२ | थ | ४२ | र | ५२ |
| ३ | इ | १३ | ओ | २३ | ज | ३३ | द | ४३ | ल | ५३ |
| ४ | ई | १४ | औ | २४ | झ | ३४ | ध | ४४ | व | ५४ |
| ५ | उ | १५ | अं | २५ | ञ | ३५ | न | ४५ | श | ५५ |
| ६ | ऊ | १६ | अः | २६ | ट | ३६ | प | ४६ | ष | ५६ |
| ७ | ऋ | १७ | क | २७ | ठ | ३७ | फ | ४७ | स | ५७ |
| ८ | ॠ | १८ | ख | २८ | ड | ३८ | ब | ४८ | ह | ५८ |
| ९ | ऌ | १९ | ग | २९ | ढ | ३९ | भ | ४९ | ळ | ५९ |
| १० | ॡ | २० | घ | ३० | ण | ४० | म | ५० | क्ष | ६० |

## ॥ अथ कालसङ्ख्याप्रमाणम् ॥

अस्मिन् अष्टाङ्गसिद्धिपञ्चाङ्गे षष्ठि ६० घटिकात्मकं दिनं, न न्युनाधिकघटिकात्मकम् ॥ तिथिक्षयवृद्धिश्च न स्तः ॥ षट्त्रिंशद्दिनात्मकएव मासः ॥

॥ षोडशमासात्मकमेव(कं) वर्षम् ॥ क्षयवर्षाधिकमासक्षयमासाश्च न सन्ति ॥

॥ वर्षदिनप्रमाणं ५७६ षट्त्रिंशद्वर्षाणामेका परिवृत्तिः ॥ परिवृत्तिदिनप्रमाणं २०७३६ ॥ षट्त्रिंशत्परिवृतीनामेकं युगम् ॥ युगवर्षप्रमाणं १२९६ ॥

॥ युगदिनप्रमाणं ७४६४९६ ॥ इति ॥

### १०।१०-" अथ सङ्कल्पोच्चारणक्रमः "—

स्वस्ति श्रीमद्भूपतिवीरविक्रमादित्यस्य राज्यसमयातीतसंवत् १९६५ वर्षेऽस्मिन् नृपशालिवाहनराज्यकृते शाके १८३१ व्यतीते काले वैशाखशुक्लप्रतिपदि सौम्यवासरे ॥

**अष्टाङ्गसिद्धिपञ्चाङ्गसाधनार्थं गणितारम्भः॥** यथा—

अस्मिन् दिने नूतनवर्षारम्भः ॥ तत्रादावहर्गणसाधनम् ॥

शकः १८३१ नवाद्रीन्दुकुशानु ३१७९ युक्तोजातः कल्पाद्यब्दगणः ५०१० प्रभाकर १२ हतोजातोमासगणः सावनः ६०१२० चैत्रादिगतमासेन १ युतः ६०१२१ त्रिस्थस्तन्मध्येऽधः खाद्रि ७० हृताल्लब्धं ८५८ अनेन युक्तोमध्यस्थो ६०१२१ जातो मासगणः ६०९७९ अयं सुरै ३३ र्हतोलब्धाः अधिमासाः १८४७ एभिः प्रथमस्थो ६०१२९ मासगणोयुक्तोजातश्चान्द्रमासगणः ६१९६८ अयं खत्रि ३० घ्नः जाताश्चान्द्रतिथयः १८५९०४० गततिथ्या० युक्ताः १८५९०४० द्विधा अधः स्थाप्याः ॥ शिव ११ हृते जातं २०४४९४४० त्रिव्योमशैलै ७०३ र्हृते जातान्यवमानि २९०८८ एभिर्हीनाः प्रथमस्थाः १८५९०४० जातोहर्गणः सावनः १८२९९५२—अयं सप्तभिर्भक्तः शेषं ५ " सितनिशार्द्धे " इत्युक्तत्वात् बुधवासरः ॥

**१०।११-"अथ सङ्कल्पप्रकारः"** स्वस्ति श्रीसंवत् १९६५ शाके १८३१ व्यतीते काले वेशाखशुक्ल १ प्रतिपदि बुधवासरे नूतनवर्षारम्भः। तद्दिने कल्पाद्यहर्गणः १८२९९५२ अस्मिन् देवीमातृकामाने ख युगे—त परिवर्त्ते—झ वर्षे—अ मासे—अप्रह्लादानन्दनाथवासरे च घटिकोदये—अ शिवनाम्निदिने, अ कालीनाम्न्यां नित्यायां श्रीदेवताप्रीत्यर्थं जपे विनियोगः ॥

रैकज्ञातीयविप्रेण सूर्यपत्तनवासिना ॥ ज्योतिर्विदः केशवस्य सूनुना कृष्णशर्मणा अष्टाङ्गसिद्धिपञ्चाङ्गोदाहृतिर्विदुषां मुदे ॥ रचिता चापलं चात्र क्षमध्वं तत् कृपार्णवाः इति सोदाहरणमष्टाङ्गसिद्धिपञ्चाङ्गं समाप्तम् ॥ इति ॥ ( १०–१०१२ वि. सं. )

१०।११–अन्यच्च–अत्रैव–प. क. सू. २–खण्डे गणनायकपद्धतौ–४–सूत्रभाष्ये ७५-पत्रे प्रकारान्तरं यथा—

**सङ्कल्पावश्यकता** । ततः सङ्कल्पमपि सामान्यशास्त्रेण प्राप्तं कुर्यात् ।

श्रीविद्योपास्तौ निर्विघ्नतासिद्ध्यर्थं महागणपतिक्रमं निर्वर्तयिष्ये–इति सङ्कल्पः ।

न च सङ्कल्पस्य सूत्रे अनुक्तत्वात् कथं ग्रहणं–इति शङ्कनीयम् । शुचित्वमुपवीतं अव्यभिचारेण यथा कर्मसामान्येन सम्बद्धं–एवमेव सङ्कल्पोऽपि । एतदनुगुणानि वचनानि च सन्ति ॥ यथा—

॥ अनाचम्य कृतं यच्च यच्च सङ्कल्पवर्जितम् ।
राक्षसं तद्भवेत् कर्म— ॥

इति दानधर्मे महाभारतवचनम ।

॥ आदौ सङ्कल्पउद्दिष्टः पश्चात्तस्य समर्पणम् ।
अकुर्वन् साधकः कर्मफलं प्राप्नोत्यनिश्चितम् ॥

इति रुद्रयामलवचनाच्च । तथैव शिष्टाचारोऽपि । अतः सः आवश्यकइति गाणनायक्याः सपर्यायाअपि श्रीविद्याऽङ्गत्वादावश्यकएव सङ्कल्पः । अष्टाङ्गोल्लेखनं च—

अवश्यं तान्त्रिकं कालमुल्लिखेदन्यथा शिवे ।
बहिर्मुखं तु तत्कर्म भवेद्भस्महुतं यथा ॥

इति **यामलवचनादष्टाङ्गोल्लेखनमावश्यकम्** । इति- ॥

१०।१२–**तान्त्रिकस्मार्तसङ्कल्पव्यवस्था** ॥

॥ एतावता च, उपर्युक्तेत्थंभावमपि सङ्कल्पं श्रौतस्मार्तादिकर्मणि शिष्टाः सर्वत्र गृह्णन्त्येव । न तमन्यथा कर्तुं–वितथं वा कर्तुं शास्त्रभ्रष्टं वा विधातुं केनापि शक्यम्–इति तात्पर्यम—

परं च पाश्चात्य दीक्षाखण्डस्थ-३१ सूत्रभाष्ये ४६ पत्रे, प्रतिपादिताष्टाङ्गोल्लेखनेन। सहायमुपरितनाङ्कगतसङ्कल्पविधा, विरुध्यतएव । विरोधि शास्त्रं चानादरणीयं स्यात् ततस्तद्विरोधोपशमाय, इत्थं भावना, सम्भावनीया यथा-

यत्र, तान्त्रिकविधाकर्मकरणं, तत्राष्टाङ्गसङ्कल्पावसरः–

यत्र च, वैदिकस्मार्तविधिबोधितकर्मविधा, तत्र भविष्योत्तरादिवचःप्रचारः—
इत्यन्योन्यवचोभिघातापसरणं विधेयमित्यलं, विस्तारकरणेन—

( १० वि. सर्वः सं. )

॥ अथ द्वि. प. शि. वि. ११—अनुसन्धानं-९२-पत्रतः-॥ ९८—

**॥ श्रीचक्रोद्धारे यन्त्रप्रतिष्ठादिविषये च ॥**

१—बिन्दुत्रिकोण०-इत्ययं श्री**चक्रोद्धारश्लोकः, कुत्र ग्रन्थे वर्तते**:—तत्रोच्यते ॥
यथा ॥ अयं हि श्रीश्रीविद्यायन्त्रोद्धारश्लोकोबहुषु तन्त्रग्रन्थेषूपलभ्यमानस्तथाहि:—

॥ १ श्रीवामकेश्वरतन्त्रान्तर्गतनित्याषोडशिकार्णवे-१ विश्रामे—२७ पत्रे—भाष्ये,
श्रीदेशिकेन्द्रविद्वदग्रणीः श्रीभास्कररायपण्डितआह—

॥ २ सुन्दरीतापिन्यां—द्वितीयोपनिषदि—श्रीचक्रव्याख्याने

॥ ३ यामले—यथा—

॥ बिन्दुत्रिकोणवसुकोणदशारयुग्म ।
मन्वस्रनागदलसंयुतषोडशारम् ।
वृत्तत्रयं, च धरणीसदनत्रयं च
श्रीचक्रराजमुदितं परदेवतायाः ॥ इति ॥

॥ सम्पूर्णश्लोकोयम्—**सौन्दर्यलहर्यां** लक्ष्मीधरटीकासहितायां-११-श्लो.टीकायां च-
३१-पत्रे स्तीति, ज्ञेयम्—

२—**श्रीचक्रोद्धारे द्वि०प्रकार**:-सटीक—सौन्दर्यलहर्यां-२७-पत्रे-११ श्लोकः-
श्रीवन्द्यपादाचार्यप्रणीतोयथा—

॥ चतुर्भिः श्रीकण्ठैः, शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शम्भोर्नवभिरिति मूलप्रकृतिभिः ॥
त्रयश्चत्वारिंशद्वसुदलकलास्रत्रिवलय
त्रिरेखाभिः सार्धं तव शरणकोणाः परिणताः ॥ इति ॥

॥ अत्रापि श्रीभगवता स्वयं सकलफलदं श्रीचक्रमेवोद्धृतम्—वरदायी अयं **ग्रन्थश्च**—॥

॥ अर्थोदत्रश्लोके भूपुरत्रयोक्तिगमकमिति विदुषा **ज्ञेयमस्यार्थश्च**, श्रीवामकेश्वरतन्त्रे—
षोडशिकार्णवे १-विश्रामे-२७ पत्रे—४३-पत्रे च—सौन्दर्यलहरीलक्ष्मीधरटीकायां-२८
पत्रतश्च,—प. क. सूत्रे ९२—पत्रे-३—खण्डे-९ सूत्रभाष्ये चापि-द्रष्टव्यः ॥

**३–॥ उपरितनश्लोकोक्तयन्त्रस्थ-९ चक्रज्ञानाय, भैरवयामले, यथा-**

॥ चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ॥

॥ **शक्तिचक्राभिधा**, यथा—

त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ॥

॥ तथैव, तत्रैव,-**शिवचक्राणि** यथा—

बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम् ।
चतुरस्रं च चत्वारि शिवचक्राण्यनुक्रमात् ॥ इति ॥

**४११–उपर्युक्तचक्रज्ञानस्यावश्यकतात्रैव** प. क. सू.–३ खण्डे-श्रीक्रमे-९२-पत्रे-यथा—

पूजाकाले ईदृशज्ञानस्यावश्यकता चोक्ता ब्रह्माण्डपुराणे—

॥ त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।
दशारयोः षोडशारं भूगृहं भुवनास्रके ॥
शैवानामपि शाक्तानां चक्राणां च परस्परम् ।
अविनाभावसम्बन्धं योजानाति सचक्रवित् ॥
एवं विभागमज्ञात्वा श्रीचक्रं योऽर्चयेत् सकृत् ।
न तत्फलमवाप्नोति ललिताऽम्बा न तुष्यति ॥ इति ॥

**४१२–चक्रसङ्केतज्ञानावश्यकता च-उक्ता,** श्रीवामकेश्वरतन्त्रे-६ वि. १८४ पत्रे, यथा—

॥ चक्रसङ्केतकोमन्त्रपूजासङ्केतकौ तथा ।
त्रिविधस्त्रिपुरादेव्याः, सङ्केतः परमेश्वरि ॥ ६ ॥
यावदेतन्न जानाति सङ्केतत्रयमुत्तमम् ।
न तावत्त्रिपुराचक्रे परमाज्ञाधरोभवेत् ॥ ७ ॥ इत्यादि

**४१३–श्रीश्रीचक्रस्थनवचक्रनामानि।** श्रीवामकेश्वरतन्त्रे सेतुबन्धव्याख्यायां-१-विश्रामे-४० पत्रे-पण्डितराजश्रीभास्कररायोयथा—

॥ मध्यं त्र्यस्रं तथाऽष्टारं द्वे दशारे चतुर्दश ॥ ४३ ॥
तद्बाह्यतोऽष्टपत्रं च षोडशारं महीपुरम् ।
सर्वानन्दमयं चाऽऽदौ सर्वसिद्धिप्रदं परम ॥ ४४ ॥

सर्वरोगहरं चान्यत सर्वरक्षाकरं तथा ।
सर्वार्थसाधकं चक्रं सर्वसौभाग्यदायकम् ॥ ४५ ॥
सर्वसंक्षोभणं चान्यत् सर्वाशापरिपूरकम् ।
त्रैलोक्यमोहनं चेति नवधा नवभिर्भवेत् ॥ ४६ ॥ इति

( ११।४ वि. सर्वः सं. )

११।५—॥ **यन्त्रप्रतिष्ठाकरणाऽकरणयोः** फलविषये ॥

प. क. सू. ९७ पत्रे–३–खण्डे श्रीक्रमे–९–सूत्रभाष्यान्ते

**वृत्तिकारः**—पूर्वतनपङ्क्तौ–एतत्परशुरामकल्पसूत्रानुक्तत्वात् एतत्सूत्रानुयायिभिर्यन्त्र-प्रतिष्ठा न कार्येत्युक्तवान् । एवमेव प्राणप्रतिष्ठापि न कार्येत्युक्तवान् ।

पुनश्चाग्रे—"वस्तुतस्तु यन्त्रप्रतिष्ठायाः पूजाप्रयोगबहिर्भूतत्वात् अधिकाभ्युदयेच्छायां तन्त्रान्तरोक्तमनुष्ठेयम् । यथा–सहस्रनामपाठादि । तत्करणे अभ्युदयः अकरणेऽपि न हानिः सूत्रानुयायिनाम् । यथा वा यज्ञोपवीतसंस्कारोबौधायनसूत्रे पठितः–

अन्यसूत्राऽपठितत्वात् "बह्वल्पं वा" इति सूत्रात्–अननुष्ठाने न हानिरिति–द्रविडान्ध्र-देशीयाः यज्ञोपवीतस्य न संस्कारं कुर्वन्ति । महाराष्ट्रदेशीयैस्तु करणे अभ्युदयं मत्वा संस्कारः क्रियते । तद्वत् चक्रराजे संस्कारे, अभ्युदयः, अकरणे सूत्रानुयायिनां न हानिः ॥ ९ ॥" इति लिखितवान् ।

अर्थादेतत्सूत्रानुयायिकृते एव यन्त्रप्रतिष्ठा–प्राणप्रतिष्ठा च कृताऽकृतत्वेन निरूपिता । इति प्रतिभात्यवलोकयितृणाम् ।

तथापि नैवमाशयः श्रीवृत्तिकर्तुरपि तु—

स्वयमेव प्रदिपादितवान्-यथा–अधिकाभ्युदयेच्छायां तन्त्रान्तरोक्तमनुष्ठेयम् । यथा –सहस्रनामादि ।

अत्र वृत्तिकारमताश्रयणं वा तदुक्तिमेवाऽवलम्ब्य तन्मतानुयायित्वेनैव किञ्चि द्विविच्यते ।

॥ अत्रोपरितनलेखे यदभ्यनुज्ञातं श्रीवृत्तिकृता–"अभ्युदयेच्छायां तन्त्रान्तरोक्त-मनुष्ठेयम् । यथा सहस्रनामपाठादि ।"

अत्रोच्यते—

अभ्युदयेच्छा त्वशेषार्चकाणामपि साधारण्येव । निष्कामभक्तिमतामपि कर्मवैगुण्यम-श्रेयस्करमिति बहुतन्त्रेषु, कात्यायनश्रौतसूत्रभाष्येऽपि सुसाधितमेव ।

अन्यच–सूत्रे यन्त्रप्रतिष्ठाया अनुक्तत्वेऽपीतरतान्त्रिककर्मणि इतरग्रन्थाश्रयणं क्रियते एव । तथैवाऽत्रापि विभाव्यतां, शिष्टाचारः सप्रमाणः—

॥ अनुक्तमन्यतोग्राह्यं पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ इति ॥

॥ प्रचलितकर्मणि, इतरतन्त्रादिग्रन्थाश्रयणे दोषाऽभावाऽभावयोः प. क. सू.–१–खण्डे-दीक्षाविधौ–३१–सूत्रभाष्ये–५१–पत्रेऽपि यथा—

॥ त्रिपुरारहस्ये—तन्त्राऽनुक्तं सूचितं तु तथाऽन्येष्वपि दूषितम् ।
[1]अकृतं कर्म यद् राम विकल्पेन विवर्जितम् ॥
तदन्यस्मादुपादेयमेषशास्त्रस्य निर्णयः ॥

तत्रैव— निषिद्धं वर्जयेत्तन्त्रान्तरे किञ्चिन्महेश्वरि ।
यतस्तदेकशास्त्रं वै मन्त्रैक्याद्देवतैक्यतः ॥
तस्मात् स्वशास्त्रे यत् किंचिन्निषिद्धं परिवर्जयेत् ।
अन्यत् स्वतन्त्राऽनुक्तं तु समर्थउपसंहरेत् ॥
स्वतन्त्रेणाऽविरुद्धं तु यावदन्यत् समाचरेत् ।
तावदभ्युदयाधिक्यं भवेत्तस्य तु निश्चितम् ॥
आकाङ्क्षितं चाप्यन्यस्मादाहरेदेव किञ्चन ।

**इदमत्रज्ञेयम्** ॥ एतावता च स्वशास्त्रे यस्य कर्मणः प्रत्यक्षोनिषेधः कृतस्तदेव कर्म, तत्तत्तन्त्रानुयायिना न ग्राह्यम् ।

॥ अनिषिद्धं तु अन्यतन्त्रोक्तमपि स्वतन्त्रोक्तविधिपर्याप्तिप्रतिपादकं चेत् तदुपादेयमेवेति अस्यैव वृत्तिकारविदुषः सम्मतमिति प्रतीयतएवेति–प. क. सू. द्वितीयावृत्तिकारः ॥

(११।५ वि. सं.)

## ६–यन्त्रप्रतिष्ठाया अकरणे कर्मनैष्फल्यम् ॥

कुलार्णवतन्त्रे-६-उल्लासे-५८ पत्रे-प्रतिष्ठायाआवश्यकत्वे—

॥ विना च समयं देवि ! न ददाति फलं नृणाम् ।
सकलीकृत्य तत्प्राणांस्तदीयानीन्द्रियाणि च ॥
प्रतिष्ठाप्यार्चयेद्देवि ! चाऽन्यथा निष्फलं भवेत् ।

इति प्रामाण्येनाऽन्यग्रन्थविरोधशमनायापि यन्त्रप्रतिष्ठाकरणं, साधीयान् पक्षः ॥ इति ॥

## ७–अत्रात्रवस्तुनि यन्त्रं लिखेत् ॥

सटीकमहानिर्वाणतन्त्रे–५–उल्लासे-१०७-पत्रे श्रीशिवां प्रति श्रीशिवोक्तिर्यथा–

---

१. अत्र किंचिदशुद्धमिवाभात्युत्तरार्धे–

॥ विलिखेत् यन्त्रराजं तु देवताभावसिद्धये ।

अथवोत्कीलरेखाभिः स्फाटिके विद्रुमेऽपि वा ॥ १७६ ॥

वैदुर्य्ये कारयेत् यन्त्रं कारुकेण सुशिल्पिना ॥ १७७ ॥

**शुभप्रतिष्ठितं कृत्वा** स्थापयेद्भवनान्तरे ।

अत्र मूलश्लोकएव " शुभप्रतिष्ठितं कृत्वा " इदमपि यन्त्रप्रतिष्ठाकरणप्रमाणम् ।

॥ तच्छ्लोकटीकायामपि यथा—

शुभप्रतिष्ठितम्, शुभा प्रतिष्ठा सञ्जाता अस्यैवंभूतं यन्त्रराजं कृत्वा–इत्याद्यपि यन्त्रप्रतिष्ठाप्रमाणम् ॥ इति ॥

## ८–यन्त्राणां मन्त्राणामपि च प्राणवत्वम् ॥

श्रीशारदातिलके सटीके–२३–पटले–८३६ पत्रे–७१–श्लोके

॥ प्राणप्रतिष्ठामन्त्रस्य विधानमभिधीयते ।

येन प्रागीरितामन्त्राः प्राणवन्तोभवन्ति ते ॥

॥ अत्र टीका यथा—

मन्त्राणां यद्यपि प्राणप्रतिष्ठा नास्ति, तेषां स्वतएव समर्थत्वात्, तथापि यन्त्रादौ लिखितानां प्राणप्रतिष्ठा क्रियते-इति तद्द्वारा प्राणवन्तः इत्युक्तिः सङ्गच्छते। प्राणप्रतिष्ठया पूर्वोक्तसमस्तमन्त्रविहितयन्त्रप्रयोगपुत्तल्यादिसर्वं प्रतिष्ठितप्राणं क्रियते एव इत्यादि ।

॥ एतावता च मन्त्राक्षराधिकरणत्वेन यन्त्रप्रतिष्ठापि सूचितप्रायैव ।

अन्यथा-यन्त्रं विहाय तत्र लिखितमन्त्राक्षरमात्रस्यैव प्राणप्रतिष्ठाकरणमसमञ्जसमिवाऽऽभाति ॥ इति ॥

## ९–यन्त्रमन्त्रयोर्देवतात्वम् ॥

॥ सटीकशारदातिलके-८६० पत्रे-२४ पटले-१-३-श्लोकटीकायां यथाः—

॥ यथा मन्त्रोदेवतारूपस्तद्वत् यन्त्रमपि देवतारूपम् ॥ अतएव, इष्टसाधनक्षमं भवति । इति ॥

॥ अन्यदपि-॥ अत्र मातृकादेवता, तां सम्पूज्य प्राणप्रतिष्ठापनं कृत्वा धारयेत ॥ इत्येतट्टीकोक्तवचोभिरपि यन्त्रप्रतिष्ठाविधेरव्याहतप्राप्तिरिति-ज्ञेयम् ॥ इति ॥

## १०–यन्त्रमन्त्रदेवतानामन्योन्यसम्बन्धः ॥

॥ कुलार्णवतन्त्रे ५९ पत्रे ६ उल्लासे श्रीशिवां प्रति श्रीशिवोक्तिर्यथाः—

॥ यन्त्रं मन्त्रमयं प्रोक्तं देवतामन्त्ररूपिणी ।
मन्त्रवत् पूजिता देवी सहसैव प्रसीदति ॥

एतदुपर्युक्तप्रमाणेन मन्त्रतन्त्रयोरभेदभावेन या क्रिया मन्त्रस्य–सैव क्रिया यन्त्रस्यापि कर्तुं क्षमैवेति, यन्त्रस्यापि प्राणप्रतिष्ठाकरणमभिमतमेव अभियुक्तानामिति गम्यते ॥ इति प. क. सू. द्वितीयावृत्तिकारः–( ११–१० वि. सं. )

**११–११–सर्वत्र, प्राणप्रतिष्ठाकरणोपदेशः ॥**

॥ पुनश्चापि सटीकशारदायां–४ पटले–२७५ पत्रे, यथाः—

जपित्वा प्रतिलोमेन मूलमन्त्रञ्च मन्त्रवित् ।
समाहितेन मनसा ध्यायन् मन्त्रस्य देवताम् ॥ ७७ ॥
प्राणप्रतिष्ठां कुर्वीत तत्र तत्र विचक्षणः ।

॥ एतच्छ्लोकस्य टीकायां-सामान्यतः सर्वत्रापि च, व्यापकस्य विशेषसान्निध्याय, मन्त्रैर्दैवताभावनात्मिका प्रतिष्ठा सम्पादितैवेति ॥

**१२–प्रतिष्ठाशब्दार्थः** तत्रैवः—

॥ प्रतिष्ठाशब्दसंसिद्धिः प्रतिपूर्वात्तु तिष्ठतेः ।
बह्वर्थत्वान्निपातानां संस्कारादौ प्रतेः स्थितिः ॥
अर्थस्तदयमेतस्य गीयते शाब्दिकैर्जनैः ।
विशेषसन्निधिर्या तु क्रियते व्यापकस्य हि ॥
सन्मूर्तौ भावना मन्त्रैः **प्रतिष्ठा साऽभिधीयते** ॥ इति ॥

**१३–प्राणप्रतिष्ठायाः अभावे देवतासान्निध्याभावः ॥**

॥ एतच्छ्लोकोक्त्या प्रतिष्ठायाअकरणे देवतासान्निध्याऽभावेन पूजनाऽनर्हता स्यादेवेति सुधिभिर्विभावनीयम् ॥ इति प. क. सू. द्वितीयावृत्तिकारः ॥

**१४।१–प्राणस्थापनविधिः ॥**

स. शारदा ४ पटले २८५–पत्रे–८८–८९ श्लोकादौ–यथाः—

॥ मूलमन्त्रं समुच्चार्य सुषुम्णावर्त्मना सुधीः ।
आनीय तेजः स्वस्थानान्नासिकारन्ध्रनिर्गतम् ॥ ८८ ॥
करस्थमातृकाम्भोजे चैतन्यं पुष्पसञ्चये ।
संयोज्य ब्रह्मरन्ध्रेण मूर्त्यामावाहयेत् सुधीः ॥ ८९ ॥ इति ॥

**२–तथैव तच्छ्लोकटीकायामपि ।**

॥ देवं सुषुम्णामार्गेण आनीय ब्रह्मरन्ध्रकम् ।

**वामनासापुटे** ध्यात्वा निर्यान्तं स्वाञ्जलिस्थितम् ॥

पुष्पेआरोप्य तत् पुष्पं प्रतिमादौ निधापयेत् ॥ इति ॥

**३–प्राणस्थापनश्लोक**मन्त्रावपि तत्रैव यथाः—

॥ आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वर ।

अरण्यामिव हव्यांशं मूर्तावावाहयाम्यहम् ॥ इति ॥

॥ तथा च तत्रैव २८६ पत्रें ९० श्लोकटीकायामपि ॥

॥ तवेयं महिमामूर्तिस्तस्यां त्वां सर्वगं प्रभो (विभो) ।

भक्तिस्नेहसमाकृष्टं दीपवत् स्थापयाम्यहम् ॥ इति ॥

**४–आवाहनप्रतिष्ठाविषये ॥**

अत्रोपरितनश्लोकोक्तमावाहनं कृत्वा, प्रतिष्ठां च अकृत्वा अप्रतिष्ठितदेवानामग्रतन पूजाकरणं कुत्रापि नाऽभ्यधायि ।

अतोत्रावाह्य पश्चादावाहितदेवं प्रतिष्ठाप्य पूजयेत् ।

तदनु पुनश्चावाहनकरणं नोचितमपि तु, तदर्थं ध्यानमित्यपि सुबुद्धिविलसितमास्ताम् ॥ इति ॥

**५–प्राणस्थापनविधौ ॥**

तत्रैव सटीकशारदायां–२३ पटले ८३९ पत्रे ९० श्लोकोयथाः–

॥ स्थापयेन्मनुनाऽनेन प्राणान् सर्वत्र देशिकः ।

बीजान्तेऽमुष्यशब्दानामादौ दूतीः प्रयोजयेत् ॥ ९० ॥

अत्र टीका–सर्वत्रेति आत्मयन्त्रपुत्तल्यादौ । इदमपि प्राणस्थापकप्रतिष्ठाविधिबोधकमेव ।

**६–अत्युत्तमोयन्त्रप्रतिष्ठाविधिः ॥**

यन्त्रप्रतिष्ठा उक्ता, सटीकमहानिर्वाणतन्त्रे, १२८-पत्रे-६ उल्लासे, श्रीशिवां प्रति, श्रीशिवेन भगवता, यथा—

चद्रनागुरुकस्तूरीवासितं सुमनोहरम् ॥

पुष्पं गृहीत्वा पाणिभ्यां करकच्छपमुद्रया ॥ ६३ ॥

नीत्वा स्वहृदयाम्भोजे ध्यायेदाद्यां परात्पराम् ॥

सहस्रारे महापद्मे सुषुम्नाब्रह्मवर्त्मना ॥ ६४ ॥

नीत्वा सानन्दितां कृत्वा वृहन्निःश्वासवर्त्मना ॥
दीपाद्दीपान्तरमिव तत्र पुष्पे नियोज्य च ॥ ६५ ॥
यन्त्रे निधापयेन्मन्त्री दृढभक्तिसमन्वितः ॥
कृताञ्जलिपुटोभूत्वा प्रार्थयेदिष्टदेवताम् ॥ ६६ ॥
देवेशि ! भक्तिसुलभे परिवारसमन्विते ॥
यावत् त्वां पूजयिष्यामि तावत् त्वं सुस्थिरा भव ॥ ६७ ॥

**॥ श्रीशिवोक्तः-देव्या[1]आवाहन [2]प्राणप्रतिष्ठामन्त्रोद्धारः-यथा-**

॥ क्रीमाद्ये कालिके ! देवि ! परिवारादिभिः सह ॥
इहागच्छ द्विधा प्रोक्ता इह तिष्ठ द्विधा पुनः ॥ ६८ ॥
इहशब्दात् सन्निधेहि इह सन्निपदात्ततः ॥
रुध्यस्व पदमाभाष्य मम पूजां गृहाण च ॥ ६९ ॥
इत्थमावाहनं कृत्वा **देव्याः प्राणान् प्रतिष्ठयेत्**
॥ आं ह्रीं क्रों श्रीं वन्हिजाया प्रतिष्ठामन्त्रईरितः ॥ ७० ॥
अमुष्यादेवतायाश्च प्राणाइह ततः परम् ॥
प्राणाइति ततः पञ्च बीजानि तदनन्तरम् ॥ ७१ ॥
अमुष्याजीव इह च स्थितइत्युच्चरेत् पुनः ॥
पञ्चबीजान्यमुष्याश्च सर्वेन्द्रियाणि कीर्तयेत् ॥ ७२ ॥
पुनस्तत् पञ्च बीजानि अमुष्यावचनान्ततः ॥
वाङ्नोनयनघ्राणश्रोत्रत्वक् पदतोवदेत् ॥ ७३ ॥
म
प्राणाइहागत्य सुखं चिरं तिष्ठन्तु उद्वयम् ॥
इति त्रिधा यन्त्रमध्ये लेलिहानाख्यमुद्रया ॥ ७४ ॥

---

१. अत्र ६८-श्लोकगतावाहनोक्तमन्त्रस्य-सकलपदयोजना-तट्टीकायां यथा-
॥ क्रीं आद्ये कालिके, देवि, परिवारादिभिः सहेहागच्छेहागच्छेह तिष्ठ तिष्ठेह सन्निधेहि, इह सन्नि-रुध्यस्व, मम पूजां गृहाण ॥ इति ॥

२. प्राणप्रतिष्ठामन्त्रस्य-**सकलपदयोजना**-७० श्लोकतः ७४-श्लोकोक्ता-यथा-

| | | | |
|---|---|---|---|
| । आं ह्री क्रों | श्रीं स्वाहा | आद्याकालीदेवतायाः | प्राणाइह प्राणाः- |
| । ” | ” | ” | जीवइहस्थितः- |
| । ” | ” | ” | सर्वेन्द्रियाणिः- |
| । ” | ” | ” | वाङ्नोनयनघ्राणश्रोत्रत्वक् (म) |

प्राणाः इहागत्य, सुखं चिरं तिष्ठन्तु स्वाहा ॥ इति-प्राणप्रतिष्ठामन्त्रः ॥

संस्थाप्य विधिवत् प्राणान् कृताञ्जलिपुटोवदेत् ॥
आद्ये कालि स्वागतन्ते सुस्वागतमिदन्तव ॥ ७५ ॥
[1]आसनञ्चेदमत्र त्वयास्यतां परमेश्वरि ॥

॥ इत्यादिः श्रीशिवोक्तिरपि—यन्त्राप्रतिष्ठापक्षे अनादृतैव स्यात् । नात्रीवकल्पोऽपि । तस्याः प्रत्यपादि—श्रीशिवेन कुत्रचिदित्यनवद्यं सर्वम् ॥

( ११।१४ वि. सर्वः सं. )

## ११-१५—अप्रतिष्ठितदेवाय पूजादिदाननिषेधः ॥

सटीकमहानिर्वाणतन्त्रे १३ उल्लासे ४१५-पत्रे-२६७ श्लोके श्रीशिववचोयथाः—

॥ अप्रतिष्ठितदेवाय नैव दद्याद्गृहादिकम् ।
प्रतिष्ठितेऽर्चिते देवे पूजादानं विधीयते ॥ इति ॥

## १६—प्रतिष्ठाकरणा त्प्रागग्न्युत्तारणे ॥

अन्यच्चाऽऽनन्दाश्रमसंस्कृतग्रन्थावलि ७३ ग्रन्थाङ्कमुद्रितधारे—इत्युपनामकशङ्कर-सूरिविरचितगायत्रीपुरश्चरणपद्धतावपि ४४ पत्रे—यथाः—

॥ ततः सुवर्णादिनिर्मितमूर्तेर्यन्त्रस्य वाऽग्न्युत्तारणं कुर्यात् ॥ एवं पङ्क्तिरस्ति । अत्रोच्यते मयाः—

॥ इयमग्न्युत्तारणक्रिया प्राणप्रतिष्ठायाः प्राग्भाविनीति सिद्धान्तस्त्वस्त्येव । तेनात्र प्रतिपादिताऽग्न्युत्तारणविधिनैव, तदनन्तरभाविन्यनुक्ताऽपि यन्त्रादिप्राणप्रतिष्ठा, प्राप्नोत्येवेत्यलं भूयसा वचसा— ॥ इति ॥

## १७—प्राणप्रतिष्ठानन्तरमेव पूजा—तत्र प्रमाणम् ॥

महानिर्वाणतन्त्रे-१३ उल्लासे. ४२० पत्रे ३०० श्लोकोयथाः—

॥ ततः पूजाविधानेन ध्यानमावाहनादिकम् ।
प्राणप्रतिष्ठां सम्पाद्य पूजयेत् परदेवताम् ॥

इत्युपर्युक्ताभ्यामुभाभ्यां श्लोकाभ्यां निश्चीयते । अप्रतिष्ठितदेवस्य पूजानिषेधोमदिरार्पणनिषेधश्च किम्वन्यपदार्थनिषेधनिरूपणेन ।

॥ अन्यच्चोपरितनद्वितीयश्लोकगतेन श्रीशिवस्य भगवतोवचसा प्राणप्रतिष्ठानन्तरभाव्येव पूजासमर्पणविधिः, अपि तु नाऽकृत्वा प्राणप्रतिष्ठामिति ।

## ॥ उपरितनाऽशेषोल्लेखस्वारस्यं प्रतिष्ठावश्यकत्वं च ॥

॥ इमान्युपर्युक्तनानातन्त्रादिवचांसि नितान्ततया सर्वत्राऽपि अव्याहतरीत्या यन्त्रप्रतिष्ठामापादयन्त्येव ।

---

१. अत्राक्षरापूर्णता शास्त्रवचोन्तरा दुष्प्रकल्प्या—

अन्यथा प्रतिष्ठाविधिस्वारस्यप्रतिपादकाऽशेषतन्त्रस्थश्रीशिवोदितविधिः सर्वोऽपि वितथो ह्यचरितार्थश्च भवेदेव ।

" **मृषावादी कथं शिवः** " । इति प्रतिज्ञाभङ्गोऽपि सोढव्यः स्यादेवेत्यतः प्रतिष्ठा, चिकीर्षितैवेति प्राचाम्माशयः ।। इति ।।

## १८–प्राणप्रतिष्ठानन्तरमव्यवधानेन पूजनकरणे ॥

तत्रैव ॥ यदेयं यन्त्रप्रतिष्ठा भगवतोमूलसूत्रकारस्याऽनभिमतैव स्याच्चेदत्र समस्तग्रन्थे यन्त्रप्रतिष्ठानिषेधकमेकमपि सूत्रं कुतोन ग्रथितवान् भगवानित्यपि शङ्कयमेव ।

॥ ततश्च यन्त्रप्रतिष्ठाऽवश्यचिकीर्षितेति सिद्धान्तप्रादुर्भावोऽस्तु सामयिकानामित्यलं विदुषां पुरतोऽतिपल्लवितेन ॥ इति ॥

एतत्कर्मान्तेऽव्यवधानेन पञ्चषोडशान्यतमोपचारार्चनमावश्यकमित्यनुनयाम्यर्चकान् ॥इति॥

॥ इति यन्त्रप्रतिष्ठाकरणाऽकरणविषयकः शास्त्रार्थोयथामत्युदितः–एतत्प.क.सू. द्वितीयावृत्तिकारेण–॥ ( ११–वि. सर्वः सं. )

॥ श्रीशिवमस्तु ॥

॥ द्वि. परिशिष्ट वि. १२ **पात्रासादने–पात्रवस्तुमानाकृत्याधारसङ्ख्यादि-विषये** ॥

॥ प. क. सू. १०८ पत्रे-पात्रं प्रतिष्ठाप्य–तत्रानुसन्धानमेतल्लेखस्य ॥

**१ पात्रे वस्तु**–श्रीकुलार्णवतन्त्रे ५ उल्लासारम्भे ४३ पत्रे–यथा—

॥ स्वर्णरौप्यमयैः कूर्मकपालालाबुमृण्मयैः ।
नारिकेलश्च शङ्खश्च [1]मुक्ताशुक्तिसमुद्भवम् ॥
पुण्यक्षेत्रसमुद्भूतं पात्रं कुर्याद्विचक्षणः ॥ इति ॥
अतिसूक्ष्ममतिस्थूलं छिन्नं भिन्नं च वर्जयेत् ॥ इति ॥

२–तथैव–**वामकेश्वरतन्त्रान्तर्गत नि. षो. ७१ पत्रे १** विश्रामेऽपि

॥ स्वर्णरौप्यशिलाकूर्मकपालालाबुमृण्मयम् ।
नारिकेलं शङ्खमु[1]क्ताशुक्तिकाचसमुद्भवम् ॥
[2]पुण्यवृक्षकृतं रम्यं पात्रं कुर्याद्विचक्षणः ॥ इति ॥

---

१. मुक्ताशुक्ति शब्देन, मुक्ताफलाजनकशुक्तिव्यावृत्तिः ।

२. पुण्यवृक्षपदेन, अश्वत्थपलाशादिकतपयवृक्षेतरेषां स्नुहीविभीतकादीनां व्यावृत्तिः । इति वाम० नि. षो. भाष्ये–७१–पत्रे–१ विश्रामे ॥

**३–अन्यत्र च**–तत्रैव–

सौवर्णं राजतं ताम्रं जम्बाकाचसमुद्भवम् ।
नारिकेलोद्भवं वापि पात्रं संस्थापयेद्बुधः ॥ इति ॥

**४–अथ पात्राकृतौ—**

॥ नानाविचित्ररूपाणि पुण्डरीकाकृतीनि च ।
यथाशोभं यथालाभं तथा पात्राणि कारयेत् ॥ इति ॥ (१२।४ वि. सं.)

**१२-५/१–पात्रे कामनापरत्वेन धात्वादिवस्तूनि**–कुलार्णवे–५–उ–४३

पत्रे–यथा—

॥ स्वर्णरौप्याणि ताम्राणि सर्वसिद्धिकराणि च ।
शान्तिके चपलापात्रं स्तम्भने चैव मृण्मयम् ॥
नारिकेलञ्च वश्ये स्यादभिचारे च कूर्म्मजम् ।
शङ्खं ज्ञानप्रदं शुक्तिर्देवीप्रीतिप्रदायिनी ॥
कपालालाबुपात्राणि सर्वपापहराणि च ॥
पुण्यक्षेत्रजपात्राणि सर्वपापहराणि च ।
उक्तेष्वेतेषु पात्रेषु पात्रमेकं प्रकल्पयेत् ॥

**५/२ अर्घदाने कामनापरत्वेन धातुपात्राणि**—

हेमपात्रेण सर्वाणि चेप्सितानि लभेन्मुने ।
अर्घ्यं दत्वा तु रौप्येण चायूराज्यं शुभं भवेत् ॥
ताम्रपात्रेण सौभाग्यं धर्म्यं मृण्मयसम्भवम् ॥ इति ॥

**२–तथैव** श्रीवामके० नि. षो. १ वि. ७१–पत्रे–**भूतभैरवतन्त्रे**, यथा–

॥ सुवर्णरौप्यपात्राणि सर्वसिद्धिकराणि च ।
शान्तिके च शिलापात्रं स्तम्भने चैव मृण्मयम् ॥
नारिकेलं तु वश्यादावभिचारे तु कूर्मजम् ।
[२]शङ्खं ज्ञानप्रदं मुक्ताशुक्तिविद्याप्रदायिनी ॥

---

१. मुक्ताशुक्तिर्विद्याप्रदायिनी-इति पाठान्तरं-वामकेश्वरे-७१-पत्रे

२. अत्रापरैतत्पुस्तके विशिष्टः पाठोयथा—
॥ पुरुषार्थे च शङ्खं च शुक्तिरानन्ददायिनी ।
बिल्ववृक्षस्य पात्राणि सर्वसिद्धिकराणि च ॥ इति ॥

कपालालाबुपात्राणि योगसिद्धिकराणि च ।

पुण्यवृक्षजपात्राणि सर्वपापहराणि च– ॥

इति वचनाद्द्वादशविधानामपि पात्राणां काम्यत्वं प्रतीयते, तथापि, खादिरवदुभयार्थत्वं संयोगपृथक्त्वाविशेषाद्वक्तव्यम् ।

तथा च स्मर्यते–

उक्तेष्वेतेषु देवेशि पात्रमेकं प्रकल्पयेत् ॥ इति ॥

**३–षट्–योगेषु कामनापरत्वेन पात्राणि ॥**

सटीकशारदा० २३–पटले–८५३–पत्रे–यथा—

ग्रन्थान्तरे तु विशेषः ॥

हेमरूप्यशिलामृत्स्ना (सूक्ष्म) पात्रं शान्त्यादिषु स्मृतम्

बिल्वाक्षशिग्रुघटितं मारणोच्चाटणादिषु । इति विशेषः (इदं षट्प्रयोगे)

॥ इति ॥

**४–तत्रैव** अन्यत्रापि—

॥ सौवर्णान्यपि राजतान्यपि तथा पात्राणि शैलानि वा

मृत्पात्राण्यपि शान्तिकादिषु परं शस्तानि कर्मस्विह ।

शैल्वक्षद्रुमशिग्रुभूरुहकृतान्येतानि विद्वेषणोच्चाटोत्सादनमारणादिषु

भृशं शस्तानि पात्राण्यपि,–॥ इति

॥ इदं मारणादि–६–प्रयोगेपि सम्बद्धम् ॥ इति ॥ ( १२।४ वि. सं. )

**५–वर्ज्यपात्राण्यपि**–कुलार्णवतंत्रे-५-उल्लासे-४३-पत्रे-यथाः—

१ ॥ अतिसूक्ष्ममतिस्थूलं छिन्नं भिन्नं विवर्जयेत् ।

२ ॥ श्रीवाम. तं. नि. षो-१ विश्रामे ७१ पत्रेऽपि तथैवः—

॥ [1]अतिसूक्ष्ममतिस्थूलं भिन्नं छिद्रं विवर्जयेत् ।

३ ॥ अत्रैव,–ताम्रकांस्यादिभिर्लोहैः पात्रं नैव तु कारयेत ॥ इति ॥

( १२।५–वि. सं. )

**६–पात्रोत्सेधविस्तारौ**–तत्रैव–॥

॥ वस्वङ्गुलविहीनं तु न पात्रं कारयेद् बुधः ।

(अत्र भाष्यं यथा):–इति तन्त्रान्तरे निषेधदर्शनात् । उत्सेधविस्तारौ चतुश्चतुरङ्गुलावेवं-वस्वङ्गुलेति साम्प्रदायिकैस्तद्व्याख्यानात्- ।

---

१. अतिसूक्ष्मादेन चतुरङ्गुलोत्सेधात्तावद्विस्ताराच्च न्यूनमुच्यते । इति ज्ञेयम्-अधस्तनः वि०-दृश्यश्च

चक्रे तर्पणपूजनार्थं हस्तव्यापारोयावता प्रतिबध्यते तदतिस्थूलम् ॥ इति ॥

(१२।६ वि. सं.)

**७–पात्राणामाकृतिविषये** ॥ विशेषार्घतदतिरिक्तपात्राकारे, तत्रैव–

१ ॥ तदाकारस्तु विशेषार्घ्यातिरिक्तऐच्छिकः । विशेषे तु भगाकारतेति-भूतभैरव-तन्त्रे दृश्यते–॥ इति ॥

**२ ॥ आधारपात्रावश्यकता तदाकृतिश्च ॥**

(अनुसन्धानपत्रम्. प. क. सू. ३–खण्डे २३ सूत्रभाष्ये–१०७ पत्रे)

कुलार्णवतन्त्रे ५ उल्लासारम्भे ४३ पत्रे–यथाः—

॥ आधारेण विना भ्रंशोन गृहणन्ति च मातरः ।

तस्माद्विधिवदाधारं कल्पयेत् कुलनायिके ॥

॥ आधारं त्रिपादं प्राहुः षट्पदं वा चतुष्पदम् ।

अथवा वर्त्तुलाकारं कुर्याद्देवि मनोरमम् ॥ इति ॥

**३ तथैव** वाम. तं. नि. पो. १ वि. ७१ पत्रेऽपीति–अत्र भाष्यं यथाः–

॥ इत्युक्तलक्षणलक्षिताधारसहिते ।

॥ अत्र त्रिपदादिपक्षत्रये–क्रमेण त्रिषट्चतुष्कोणताऽवश्यकी ।

॥ वर्तुलपक्षे पादाभावइति सम्प्रदायः ।

॥ वर्तुलपक्षेऽपि, त्रिचतुःषट्पदानां विकल्पइत्यप्याहुः ।

तत्रैव–तच्चाधारं, सुवर्णरुप्यताम्रादिमयमिति, ज्ञानार्णवे ॥ इति ॥

(१२।७–वि. सर्वः सं.)

**८।१ ॥ पात्राणां सङ्ख्यानामादिकं च ॥**

उक्तं च मन्त्रमहार्णवे दुर्गातन्त्रे–यथाः—

॥ आदौ कुम्भं तथा शङ्खं श्रीपात्रं शक्तिपात्रकम् ॥

भोगपात्रं बलिपात्रं वीरपात्रं न्यसेत् क्रमात् ॥ १ ॥

मधुपर्कमाचमनं सामान्यार्घं ततः परम् ।

विशेषार्घं तथा न्यस्य पाद्यार्घं च न्यसेत् क्रमात् ॥ २ ॥

एवं पात्राणि संस्थाप्य यद्वा शक्त्यनुसारतः ।

पात्राणां स्थापनं कृत्वा ततः पूजां समाचरेत् ॥ ३ ॥ इति ॥

८।२ ॥ पुनश्चापि पात्रसङ्ख्यादिविषये ॥

॥ पात्राणां सङ्ख्यावश्यकशास्त्रार्थः–प. क. सू. ३ खण्डे १०५-पत्रतः १०७-पत्रान्तं भाष्यं दृश्यमिति ॥ (१२–वि. सर्वः सं.)

॥ द्वि. प. वि. १३–पूजाप्रयोगप्रकारादिज्ञेयविषये ॥

**१३–१–॥ पूजाशब्दार्थः ।** कुलार्णवतन्त्रे १७ उल्लासे-१५६ पत्रे-यथा—

॥ पूर्वजन्मानुशमनादपमृत्यु निवारणात् ।
सम्पूर्णफलदानाच्च पूजेति कथिता प्रिये ॥ इति ॥

**२–॥ पूजायाउपचारैः सह सम्बन्धः ॥**

॥ उपचाराः सपर्यायाः साधनानीति
**सपर्य्या विषये**–किंचिदुच्यते इत्यपि तत्रैव ॥ इति

**॥ अथातः पूजाविधाउच्यन्ते ॥**

३–॥ त्रिविधा पूजा उक्ता–आनन्दाश्रमसंस्कृतग्रन्थावलि ७३ ग्रन्थाङ्कमुद्रित श्रीमच्छङ्कराचार्यविरचितगा. पु. पद्धतौ–५३–पत्रे यथा—
ब्रह्मसंहितायाम्—

**पूजायाउत्तमः पक्षः–१**

॥ अग्निकार्येण हविषा भूषणैश्च समन्वितम् ।
द्रव्यशुद्धिसमायुक्तमुत्तमं पूजनं स्मृतम् ॥ इति ॥

**मध्यमः पक्षः–२**

॥ अग्निकार्यविहीनं तु कालदेशानुसारतः ।
उपचारैर्युतं द्रव्यैर्मध्यमं पूजनं स्मृतम् ॥ इति ॥

**कनिष्ठः पक्षः–३**

॥ वस्त्रालङ्कारवस्तूनि वर्जयित्वा पृथग्विधम् ।
केवलं पुष्पयोगं तु कनिष्ठं पूजनं स्मृतम् ॥ इति ॥

४–॥ **विस्तृतपूजायाअभावे** ॥ तत्रैव—

॥ पूजां विस्तरतः कर्तुं योन शक्नोति मानवः ।
यदि वाऽङ्गेन्द्रवज्राद्यैः पूजयेदिष्टदेवताम् ॥
॥ अथवा मानसीं कुर्यादात्मपूजामथापि वा ।
॥ अथवा केवलां पूजां बाह्यां कुर्याद्विचक्षणः ॥
॥ अथवा देवतामात्रं ध्यात्वा सम्यक् प्रपूजयेत् ॥
॥ अर्चामात्रेऽप्यशक्तश्चेद्दद्यादर्चनसाधनम् ॥
॥ योदातुं नातिशक्नोति कुर्यादर्चनदर्शनम् ॥

**५–॥ सम्पूज्यैव जपं कुर्यात् ॥** तत्रैव—

॥ सपूज्यैवं जपं कुर्यान्न मन्त्रं केवलं जपेत् ।
॥ पूर्वपूर्वस्य चाशक्तावुत्तरोत्तरमाचरेत् ॥
॥ यद्येतदन्यथा कुर्यात्तदाऽनिष्टफलं स्मृतम् ।
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ॥
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ।
॥ इति विज्ञाय सामर्थ्यमेकं पन्थानमाचरेत् ॥
॥ नैकं च यस्य विद्येत सोऽधोयाति न संशयः ॥ इति ॥

**६–॥ त्रिविधा शतधापि च पूजा ॥**

सटीकशारदा० ४ पटले २९९ पत्रे-अपि, पूजाविधा यथा—

॥ पुनस्त्रिधा मता पूजा उत्तमाधममध्यमा ।
अधिकारिनिमित्ताभ्यां भिद्यते शतधा पुनः ॥ इति ॥

**७–॥ त्रिविधपूजायामुत्तममध्यमाधमपक्षाः ॥** तत्रैव–यथा

॥ यागोपकरणैः कृत्स्नैः क्रियमाणोत्तमा मता । १
॥ यथा लब्धैर्विनिष्पाद्या दृष्टैः पूजा तु मध्यमा ॥ २
॥ पत्रपुष्पाम्बुनिष्पाद्या पूजा चाधमसंज्ञिता ॥ इति ॥

**८–त्रिविधपूजायां सात्विकादिभेदाः** ॥ तत्रैव—

॥ विदिताखिलवेदार्थैर्ब्रह्मर्षिभिरकल्मषैः ।
क्रियमाणा तु या पूजा **सात्विकी** सा विमुक्तिदा
॥ राजर्षिभिस्तपोनिष्ठैर्भगवत्तत्त्ववेदिभिः ।
या पूजा क्रियते सम्यक् **राजसी** सा सुखप्रदा ॥
॥ स्त्रीबालवृद्धमूर्खाद्यैर्भक्तैरक्षुद्रमानसैः ।
या पूजा क्रियते नित्यं **तामसी** सा प्रकीर्तिता ॥ इति

**९–॥ पुनश्चापि त्रिविधा पूजा ॥**

श्रीललितासहस्रनामस्तोत्रे–मार्तण्डभैरवाराध्या-इति १०१ श्लोकभाष्ये १६० पत्रे–
पण्डितराजः श्रीभास्कररायोयथाह—

प[१]रा [२]अपरा [३]परापरा चेति पूजा त्रिविधा-तदुक्तं, नित्यारहस्ये–

॥ तव नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।
परा चाप्यपरा गौरि तृतीया च परापरा–

प्रथमाद्वैतभावस्था सर्वप्रचरगोचरा–

द्वितीया चक्रपूजा च सदा निष्पाद्यते मया

एवं ज्ञानमयी देवी (वि) तृतीया स्वप्रथामयी ॥ इति ॥

**१०–पञ्चविधा सपर्या—**

पञ्चविधाः सपर्याउक्ताः–सटीकशारदायां-४ पटले–२९९ पत्रे–१०९–श्लोक भाष्ये–यथाः—

॥ [1]आतुरी [2]सौतकी चैव [3]त्रासी [4]दौर्बोधिकी तथा।

[5]साधना भाविनी चेति पञ्चधा भिद्यते पुनः ॥ इति ॥

**॥ ताश्च यथा– ॥**

**१०।१–रोगार्तस्य पूजाकरणरीतिः—**

॥ यदि लङ्घनपर्य्यन्तोव्याधिरात्मनि दृश्यते ॥

तदा पूजा न कर्त्तव्या स्थण्डिले प्रतिमासु च।

न स्नानं दन्तकाष्ठं वा कुर्य्याद्धोममथापि वा ॥

रविमण्डलमालोक्य प्रतिमामथवा पुनः।

मूलमन्त्रं सकृज्जप्त्वा पुष्पं साक्षतमुत्क्षिपेत् ॥

श्रान्तोव्याधिभिरत्युग्रैः क्लान्तश्चैवोपवासकैः।

निजसामयिकैर्वापि स्वकर्त्तव्यं समापयेत् ॥

स्नात्वा ( स्तुत्वा ) देवमथाग्नींश्च गुरून् विप्रान् प्रपूज्य च

एतावत्कालविच्छिन्ना पूजा युष्मत्प्रसादतः ॥

न दोषोमेऽस्त्विति प्रार्थ्य पुनः पूर्व्ववदाचरेत् ॥ इति ॥

**२–सूतकिनः पूजा ॥**

॥ **अथ सूतकिनः** पूजां वदाम्यागमचोदिताम् ॥

स्नात्वा नित्यञ्च निर्वर्त्य मानस्या क्रियया तु वै।

बाह्यपूजाक्रमेणैव स्थान( ध्यान )योगेन पूजयेत् ॥

यदि कामी न चेत् कामी नित्यं पूर्व्ववदाचरेत।

**३–त्रासिनः०– ॥**

॥ त्रासिनोवक्ष्यते पूजा यथैवागमचोदिता ॥

लब्धं वा यदि वाऽलब्धमर्घ्यपात्रादि साधनम्।

पूजोदकेन कर्त्तव्या न चेत्तोयञ्च विद्यते ॥

यदि सम्पूजयेद्देवं भावना कुसुमादिभिः।

**४—दौर्बोधिकी०— ॥**

॥ दौर्बोधिकीं प्रवक्ष्यामि पूजामागमचोदिताम् ॥
मूर्खस्त्रीबालवृद्धाद्यादुर्बोधाइति भाविताः ॥

**५—संक्षिप्ता०— ॥**

॥ रत्नमण्डपधर्म्मादिचतुष्कमुरगोम्बुजम् ॥
मूलमूर्त्तेस्तथाङ्गानि तेषां पूजा विधीयते ।
अन्येषामपि सर्व्वेषां प्रोक्ता संक्षेपकर्म्मणि ॥
सर्व्वोपचारवस्तूनामलाभे भावनेन हि ।
निर्मलेनोदकेनाथ पूर्णतेत्याह नारदः ॥ इति ॥

( १३।१० वि. सर्वः सं. )

**१३-११।१—संक्षिप्तपूजा—यामले—यथा—**

॥ आदावृष्यादिविन्यासः करशुद्धिस्ततः परम् ॥
अङ्गुलिव्यापकन्यासोहृदादिन्यासएव च ।
तालत्रयं च दिग्बन्धः प्राणायामस्ततः परम् ॥
ध्यानं पूजा जपश्चैव सर्वतन्त्रेष्वयं विधिः ॥ इति ॥

२—संक्षिप्तपूजा पिच्छिलातन्त्रे—यथा—

॥ आचम्य द्वारदेशे तु सामान्यार्घं समाचरेत् ।
लीपिऋष्यादिविन्यासौ मूलेन करशोधनम् ॥
करव्यापकविन्यासं कृत्वाङ्गानि न्यसेत् सुधीः ।
तालत्रयं दिशां बन्धः प्राणायामत्रयं तथा— ।
ध्याननिष्ठस्यैव पूजा जपश्च कालिकार्चनम् ।
**अयमेवविधिः प्रोक्तः सर्वेषां यजनक्रमः** ॥ इति ॥

( १३।११ वि. सर्वः सं. )

**१३-१२—पूजाकरणासमर्थं प्रति**-सटीकशारदा० ४ पटले ३०० पत्रे-यथा—

॥ आराधनासमर्थश्चेद्द्याद‌र्चनसाधनम् ।
योदातुं नैव शक्नोति कुर्य्यादर्चनदर्शनम् ॥
नैकञ्च यस्य विद्येत सोऽधोयात्येव नान्यथा ॥ इति ॥

**१३-१३—स्वयं परैश्चानीतपूजासाहित्यैः पूजने फलभेदः।**

सटीकशा० ४—पटले—३०-पत्रे-१०९—श्लोकटीकान्ते—यथा—

॥ यस्तु भक्त्या प्रयत्नेन स्वयं सम्पाद्य चाखिलम् ।
साधनं चार्चयेद्विद्वान् स समग्रफलं लभेत् ॥
॥ योऽर्चयेद्विधिवद्भक्त्या परानीतैश्च साधनैः ।
पूजाफलार्धमेवास्य न समग्रफलं लभेदिति ॥

**॥ पूजोपचाराणां निर्माल्यविषये-साधकस्य दिङ्मुखत्वे-च-**

१३-१४।१-इमानीमानि पूजोपचारवस्तूनि, इयता कालेन निर्माल्यानि भवन्ति-तत्र-प्र. योगिनीतन्त्रे-७ पटले १९७ पत्रे-यथा—

॥ मणिमुक्तासुवर्णानां देवे दत्तानि यानि च ।
न निर्माल्यं द्वादशाहं ताम्रपात्रं तथैव च ॥
पट्टी शाटी च षण्मासं नैवेद्यं दत्तमात्रतः ।
मोदकं कृषरञ्चैव यामार्द्धेन महेश्वरि ॥
पट्टवस्त्रं त्रिमासाच्च यज्ञसूत्रमहः स्मृतम् ।
यावदुष्णं भवदन्नं परमान्नं तथैव च ॥
मस्तकं रुधिरञ्चैव अर्द्धरात्रेण पार्वति ।
मुहूर्तं दधि दुग्धञ्च आज्यं यामेन शङ्करि ॥
करवीरमहारात्रं बिल्वपत्रं तथैव च ।
जवाबन्धूकमाल्यञ्च निर्माल्यं सार्द्धमासके ॥
माल्यं वै करवीरस्य पद्मस्य विल्वकस्य च ।
मासार्द्धेन महेशानि ताम्बूलं दत्तमात्रतः ॥ इति ॥ (१३-१४।१ वि. सं.)

**१३-१४/२-अनिर्माल्यसनिर्माल्यार्चनभेदश्च ॥**

सटीकशारदा-४ पटले २९९ पत्रे--यथा—

॥ अनिर्माल्यं सनिर्माल्यमर्चनं द्विविधं स्मृतम् ।
दिव्यैर्मनोभवैर्द्रव्यैर्गन्धपुष्पैः स्रगादिभिः ॥
यदर्चन**मनिर्माल्यं** दिव्यभोगापवर्गदम् ॥ इति ॥
॥ ग्राम्यारण्यादिसम्भूतैर्यागद्रव्यैर्मनोरमैः ॥
भक्तैर्यत् क्रियते सम्यक् **सनिर्माल्यं** तदर्चनम् ॥ इति ॥

**१३-१४/३-किंदिङ्मुखोदेवतां यजेत्तत्र**-स्मृतिसमुच्चये-२५१ पत्रे-वृद्धहारीतस्मृतौ-यथाः

१—प्राङ्गमुखोदङ्गमुखोवापि देवस्याभिमुखोऽपि वा—॥ १३७ श्लोके-इति ॥

२—श्रीयोगिनीतन्त्रे-१० पत्रे.-२ पटले—यथाः—

यक्षाशावदनोवापि देवेन्द्रवदनोपि वा ।

३—तत्रैव. यो-तं. १६ पत्रे-यथाः—

उत्तराशामुखोभूत्वा पूजयित्वा च तारिणीम् ॥ इति ॥

४—अत्रैव-प. क. सू. १४५ पत्रे-४ खण्डे-श्रीललिताक्रमे-८ सूत्रभाष्ये-यथा—अत्र, केचित्—

॥ यः पश्येद्यत्र सूर्यं तु सा प्राची तस्य कथ्यते ।
उदये सूर्यद्र स्तु मेरुरुत्तरसंस्थितः ॥

इति दिग्व्यवस्था श्रौतस्मार्तकर्मणि प्रसिद्धा, तथैव श्रीविद्योपासनायामपि दिग्व्यवस्था-इत्याहुः ॥

॥ अन्ये तु निरुक्तदिग्व्यवस्थायावैदिके कर्मणि सावकाशत्वात् " पूज्यपूजकयोर्मध्ये दिशं प्राचीं प्रकल्पयेत् " इति, तन्त्रवचनानुसारेण देव्यग्रभागः प्राची , देवी-पृष्ठभागः प्रतीची, देव्यादक्षभागोदक्षिणा, वामभागो-उदीची—दिगनुसारेण विदिशां च कल्पनं—इत्यूचुः ॥

तदुभयमपि स्थूलमानत्वादुपेक्ष्यम् । वस्तुतस्तु ज्ञानार्णवे, श्रीचक्रपूजनसन्निधौ—

॥ [1]उत्तराभिमुखोमन्त्री यदा चक्रं समुद्धरेत् ।
उत्तराशा तदा देवि पूर्वाशेति निगद्यते ॥ ९९ ॥
ईशानकोणं देवेशि तदाऽऽग्नेयं न संशयः ।
[2]पश्चिमाशामुखोमन्त्री यदा चक्रं समुद्धरेत् ॥ १०० ॥
पश्चिमाशा तदा ज्ञेया पूर्वाशेति न संशयः ।
वायुकोणं तदाऽऽग्नेयमैशानं राक्षसं भवेत् ॥ १०१ ॥
दक्षिणाभिमुखोमन्त्री यदा चक्रं समुद्धरेत् ।
पूर्वाशैव ह्युदीची स्यात् रक्षःकोणं तु [3]वह्निदिक् ॥ इति ॥ १०२ ॥

उत्तरा पश्चिमाशेत्यत्र, लोकप्रसिद्धोत्तरां दिशमनूद्य पूर्वादिदिकार्यं विधीयते "खलेवाली यूपोभवति " इतिवत् । इत्थं च दिङमात्रानुवादेन दिक्कार्यविधानात् विदिङ्मुखश्चक्रं नोद्धरेत्—इति सिद्धम् ॥ प्राचीदिगनुवादेन विधेयाभावात् तत्त्यक्तम् ।

---

१. इमे श्लोकाः ज्ञानार्णवे १० पटले । ३८—पत्रे—

२. पश्चिमादिङ्मुखोमन्त्री० इति-ज्ञानार्णवे—पाठः

३. वह्निवत् ॥

॥ एवं-कुलार्णवेऽपिः—

॥ यदाशाऽभिमुखोमन्त्री त्रिपुरां परिपूजयेत् ।
देवीपश्चात्तदा प्राची प्रतीची त्रिपुरापुरः ॥

इति निरवकाशवचनैः श्रीविद्याविषये उक्तरीत्या दिग्व्यवस्था । श्रीविद्याऽतीरिक्ते तान्त्रिके कर्मणि पूज्यपूजकयोर्मध्यं प्राची । निखिलश्रौतस्मार्तकर्मणि यः पश्येदित्यादि-वचनप्रवेशइति–अलं भूयसा ।

देव्याइत्युक्त्या बिन्दुचक्रएवाग्नेयादिदिशउक्तशास्त्रेण प्रकल्प्य, तत्र षडङ्गयुवतीः पूजयेत्–इति सिद्धम् ॥ ८ ॥

**५–कामनापरत्वेन षट्प्रयोगेषु दिङ्मुखत्वम्**–सटीकशारदा० ८४९ पत्रे. २३-पटले १२६ श्लोकटीकायां यथा—

॥ पूर्वामुखे भवेद्वश्यं दक्षिणे त्वाभिचारिकम् ।
पश्चिमे बन्धनं विद्यादुत्तरे शान्तिकं स्मृतम् ॥
आकर्षणमथाग्नेये नैर्ऋते मारणं तथा ।
उच्चाटनं च वायव्ये ऐशाने मोक्षदायकम् ॥ इति ॥ १२६ ॥

६–छन्दोगपरिशिष्टे–यथाः–

यत्र दिङ्नियमोनास्ति जपादिषु कथंचन ।
तिस्रस्तत्र दिशःप्रोक्ताऐन्द्री सौम्यापराजिता ॥

**७-अत्रात्र कोणे अमुकामुकदेवं पूजयेत्तत्र प्र.**

आनन्दाश्रमसंस्कृतग्रन्थावलि. ७३ अङ्के मुद्रित–श्रीमच्छङ्कराचार्यविरचितश्रीगा. पु. पद्धतौ, ४० पत्रे श्रीशक्तिपूजने, अमुकामुककोणे गणेशादिदेवार्चनोपदेशावसरे, यथा–

॥ नैर्ऋत्ये गणनाथं च सूर्यं वायव्यकोणके ।
ऐशान्ये,विष्णुमीशानमाग्नेये शक्तिपूजनम् ॥ इति ॥

॥ अत्र स्थले, नैर्ऋत्यादिकोणाः कुतोवा के वा ग्राह्यास्तत्समाधानायाह–यथा—

**श्रीविश्वामित्रः–**

॥ यष्टुरभिमुखादेवाः देवाभिमुखतोदिशः ।
प्राच्यादिरहिताज्ञेयाः पूजाहोमादिकर्मसु ॥ इति ॥

अत्र भाष्यम्—

इति वचनानुसारात् प्रादक्षिण्येन पूर्वादिकं कल्पयित्वा, नैर्ऋत्यादिकं ज्ञात्वा, तदारभ्य पूजयेदिति-सर्वत्र ॥ इति ॥

८—**श्रीशङ्करादिपञ्चदेवान् प्रधानीकृत्य** य. आ. सू. १०६ पत्रे-बोपदेवोयथा—

॥ शम्भौ मध्यगते हरीनहरभूदेव्योहरौ शङ्करे
भास्येनागसुतारवौ हरगणेशाजाम्बिकाः स्थापिताः ।
देव्यां विष्णुहरैकदन्तरवयोलम्बोदरेऽजेश्वरे
नार्याः शङ्करभागतोऽतिसुखदाव्यस्तास्तु ते हानिदाः ॥

९—**श्रीदेवीपञ्चायतनविषये** ॥ तत्रैव यथा—

॥ भवानी तु यदा मध्ये ऐशान्यां माधवं यजेत् ।
आग्नेय्यां पार्वतीनाथं नैर्ऋत्यां गणनायकम् ॥
प्रद्योतनं तु वायव्यामाचार्यस्तु प्रपूजयेत् ॥ इति ॥

( १३-१४।३ वि. सं. )

## १३-१४/४ पूजाकरणे पूजकस्य नियमादिकम् ॥

१—**देवपूजाकरणावश्यकत्वे**—यथा—

॥ इयं देवपूजा, षट्कर्मान्तर्गतत्वादहरहोवश्यं विधेयाऽन्यथा षट्कर्मापरिपूर्तिरियमेव धर्मत्रुटिरित्यादिमं प्रमाणम् इति— (प. क. सू. द्वितीयावृत्तिकारः)

२—य. आ. सू. १०३ पत्रे-यथा—

**कात्यायनपरिशिष्टसूत्रे**—ब्राह्मवैष्णवरौद्रसावित्रमैत्रावरुणैस्तल्लिङ्गैर्मन्त्रैरर्चयेत् ॥ योगीश्वरः—

॥ ब्राह्मवैष्णवरौद्रैस्तु सावित्रैर्मित्रवारुणैः ।
तल्लिङ्गैरेव मन्त्रैस्तु अर्चयेत् सुसमाहितः ॥

३—**बृहत्पाराशरसंहितायाम्**—

॥ ब्रह्माणं वैधसैर्मन्त्रैर्विष्णुं स्वैः शङ्करं स्वकैः ।
अन्यानपि तथा देवानर्चयेत् स्वीयमन्त्रकैः ॥
मन्त्रन्यासान् पुरा कृत्वा स्वदेहे देवतासु च ।
ब्रह्मीभूतः शुचिः शान्तोदेवयागमुपक्रमेत् ॥ इति ॥

४—कौर्मे—

ब्रह्माणं शङ्करं सूर्यं तथैव मधुसूदनम् ।
अन्यांश्चाभिमतान् देवान् भक्त्या त्वक्रोधनोनरः ॥
स्वमन्त्रैस्त्वर्चयेन्नित्यं पत्रैः पुष्पैस्तथाम्बुभिः ॥ इति ॥

**५–पूजारम्भतः, उपचारसमाप्तेः प्रागासनादुत्थाने–कर्तव्यता ॥**

सटीकशारदा०-४ पटले-३०७ पत्रे-यथा—

अन्योविशेषस्तन्त्रान्तरे

॥ विक्षेपादथ बालिश्याज्जपहोमार्चनान्तरा ।

उत्तिष्ठति तदा न्यासं [1]षडङ्गं विन्यसेत् पुनः ॥ इति ॥ १२३ ॥

( १३–१४।४ वि. सर्वः सं. )

**पूजारम्भात् प्राक्तनकर्मकर्तव्यता ॥**

१३–१४/५–॥ पूजारम्भात प्रागिदमिदं विधाय-तदनु पूजारम्भः कर्तव्यस्तत्र-प्रमाणगणः ॥

१–धर्मसारे–यथा–

॥ [2]कलशं शङ्खघण्टे च पाद्यार्घाचमनीयकम् ।

सम्पूज्य प्रोक्ष्य चात्मानं पूजासम्भारमेव च ॥

ध्यायेदभिमतां देवमूर्तिं सम्पूजयेत्ततः ॥ इति ॥ य. आ. सू. १२३ पत्रे

२–तथैव- तत्रैव-पूजासागरेपि–यथा—

॥ सुवासितजलैः पूर्णं सव्ये कुम्भं सुपूजयेत् ।

कलशस्येति मन्त्रेण तीर्थान्यावाहयेत्ततः ॥

शङ्खमद्भिः पूरयित्वा प्रणवेन च दक्षिणे ।

सम्पूज्य त्वं पुरेत्यादि मन्त्रेण प्रार्थयेत्ततः ॥ इति ॥

**३–शङ्खपूजनप्रमाणं**–सटीकशारदा०-४ पटले-३०६-पत्रे–यथा—

॥ पूजयेद्गन्धपुष्पाद्यैः शङ्खं वै देववद्बुधः ॥ इति

४–महाभिषेकसमये, शङ्खोपयोगः

तन्त्रान्तरे–यथा—

॥ महाभिषेकं सर्वत्र शङ्खेनैव प्रकल्पयेत् ।

सर्वत्रैव प्रशस्तोऽब्जः **शिवसूर्यार्चनं विना** ॥ इति तत्रैव ॥

**१३–१४/५–५**–य. आ. सू. १३६ पत्रे–शङ्खपूजाप्रयोगोयथा—

॥ शङ्खादौ चन्द्रदैवत्यं कुक्षौ वरुणदेवता ।

पृष्ठे प्रजापतिश्चैव अग्रे गङ्गा सरस्वती ॥

---

१. अत्रैवं विवेकः, वैदिके कर्मणि य. आ. सू. ११० पत्रे-२७८-विषये-सन्ति ते:षडङ्गन्यासाः कार्याः । अन्यत्र तु, तत्तद्देवतामूलमन्त्रषडङ्गन्यासाः कार्या इत्यवधेयम् ॥

२. अत्र कलशपूजनेऽभिहिते कलशकुम्भमुद्रेऽत्रैव द्वि. प. शि. १५।१० विषये–द्रश्ये ॥

त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ।
शङ्खे तिष्ठन्ति विप्रेन्द्र तस्माच्छङ्खं प्रपूजयेत् ॥

त्वं पुरा सागरोत्पन्नोविष्णुना विधृतः करे ।
निर्मितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तुते ॥
पाञ्चजन्याय विद्महे पावमानाय धीमहि ।
तन्नः शङ्खः प्रचोदयात् ॥

॥ ॐ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ॥

तमीमहे महागयम् ॥

ॐ श्रीशङ्खस्थदेवतायै नमः–गन्धपुष्पाभ्यां सम्पूजयामि–नमस्करोमि–॥ इत्याद पूजनं कार्यम्[1] ॥ इति ॥ (१३–१४।५ वि. सर्वः सं.)

## १३–१४ ॥ श्रीदेवपूजायां घण्टावादनावश्यकताहेतुप्रमाणमन्त्र-विधिफलोपन्यासः–
६

१–अत्र दरीदृश्यते लोकेपि पूजारम्भे शङ्खपूजनानन्तरं रैतिकरजतादिधातुनिर्मित घण्टामूर्ध्नि श्रीगरुडदेवतामूर्तिः–एतावता च श्रीगरुडदेवस्य घण्टायाश्च कश्चित् सम्बन्ध बन्धः ॥ इति ॥

२–तथाहि–

श्रीमद्भगद्वाहनश्रीगरुडपक्षोद्भूतनादवदस्याअपि माङ्गलिकोविघ्नध्वंसी च नादः समुत्पद्यते तेन च, देवतानां भक्तस्य चानन्दकृदयं घण्टानादः–अतश्चावश्यकं देवपूजायां घण्टनादार्चनमित्यप्येकोलोकशास्त्रीयोहेतुः । प्राक्तनः प्राचामाचारोप्यत्र सुप्रचारएव आभाति ॥ इति ॥

॥ सन्त्यपि पूजोद्देश्यघण्टावादनार्चनकर्मणि नानातन्त्रशास्त्रग्रन्थस्थश्रीगुरुगुरुश्रीशिवादि-वचांसि च भूयांसि प्रमाणानि-तदर्थं तल्लेखस्थलमधस्तान्निर्दिश्यते–यथाः–

### ३–॥ देवपुरतोघण्टास्थापने फलम् ॥

तन्त्रान्तरे–

॥ मम नामाङ्कितां (घण्टां) सुदर्शनयुतां यदि ।
ममाऽग्रे स्थापयेद्यस्तु तस्य देहे वसाम्यहम् ॥

---

१. अत्र शङ्खपूजायां शङ्खमुद्रां दर्शयितव्या-तदर्थमत्रैव-द्वि. प. शि. १५-८।१६ विषये-दृश्यम् ॥

घण्टां सम्पूज्य मध्ये [1]त्वागमार्थमिति वादयेत् ॥ इति ॥ य. आ. सु. १२३-पत्रे

**१३-१४ ॥ अत्रात्र घण्टां वादयेत्-तत्र प्रमाणानि ॥**
**६-४**

**॥ घण्टावादने, हेतुप्रमाणानि ॥**

१-घण्टावादने, हेतुः ॥ सटीकशारदा० ४-पटले २९७ पत्रे-उक्तं च-ज्ञानमालायां-यथाः—

॥ सर्वनादप्रियादेवानैकः कर्त्तुश्च तान् क्षमः ।
सर्वनादमयी घण्टा स्वात्मा (र्थो) सर्वनादकृत् ॥ इति ॥

२-अत्रापरमपि प्रमाणम् । य. आ. सू. १३६ पत्रे, देवपूजायां-यथाः—

॥ आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
घण्टानादं प्रकुर्वीत पश्चाद्घण्टां प्रपूजयेत् ॥ इति ॥

(१३-१४-६।४ वि. सर्वः सं.)

**१३-१४ ॥ अत्रात्र विषये-घण्टां वादयेत्तत्र, प्रमाणगणः ॥**
**६-५**

१-**श्रीकालिकापुराणेपि च** यथा—

स्नाने धूपे तथा दीपे नैवेद्ये भूषणे तथा ।
घण्टानादं प्रकुर्वीत् तथा नीराजनेपि च ॥ इति ॥

२-विष्णुधर्मोत्तरेऽपि यथा—

धूपे नीराजने स्नाने पुजाकाले विलेपने ।
ममाग्रे वादयन् घण्टामुत्तमं लभते फलम् ॥ इति य. आ. सू. १२३ पत्रे ॥

(१३-१४-६।५ वि. सर्वः सं.)

**वि. १३-१४ ॥ घण्टावादनार्चनयोस्तान्त्रिकपौराणिकमन्त्राः ॥**
**६-६**

**कुत्र कुत्र विद्यन्ते ?** तत्र ॥

१-घण्टावादनोपयुक्ततान्त्रिकपौराणिकमन्त्राः अत्रैव प. क. सू. द्वि. प. शिष्टस्थनिम्नदर्शिताङ्केषु विद्यन्ते तेभ्यएकतमोग्राह्यः स्यादेव-यथाः—

---

१. परं चात्रैव य. आ. सू- १३६-पत्रे-देवपूजाप्रयोगे-आगमार्थमित्येतच्छ्लोके, आदौ तद्वादनं ततोऽर्चनमभ्यधायि-ततोयोग्यं तत् कार्यम्—

| १ | द्वि. प. शि मुख्यविषयः | अन्तर्गत वि० | |
|---|---|---|---|
| २ | १३ | २८–८।१ | १ |
| ३ | ,, | ,, –८ | १ |
| ४ | ,, | ,, –,, | ४ |
| ५ | ,, | ,, –,, | ५ |
| ६ | ,, | ,, –,, | ३ |
| ७ | ,, | २९–८ | २ |
| ८ | ,, | ,, –८ | ६ |

१ अर्थादेतेषु पुरस्तनविषयेषु घण्टावादनाय-पूजनाय तान्त्रिकपौराणिकमन्त्राः सन्तीत्युह्यम् ॥ इति ॥

२ ॥ अत्र घण्टागरुडमुद्रोपदिष्टा-तदुध्धारोत्रैव द्वि. परि. १५-४/१७ विषये दृश्यः ॥ इति ॥

श्रीगरुडपूजनाय च, अत्रैव प. क. सू. १२ खण्डे–१ परिशिष्टे. ३११ पत्रे-५ सूत्रे श्रीगरुडमन्त्रोदृश्यः–

॥ एतद्घण्टास्थितगरुडपूजनाद्यपि ऊद्धर्वतनविषयगत
कोष्टकनिर्दिष्टविषयेष्वस्तीति विभाव्यतां सुधिया ॥ इति ॥

**१३-१४-६/७ देवपुरतोघण्टावादने, क्रियाप्रमाणम् ॥** गौतमीये–यथाः—

॥ उत्तोल्य दृष्टिपर्यन्तं घण्टां वामदिशि स्थिताम् ।
वादयन् वामहस्तेन दक्षहस्तेन चार्चयेत् ॥ इति ॥ य. आ. सू. १२३ पत्रे ॥

**१३-१४-६/८-१ घण्टावादनफलम् ॥** विष्णुधर्मोत्तरे–यथा

धूपे नीराजने स्नाने पूजाकाले विलेपने ।
ममाऽग्रे वादयन् घण्टामुत्तमं लभते फलम् ॥ इति ॥
य. आ. सू. १२३पत्रे

२–तन्त्रातरे–यथाः—

सर्ववाद्यमयी घण्टा केशवस्य सदा प्रिया ।
वादनाल्लभते पुण्यं यज्ञकोटिशतोद्भवम् ॥ इति ॥
( १३-१४।६–८ तथा च. १३-१४।६-वि. सर्वः सं. )

**१३।१५–अथ देवतापूजायामुपचारविषयकावश्यज्ञेयम् ॥ ध्याने–**
**१–ध्यानशब्दार्थः ।** श्रीकुलार्णवे १७ उल्लासे १९४ पत्रे–श्रीशिववचोयथाः–

॥ यावदिन्द्रियसन्तापान् मनसा संनियम्य च ।
स्वान्तेनाभीष्टदेवस्य चिन्तनं **ध्यानमुच्यते** ॥ इति ॥

२–य. आ. सू. १२३ पत्रे–**श्रीयाज्ञवल्क्योयथाह**–

॥ समाहितेन मनसा चैतन्यान्तरवर्तिना ।
आत्मनोभीष्टदेवानां ध्यानं **ध्यानमिहोच्यते** ॥ इति ॥

**३–तन्त्रोक्तमेव ध्यानं कर्तव्यं तत्र-प्रमाणम् ॥**

पुरश्चरणरसोल्लासे–तृतीयपटले, यथाः–

तन्त्रोक्तं ध्यानं मन्त्रश्च प्रशस्तं भारते कलौ ॥
वेदोक्तं चैव स्मृत्युक्तं पुराणोक्तं वरानने ॥
न शस्तं चञ्चलापाङ्गि कदाचित् भारते कलौ ॥ इति

**४–स्थूलसूक्ष्मेति ध्यानद्वयविषये ॥**

श्रीकुलार्णवतन्त्रे-९-पटले ७७ पत्रे

॥ ध्यानन्तु द्विविधं प्रोक्तं स्थूलसूक्ष्मप्रभेदतः ।
साकारं स्थूलमित्याहुर्निराकारन्तु सूक्ष्मकम् ॥
स्थिरात्ममानसः कश्चित् स्थूलध्यानं प्रचक्षते ।
स्थूलेन निश्चितं चेतोभवेत् सूक्ष्मेऽपि सुस्थिति ॥
( ॥ अतऊर्ध्वं सूक्ष्मध्यानमवश्यं द्रश्यम् ॥ )

५–**॥ स्वरूपारूपभेदेन ध्यानं द्विविधम् ॥** य. आ. सू. १२३ पत्रे–
वाचस्पतौ-यथा—

॥ ध्यानं तु द्विविधं प्रोक्तं सरूपारूपभेदतः ।
अरूपं तत्र यद्ध्यानमवाङ्नसगोचरम् ।
म
अव्यक्तं सर्वतोव्याप्तमिदमित्थं विवर्जितम् ॥ इति ॥

**६-द्विविधध्याने अरूपायाः श्रीकालिकायाः कथं रूपकल्पनेत्यत्र-च ॥**

महानिर्वाणतन्त्रे-५-उल्लासेपि यथा—

॥ गन्धपुष्पे समादाय कूर्मकच्छपमुद्रया ।
हृदि हस्तौ समाधाय ध्यायेद्देवीं सनातनीम् ॥ १३६ ॥
॥ ध्यानन्तु द्विविधं प्रोक्तं सरूपारूपभेदतः ।
अरूपं तव यद्ध्यानमवाङ्मनसगोचरम् ॥ १३७ ॥

अव्यक्तं सर्वतोव्याप्तमिदमित्थं विवर्जितम् ॥
अगम्यं योगिभिर्गम्यं कृच्छ्रैर्बहुसमाधिभिः ॥ १३८ ॥
मनसोधारणार्थाय शीघ्रं स्वाभीष्टसिद्धये ॥
सूक्ष्मध्यानप्रबोधाय **स्थूलध्यानं वदामि ते** ॥ १३९ ॥
॥ अरूपायाः कालिकायाः कालमातुर्महाद्युतेः ।
गुणक्रियानुसारेण क्रियते रूपकल्पना ॥ १४० ॥
॥ मेघाङ्गीं शशिशेखरां त्रिनयनां रक्ताम्बरं बिभ्रतीं
पाणिभ्यामभयं वरञ्च विलसद्रक्तारविन्दस्थिताम् ॥
नृत्यन्तं पुरतोनिपीय मधुरं माध्वीकमद्यं महा ।
कालं वीक्ष्य विकासितानवरामाद्यां भजे कालिकाम् ॥ १४१ ॥
॥ एवं ध्यात्वा स्वशिरसि पुष्पं दत्वा तु साधकः ।
पूजयेत् परया भक्त्या मानसैरुपचारकैः ॥ १४२ ॥ इति ॥

**७–पूर्वप्रतिष्ठितदेवतायाआवाहनाभावे ध्यानोपचारग्रहणे ॥**

॥ इदमत्रावधेयं यत्–प्राक्प्रतिष्ठितदेवानां विसर्जनमन्तरा, आवाहनाख्यउपचारोन सम्भाव्यते ततस्तादृक्स्थले १६ उपचारपूर्त्यै आवाहनोपचारप्रतिनिधित्वेन इद ध्यानमेवोपादेयमिति मतिमद्भिर्मन्तव्यमेवेति ॥ प. क. सू. द्वितीयावृत्तिकारः ( १ ३।१५ वि. सर्वः सं० )

**१३।१६ ॥ आसनविषये ॥**

१–आसनशब्दार्थः–कुलार्णवे-१७ उल्लासे--१५६ पत्रे–यथा—

॥ आत्मसिद्धिप्रदानाच्च सर्वरोगनिवारणात् ।
नवसिद्धिप्रदानाच्च आसनं कथितं प्रिये ॥

**२–आसने, वस्तुनि** प. क. सू. ७ खण्डे–वाराहीक्रमे-३७ सूत्रभाष्ये-२३५-पत्रे-

॥ अथासने विशेषउच्यते । तदुक्तं योगिनीतन्त्रे–यथा—

॥ छिद्रयुक्तानि दग्धानि जीर्णानि स्फुटितानि च ।
परकीयान्यासनानि वर्जयेत् जपकर्मणि ॥
हरिणव्याघ्रयोश्चर्म कुशवेत्रभवं, कटम् ।
कार्पासपट्टोर्णवस्त्रमच्छिद्रास्फुटितं भवेत् ॥
त्रयं वा द्वयमेकं वा भिन्नजातीयकं **स्मृतम्** ॥ **इति** ॥

**३–उक्तासनानि** । व्यासः–यथा—

॥ कौशेयं कम्बलं चैव अजिनं पट्टमेव च ।

दारुजं तालपत्रं वा आसनं परिकल्पयेत् ॥ य. आ. सू. ३९

**४–श्रीकालिकापुराणे**–यथा—

॥ आसनं प्रथमं दद्यात् पौष्पं दारुजमेव वा ।

वास्त्रं वा चार्मणं कौशं मण्डलस्योत्तरेऽर्पयेत् ॥ य. आ. सू. १२४

**५–आसनपरिमाणम्** । श्रीकालिकापुराणेः—

॥ चतुर्विंशत्यङ्गुलैस्तु दीर्घं काष्ठासनं मतम् । षोडशाङ्गुलविस्तीर्णमुत्सेधे चतुरङ्गुलम् ॥ पञ्चाङ्गुलं च वा कुर्यान्नोच्छ्रितं चात्र कारयेत् । वास्त्रं द्विहस्तान्नोदीर्घं सार्द्ध हस्तान्न विस्तृतम् ॥ त्र्यङ्गुलं तु तथोच्छ्रायं पूजाकर्मणि संश्रयेत् । सर्वेषां तैजसानां च आसनं श्रेष्ठमुच्यते ॥ इति ॥ य. आ. सु. ३९

**६–आसनगुणानाह** । व्यासः—

॥ कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि । वंशाजिने व्याधिनाशः कम्बले दुःखमोचनम् ॥ अभिचारे नीलवर्णं रक्तं वश्यादिकर्मणि । शान्तिके कम्बलः प्रोक्तः सर्वेष्टं चित्रकम्बलम् । वंशासने तु दारिद्र्यं पाषाणे व्याधिसम्भवः । धरण्यां दुःखसम्भूतिर्दौर्भाग्यं छिद्रदारुजे । तृणे धनयशोहानिः पल्लवे चित्तविभ्रमः ॥ इति ॥ य. आ. सु. ३९

**७–वर्ज्यासनम्**–देवीभागवते–

॥ आयसं वर्जयित्वा तु कांस्यसीसकमेव च ॥ इति ॥ य. आ. सु. ३९

॥ इमान्यासनानि प्रायः आत्मकृते–इति–ज्ञेयम् ॥ (१३।१६-वि. सं.)

**१७ ॥ पाद्यजलो तिक्षेप्यवस्तूनि ॥**

१–कुलार्णवतन्त्रे-१७ उल्लासे-१५८ पत्रे-श्रीशिववचोयथा—

॥ पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते ॥ इति ॥

**२–चत्वारि, पाद्याङ्गानि**–शारदातिलके-यथा—

॥ गन्धतैलमथो दद्याद्देवाय प्रतिमन्त्रतः ।

दुर्वां च विष्णुक्रान्तां च श्यामाकं पद्ममेव च ।

पाद्याङ्गानि च चत्वारि कथितानि समासतः ॥ इति ॥ य. आ. स. ११० पत्रे

( १३।१७ वि. सं. )

१३-१८॥ **अर्घे-अष्टवस्तूनि**-कुलार्णवतन्त्रे-१७-उल्लासे-१५८ पत्रे-यथा—

॥ सिद्धार्थमतंत चैव कुशाग्रं तिलमेव च ।
यवं गन्धं फलं पुष्पमष्टाङ्गोर्धः प्रकीर्तितः ॥ इति ॥

२-**शारदातिलके** यथा—

॥ सिद्धार्थमक्षतांश्चैव दूर्वां च तिलमेव च।
यवागन्धाः फलं पुष्पमष्टाङ्गमर्घ्यमुच्यते[1]॥ इति ॥ य. आ. सू. ११० पत्रे-

३-**अर्घदाने-विधिः**। शिवपुराणे-वायुसंहितायां-१८ अध्याये-२३ पत्रे २८ श्लोकतः-यथा—

॥ हेमस्थं हेमपात्राद्यं [2]मागधप्रस्थसंमितम् ।
पूरयेद्गन्धतोयेन रक्तचन्दनयोगिना ॥
रक्तपुष्पैस्तिलैश्चैव कुशाक्षतसमन्वितैः ।
दूर्वापामार्गगव्यैश्च केवलेन जलेन बा ॥
जानुभ्यां धरणीं गत्वा नत्वा देवं च मण्डले ।
कृत्वा शिरसि तत् पात्रं दद्यादर्घ्यं शिवाय तत् ॥ इति ॥ (१३।१८ वि. सं.)

**१३-१९।१ आचमनीयपात्रे-निक्षेप्यवस्तूनि**। कुलार्णवे-१७-उल्लासे-१५८-पत्रे-यथा—

॥ जातीलवङ्गकङ्कोलैरुक्तमाचमनीयकम् ॥ इति ॥

२ ॥ **अगस्त्यसंहितायां**-यथा—

॥ तथाचमनपात्रेऽपि दद्याज्जातीफलं मुने ।
लवङ्गमपि कङ्कोलं शस्तमाचमनीयके ॥
कर्पूरमगरुं पुष्पं द्रव्याण्याचमनीयके ॥ इति ॥

( य. आ. सू. ११० पत्रे-१३।१९ वि. सं. )

**१३।२० ॥ देवस्नानविषये ॥**

**१-अथ-स्नानशब्दार्थः**। कुलार्णवे-१७ उल्लासे-१५७-पत्रे-यथा—

॥ पाशसच्छेदनाद्देवि नवतत्त्वस्य धारणात् ।
पावनात् परमेशानि **स्नानमित्यभिधीयते** ॥ इति ॥

---

१. उपरितने-अत्र, श्लोके च व्याकरणं-न-चिन्त्यं-बहुमान्यत्वात्-
२. मगधदेशप्रसिद्धप्रस्थसंमतमित्यर्थः-

**$\frac{१३-२०}{२-१}$-तैलोद्वर्तने, महास्नाने च, समयः** ॥ श्रीयोगिनीतन्त्रे-७-पटले-१८५-पत्रे-यथा—

॥ तैलेनोद्वर्तनं कुर्य्यात् कषायेणातिरुक्षयेत् ।
पक्षान्ते चैव मासान्ते महास्नानं समाचरेत् ॥ इति ॥

**२-२-मङ्गलस्नानम्** ॥ ग्रन्थान्तरे-यथा—

॥ सर्वौषधीकृष्णतिलागन्धमामलकैस्तथा ।
सुगन्धिना चम्पकादितैलं युक्तं सचूर्णकैः ॥
उद्वर्त्याङ्गानि चूर्णं तत् मङ्गलस्नानमाचरेत् ।
एवं स्नानं प्रकुर्वीत ब्राह्मणैः सह निश्चितम् ॥ इति ॥

य. आ. सू. २६ पत्रे

२-३-उद्वर्तने द्रव्याणि । श्रीधनवन्तरिः-यथा—

॥ रजनी सहदेवी च शिरीषं लक्ष्मणापि च ।
सहभद्रा कुशाग्राणि **उद्वर्तनमिहोच्यते** ॥ इति ॥

य. आ. सू. १२५ पत्रे

**२-४-सुगन्धतैलस्नाने-तैलादिपदार्थास्तन्मानं च** । योगिनीतन्त्रे-९ पटले-२२५ पत्रे-यथा—

॥ तिलोद्भवेन तैलेन सुगन्धेन मम प्रिये ॥
फलेन च पलार्द्धेन तदर्द्धेनापि यत्नतः ॥
**स्नेहैर्वा रजनीभिश्च तण्डुलोद्वर्त्तनादिभिः ॥इति॥**

**२-५-अन्नात्र दिने-तैलस्नाननिषेधः** । योगिनीतन्त्रे-९-पटले-२२६ पत्रे-यथा—

॥ अयने विषुवे चैव भौमवारे दिनक्षये ।
द्वादश्यां राहुग्रस्ते च तैलस्नानं न कारयेत् ॥ इति ॥

**२-६-उद्वर्तनस्नाने-दिनविकल्पः** । तत्रैव २२५-पत्रे-यथा—

॥ उद्वर्तनं प्रतिदिनं कर्तव्यं त्रिदिनान्तरे
दिनद्वयान्तरे वापि सर्वकाले निशेषतः ॥ इति ॥

**(१३-२०१२-वि. सर्वः सं.)**

**१३-२०-शक्त्यपेक्षया-स्नानकलशानां-सुवर्ण,रजत,ताम्र,मृन्मयत्वं**
**३-१**

१००८-१००-१० **सङ्ख्यान्यतमसङ्ख्याकत्वं-तत्र-वस्तूनि च**॥ यो.-तं-९-पटले-२२५ पत्रे-यथा—

॥ अष्टोत्तरसहस्रैस्तु सुवर्णघटितैर्युतैः ।
तण्डुलैः स्नापनं कुर्यात् कर्पूरादिविमिश्रितम् ॥ इति ॥
॥ अशक्तस्तु शतं कुर्य्याद्दशधा सुरसुन्दरि ॥
ताम्रैर्वा राजतैर्वापि अथवा सति सम्भवे ।
**मार्तिकैर्वाघटैः स्नानमशक्तस्तु समाचरेत्** ॥ इति ॥

३-२-**स्नानकलशप्रमाणमथवा-मणिकुम्भलक्षणम्**॥ यो. तं. ७. पटले १८७ पत्रे-यथाः-

॥ अष्टाङ्गुलं मुखं यस्य एकविंशाङ्गुलोदरम् ।
अरत्निमात्रमुत्सेधं **मणिकुम्भं** तदुच्यते ॥ इति ॥

( १३-२०।३ वि. सर्वः सं. )

**१३-२०-स्नानविषयकवस्तुमानम्** । श्रीयोगिनीतन्त्रे-७ पटले-१८७
**४**

पत्रे-यथा—

॥ दशतोलिकमानेन द्रव्याणाञ्च पृथक पृथक्
चतुस्तोलिकया वाथ हीने स्नाने विधीयते ॥

॥ २-**उपर्युक्तविषये-तान्त्रिकं, तोलकादिमानम्**-तत्रैव—

॥ गवाक्षमात्रे यत्रैषा सूर्य्यरश्मिस्तु लेखिका ।
लेखिकाष्टौ भवेद्धूली धूलिरष्टौ च सर्षपः ।
सर्षपाणां चतुष्केण **रत्तिकेत्यभिधीयते** ॥
रत्तिकानां विंशकन्तु पादकं परिकीर्तितम् ।
तोलिका च चतुष्पादै[1]श्चतुस्तोलैः प्रसृतितः ॥
प्रसृती द्वे कर्षकञ्च द्वे कर्षे तु पलं भवेत् ।
पलार्द्धेन भवेन्मुक्तिर्द्विमुक्ती गुडकं मतम् ॥
[2]एवं स्नानं ततः कृत्वा गात्रं सम्मार्जयेत् सुधीः ॥ इति ॥

---

१. चतुस्तोलैश्च प्रसृतिः-एवं योग्यम्
२. इमानि स्नानान्यत्र-विस्तृत्योक्तानि-विद्वदुपासकक्रृते-एवेति ज्ञेयम्-अन्यच्चेमानि-स्नानानि-षोडशोपचार विधावप्युपकारकाणि-इत्यपि-पर्यालोचनीयम् ॥

**३-२०-स्नानकाले-प्रयोज्यपदार्थाः**। योगिनीतन्त्रे-७-पटले-१८६ पत्रे-यथा-
५-१

॥ द्रोणपत्रबिल्वपत्रकरवीरोत्पलानि च ।
स्नानकाले प्रयोज्यानि देवीप्रीतिकराणि च ॥ इति ॥

२-सर्वस्नानकलशेषु-क्षेप्यवस्तुत्रयम् । मन्त्रतन्त्रप्रकाशे-यथा—

अक्षतागन्धपुष्पाणि स्नानपात्रे तथा त्रयम् ।
द्रव्याऽभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः ।
तण्डुलान् प्रक्षिपेत्तेषु द्रव्याऽभावे तु तत् स्मरन् ॥ इति ॥ य. आ. सू. ११०

( २०।५ वि. सर्वः सं. )

६-सर्ववस्तुस्नाने-जलं, ग्राह्यं-परं. च.-एतदेतद्वस्तुस्नाने जलं-न ग्राह्यम् ॥ महा-निर्वाणतन्त्रे-१३ उल्लासे-२७७ श्लोके-यथा—

एतेषु प्रोक्तद्रव्येषु जलयोगोविधीयते ।
पञ्चामृते गन्धतैले तोययोगं विवर्जयेत् ॥ इति ॥ २७७ ॥

**७-देवप्रतिमायां नित्यस्नाननिषेधः** ॥ प्रयोगपारिजाते-यथा—

॥ प्रतिमापट्टयन्त्राणां नित्यस्नानं न कारयेत् ।
कारयेत् पर्वदिवसे यदा वा मलधारणम् ॥ इति ॥

**८-सितामलजलोष्णोदकपञ्चामृतस्नानेषु अनुक्रमः**। योगिनीतन्त्रे-९ पटले-२२५-पत्रे-यथाः—

॥ सितामलजलैश्चैव तथा कोष्णोदकेन च ।
उष्णेन वारिणा चैव क्रमात् पञ्चामृतेन च ॥ इति ॥

**१३-२०-स्नानसमर्पणे मन्त्रादि**। योगिनीतन्त्रे-७-पटले-१८५-पत्रे-यथाः-
९-१

॥ वैदिकेनाथ मन्त्रेण मायया वा समाचरेत् ॥ इति ॥

२-॥ महानिर्वाणतन्त्रे १३ उल्लासे-२७८ श्लोके-यथाः—

॥ सव्याहृतिं सप्रणवां गायत्रीं मूलमुच्चरन्
एतद्द्रव्यस्य तोयेन स्नापयामि नमोवदेत् ॥ २७८ ॥ इति ॥

( १३-२०।९ वि. सर्वः सं. )

**१३-२०—कलशस्नानादौ-कर्तव्यः प्रयोगः॥** यो. तं. ९ पटले २२५
१०-१
पत्रे—यथा—

॥ **इमे, देवतास्नपनकलशाः-देवदक्षिणतः स्थाप्याः**-तत्रापि-

॥ स्नानात् पूर्वं महेशानि तीर्थं यत् परिकीर्तितम्
जलमाहृत्य कुम्भे च कृत्वा पुण्यं विधानवित् ॥
गन्धं पुष्पं ततोदत्वा पुनर्मन्त्रं जपेत्ततः ।
अमृतीकरणं कुर्य्यान्मुद्रां तत्र च दर्शयेत् ॥
षडङ्गं विन्यसेत्तत्र अवगुण्ठय ततोऽर्चयेत् ।
महोत्सवं ततः कृत्वा स्नानार्थं देवदक्षिणे ॥ इति ॥
स्नापयेत् स्नानशेषे तु देवबुद्ध्या क्षिपेत्तनौ ॥ इति ॥

२—तथैव—योगिनीतन्त्रे-७ पटले-१८५-पत्रे-यथाः—

॥ विधिना स्थापयेद्देवीं वारिणा प्रथमं प्रिये ।
मुखप्रक्षालनं कृत्वा पुनः स्नानं समाचरेत् ॥ इति ॥

(२०।१०—वि. सर्वः सं.)

**१३-२०—प्रतिस्नानं-देवतापूजावश्यकत्वम्।** महानिर्वाणतन्त्रे-१३ उल्लासे-
११
२८३ श्लोके-यथाः—

॥ स्नाने स्नाने महादेव्याः शक्त्या पूजनमाचरेत्
ततोनिवेश्य प्रतिमामासने सुपरिष्कृते ॥ २८३ ॥ इति ॥

(१३-२०।११ वि. सं.)

**१३-२० ॥ अथ नानावस्तुस्नानानि-तत्फलानि-च ॥**
१२-१
श्रीयोगिनीतन्त्रे-७-पटले-१८६-पत्रतोऽस्ति-ततोज्ञेयानि-॥

तत्रादौ-**देहप्रक्षालनात्मकस्नानम्॥** कुलार्णवे० १७ उल्लासे-१५८ पत्रे-यथा-

॥ देहप्रक्षालनं स्नानं सुगन्धिसलिलैः सह ।
चन्द्रचन्दनकस्तूरीकालागुरुभिरुच्यते ॥ इति ॥

---

१. अत्र अगरुरिति क्वचित्-एवममरकोष-२-काण्डे-१२७ श्लोकटीकायाम्। एवं च-अगरु-अगुरु-इत्युभावपि शब्दौ, प्रामाणिकौ-एतइति-ज्ञेयम्-

२-**मधुपर्कस्नानं-तत्र, पदार्थाश्च**। तत्रैव-यथाः-

॥ मध्वाज्यदधिभिः प्रोक्तो**मधुपर्कः** कुलेश्वरि ॥ इति ॥

३-**ब्रह्मस्नानं-तत्पदार्थाश्च-**। यो-तन्त्रे-७ पटले-१८६ पत्रे-यथाः--

॥ पञ्चगव्येन योदेवीं तथा दुग्धकुशोदकैः ।

स्नापयेद्विविधैर्मन्त्रै**ब्रह्मस्नानं** हि तत् स्मृतम् ॥ इति ॥

४-**कर्पूराधिमिश्रिततण्डुलस्नानम्-**। यो० तन्त्रे-९ पटले-२२५-पत्रे--
यथाः—

॥ तण्डुलैस्नापनं कुर्यात् कर्पूरादिविमिश्रितम् ॥ इति ॥

५-**त्रिसितस्नानं-त्रिगन्धस्नानं-च**। यो-तन्त्रे-९-पटले-२२५ पत्रे-यथा-

॥ त्रिसितेन त्रिगन्धेन त्रिजलेन मम प्रिये ।

प्रीत्यर्थं तस्य देवस्य स्नानं देवि समाचरेत् ॥

त्रिसितं चन्दनं पद्ममुशीरं परिकीर्तितम् ।

नित्यं मलयजं मर्त्यं त्रिगन्धं सुमनोहरम् ॥ इति ॥

६-**त्रिजलस्नानम्**। तत्रैव-यथाः-

॥ तीर्थोदकं गन्धतोयं कर्पूरस्योदकं तथा ।

त्रिजलञ्च महेशानि स्नापयेदन्तरान्तरे ॥ इति ॥

**१३-११/७ कपिलापञ्चगव्येक्षुरसस्नानं-तत्फलं-च**। यों० तन्त्रे-७-
पटले-१८६ पत्रे-यथा—

॥ कपिलापञ्चगव्येन तथा क्षीरयुतेन च ।

स्नानं शतगुणं प्रोक्तं तथा इक्षुरसेन च ॥

क्षीरेण स्नापयेद् यस्तु श्रद्धाभक्तिसमन्वितः ।

कामाख्यां विधिवद्देवि इन्द्रलोके महीयते ॥ इति ॥

८ **घृताभ्यङ्गस्नानं-तत्फलं-च**। तत्रैव-यथा—

॥ घृताभ्यङ्गेन देव्याश्च घृतेन विधिवत् प्रिये ।

दश पूर्वान् दश परान् आत्मानञ्च विशेषतः ॥

भवार्णवात् समुद्धृत्य दुर्गालोके महीयते ॥ इति ॥

९ **दधिदूर्वाऽक्षतस्नानं-तत्फलं-च** ॥ तत्रैव

॥ स्नापयेद्विधिवद्यस्तु दध्ना दुर्वाक्षतेन च ।

राजतेन विमानेन शिवलोके महीयते ॥ इति ॥

**१० नवेक्षुरसस्नानं-तत्फलं-च** । तत्रैव—यथा—

॥ कामाख्यां स्नापयेद्यस्तु नवेनेक्षुरसेन च ।
गरुडेन विमानेन विष्णुना सह मोदते ॥ इति ॥

**११ गन्धचन्दनवारिस्नानं-तत्फलं-च** । तत्रैव—यथा—

॥ स्नापयित्वा नरोदुर्गां गन्धचन्दनवारिणा ।
चन्द्रांशुनिर्मलः श्रीमान् चन्द्रलोके महीयते ॥ इति ॥

**१२ सुगन्धपुष्पतोयस्नानं-तत्फलं-च** । तत्रैव—यथा—

॥ सुगन्धपुष्पतोयेन स्नापयित्वा नरः क्वचित् ।
नागलोकं समासाद्य क्रीडते सह पन्नगैः ॥ इति ॥

**१३ हेमवारिस्नानं-तत्फलं-च** । तत्रैव—यथा—

॥ स्नापयित्वा तु कामेशीं श्रद्धया हेमवारिणा ।
सौवर्णयानमारुढोमोदते वसुभिःसह ॥ इति ॥

**१४ केवलकर्पूरवारिस्नानं, तत्फलं-च** ॥ तत्रैव-१८७ पत्रे-यथा—

॥ स्नापयेद्यस्तु वै देवीं नरः कर्पूरवारिणा ।
सगच्छति परं स्थानं यत्र कामेश्वरीस्थिता ॥ इति ॥

**१५ पितृनुदिश्य, क्षीरमध्वन्यतरस्नानं-तत्फलं-च** । तत्रैव—यथा—

॥ पितृनुद्दिश्य योदेवीं क्षीरेण मधुनाथवा ।
स्नापयेद्विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥
तृप्ताभवन्ति पितरस्तस्य वर्षशतद्वयम् ॥ इति ॥

**१६ महास्नानलक्षणं, तत्रमध्यमकनिष्टपक्षौ, पदार्थमानं, महास्नानफलं-च**-योगिनीतन्त्रे—७ पटले १८७ पत्रे—यथा—

॥ पञ्चामृतस्य प्रत्येकं फलानाञ्च शतं शतम् ।
॥ **शतञ्च वारिकुम्भानां महास्नाने नियोजयेत्** ॥
॥ अपां कुम्भशतेनैव तैलस्यापि त्रिभिः पलैः ।
**महिष्ठन्तु महास्नानमेवमाहु**र्मनीषिणः ।
॥ **मध्यमन्तु** तदर्द्धेन स्नानं यत्र विधीयते ॥
॥ तदर्द्धन्तु **कनिष्ठं** स्यादतोहीनं न कारयेत् ।

**एतास्नापनफलं-तत्रैव— ॥**

॥ एवं यः कारयेत् स्नानं नरः कश्चित् कदाचन ॥
सप्तजन्मकृतात् पापात् तत्क्षणादेव हीयते ।
आयुर्बलं यशोवर्चः सौभाग्यं पुष्टिरेव च ॥
स्नापयित्वा तु कामेशीं लभते नात्र संशयः ।
एवं यस्तु महास्नानं करोति भक्तिमान्नरः ॥
शरीरारोग्यमायुष्यं प्राप्नोति श्रियमुत्तमाम् ॥ इति ॥

**१७ ॥ सर्वकलशस्नपनान्ते-क्रियमाणमर्घ्यस्नानम् ॥**

एतत्कलशस्नानेन सह अर्घ्यसंज्ञकस्नानस्य सम्बन्धत्वात्-अर्घ्यस्नानेतिकर्तव्यता-माह-श्रीयोगिनीतन्त्रे-७-पटले-१८५-पत्रे-यथा—

॥ वारिणा प्रथमं स्नानं क्षीरेण तदनन्तरम् ।
दध्ना घृतं पिण्डद्वयं शर्कराञ्च गुडं मधु ॥
तिलक्षीरं दधि तिलं मधुक्षीरेण स्नापयेत् ।
उष्णोदकं फलञ्चैव तथा चैव कुशोदकम् ।
गन्धोदकञ्च रत्नानामुदकं पुष्पतोयकम् ॥
बिल्वोदकं सप्तपत्रं रक्तपुष्पोदकं तथा ।
स्वर्णशङ्खोदकञ्चैव ताम्राधारमनन्तरम् ॥
घटोदकं कुशञ्चैव अर्घ्यस्नानं समाचरेत् ॥ इति ॥

इदमर्घ्यस्नानं, सर्वस्नानानन्तरमेव विधेयम्-अर्थात्-अर्घ्यस्नानानन्तरं-न-किञ्चिदपि स्नानं, विधेयम्-तत्र-प्र-तत्रैव—

॥ कलशैः स्नापयेत् पश्चादर्घ्यस्नानमनन्तरम् ।
अर्घ्यस्नानं ततः कृत्वा पुनः स्नानं करोति च ॥
देवीलोकच्युतिस्तस्य धनहानिश्च जायते ॥ इति ॥ (१३-२० वि. सर्वः सं.)
१२

**१३-२०-कूर्चविषये**
**१३**

अत्र-पूजोपचारेषु-सर्वस्नपनानन्तरं-देवमूर्तियन्त्रान्यतमस्थमलापकर्षणाय-देवशरीरे, यंत्रे वा कूर्चनिघर्षणमुक्तं तत्र च, निषेधदिनाद्यप्युक्तम् । यो-तं-९ पटल-२२६पत्रे-यथा—

॥ संस्थाप्य देवदेवेशं बिल्वपत्रेण शङ्करि ।
सङ्घृष्य गात्रं पत्रैर्वा अपामार्गस्य मूलकैः ॥

नलपुष्पस्य कूर्चैश्च न कूर्चैश्च महेश्वरि ।
कुशेन चामरेणाथ गोवालेन विशेषतः ॥
उशीरं कूर्चकं दत्त्वा सर्वपापैः प्रमुच्यते ।
दत्वा गोबालकं कूर्चं सर्वान् पापानपोहति ॥
दत्वा च चामरं कूर्चं श्रियमाप्नोत्यनुत्तमाम् ।

**कूर्चनिषेधः ।**

न वराहस्य रोमेण न वंशेन कदाचन ॥
गवयस्य तथाश्वस्य रोमन्तु परिवर्जयेत् ।
लिङ्गे वा प्रतिमायां वा शालग्रामे तथैव च ॥
न कूर्चयेत् प्रतिदिनं पञ्चाहे सप्तके तथा ।
मासान्ते वाथ पक्षान्ते कूर्चयेन्मम सुन्दरि ॥ इति ॥

**१४-॥ एवं, सर्ववस्तुस्नपनान्ते, स्नानशेषोदकं-स्वशरीरे-सिञ्चेत् ॥**

तत्र-प्र. यो. तं. ९ पटले-२२५ पत्रे-यथा—

॥ स्नापयेत् स्नानशेषे[1] तु देवबुध्या क्षिपेत् तनौ ॥ इति ॥

( वि. १३।२० सर्वः सं. )

**१३।२१-॥ वस्त्रविषये ॥** देवपरत्वेन-**प्रियवस्त्रम् ॥**

१-दु. क. पुस्तिकायाम्-३७७ पत्रे-यथा—

**॥ पीतकौशेयवस्त्रं-श्रीविष्णोः प्रीतिकरम् ॥**

॥ पीतं कौशेयवसनं विष्णोः प्रीत्यै प्रकीर्तितम् ॥

**२-तत्रैव ॥ रक्तं-वस्त्रं-शक्त्यर्कविघ्नानां, प्रीतिकरं-श्रीशिवस्य श्वेतं-प्रियम् ॥**

॥ रक्तं शक्त्यर्कविघ्नेषु ईश्वरस्य सितं प्रियम् ॥
मलहीनं तथाछिद्रं क्षौमं कार्पासमेव च ।

**३-तत्रैव ॥ वर्ज्यं वस्त्रं-तादृशवस्त्रार्पणे, दुष्फलं-च ॥**

॥ तैलादिदूषिताद्रोगः सछिद्राद्दाच्यता भवेत् ।
जीर्णाद्दरिद्रता कर्तुः मलिनात् कान्तिहीनता ॥ इति ॥

( १३-२११ वि. सर्वः सं. )

---

१. स्नानशेषं-तु-इति पाठोऽत्र-युक्तः—

**१३-२१-संमार्जने ग्राह्यवस्त्रम् ।** यो. तं. ९. पटले २२६ पत्रे-यथा-
२-१

॥ वस्त्रेण मार्जयेद्देवि कार्पासेनाथ चन्दनैः ॥ इति ॥

**२-॥ संमार्जनवस्त्रस्थवर्णपरत्वेन-निषिद्धफलम् ॥**

॥ रक्तवस्त्रैर्भवेत् कुष्ठी पाण्डुव्याधिमवाप्नुयात् ।
पटैश्च क्षोभमाप्नोति नीलरक्तैः क्षयं व्रजेत् ।
परिधाप्य ततोवस्त्रं स्वर्गक्षयकरं तथा ॥ इति ॥

**३-कटीवेष्टनवस्त्रस्वरूपम् ॥**

॥ कटीवेष्टनकं दद्यात् नानारत्नादिभूषणम् ।

**४-। पूजाभोजनस्नानकाले-परिधानवस्त्रनिषेधः ।**

॥ परिधानं पिधायैवं स्नानं यः कुरुते नरः ॥
पूजाकाले भोजने च स्नाने चैव विशेषतः ।
सोऽपि नाशमवाप्नोति धननाशं तथैव च ॥ इति ॥

**५-अङ्गसमार्जने-तान्त्रिकश्लोकमन्त्रः**-श्री. मा. पू. स्तोत्रे-यथा—

॥ प्रत्यङ्गं परिमार्जयामि शुचिना वस्त्रेण सम्प्रोछनं ।
कुर्वे केशकलापमायततरं धूपोत्तमैर्धूपितम् ॥
[1]काश्मीरैरगुरुद्रवैर्मलयजैः सङ्घृष्य सम्पादितं ।
भक्तत्राणपरे महेशि महिते श्रीचन्दनं गृह्यताम् ॥ इति ॥

( १३।२१-वि. सर्वः सं. )

**१३।२२-॥ गन्धविषये ॥**

**१-गन्धशब्दार्थः** । कुलार्णवे-१७ उल्लासे-१५६ पत्रे-यथा—

॥ गभीरापायदौर्भाग्यक्लेशनाशनकारणात् ।
धर्मज्ञानप्रदानाच **गन्धइत्यभिधीयते** ॥ इति ॥

**२ गन्धे-वस्तूनि ।** यो. तं. ९-पटले-२२६-पत्रे-यथा—

॥ मलयजेन गन्धेन गोपीचन्दनकेन वा ।
बिल्वकाष्ठोद्भवेनाथ तुलसीकाष्ठकेन वा ॥
पद्मकेन तमालेन तथा रोचनयाथवा ।
विधाय तिलकं श्रेष्ठमेषामेकतमेन च ॥

---

१. इदमुत्तरार्धं मया-द्वितीयावृत्तिकृता-बालातन्त्रचन्द्रिकायां-अन्यथा न्यस्तं-यथा—
। आलीवृन्दविनिर्मितां जवनिकामास्थाय रम्यप्रभां
भक्तत्राणपरे महेशगृहिणि स्नानाम्बरं मुच्यताम् ॥-अयं, पाठोऽपि साधुत्तरः-

चतुःसमञ्चातिसमं द्विसमञ्च सुरेश्वरि ।
अत्रालिप्य ततोदेहमयनेन विसर्जयेत् ॥ इति ॥

३ **अत्रात्र—ललाटे एव—गन्धोन—सर्वाङ्गे** ॥ तत्रैव-यथा—

॥ शीते रात्रौ पुनः स्नाने नानुलिप्य सुगन्धिभिः ।
ललाटे तु विशेषेण वराङ्गे न कदाचन ॥ इति ॥

४ **पुनश्चापि, चन्दनविषये** । तत्रैव—यथा—

॥ चतुःसमञ्च त्रिसमं द्विसमञ्च सुरेश्वरि ।
**पादे पृष्ठे तथा नेत्रे न दद्यादनुलेपनम्** ॥
चतुर्लग्ने हता लक्ष्मीर्मुखलग्ने हताः श्रियः ।
दरिद्रः करलग्ने च पदलग्ने धनक्षयः ॥
लिङ्गस्य पुलकान्ते तु न दद्याच्चन्दनं प्रिये ।
पद्मपत्रे बिल्वपत्रे करवीरदले तथा ॥
तत्र दद्याच्चन्दनञ्च लिङ्गे पुनश्च सम्भवे ॥ इति ॥ (१३-२२।४ वि. सं.)

॥ **गन्धानुलेपनविषये**—कालिकापुराणे-वाचस्पतौ । य. आ. सु. १२६-पत्रे—यथा—
२२।५—॥ **पञ्चविधोगन्धः** ॥

॥ चूर्णीकृतोवा घृष्टोवा दाहकर्षितएव वा ।
रसः संमर्दजोवापि प्राण्यङ्गोद्भवएव वा ॥
**गन्धः पञ्चविधः** प्रोक्तोदेवानां प्रीतिदायकः ।
॥ गन्धचूर्णं गन्धपत्रचूर्णं सुमनसां तथा ॥ ॥ १ ॥
प्रशस्तगन्धउक्तानि पत्रचूर्णानि यानि च ।
तानि गन्धाह्वयानि स्युः सगन्धः **प्रथमः** स्मृतः ॥
॥ घृष्टोमलयजोगन्धः सरलश्च नमेरुणा ॥ २ ॥
अगरुप्रभृतिश्चापि यस्य पङ्कः प्रदीयते ॥
घृष्ट्वा सघृष्टोगन्धोऽयं **द्वितीयः** परिकीर्तितः ।
॥ देवदार्वगुरुब्रह्मसालसारान्तचन्दनाः ॥ ३ ॥
प्रियादीनां च योदग्ध्वा गृह्यते दाहजोरसः ।
सदाहाकर्षितोगन्धस्**तृतीयः** परिकीर्तितः ॥
॥ सगन्धः कारवी बिल्वं गन्धिनी तिलकं तथा ॥ ४ ॥
प्रभृतीनां रसायोसौ निष्पीडय प्रतिगृह्यते ॥

ससंमर्दोद्भवोगन्धः **संमर्दज**-इतीर्यते ।

॥ मृगनाभिसमुद्भूतस्तत्कोशोद्भवएव वा ॥ ५ ॥

गन्धः **प्राण्यङ्गजः** प्रोक्तोमोददः स्वर्गवासिनाम् ।

कर्पूरगन्धसाराद्याः क्षौद्रे घृष्टे च संस्थिताः ॥

चन्द्रभागादयश्चापि रसे पङ्के च सङ्गताः ।

गन्धसारस्तु सर्वत्र संसर्गादौ प्रयुज्यते ॥

**मृगनाभिर्भवेद्दृष्टश्चूर्णोऽप्यन्यस्य योगतः ।**

एवं सर्वस्तु सर्वत्र गन्धोभवति पञ्चधा ॥ इति ॥

(२२।५ वि. सं.)

२२।६ ॥ **मलयगन्धः, सर्वोत्तमः** ॥ तत्रैव

॥ सर्वेषु गन्धजातेषु **प्रशस्तोमलयोद्भवः** ।

तस्मात् सर्वप्रयत्नेन **दद्यान्मलयजं सदा** ॥ इति ॥

७–॥ **श्रीविष्णुकामाख्याभैरवदेवताप्रीतिकरोगन्धः** ॥ तत्रैव–यथा–

॥ कृष्णागुरुः सकर्पूरः सहितोमलयोद्भवैः ।

**वैष्णवप्रीतिदो**गन्धः **कामाख्यायाश्च भैरवे** ॥ इति ॥

८ ॥ **त्रिदशचण्डीदेवता०** तत्रैव—यथा—

॥ कुङ्मागरुकस्तूरीचन्द्रभागैः समीकृतैः ।
कु

**त्रिदशप्रीतिदो**गन्धस्तथा **चण्डयाश्च** शम्भुना ॥ इति ॥

**गन्धफलम्** ॥

॥ गन्धेन लभते कामं गन्धोधर्मप्रदः सदा ।

अर्थानां साधकोगन्धोगन्धे मोक्षः प्रतिष्ठितः ॥ इति ॥

( य. आ. सू. १२६ पत्रे– )

९।१ **यक्षकर्दमगन्धः—**

॥ कर्पुरमगरुश्चैव कस्तूरी चन्दनं तथा ।

कङ्कोलं च भवेदेभिः पञ्च**भिर्यक्षकर्द्दमः** ॥ इति

२ ॥ कस्तुरिकायाद्वौ भागौ द्वौ भागौ कुङ्कुमस्य च ।

चन्दनस्य त्रयोभागाः शशिनस्त्वेकएव हि ॥ इति ॥

( २२।९ वि. सं. )

**१० सर्वगन्धः**–

॥ कर्पूरं चन्दनं [1]दर्पं [2]कुङ्कुमं च समांशकम् ।
**सर्वगन्धमिति** प्रोक्तं समस्तसुरवल्लभम् ॥ इति ॥

**११।१ सर्वसाधारणदेवताष्टगन्धः**–

॥ गोरोचनं चन्दनदेवदारूकर्पूरकृष्णागरुनागराणि ॥
कस्तूरिकाकेसरमिश्रितानि यथोचितं देव मयार्पितानि ॥ इति ॥

**१३-२२-श्रीदेव्यष्टगन्धः** ॥ प्राक्तनश्रीमदाद्यार्चनपद्धतौ–यथा—
११-२

॥ कुङ्कुमागरुकस्तूरीकर्पूरमदचन्दनैः ।
गोरोचनासितैर्युक्तैर्लिखयेद्यन्त्रमुत्तमम् ॥ १ ॥

अत्र—॥ मदोहस्तिमदः । असितं रक्तचन्दनम् ॥ इति ।

**३–श्रीदेव्यष्टगन्धः—तदर्पणश्लोकश्च** ॥ श्रीमद्जगद्गुरुश्रीच्छङ्कराचार्य विरचितश्रीश्रीविद्यामहात्रिपुरसुन्दरीचक्रराजमानसपूजास्तोत्रे–यथा–

॥ कर्पुरागरुरोचनामलयजं श्रीखण्डगन्धोत्कटम् ।
सर्वामोदवहं महासुखकरं कस्तूरिकाकुङ्कुमम् ॥
शीतैः शुद्धजलैर्निघृष्य सघनं घर्मौघदुःखापहं ।
मातस्त्वद्हृदयेर्पयामि मनसा गन्धाष्टकं स्वीकुरु ॥ इति ॥

**४–देव्यष्टगन्धः** । दु-क-पु. ३६४ पत्रे–यथा–

॥ चन्दनागुरुकर्पुरं कुङ्कुमं रोचनं तथा
शिलारसोजटामांसी कर्पूरं चैकवृद्धितः[3] ॥ इति ॥

( १३–२२।११–वि. सर्वः सं. )

**१२–देव्याःकाश्मीरकस्तुर्यादिगन्धः,–तदर्पणश्लोकश्च** ॥ बा-तं-चंन्द्रि-कायां–यथा—

॥ मातर्भालतले तवातिविमले काश्मीरकस्तूरिका ।
कर्पूरागुरुभिः करोमि तिलकं देहेंङ्गरागं ततः ॥

---

१. दर्पः कस्तूरी.

२. कुङ्कुमम्–केशरम्.

३. अस्यार्थस्तत्रैव चन्दनं, १ अंशः । ततः परस्य अगुरोः २ अंशौः । ततः परस्य कर्पूरस्य. ३ अंशाः– एवमग्रे एकवृद्धिर्ज्ञेयेति ॥

वक्षोजादिषु यक्षकर्दमरसैः सित्काञ्चपुष्पद्रवैः ।
पादौ कुङ्कुमलेपनादिभिरहं सम्पूजयामि क्रमात् ॥ इति ॥

**१३-गन्धपुष्पार्पणकर्तव्यता** ॥ श्रीमहानिर्वाणतन्त्रे-६ उल्लासे-८३ श्लोक-यथा-

॥ मध्यमानामिकाभ्याञ्च गन्धं दद्याद्धृदम्बुजे ।
नमोऽन्ते न च मन्त्रेण वौषडन्तेन पुष्पकम् ॥ ८३ ॥

अत्र टीका-मध्यमेत्यादि-नमोऽन्तेन ह्रीं-श्रीं-क्रीं. परमेश्वरि स्वाहा-एषगन्धआद्यायै काल्यै नमः-इति मन्त्रेण-देव्याहृदम्बुजे-मध्यमानामिकाभ्यामङ्गुलिभ्यां, गन्धं-दधात् । ॥ वौषडन्तेन-ह्रीं-श्रीं-क्रीं-परमेश्वरि स्वाहा, इदं पुष्पमाद्यायै काल्यै वौषट्-इति मन्त्रेण, देव्यै पुष्पकं-दधात् ॥ ८३ ॥ इति ॥

॥ ॐ तंयज्ञम्० पु. सू. ९ मं० तथा च गन्धद्वाराम्० श्री. सू. ९ मन्त्रम्-तथा च उपरितन-३-१२-विषयलिखितौ कर्पूराऽगरु०-मातार्भालतले-इत्येतौ श्लोकमन्त्रौ-तथा च-

॥ सुराधिपतिकामिनीकरसरोजराज्युध्धृतां
सचन्दनसकुङ्कुमागरुभरेण विद्राविताम् ॥
महापरिमलोज्ज्वलां सघनसारकस्तूरिकां
गृहाण वरदायिनि त्रिपुरसुन्दरि श्रीपदे ॥ इति ॥

एषामन्यतममेकं-सर्वान् वा-श्लोकमन्त्रान्-पठित्वा-गन्धानर्पयेत् ॥

॥ इदं च गन्धार्पणं, मध्यमानामिकाभ्यां कार्यं-गन्धमुद्रापि च-कार्या ।

**१५।१-गन्धानुलेपनफलम्** ॥ यो. तं. ७-पटले १९९ पत्रे-यथा-

॥ गन्धानुलेपनं दत्वा **ज्योतिष्टोमफलं लभेत्** ।
कुङ्कुमेन विलिप्यार्ध्यं **गोसहस्रफलं लभेत्** ॥
चन्द्रनागुरुकर्पूरैः शुक्लपुष्पैः सकुङ्कुमैः ।
विलिप्तां पूजयेद्दुर्गां **वह्निष्टोमफलं लभेत्** ॥ इति ॥

२ ॥ गन्धेन लभते कामं गन्धोधर्मप्रदः सदा ।
अर्थानां साधकोगन्धोगन्धे मोक्षः प्रतिष्ठितः ॥ य. आ. सू. १२६ पत्रे

**१३-२२-मनुष्याणांकृते-सर्ववश्यकरातिलकं**-श्री बालातन्त्रचन्द्रिकायां,



श्रीबालात्रिपुरापटले-४०८ पत्रे-यथा—

॥ तिलकं च प्रवक्ष्यामि कृत्वा येन वशं नयेत् ।
कर्पूरकपिरोमाणि समभागानि कल्पयेत् ॥

---

१. गन्धपुष्पधूपदीपनैवेद्यार्पणे, क्रियमाणा सा, सा, मुद्रा तत्तदुद्वारश्चात्रैव-द्वि. प. शि. १४।३-९ विषये द्रश्यः-

चतुर्भागा जटामांसी तावती रोचना मता ।
कुङ्कुमं सप्तभागं स्यात् त्रिभागं कुङ्कुमं मतम् ॥
अगरुर्नवभागः स्यादिति भागः क्रमेण तु ।
हिमवत्कन्यया पिष्टमेतत् सर्वं सुमन्त्रितम् ॥
मदगर्वान् मदोन्मत्तान् मतङ्गान् जगतोमतान् ।
सिंहान् व्याघ्रान् महासर्पान् भूतवेतालराक्षसान् ॥
दर्शनादेव वशयेत्तिलकं धारयेन्नरः ॥ इति ॥

( २२।१६ तथा च १३।२२ वि. सर्वः सं. )

**वि. १३।२३ ॥ अक्षतविषये ॥**

**१—अक्षतशब्दार्थः** ॥ कुलार्णवे-१७ उल्लासे-१५७ पत्रे—यथा—

॥ आत्मज्ञानप्रदानाच्च क्षपिताशेषकल्मषात् ॥
तदात्मकरणाद्देवि **अक्षताः परिकीर्तिताः** इति ॥

**२—अक्षतार्पणे, वस्तूनि** । योगिनीतन्त्रे-७ पटले—१९९ पत्रे-यथा—

॥ वक्रधान्योद्भवञ्चैव सूक्ष्मधान्योद्भवं तथा ।
राजधान्योद्भवञ्चैव रक्तधान्योद्भवं तथा ॥ इति ॥

**३—अक्षतानामक्षताग्रत्वं-सङ्ख्या—दूर्वायुक्तं—तन्त्रोक्ततिथ्योस्तदर्पण फलं-च** ॥ तत्रैव यथा—

॥ शस्तं तण्डुलमक्षुण्णं सप्ताष्टनवसङ्ख्यया ॥
दूर्वाङ्कुरसमेतञ्च भगवत्यै निवेदयेत् ।
अष्टम्यां वा नवम्यां वा **सोऽश्वमेधफलं** लभेत् ॥ इति ॥

**४—श्रीत्रिपुरार्चने—वर्ज्यग्राह्याक्षताः—काश्मीरकुङ्कुमरक्तचन्दन पङ्काक्ताश्च-अक्षताअर्पणीयाः-इत्यत्र—**

। अक्षतपूजनेऽपि,-विशेषोयोगिनीतन्त्रे ॥ यथा—

॥ श्वेताक्षतैर्न पूज्या स्यात् त्रिपुरा परमेश्वरी ।
॥ काश्मीरैः कुङ्कुमैर्वाऽपि रक्तचन्दनपङ्ककैः ।
रञ्जितान् शालिजान् **शुद्धानखण्डानर्पयेत्** बुधः ॥ इति ॥

प. क. सू. ४ खण्डेय ५ सू. भाष्ये-

**५–रत्नमुक्ताद्यक्षताः** । श्रीबालातन्त्रचन्द्रिकायां १११ पत्रे–
श्रीबालात्रिपुरामानसपूजायां,-पूज्यपादाचार्यवर्यैरुक्तायथा —॥

॥ [1]रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैश्चारुरुचैर्विचित्रैः ॥
अखण्डितैर्देवि यवादिभिर्वा, काश्मीरपङ्काङ्कितितण्डुलैर्वा ॥ २२ ॥
॥ इत्यक्षताः ॥ (१३।२३ वि. सर्वः सं.)

**वि. १३।२४–॥ अङ्कुरसामान्ये ॥**

**१–बिल्वपत्रं, श्रीसूर्येतरसर्वदेवताप्रियम्** ॥ तत्र—

॥ पुष्पसहचरितत्वात् तत्पूर्वत्वाच्च-बिल्वपत्रविषये-किञ्चिदुच्यते ॥
॥ एतद्बिल्वार्पणविषयः, केवलाय शिवायेति हेतोरत्रानुपयुक्तइति
न-अनादरणीयोऽपितु–श्रीसूर्यमन्तराशेषसुरार्पणविषयोऽप्यस्य
बिल्वार्पणस्येति ज्ञेयम् ॥ इति ॥ द्वितीयावृत्तिकारः ॥

**२–श्रीगणपतिहरिशक्तीनां-बिल्वपत्रार्पणप्रमाणं-फलं-च** । य. आ. सू.-१२७ पत्रे-३०९ विषये-पटले-यथा–

॥ त्रिजटापत्रकैकेन हेरम्बं हरिमर्चयेत् ॥
कैवल्यं तस्य तेनैव शक्तिपूजा विशेषतः ॥ इति ॥

**३–क्वचित्–श्रीसूर्यलम्बोदरयोर्द्वयोरपि-बिल्वपत्रार्पणनिषेधः** । तत्रैव १२८ पत्रे–यथा–

॥ षण्मासानन्तरं बिल्वपत्रं पर्युषितं भवेत् ।
पूज्या एतेन वै देवाः **सूर्यलम्बोदरौ** विना ॥ इति ॥

**४–बिल्वपत्रार्पणे,–पौराणमन्त्रः** । तत्रैव–यथा–

॥ त्रिदलं त्रिगुणाकारं त्रिनेत्रं [2]त्र्यम्बकप्रियम् ।
त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम् ॥ इति ॥

**५–बिल्वपत्रमधोमुखमर्प्यं–तदन्यत् पुष्पफलादि, चोर्ध्वमुखमर्पणीयम्**–तत्र–प्रमाणं–तत्रैव–यथा ( य. आ. सू. १२७ पत्रे )

॥ पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् ।
यथोत्पन्नं तथा देयं **बिल्वपत्रमधोमुखम्** ॥ इति ॥

**६–सटीकशारदायामपि** ४ पटले २९४ पत्रे–यथा–

॥ पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखम् ।
दुःखदं तत् समाख्यातं **यथोत्पन्नं तथाऽर्पणम्** ॥

---

१. अर्थादेतच्छ्लोक त्कवस्तून्यक्षतरूपेणाप्युपात्तानीत्यर्थः ॥
२. क्वचित् क्वचित् त्रियायुधमित्यपिपाठः परं च-तत्र-चकारोध्याहार्यः स्यात्–इति–

चित्रपूजासु सर्व्वासु न विद्धस्यापि दूषणम् ।
अधोमुखार्पणं नेष्टं **पुष्पाञ्जलिविधौ न तत्** ॥ इति ॥

७।१--॥ **बिल्वार्पणविशेषफलम्** ॥ धर्मसिन्धौ ३ परिच्छेदे—यथा—

॥ मणिमुक्ताप्रवालैस्तु रत्नैरप्यर्चनं कृतम् ।
न गृह्णामि विना देवि बिल्वपत्रैर्वरानने ॥
सर्वकामप्रदं बिल्वं दारिद्र्यस्य विनाशनम् ॥ इति ॥

**७-२ ॥ बिल्वपत्रैः पूजने, राजसूयफलम्**-इत्यप्यत्रैव ॥

बिल्वपत्रार्पणविशेषफलम् ॥ तत्रैव यथा—य. आ. सू. १२७ पत्रे यथा—

पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकौ
दत्वा यद्यत् फलं प्राप्यं तस्मात् कोटिगुणं भवेत् ॥ इति ॥

**७।३—श्रीशिवेन भगवतोक्तं, बिल्वपत्रस्यात्यावश्यज्ञेयमहात्म्यं-तदुत्पत्तिस्तत्साधनं-च**—॥ श्रीयोगिनीतन्त्रे ५ पटले-२६ पत्रतः २८ पत्रान्तं-यावत्-यथा —

## बिल्वमाहात्म्यम्

॥ अतः परमहं वक्ष्ये बिल्वमूलस्य साधनम् ।
बिल्वमूलं महेशानि समन्तात् षोडशं करम् ॥
मम जटास्वरूपं हि पर्णं जानीहि सुन्दरि ।
**ऋग्यजुःसामसदृशं पत्रत्रयं वरानने** ॥
शाखा हि सर्वशास्त्राणि जानीहि मीनलोचने ।
कल्पवृक्षसमोबिल्वोब्रह्मविष्णुशिवादयः ॥
**महालक्ष्मीर्बिल्ववृक्षोजातः** श्रीशैलपर्वते ।

॥ श्रीदेव्युवाच—**कथं सा विष्णुवनिता बिल्ववृक्षोबभूव ह** ।
वृत्तान्तं परमाश्चर्य्यं वद मे करुणामय ॥

**श्री ईश्वर उवाच**

॥ शृणुदेवि प्रवक्ष्यामि वृत्तान्तं परमाद्भुतम् ।
सत्ये तु पूजयामास लिङ्गं रामेश्वराभिधम् ॥
ज्योतीरूपं मदीयांशं प्राप्य ब्रह्मादिभिः सह ।
तत्र मेऽनुग्रहात् वाणी सर्वेषां प्रियतां गता ॥

विष्णोरतिप्रिया नित्यं **साभूत् सरस्वती** सदा ।
तादृक् प्रीतिर्न लक्ष्म्यां च जायते केशवस्य च ॥
॥ इति चिन्तापरा लक्ष्मीर्ययौ श्रीशैलमुत्तमम् ।
प्राप्तं मल्लिङ्गमेकान्ते तपस्तेपेऽतिदारुणम् ॥
तथापि यदि नैवाभूत् कृपा मे परमेश्वरि ।
तदा सा वृक्षरूपेण स्थिता लिङ्गाग्रतः सती ॥
पत्रैः पुष्पैः फलैः स्वीयैः पूजयामास सन्ततम् ।
कोटिवर्षे महेशानि ततोमेऽनुग्रहोऽभवत् ॥
**॥ तेनैवानुग्रहेणैव विष्णोर्वक्षःस्थिताभवेत्** ।
सदैव परमेशानि विहरेत् सा सदैव हि ॥
अतस्तु कारणाद्देवि तद्रूपेण हरिप्रिया ।
सदैवापूजयत् मां सा मद्भक्ता सातुला शिवे ॥
॥ अतस्तु वृक्षमास्थाय तिष्ठामि च दिवानिशम् ।
सर्वतीर्थमयोदेवि सर्वदेवमयः सदा ॥
श्रीवृक्षः परमेशानि अतएव न संशयः ।
तत्फलैस्तत्प्रसूनैर्वा तत्पत्रैर्यः प्रपूजयेत् ॥
तत्काष्ठचन्दनैर्वापि समे भक्तः समे प्रियः ॥
तत्काष्ठचन्दनं भाले योधारयति सम्भ्रमात् ।
॥ तत्तनूं शिवबुद्ध्या वा नमेद्देवि मुदान्वितः ।

**बिल्वकाष्ठचन्दनपत्रधारणनिषेधः**

॥ अतस्तच्चन्दनं देवि धारयेन्न कदाचन ॥
तत्पत्रं तत्प्रसूनं वा कदापि धारयेन्न हिं ।
॥ बिल्वमूले महेशानि प्राणांस्त्यजति योनरः ॥
रुद्रदेहोभवेत् सत्यं पापकोटियुतोहि सः ।

**बिल्वमूले प्रयोगः**

॥ अतस्तत्साधनं देवि सर्वेषां प्रियकारकम् ॥
॥ यत्र गत्वा बिल्वमूलं प्राग्वद्गुरुचतुष्टयम् ।
अभ्यर्च्य यत्नतोदेवि क्षेत्रपालं प्रपूज्य च ॥
क्षेत्रपाल महाभाग श्मशानाधिप सुव्रत ॥

सिद्धिं देहि जगत्कर्त्ता देहि स्थानं नमोऽस्तुते ॥
अनेन प्रणवाद्येन मनुना प्रणमेत्ततः ।
ततः स्थानन्तु सम्पूज्य लिखेत्तत्र वरानने ॥
वाग्भवं प्रेतबीजञ्च पुनर्वाग्भवमेव च ।
तदन्ते मूलमन्त्रञ्च विलिखेत् साधकोत्तमः ॥
पूजयित्वा च काल्याद्याः पूर्ववत् परमेश्वरि ।
सङ्कल्प्याष्टोत्तरयुतं जप्त्वाच्छिद्रावधारयेत् ॥
परित्यज्य ततः स्थानं गुरुं स्मरन् गृहं व्रजेत् ।
इत्येवं कथितं तुभ्यं सारात् सारं परात् परम् ॥
गोपनीयं सदा भद्रे विशेषात् पशुसङ्कुले ॥ इति ॥

( १३-२४।७ वि. सर्वः सं. )

॥ इतोप्यन्यत्-श्रीदेवीभागवतेऽपि, बिल्वमहात्म्यमस्तीति—सुधियोजानन्तु ॥

**१३-२४—सबिल्वदूर्वाङ्कुरार्पणफलम्** । योगिनीतन्त्रे ७ पटले-१९९
८-१

पत्रे-यथा—

॥ दूर्वाङ्कुरसमेतञ्च भगवत्यै निवेदयेत् ।
अष्टम्यां वा नवम्यां वा **सोऽश्वमेधफलं** लभेत् ॥ इति ॥

२—दूर्वार्पणश्लोकौ-तदर्पणफलं च। य. आ. सू. १४५ पत्रे-यथा—

॥ विष्णवादिसर्वदेवानां दूर्वे त्वं प्रीतिदायिनि ।
क्षीरसागरसम्भूते वंशवृद्धिकरी भव ॥ इति ॥

३—तत्रैव—दूर्वेह्यमृतसपन्ने शतमूले शताङ्कुरे ।
शतपातकसंहर्त्रि शतायुष्यविवर्धिनी ॥ इति ॥

( १३-२४।८ तथा च १३।२४ वि. सर्वः सं. )

१३।२५ ॥ **पुष्पविषये** ॥

१—**पुष्पशब्दार्थः**। कुलार्णवे-१७ उल्लासे-१५७ पत्रे-यथा—

॥ पुण्यसंवर्धनाच्चापि पापौघपरिहारतः ।

पुष्कलार्थप्रदानाच्च **पुष्पमित्यभिधीयते** ॥ इति ॥

इष्टदेवतायै पुष्पार्पणव्यवहारं-सुधियोजानन्त्येव-तथापि-श्रीशिवोक्तविशेषविधिदर्शनाय किंचिद्वक्तुमुपक्रमे ॥

२५।२-**वर्ज्यपुष्पाणि ।** धर्मसिन्धौ-३ परिच्छेदे-यथा—

१ ॥ वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् ॥ इति ॥

**२-पुनरपि सर्वदेवपरत्वेन श्राद्धे च वर्ज्यपुष्पाणि-तत्रैव-**यथा—

॥ बन्धूककुन्दातिमुक्तकेतकीकपित्थबकुलशिरीषनिम्बानि ॥ इति ॥

३ **वर्ज्यपुष्पाणि**, । भविष्ये-यथा--

॥ कृमिकीटावपन्नानि शीर्णपर्युषितानि च ।

स्वयं पतितपुष्पाणि त्यजेदुपहतानि च ॥

मुकुलैर्नार्चयेद्देवमपक्कं न निवेदयेत् ।

शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ॥

तद्धारी चैव नान्यान् वै निर्माल्यं तद्धवेत्तयोः ।

तथा देवोपरि धृतं वामहस्ते धृतं च यत् ॥

अधोवस्त्रधृतं चैव जलेन क्षालितं च यत् ।

**देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यतां गतम्** ॥ इति ।

(य. आ. सू. १२८ पत्रे)

४ **अधः पुष्पार्पणादिनिषेधः ।** तत्रैव वार्तिके यथा-

॥ नाङ्गुष्ठैर्मर्दयेद्देवं नाधः पुष्पैः समर्चयेत् ।

कुशाग्रैर्नक्षिपेत्तोयं वज्रपातसमं भवेत्

न शुष्कैः पूजयेद्देवं कुसुमैर्न महीगतैः ।

न विशीर्णदलैः शिष्टैर्नाऽशुभैर्नाविकाशितैः ॥

पूतिगन्धोग्रगन्धीनि स्वल्पगन्धानि वर्जयेत् ॥ इति ॥

५ **वर्ज्यपुष्पाणि-**तत्रैव-हारीतः-यथा-

॥ स्नानं कृत्वा तु यत्किञ्चित् पुष्पं गृह्णन्ति वै द्विजाः ।

पितरस्तन्न गृह्णन्ति न गृह्णन्ति च देवताः ॥

उक्तं च-॥ वस्त्रानीतं करानीतं स्वयं पतितमेव च ।

एरण्डपत्रैरानीतं न तस्य फलभाग्भवेत् ॥ इति ॥

**६ वर्ज्यपुष्पाणि** ॥ यो-तं-७ पटले—२०० पत्रे—

॥ नार्चयेत् भिण्टिपुष्पेण पीतञ्च तगरं तथा ।
श्वेतोड्रेण च कृष्णेन विजयेन न चार्चयेत् ॥ इति ॥

७ ॥ निर्णयसिन्धौ—३ परिच्छेदे—यथा—

॥ बकुलैर्नार्चयेद्देवं पङ्कजैर्जलजैर्विना ॥ इति ॥

८—॥ सटीकशारदा—४ पटले—२९४ पत्रे—१०४ श्लोके, यथा—

॥ मलिनं भूमिसंस्पृष्टं कृमिकेशादिदूषितम् ।
अङ्गस्पृष्टं समाघ्रातं त्यजेत् पर्य्युषितं गुरुः ॥ इति ॥

( २५।२ वि. सर्वः सं. )

२५।३—॥ **देवतापरत्वेन—वर्ज्यपुष्पादिकम्** ॥ पुराणे, यथा—

१ ॥ कुन्दं मुकुन्दे तुलसीं गणेशे धत्तुरबिल्वं तगरं तथार्के ।
[1]दूर्वार्कभृङ्गीर्जगदम्बिकायास्त्यजेत् शिवे केतकिशङ्खवारि ॥ इति ॥

२—पञ्चभाष्ययुक्तपारस्करगृह्यसूत्रभाष्ये-४५५ पत्रे-वृद्धयाज्ञवल्क्योयथाह—

॥ [1]कुन्दं शम्भोस्तु नो दद्यान्नोन्मत्तं गरुडध्वजे ।
पिण्डे जातिं च नो दद्याद्देवींमर्कैर्न पूजयेत् ॥ इति ॥

३—**श्रीशिवविष्णोर्वर्ज्यपुष्पादि** ॥ सटीकशारदा-४ पटले—२९४ पत्रे—यथा—

॥ शिवे कुन्दं न(म)दन्तीञ्च यूथीं बन्धूककेतकें ।
जवां रक्तां त्रिसन्ध्ये द्वे सिन्दूरं कूटजानि च ॥
मालतीं घुसृणं रक्तं हयारिं बर्बरां त्यजेत् ॥
उग्रगन्धमगन्धञ्च कुमिकेशादिदूषितम् ।
**अशुद्धपात्रपाण्यङ्गवासोभिः कुत्सितात्मभिः** ॥
आनीतं नार्पयेच्छम्भोः प्रमादादपि दोषकृत् ।
कलिकाभिस्तथा नेज्यं विना चम्पकपङ्कजैः ॥
शुष्कैर्न पूजयेद्विष्णुं पत्रैः पुष्पैः फलैरपि ।
स्नात्वानीतैः पय्युषितैर्याचितैः कृष्णवर्णकैः ॥

---

१. अत्र श्लोके, श्रीदेव्याः दूर्वानिषेधितापि-आवरणपूजादिमहापूजायां तु-दूर्वया सरसिजान्वितया-इत्यादि मानसोपचारश्लोकप्रामाण्योपलब्ध्यां-श्रीदेव्यामहापूजायां दूर्वोपादेयैवेति-ज्ञेयम् ॥ इति, द्वितीयावृत्तिकारः ॥

सायं विकाशितैः पुष्पैः स्वयञ्च पतितैर्भुवि ।
वर्जयेद्बृहतीद्वन्द्वं काञ्चनारं कुरुण्टकम् ॥ इति ॥

४–अक्षतैर्नार्चयेद्विष्णुं न तुलस्या विनायकम् ।
न दूर्वया यजेद्दुर्गां नोन्मत्तेन दिवाकरम् ॥ इति भट्टिः

य. आ. सू. १२९ पत्रे

५–ज्ञानमालायाम्—

॥ नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपम् ।
न दूर्वया यजेद्देवीं बिल्वपत्रैश्च भास्करम् ॥
उन्मत्तमर्कपुष्पं च विष्णोर्वर्ज्यं सदा बुधैः ।
फलं च कृमिसंयुक्तं प्रयत्नात्तद्विवर्जयेत् ॥ इति ॥

य. आ. सू. १२९ पत्रे

( २५।३ वि. सर्वः सं. )

**२५।४–॥ नित्यपूजार्थं-परोपवनादेः पुष्पाहरणे-स्तेयाभावः ॥**

॥ नित्यपूजार्थं परोपवनादेरपि-पुष्पादिग्रहणे-स्तेयदोषाभावः—
इत्यपि ॥ य. आ. सू. १२८ पत्रे-टीप्पण्याम्

**५–॥ समित्पुष्पकुशादीनां-शूद्रद्वारा-विक्रयेण-चानयने-अधःपतनम् ॥**

॥ समित्पुष्पकुशादीनि ब्राह्मणस्स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ॥ इति ॥ ॥ स्मृत्यन्तरे ॥

**६–॥ समित्पुष्पकुशादिहस्तोऽन्यं न नमेत् तं च अन्योन नमेत् ॥**

॥ समित्पुष्पकुशादीनि वहन्तं नाभिवादयेत् ।
तद्धारी चैव नान्यान् हि निर्माल्यं तद्भवेत्तयोः ॥ इति ॥

॥ इति शङ्खस्मृतौ ॥

**७–॥ पत्रपुष्पाणां पर्युषितत्त्वे-दिनावधिः** ॥ स्मृत्यन्तरे-यथा—

**१–॥ पङ्कजं पञ्चरात्रं स्याद्दशरात्रं च बिल्वकम् ।
एकादशाहं तुलसी नैव पर्युषिता भवेत्** ॥ इति ॥

य. आ. सू. १२८ पत्रे

**२–जातीकरवीरपुष्पयोः पर्युषितत्त्वेऽवधिः** । निर्णयसिन्धु ३ परिच्छेदे
अथ पुष्पादेः पर्युषितत्त्वम्—भार्गवार्चने भविष्ये-यथा—
॥ प्रहरं तिष्ठते जाती करवीरमहर्निशम् ॥ इति ॥

३—तत्रैव-पाद्मे—**तुलसीबिल्वपत्रयोः**— ॥

॥ तुलसी पर्युषिता नैव बिल्वं तु त्रिदिनावधि ।

पद्मं पञ्चदिनात् त्याज्यं शेषं पयुषितं विदुः ॥ इति ॥

४—पदार्थादर्शे—**बोपदेवस्त्वन्यथाह**—तत्रैव

॥ [1]बिल्वापामार्गजातीतुलसिशमिशताकेतकीभृङ्गदूर्वा ।

मन्दाम्भोजाहिदर्भा मुनितिलतगराब्रह्मकल्हारमल्ल्यः ॥

चम्पाश्वारातिकुम्भीदमन[2]मरुबकाबिल्वतोहानि शस्ता ।

त्रिंशत्-३० त्वेका १ यं. ६ रीशो ११ दधि-४ निधि-९ वसु-८ भू-१-भूं-१ यमा-२ भूयएवम् ॥ इति ॥

**अस्यार्थः** शारदाटीकायाम्—शता शतावरी, मन्दः मन्दारः, अहिर्नागकेशरं, मुनिरगस्त्यः, अश्वारातिः करवीरः, कुम्भी पाटलेति, ( निघण्टुः, ) अरवः षट्-ईशाः एकादश, उदधयश्चत्वारः, निधयोनव, वसवोष्टौ, भूरेकः, यमौ द्वौ, बिल्वमारभ्याहिपर्यन्तं गणयित्वा, दर्भमारभ्यपुनस्त्रिंशदादि गणयेदित्यर्थः एतद्दिनोत्तरं पर्युषितानीत्यर्थः ॥ इति ॥

५—**पालाशपङ्कजबिल्वपत्रतुलसीनां पर्युषितदिनानि**॥ स्कान्दे—

॥ पालाशं दिनमेकं तु पङ्कजं च दिनत्रयम्

पञ्चाहं बिल्वपत्रं च दशाहं तुलसीदलम् । (अर्थादतऊर्द्ध्वं) निर्माल्यं-भवतीति ज्ञेयमिति ॥

६—**करवीरादीनां०** ॥ योगिनीतन्त्रे-७ पटले-१९७ पत्रे-यथा—

॥ करवीरमहोरात्रं बिल्वपत्रं तथैव च ।

जवाबन्धूकमाल्यञ्च निर्माल्यं सार्द्धमासके ॥

माल्यं वै करवीरस्य पद्मस्य बिल्वकस्य च ।

मासार्द्धेन महेशानि ताम्बूलं दत्तमात्रतः ॥ इति ॥

( २५।७ वि. सं. )

२५।८—**अत्रान्य—पत्रपुष्पादिषु—पर्युषितत्त्वाभावः** ॥ यो-तन्त्रे-७ पटले-१९९ पत्र-यथा——

१ ॥ निम्बपत्रञ्च माध्यञ्च तमालामलकीदलम् ।

कल्हारं तुलसी चैव पद्मञ्च श्रेष्ठपुष्पकम् ॥

एतत् पर्युषितं न स्याद् यच्चान्यत् कलिकात्मकम् ।

---

१ अयं श्लोकः, सटीकशारदा, ४ पटले-२९५ पत्रे-टीकायामस्ति-तत्रैतच्छ्लोकस्थ पदत्रयवस्त्वार्थो यथा—भङ्ग, भृङ्गराजः, । आहि द्रोणकलशः, । ब्रह्म पलाशः, इतरदुपरिवत् ॥

२ मरुबकदमनाविश्वतोऽह्नानि, शस्ताः—इति पाठः—शारदा०

न दुष्येत् छिन्नभिन्नञ्च जातीपुष्पञ्च शङ्करि ॥
पद्मदूर्वाङ्कुरञ्चैव तुलसी दलमेव च ।
नाशु पर्युषितं न स्यात् कुसुमस्य च शङ्करि ॥ इति ॥

२–निर्णयसिन्धु ३ परिच्छेदे-यथा—

**॥ तलस्यां बिल्वपत्रेषु सर्वेषु जलजेषु च ।**
**न पर्युषितत्त्वदोषोऽस्ति मालाकारगृहेऽपि च ॥** इति ॥

३ –बृहन्नारदीये–तत्रैव-यथा—

॥ न वर्ज्यं तुलसी पत्रं न वर्ज्यं जान्हवीजलम् ॥ इति ॥

४–तत्रैव—॥ **तिथितत्त्वे–मात्स्ये**–यथा—

॥ बिल्वपत्रं च माध्यं च तमालामलकीदले ।
कल्हारं तुलसी चैव पद्मं च मुनिपुष्पकम् ॥
एतत् पर्युषितं न स्यात् कुशाश्च कलिकास्तथा ॥ इति ॥

**५–स्मृतिसारावल्याम्** । यथा—

॥ जलजानां च सर्वेषां पत्राणामहतस्य च ।
**कुशपुष्पस्य रजतसुवर्णकृतयोरपि ॥**
**न पर्युषितदोषोऽस्ति तीर्थतोयस्य चैव हि** ॥ इति ॥

**॥ श्रीदेवीप्रीतिकराणि ॥**

६–योगिनीतन्त्रे, ७ पटले–१९७ पत्रे–यथा—

॥ खर्जूरं पनसं द्राक्षा मातुलुङ्गञ्च शावकम् ।
कदली नागरङ्गञ्च तथा जम्बूफलानि च ॥
शालूकं मधुकञ्चैव प्रयत्नेन निवेदयेत् ।
फलं बिल्वञ्च दाडिम्बं जयन्ती कर्कटी तथा ॥
त्रपुसञ्चैव वार्त्ताकी देवीप्रीतिकराणि च ।
॥ न निर्माल्यञ्च दाडिम्बं तथा बिल्वफलं प्रिये ॥
सौगन्धिकञ्च कदलं प्रयत्नेन नियोजयेत् ॥ इति ॥

( २५-८ वि. सं० )

**२५।९–सर्वसाधारणत्वेन–ग्राह्यपुष्पविषये ।** धर्मसिन्धौ, ३ **परिच्छेदे-यथा;—**

य. आ. सू. १२८-पत्रे-अपि—

१ ॥ अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ।
आत्मारामोद्भवैर्मुख्यैर्भक्त्या सम्पूजयेत् सुरान् ॥ इति ॥

२ ॥ तत्रैव—जातिमल्लिकाकरवीराशोकोत्पलचम्पकबकुल ।
बिल्व, शमी, कुशाएतानि सर्वदेवानां विहितानि ॥ इति ॥

३ ॥ स्मृत्यन्तरेपि—यथा—
॥ जाती शमी कुशाः कुङ्कु मल्लिका करवीरजम् ।
नागपुन्नागकाऽशोकरक्तनीलोत्पलानि च ॥
चम्पकं बकुलं चैव पद्मं बिल्वं पवित्रकम् ।
एतानि सर्वदेवानां सङ्ग्राह्याणि समानि च ॥ इति ॥

य. आ. सू. १२८ पत्रे—

४—तथा च—श्री-यो-तं. ७ उल्लासे—१९८ पत्रे—श्रीशिवां प्रति, संक्षिप्ततया श्रीशिवेन—**पुष्पाध्याय**उक्तोयथा—

॥ शृणु देवि प्रवक्ष्यामि पुष्पाध्यायं समासतः ।
ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिपुष्पकैः ॥
सितरक्तैस्तथा पुष्पैर्नीलपद्मस्य पाण्डरैः ।
किंशुकैस्तगरैश्चैव बकुलैश्चैव मन्दरैः ॥
धुस्तूरकादियुक्तैश्च बन्धूकागस्त्यसम्भवैः ।
मदनैः सिन्धुवारैश्च दुर्वाङ्कुरसुकोमलैः ॥
करवीरस्य माध्यस्य सहस्राणि ददाति यः ॥ इति ॥

**॥ उपर्युक्तपुष्पार्पणफलम् ॥**

॥ सकामान् प्राप्य चाभीष्टान् देवीलोके महीयते ॥
एकेन करवीरेण पद्मानां द्वे सहस्रके ।
नोत्सृज्य दद्यात् पुष्पाणि वनस्थानि कदाचन ॥
न शक्नुवन्ति वै देवाः समाकर्षितुमुद्यताः ।
एकैकं कुसुमं यक्षारक्षन्ति दश वै यतः ॥
तथा यक्षाङ्गनाः पञ्च सर्वतः सुसमावृताः ।
तस्मादाहृत्य कुसुमं दद्याद्देवान् पितॄनपि ॥ इति

**॥ पुष्पगृहकरणप्रमाणं—तत्फलं—च ॥**

कुर्य्यात् पुष्पगृहं तत्र कामाख्योपरि शङ्करि ।
इह कामानवाप्नोति दुर्गालोके महीयते ॥

॥ करवीरपुष्पार्पणफलम् ॥

करवीरेण जात्या च पूजयेद्यस्तु शङ्करि ।

अग्निष्टोमफलं लब्ध्वा सूर्य्यलोके महीयते ॥ इति ॥

५-॥ परापरोत्तमादिभेदेन-पुष्पं पञ्चविधम् ॥ स-शारदा० ४-पटले २९४ पत्रे-टीकायाम् यथा—

मन्त्रतन्त्रप्रकाशेपि—

॥ पुष्पं पञ्चविधं प्रोक्तं मुनिभिर्नारदादिभिः ।

परापरोत्तमञ्चैव मध्यमञ्च तथाऽधमम् ॥

सौवर्णं-तु-परं प्रोक्तमपरं चित्रवस्त्रजम् ।

वृक्षगुल्मलतापुष्पमुत्तमं परिकीर्त्तितम् ॥

अधमं पत्रतोयादि मध्यमन्तु फलात्मकम् ।

उत्सृष्टं न क्रियायोग्यं सदा योग्ये परापरे ॥ इति ॥

( २५।९ वि. सं. )

२५।१०-॥ देवतापरत्वेन प्रियपुष्पादिकम् ॥

१-श्रीशिवस्य-प्रियपुष्पाणि ॥ धर्मसिन्धु ३ परिच्छेदे-यथा—

॥ चतुर्णां पुष्पजातीनां गन्धमाघ्राति शङ्करः ।

अर्कस्य करवीरस्य बिल्वस्य बकुलस्य च ॥ इति ॥

॥ दशसुवर्णदानफलं, श्वेतार्कपुष्पम् ।

॥ तत् सहस्रगुणं बकुलपुष्पम् ॥

॥ एवं धत्तूर, शमी, पुष्प, द्रोणपुष्प, नीलोत्पलानामुत्तरोत्तराणां, सहस्रगुणत्वम् ॥

२-श्रीदुर्गाशिवसूर्यदेवताप्रियपुष्पाणि ॥ धर्मसिन्धौ-३ परिच्छेदे यथा—

॥ पाटलाशमीपत्रं च ॥ श्रीदुर्गायाः । प्रियम्

॥ कुन्दपलाशबकुलदूर्वाः ॥ श्रीशिवस्य ॥ ० ॥

॥ कुमुदतगरे ॥ सूर्यस्य ॥ ० ॥

॥ तुलसी, भङ्गराज, तमालपत्राणि, ॥ श्रीशिवदुर्गयोः ॥ इति ॥ ० ॥

३-श्रीशिवविष्णुगणेशाम्बिकासूर्यप्रियपुष्पादिकम् ॥ स्मृत्यन्तरे-यथा—

॥ शङ्करस्य बिल्वपत्रम् ॥ विष्णोस्तुलसी ।

॥ गणेशस्य दूर्वाङ्कुरः ॥ अम्बायाः नानाविधपुष्पाणि ।

॥ सूर्यस्य रक्तं करवीरपुष्पम् ॥ (अतिप्रियमित्यर्थः)

( १३–२५।१०-३ वि. सं. )

**४।१–पुनश्च श्रीजगदम्बिकायाः प्रियपुष्पाणि ॥**

श्रीश्रीमज्जगद्गुरुश्रीमच्छङ्कराचार्यविरचितश्रीश्रीविद्यामहात्रिपुरसुन्दरीचक्रराजमानसपूजा-स्तोत्रे–यथा—

॥ जाती, जम्पक, केतकी, कुरु, बकाशोकार्कमन्दारकं ।

कल्हारोत्पलपद्मकुन्दतगरं बन्धूकपुन्नागकम् ॥

कोरण्टं करवीरमर्कसदृशं तत् पारिजातादिकं ।

पुष्पं पार्वति तेर्पयामि शिरसि श्रीसुन्दरि स्वीकुरु ॥ इति ॥

४।२–तथैव, धर्मसिन्धौ–३ परिच्छेदे–यथा—

॥ देव्याअपि बकुलकुन्दादिसहितान्येतान्येव प्रियाणि ।

धान्यानां सर्वपत्रैश्च पुष्पैर्देवीं प्रपूजयेत् ॥ इति ॥ (१३–२५।१०-४ वि. सं.)

**११–सर्वेषु पुष्पेषु उत्तमपुष्पविषये ॥** यो. तं. ७ पटले १९९ पत्रे–यथा–

१–सर्वेषामेव पुष्पाणां प्रवरं नीलमुत्पलम् ॥ इति ॥

**२–स्वर्णनिर्मितपुष्पार्पणप्रमाणम्**—भविष्ये, यथा—

॥ यत् पुण्यं प्रतिपुष्पे तद्दशधा स्वर्णनिर्मिते ॥ इति ॥

य. आ. सु. १२८ पत्रे–

**३–पञ्च पुष्पाणि**–देवीपुराणे यथा—

॥ चम्पकाम्रशमीपद्मकरवीरं च पञ्चकम् ॥ इति ॥ य. आ. सू. १२८ पत्रे

१ २ ३ ४ ५

( १३–२५।११ वि. सं. )

**१३–२५–पत्रपुष्पार्पणे–विवेकः** ॥ धर्मसिन्धौ–३ परिच्छेदे–यथा—

१२

**१**–॥ पुष्पं पत्रं फलं चैव यथोत्पन्नं तथार्पयेत् ॥ इति ॥

**२–कालिकापुराणे–यथा—**

पत्रं वा यदि वा पुष्पं फलं वापि तथैव च ।

केशवार्थे शिवार्थे वा यथोत्पन्नं तथार्पयेत् ॥

मध्यमानामिकामध्ये पुष्पं सङ्गृह्य पूजयेत् ।

अङ्गुष्ठतर्जनीभ्यां तु निर्माल्यमपनोदयेत् ॥ इति ॥ य. आ. सू. १२७ पत्रे

३ ॥ **विल्वादिसर्वपत्रपुष्पफलार्पणविवेकः** ॥ पटले

॥ पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् ।
यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम् ॥
षण्मासानन्तरं बिल्वपत्रं पर्युषितं भवेत् ।
पूज्याएतेन वै देवाः—**सूर्यलम्बोदरौ** विना ॥ इति ॥

य, आ. सू. १२८ पत्रे

**४ चित्रपूजासु विद्धपुष्पस्याप्यदोषः पुष्पाञ्जलिविधौ च अधोमुखपुष्पार्पणस्याप्यदोषः** ॥ स०-शारदा०—४ पटले-२९४ पत्रे-टीकायां—यथा—

॥ चित्रपूजासु सर्व्वासु न विद्धस्यापि दूषणम् ।
अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधौ न तत् ॥ इति ॥

( १३—२५।१२ वि. सं. )

**१३—२५—लक्षपुष्पार्पणप्रमाणम्** । स्मृतिसमुच्चये २९७ पत्रे—शातातपस्मृतौ
**१३**
२१ **श्लोके—यथा—**

॥ लक्षसङ्ख्यार्हणं ( लक्षसङ्ख्योतमम्—इत्यपि पाठः ) पूष्पं प्रदद्यात् देवतार्चने ॥ इति ॥ ( १३—२५।१३ वि. सं. )

**१३—२५ पद्मसुवर्णरजतमौक्तिकरत्ननीलोत्पलमालार्पणफलम्** ॥ १३
**१४**

१ पद्ममालार्पणश्लोकमन्त्रः ॥ बालातन्त्रचन्द्रिका-२७१ पत्रे—यथा—

॥ ॐ—आरक्तश्वेतपीतस्फुरदुरुकुसुमैश्चित्रितां पट्टसूत्रे ।
देवस्त्रीभिः प्रयत्नादगरुसमुदितैर्धूपितां दिव्यधूपैः ॥
उद्यद्गन्धान्धपुष्पन्धयनिवहसमारब्धझङ्कारगीतां ।
चञ्चत्कल्हारमालां परशिवरसिके कण्ठपीठेऽर्पयामि ॥ इति ॥

( कण्ठदेशे—इत्यपि पाठान्तरम् )

२ **पद्ममालार्पणफलम्** ॥ यो. तं. ७ पटले—१९९ पत्रे—यथा—

॥ पूजयित्वा नरोभक्त्या चण्डिकां पद्ममालया ।
ज्योतिष्टोमफलं प्राप्य सूर्यलोके महीयते ॥ इति ॥

३ **सौवर्णरजतमृणालतान्तवशतमौक्तिकनानारत्नमालार्पणप्रमाणम्** ॥ स्मृतिसमुच्चये—वृद्धहारीतस्मृतौ—२९३ पत्रे—यथा—

सौवर्णीं राजतीं मालां शतग्रन्थियुतां न्यसेत ।

मृणालतान्तवं पश्चात् पुष्पमालां ततःपरम् ॥
शतमौक्तिहाराणि नानारत्नमयान्यपि ॥ इति ॥
( अत्र फलं देवतानुकम्पाद्येव ॥ )

४ **नीलोत्पलसहस्रमालार्पणफलम्** ॥ यो. तं. ७ पटले—१९९ पत्रे-यथा—

॥ नीलोत्पलसहस्रेण यस्तुमालां प्रयच्छति ।
दुर्गायां विधिवद्देवि तस्य पुण्यफलं शृणु ॥
वर्षकोटिसहस्राणि वर्षकोटिशतानि च ।
देव्याअनुचरोभूत्वा रुद्रलोके महीयते ॥ इति ॥

५ **हारत्रयीसमर्पणश्लोकमन्त्रः** ॥ बालातन्त्रचन्द्रिकायां २७१ पत्रे—यथा—

॥ ॐ—पुष्पौघैर्द्योतयद्भिः सततपरिचलत्कान्तिकल्लोलजालैः ।
कुर्वाणां मज्जदन्तःकरणविमलतां शोभितां च त्रिवेणीम् ॥
मुक्ताभिः पद्मरागैर्मरकतमणिभिर्निर्मितां दीप्यमानै ।
र्नित्यं हारत्रयीं त्वं भगवति कमले गृह्यतां कण्ठमध्ये ॥ इति ॥
( १३—२५।१४ वि. सं. )

**१३—२५—॥ तत्तत्पुष्पार्पणे—पृथक्पृथक्फलनिदर्शनम्** ॥
१५

१—**जातिबकरुद्रजटपुष्पार्पणफलम्** । यो. तं. ७ पटले १९९—पत्रे-यथा—

॥ सजातिबकपुष्पेण तथा रुद्रजटस्य च ।
वाजपेयस्य यज्ञस्य फलं प्राप्नोति नान्यथा ॥ इति ॥

२ **करवीरजातिपुष्पार्पणफलम्** । यो. तं. ७ पटले १९९ पत्रे—यथा—

॥ करवीरेण जात्या च पूजयेद्यस्तुशाङ्करि ।
अग्निष्टोमफलं लब्ध्वा सूर्यलोके महीयते ॥ इति ॥

३ **चन्दनागरुकर्पूरकुङ्कुममिश्रशुक्लपुष्पार्पणफलम्** । तत्रैव—यथा—

॥ चन्दनागरुकर्पूरशुक्लपुष्पैः सकुङ्कुमैः ।
विलिप्तां पूजयेद्दुर्गां वह्निष्टोमफलं लभेत् ॥ इति ॥

४ **सुवर्णपुष्पार्पणफलम्** । भविष्ये—यथा—

॥ यत् पुण्यं प्रतिपुष्पे तु तद्दशधा स्वर्णनिर्मिते ॥ इति ॥
य. आ. सू. १२८ पत्रे

५ **करवीरमालार्पणफलम्** । धर्मसिन्धौ—३ परिच्छेदे—यथा—

॥ करवीरस्रजाग्निष्टोमस्य ॥ इति ॥

६ **बकुलमालार्पणफलम्** ॥ तत्रैव–यथा—

॥ बकुलस्रजा वाजपेयस्य—

७ **द्रोणमालार्पणफलम्** ॥ तत्रैव

॥ द्रोणस्रजा राजसूयस्येति ॥ इति ॥ (१३–२५।१५ वि. सं. )

१६ **पुष्पाणां–पत्राणां चाभावे–प्रतिनिधिः** ॥ भविष्ये–यथा—

॥ अलाभे तु सुपुष्पाणां पत्राण्यपि निवेदयेत् ।
पत्राणामप्यलाभे तु तृणगुल्मौषधीरपि ॥
औषधीनामलाभे तु भक्त्या भवति पूजनम् ॥ इति ॥

१७ ॥ **भक्तियोगवशात–सर्वपुष्पैः पूजनोपदेशः** ॥

सटीकशारदा०–४ पटले–२९४ पत्रे–यथा—

॥ सर्वपुष्पैः सदा पूजा विहिताविहितैरपि ।
कर्त्तव्या सर्वदेवानां भक्तियोगोऽत्र कारणम् ॥ इति ॥

( १३–२५।१७ वि. सं. )

<u>१३–२५</u> **नानाविधपुष्पार्पणफलम्** ॥ ज्ञानार्णवतन्त्रे-१७ पटले-८४ पत्रे-यथा—
१८

१ ॥जपापुष्पैर्महेशानि पूर्ववत् पूजयेच्छिवाम् ॥ १०२ ॥
मासमात्रं क्रमेणैव पूर्ववत् परमेश्वरि ।
ब्रह्महत्यादिपापांश्च पूर्वजन्मकृतान् प्रिये ॥ १०३ ॥
नाशयेन्नात्र सन्देहोधनवाञ्जायते बुधः ।

२ केतकैस्तरुणैः पत्रैः पूर्ववत् पूजयेत् प्रिये ॥ १०४ ॥
उपपातकसङ्घांश्च मासमात्रेण नाशयेत् ।
सौभाग्यमतुलं तस्य जायते नात्र संशयः ॥ १०५ ॥

३ शतपत्रैर्मनोरम्यैः पूजयेन्मासमात्रकम् ।
पूर्ववत् परमेशानि पूर्वपापं विनाशयेत् ॥ १०६ ॥

४ चम्पकैः सुमनोरम्यैः पूर्ववत् पूजयेच्छिवाम् ।
मासमात्रेण हन्त्येव पातकाञ्शतजन्मजान् ॥ १०७ ॥
सौभाग्यवान् भवेन्मत्री त्रिपुरायाः प्रसादतः ।

५ श्वेतपद्मैर्महेशानि महद्भिः पूजयेत् पराम् ॥ १०८ ॥
पूर्ववन्नाशयेत् पापं विंशज्जन्मभवं प्रिये ।
मासमात्रेण सकलं मोक्षस्तस्य करे स्थितः ॥ १०९ ॥

६ बन्धूककुसुमैर्देवि मासमात्रं प्रपूजयेत् ।
त्रैलोक्यं वशगं तस्य पूर्वपापं दहेद्बुधः ॥ ११० ॥
७ बिल्वपत्रैश्च जलजैः सहैव परिपूजयेत् ।
पूर्ववत् परमेशानि मासमात्रं प्रसन्नधीः ॥ १११ ॥
समृद्धिमान् भवेद्देवि सर्वपापहरः सदा ।
८ मल्लिकामालतीजातीकुन्दैश्च शतपत्रकैः ॥ ११२ ॥
श्वेतोत्पलैर्मिश्रितैस्तु पूजयेन्मासमात्रकम् ।
कुलाचारक्रमेणैव पातकं शतजन्मजम् ॥ ११३ ॥
ब्रह्महत्यादिजनितं नाशयेन्नात्र संशयः ।
मुक्तिस्तस्य करे देवि वाचा जीवसमोभवेत् ॥ ११४ ॥
९ अगस्त्यबाणबन्धूकजपारक्तोत्पलैः प्रिये ।
पूर्वक्रमेण सम्पूज्य मासमात्रं प्रसन्नधीः ॥ ११५ ॥
पातकं नाशयेन्मन्त्री साक्षात् कामसमोभवेत् ।
१० चम्पकैः पाटलैर्देवि बकुलैर्नागकेसरैः ॥ ११६ ॥
कल्हारैः सिन्दुरैरम्यैः पूर्ववत् पूजयेत् क्रमात् ।
सौभाग्यमतुलं तस्य मासमात्रेण जायते ॥ ११७ ॥
पापं विनाशयेद्देवि यदि जन्मसहस्रजम् ॥ ११८ ॥ इति ॥

( १३-२५।१८ वि. तथा च २५ वि. सर्वः सं. )

## वि. १३।२६ ॥ अथाङ्गपूजाविषये ॥

१ ॥ इदं ज्ञेयमत्र ॥ एषाङ्गपूजा, प्राच्यतन्त्रग्रन्थेषु वहुषु नो प्रतिपदोक्ततयोपलभ्यते कुत्रचिदर्वाचीनपुस्तकेषु च लभ्यतेपीति-विदन्त्वेव विद्वांसः ॥

२ इयमङ्गपूजा पुंस्त्वस्त्रीत्वविशिष्टदेवानामपि विद्यते-न तत्र शङ्कापङ्कावरोहस्तथा च ब्रह्मप्रकृतिरुपायास्त्रिष्वपि लिङ्गेषु वर्तमानायाः सगुणनिर्गुणधर्मिण्याः देव्याः अपीयमङ्गपूजा प्राप्तैव ॥ इति ॥

३ इयमङ्गपूजा कस्योपचारस्यानन्तरं विधेयेत्यत्रापि प्रत्यक्षगमकाभावस्ततोग्रन्थस्थलेखमात्रप्रामाण्येन शिष्टसम्प्रदायेन च-पुष्पपूजोपचारानन्तरमियमुपादेयेत्यन्ते शरणी करणीयमेव ॥ इति ॥

४ परशुरामकल्पसूत्रे-अङ्गपूजायाः करणस्थलं समयोवा न कुत्रचित् प्राणीयत तथापि तत्करणे फलमस्त्येवेति नैःशङ्क्यमेव ॥ इति ॥

५ यत्र यत्र ग्रन्थे इयमङ्गपूजोपदिष्टा तत्र तत्र सर्वत्रापि दरीदृश्यते तत्तदङ्गग्रहण भेदस्तदर्शयाम्यधस्तनकोष्टके-यथा—

## ॥ अङ्गपूजायां, नानाग्रन्थस्थमतभेददर्शककोष्टकम् ॥

| अनुक्रमः | श्रीबालातन्त्रचन्द्रिकायाम् ३७२ पत्रे | पूजापद्धतिषु | क्वचिच्च | श्रीदुर्गाकल्पद्रुमपुस्तिकायाम् | |
|---|---|---|---|---|---|
| १ | ॐ श्रीबालायै नमः—पादौ[1] | चपलायै नमः—पादौ | उमायै नमः—पादौ | दुर्गायै नमः—पादौ | पूजयामि |
| २ | ॐ श्रीमङ्गलायै नमः—गुल्फौ | चञ्चलायै नमः—जानुनी | गौर्यै नमः—जन्घे | मङ्गलायै नमः—गुल्फौ | ,, |
| ३ | ॐ श्रीभगवत्यै नमः—जन्घे | कमलायै नमः—कटिम् | पार्वत्यै नमः—जानुनी | भगवत्यै नमः—जन्घे | ,, |
| ४ | ॐ श्रीकौमार्यै नमः—जानुनी | कात्यायन्यै नमः—नाभिम् | जगद्धात्र्यै | कौमार्यै नमः—जानुनी | ,, |
| ५ | ॐ श्रीवागीश्वर्यै नमः—ऊरू | जगन्मात्रे नमः—जठरं | जगत्प्रतिष्ठायै नमः—कटिम् | वागीश्वर्यै नमः—ऊरू | ,, |
| ६ | ॐ श्रीवरदायै नमः—कटीम् | विष्णुवल्लभायै नमः—वक्षः | शान्तिरूपिण्यै नमः—नाभिम् | वरदायै नमः—कटीम् | ,, |
| ७ | ॐ श्रीकृपार्थिन्यै नमः—उदरम् | कमलवासिन्यै नमः—भुजद्वयम् | देव्यै नमः—उदरम् | कृपार्थिन्यै नमः—उदरम् | ,, |
| ८ | ॐ श्रीपद्माकरवासिन्यै नमः—स्तनौ | ० | लोकवन्दितायै नमः—स्तनौ | पद्माकरवासिन्यै नमः—स्तनौ | ,, |
| ९ | ॐ श्रीमहिषमर्दिन्यै नमः—कण्ठम् | कम्बुकण्ठिन्यै नमः—कण्ठम् | काल्यै नमः—कण्ठम् | महिषमर्दिन्यै नमः—कण्ठम | ,, |
| १० | ॐ श्रीसुस्मितायै नमः—स्कन्धौ | सुस्मितायै नमः—मुखम् | शिवायै नमः—मुखम् | उमासुतायै नमः—स्कन्धौ | ,, |
| ११ | ॐ श्रीकमलपत्राक्षिण्यै नमः—भुजौ | कमलपत्राक्षिण्यै नमः—नेत्रे | भवान्यै नमः—नेत्रे | इन्द्राण्यै नमः—भुजौ | ,, |
| १२ | ॐ श्रीगौर्यै नमः—हस्तौ | श्रियै नमः—शिरः | रुद्राण्यै नमः—कर्णौ | गौर्यै नमः—हस्तौ | ,, |

१. अत्र, सर्वत्र-तत्तदङ्गनामोच्चारणानन्तरं-पूजयामि नमः-इति-वक्तव्यं तत्तदङ्गं च-समर्चनीयम्-इति-ज्ञेयम्-

| अनुक्रमः | श्रीबालातन्त्रचन्द्रिकायाम् ३७२ पत्रे | पूजापद्धतिषु | क्वचिच्च | श्रीदुर्गाकल्पद्रुमपुस्तिकायाम् | |
|---|---|---|---|---|---|
| १३ | ॐ श्रीमोहवत्यै नमः—मुखम् | ० | शर्वाण्यै नमः—ललाटम् | मोहवत्यै नमः—मुखम् | पूजयामि |
| १४ | ॐ श्रीशिवायै नमः—कर्णौ | ० | मङ्गलदात्र्यै नमः—शिरः | शिवायै नमः—कर्णौ | ,, |
| १५ | ॐ श्रीअन्नपूर्णायै नमः—नेत्रे | ० | ० | अन्नपूर्णायै नमः—नेत्रे | ,, |
| १६ | ॐ श्रीदुर्गायै नमः—ललाटम् | ० | ० | कमलायै नमः—ललाटम् | ,, |
| १७ | ॐ श्रीशाकम्भर्यै नमः—शिरः | ० | ० | महालक्ष्म्यै नमः—सर्वाङ्गम् | ,, |
| १८ | ॐ श्रीमहालक्ष्म्यै नमः—सर्वाङ्गम् | ० | ० | ० | |

( १३।२६ वि. सर्वः सं. )

१३।२७ ॥ **सौभाग्यद्रव्यविषये** ॥

॥ **सौभाग्यवस्तूनि** ॥ य. आ. सू. १२५ पत्रे—यथा—

१।१ ॥ हरिद्राकुङ्कुमं चैव सिन्दूरादिसमान्वितम् ।
कज्जलं कण्ठसूत्रादि **सौभाग्यद्रव्य**मुच्यते ॥ इति ॥

१।२ ॥ **सौभाग्यवस्त्वर्पणमन्त्रः** ॥ य. आ. सू. १४५ पत्रे—यथा—
॥ हरिद्रां कुङ्कुमं चैव सिन्दुरं कज्जलान्वितम् ।
सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि ॥ इति ॥

( २७।१ वि. सर्वः सं. )

२ ॥ सौभाग्यद्रव्यान्तर्गतकेवल**सिन्दूरार्पणश्लोकमन्त्रः** ॥

श्रीबालामानसपूजास्तोत्रे—२४ श्लोकतोयथा—

॥ सीमन्ते ते भगवति मया सादरं न्यस्तमेतत् ।
सिन्दूरं मे हृदयकमले देवि हर्षं तनोतु ॥
बालादित्यद्युतिरिव सदा लोहिता यस्य कान्ति
रन्तर्ध्वान्तं हरतु सकलं चेतसा चिन्तयामि ॥ इति ॥

३ ॥ सौभाग्यद्रव्यान्तर्गता**बीलवस्तूनि-तदर्पणश्लोकमन्त्रश्च** ॥

श्रीदुर्गाकल्पद्रुमे १५४ पत्रे-यथा—

मन्दारमल्लीकरवीरसम्भवं कर्पूरपाटीरसुवासितं सितम् ।
श्रीश्वेतचूर्णं विधिना समर्पितं प्रीत्या त्वमङ्गीकुरु [1]**विष्णुवल्लभे** ॥ इति ॥

४ ॥ सौभाग्यद्रव्यान्तर्गत**गुलालवस्तूनि-तदर्पणश्लोकमन्त्रश्च** ॥

**तत्रैव-यथा**-

प्रत्यूषकालार्कमयूखसन्निभं जातिफलैलागरुणा सुवासितम् ।
श्रीरक्तचूर्णं मनसा मयार्पितं प्रीत्या त्वमङ्गीकुरु विष्णु[1]वल्लभे ॥ इति

५ ॥ सौभाग्यद्रव्यान्तर्गत**हरिद्रावस्तूनि- तदर्पणश्लोकमन्त्रश्च** ॥ तत्रैव-१९९ पत्रे

॥ हरिद्रुमोत्थामतिपीतवर्णां सुवासितां चन्दनपारिजातैः ।
अनन्यभावेन समर्पितां ते मातर्हरिद्रामुररीकुरुष्व ॥ ३७ ॥ इति ॥

६ ॥ **वर्ज्यसौभाग्यद्रव्यविषये** ॥

॥ सौभाग्यद्रव्यं कस्य देवस्य वर्ज्यं;-तदत्रानुपयुक्तविषयत्वान्न विविच्यते. परं च श्रीजगदम्बायै ततसर्वसौभाग्यार्पणविधिर्निराबाधएवेति-इति ॥

(प. क. सू. द्वितीयावृत्तिकारः) ( १३।२७ वि. सर्वः सं. )

## वि. १३।२८ ॥ देवपूजायां-धूपोपचारे ॥

**१ धूपशब्दार्थः** । कुलार्णवे-१७ उल्लासे-१५७ पत्रे-यथा—

धूतशेषमहादोषपूतिगन्धप्रभावतः ।
परमानन्दजननाद्**धूपइत्याभिधीयते** ॥ इति ॥

**२ बर्ज्यधूपो**मन्त्रतन्त्रप्रकाशे-यथा-

॥ न दहेद्दूषितं धूपं कार्पासास्थिशिरोरुहैः ॥ इति ॥

**३।१ धूपे वस्तूनि-तन्निवेदनं च**-श्रीविद्यामानसपूजायां-श्रीमद्जगद्गुरुश्री-शङ्कराचार्यपादाः-यथाहुः—

मांसीगुग्गुलचन्दनागरुचितैः कर्पूरशैलोद्भवै ।
मोक्षीकैः सहकुङ्कुमैः सुरभितैः श्रीसर्पिषा संस्कृतैः ॥
सौरभ्यस्थितमन्दिरे मणिमये पात्रे भवत्प्रीतये ।

---

१ विष्णुमातः-इत्यपि-पाठः

धूपं तं सुरकामिनीविरचितं दत्तं गृहाणाम्बिके ॥

( एतच्छ्लोकस्थवस्तूनि धूपे ग्राह्याणीत्याशयः )

२ **तत्रैव द्वितीयप्रकारः**—यथा—

॥ श्रीखण्डागुरुगुग्गुलाज्यसरलं लाक्षानखीमाक्षिकं ।
मांसीदारुहरीतकीगुडसिताकर्पूरनालायकम् ॥
सद्योदुग्धगुलालकानलयुतं धूपे मुदा मन्त्रितं ।
धूपं पार्वति तेऽर्पयामि मनसा भक्त्या गृहाणाम्बिके ॥ इति ॥

३ **तृतीयप्रकारश्च**—बालातन्त्रचन्द्रिकायां—११२—पत्रे—श्रीमद्जगद्गुरुपूज्यपाद श्रीशङ्कराचार्यकृतबालामानसपूजास्तोत्रे-२७ श्लोकेऽपि-धूपनीयवस्तूनि-तदर्पणश्लोकमन्त्रश्च—यथा—

॥ लाक्षासंमिलितैः शिलारसयुतैः श्रीवाससंमिश्रितैः ।
कर्पूराकलितैः सितामधुयुतैर्गोसर्पिषा लोडितैः ॥
श्रीखण्डागुरुगुग्गुलप्रभृतिभिर्नानाविधैर्वस्तुभिः ।
धूपं ते परिकल्पयामि जननि त्वं धूपमङ्गीकुरु ॥ इति ॥

( २८।३ वि. सं. )

४ ॥ **अष्टाङ्गधूपः** । स्मृतिसमुच्चये—वृद्धहारीतस्मृतौ-२७० पत्रे-१०६ श्लोकोयथा—

॥ कार्पासमार्कं क्षौमं च शाल्मलीक्षीरकोद्भवम् ।
अम्भोजं कौटजं काशतूलिकाऽ**ष्टाङ्गमुच्यते** ॥ इति ॥ १०६ ॥

५।१ **दशाङ्गधूपः** तत्रैव—यथा—

॥ गुग्गुलं महिषाणां च सालनिर्यासमेव च ।
अगरुं देवदारुं च उशीरं श्रीफलं तथा ॥ १०४ ॥
ह्रीबेरं चन्दनं मुस्ता **दशाङ्गं**[1] **धूपमुच्यते** ।
**गवाज्येन च संयोज्य** दद्याद्धूपं सुवासितम् ॥ व्या । इति ॥

२ **द्वितीयोदशाङ्गधूपः** । आयुर्वेदे—यथा—

॥ घृतगुग्गुलुपाटीरअगरूशीरचन्दनम्
घनं लाक्षाकुष्ठनखं **दशाङ्गः प्रोच्यते बुधैः** ॥ इति ॥ य. आ. सु. २९ पत्रे

( २८।५ वि. सं. )

---

१. दशाङ्गोधूपउच्यते—इति पाठः साधुर्भाति

**६ षोडशाङ्गधूपः** । शारदातिलके–यथा—

॥ गुग्गुलं सरलं दारुपत्रं मलयसम्भवम् ।

ह्रीबेरमगुरुं कुष्ठं गुडं सर्जरसं घनम् ॥

हरीतकीं नखीं लाक्षां जटामांसीञ्च शैलजाम् ।

**षोडशाङ्गं विदुर्धूपं** दैवे पैत्र्ये च कर्मणि ॥इति॥ य. आ. सू. १२९ पत्रे

**७ सर्वमन्त्रासिद्धिप्रदायकोराजवल्लभनामा, धूपः**–यथा—

॥ कस्तूरीन्दुश्च वाह्लीकं नखं मांसी च सर्जकम् ।

मुस्तागुरुसिताः सर्वं क्रमवृद्धं समं पुरम् ॥

स्तोकं स्तोकं क्षिपेत्तैलं दिनैकमथ कुट्टयेत् ।

वर्तिं निर्वापयेत् दीप्तां **दिव्यं धुपं विमुञ्चति** ॥

सर्वदेवप्रियः सर्वमन्त्रसिद्धिप्रदायकः ॥ इति ॥

**८ धूपनिवेदनाक्रियाप्रमाणकारिकाः ॥**

महानिर्वाणतन्त्रे-६ उल्लासे-८४ श्लोकतोयथा—

॥ धूपदीपौ च पुरतः संस्थाप्य प्रोक्षणादिभिः ।

निवेदयामि मन्त्रेण उत्सृज्य तदनन्तरम् ॥ ८४ ॥

॥ जयध्वनि मन्त्रमातः स्वाहेति-मन्त्रपूर्वकम् ।

सम्पूज्य घण्टां वामेन वादयन् दक्षिणेन तु ॥ ८५ ॥

धूपं गृहीत्वा मतिमान् नासिकाधोनियोजयेत् ।

**दीपन्त दृष्टिपर्यन्तं दशधा भ्रामयेत्** पुरः ॥ ८६ ॥ इति ॥

**८।२ धूपसमये कर्तव्यम्** । बह्वृचपरिशिष्ठेऽपि

॥ धूपस्य व्यजनेनैव धूपेनाङ्गविधूपने ।

नीराजनेषु सर्व्वेषु देव(गुण)नामादि कीर्त्तयन् ॥

जयघोषं प्रकुर्व्वीत कारुण्यञ्चापि कीर्तयेत् ।

तथा मङ्गलघोषञ्च जगद्बीजस्य च स्तुतिम् ॥ इति ॥

**८।३ धूपनिवेदनविधौ** । शारदातिलके–यथा—

॥ यथा गन्धं तथा देवि धूपं दद्याद्विचक्षणः ।

मध्यमानामिकाङ्गुल्योर्मध्यभागे विधारयेत् ॥

अङ्गुष्ठाऽग्रेण देवेशि धृत्वा धूपं निवेदयेत् ।

तथा समर्पयेद्धूपं [1]घण्टावाद्यजयस्वनैः ॥ इति ॥ य. आ. सू. १२९ पत्रे

१. पाश्चात्य १३।१४–४ वि. द्रष्टव्यः ॥ अग्रे १३–२९।६ वि. द्रष्टव्यः

**८।४ धूपनिवेदनमन्त्रः**। महानिर्वाणतन्त्रे १३ उल्लासे ४११ पत्रे २३३

श्लो.-यथा-

॥ वनस्पतिरसोदिव्योगन्धाढ्यः सुमनोहरः ।

आघ्रेयः सर्वभूतानां धूपोघ्राणाय तेऽर्प्यते ॥ २३३ ॥ इति ॥

अत्र टीका

॥ वनस्पतिरसः इत्यादि । वनस्पतिरसः वृक्षविशेषरसः

अनेन मन्त्रेण देवाय धूपं दद्यात् ॥ इति ॥ ( २८।८ वि. सं. )

**१३-२८/९।१ धूपवस्तूनि तत्कर्तव्यता च** ॥ सटीकशारदातिलके-४ पटले

२९५ पत्रे-यथा-

॥ अगरूशीरगुग्गुलुशर्करामधुचन्दनैः ॥ १०६

धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः ।

वर्त्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ॥ १०७ ॥ इति ॥

अत्र टीका यथा—

॥ उद्दिष्टमुक्त्वा प्रकृतमाह धूपयेदिति । वामहस्तेन घण्टामन्त्रेणार्चितां घण्टां वादयन् धूपं दद्यादित्यर्थः । देशिकइत्यनेन घण्टामन्त्रेण तत्पूजनमप्युक्तम् ।

॥ यदाहुः-जयध्वनि ततोमन्त्रमातः स्वाहेत्युदीर्य्य च ।

अभ्यर्च्य वादयन् घण्टाम्०- । इति

॥ **शैवागमे तु** ॥ धूपभाजनमस्त्रेण प्रोक्ष्याऽभ्यर्च्य हृदाणुना ।

अस्त्रेण पूजितां घण्टां वादयन् गुग्गुलुं दहेत् ॥ इति ॥

श्लोकस्तु ॥ वनस्पतिरसोपेतोगन्धाढ्यः सुमनोहरः ।

आघ्रेयः सर्व्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ इति ॥

॥ तदुक्तम्—घण्टां गन्धाक्षतकुसुमैरर्चितां वादयानः ॥ इति ॥

॥ अन्यत्रापि—ततः समर्पयेद्धूपं घण्टां वाद्यजयस्वनैः इति ॥

॥ **अत्र प्रयोगः**-धूपपात्रमस्त्रेण प्रोक्ष्य-नमोमन्त्रेण पुष्पं दत्वा वामया तर्जन्या संस्पृशन्-मूलमन्त्रं श्लोकञ्च पठित्वा-साङ्गाय सपरिवाराय देवाय धूपं समर्पयामि नमः इति-शङ्खजलमुत्सृज्य-[1]धूपमुद्रां प्रदर्श्य घण्टामन्त्रेणार्चितां घण्टां वामहस्तेन वादयन् देवतागुणनामयशःस्तुत्यादि कीर्त्तयन्-देवं धूपयेत् ॥ इति ॥

---

१, इयं धूपमुद्रा द्विपरिशिष्टे पूजामुद्रोद्धारे दृश्या

॥ उक्तञ्च—

धूपस्थानं समभ्यर्च्य तर्जन्या वामया स्पृशन् ।

सङ्कल्प्यैवं ततः पुष्पाञ्जलिं दत्वा यशः पठेत् ॥ इति ॥

९।२ ॥ पुनरपि **धूपवस्तुनिवेदनकर्तव्यता, फलं च ॥**

ज्ञानार्णवतन्त्रे १६ पटले-७५ पत्रे-यथा—

॥ वनस्पतिरसोत्पन्नैः पवित्रैरम्यगन्धिभिः ॥ १९९ ॥

दशाङ्गाद्यैर्धूपवर्यैर्धूपयेत् परमेश्वरीम् ॥

कस्तूरी कुङ्कुमं देवि गुग्गुलं शालसम्भवम् ॥ २०० ॥

चन्दनागरुकर्पूरसिताज्यमधुसंयुतम् ॥

धूपयेद्देशिकोनित्यं सर्वसौभाग्यसिद्धये ॥ २०१॥

धूपमन्त्रेण देवेशि त्रैलोक्यस्यापि दुर्लभम् ॥ इति ॥

९।३ **धूपनिवेदनकर्तव्यता ।** ज्ञानार्णवे ४ पटले-१७ पत्रे-यथा—

**ईश्वरउवाच-**

॥ धूपं विस्तारयेत् सम्यङ्मूलमन्त्रं हृदि स्मरन् ।

वनस्पतिरसोत्पन्नोगन्धाढ्योधूपउत्तमः ॥

आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।

अनेन मनुनादेवि देव्यै धूपं निवेदयेत् ॥ इति ॥

९।४ **तथैव**—श्रीमहानिर्वाणतन्त्रे-६ उल्लासे-१३३ पत्रे-**यथा—**

॥ धूपदीपौ च पुरतः संस्थाप्य प्रोक्षणादिभिः ।

निवेदयामि मन्त्रेण उत्सृज्य तदनन्तरम् ॥ ८४ ॥

जयध्वनि मन्त्रमातः स्वाहेति मन्त्रपूर्वकम् ।

सम्पूज्य घण्टां वामेन वादयन् दक्षिणेन तु ॥ ८५ ॥

धूपं गृहीत्वा मतिमान् नासिकाधोनियोजयेत् ॥ इति ॥

अत्र-टीका-यथा—धूपेत्यादि

॥ पुरतोदेव्यग्रे—धूपदीपौ संस्थाप्य, प्रोक्षणादिभिः संशोध्य च, ह्रीं श्रीं क्रीं परमेश्वरि स्वाहा, एतौ धूपदीपावाद्यायै श्रीकाल्यै-निवेदयामीति मन्त्रेणोत्सृज्य, देव्यै समर्प्य च, तदनन्तरम्-एते गन्धपुष्पे—जयध्वनिमन्त्रमातः स्वाहेति, मन्त्रपूर्वकं—घण्टां सम्पूज्य—वामेन हस्तेन-तां घण्टां-वादयन् सन्—दक्षिणेन हस्तेन-धूपं गृहीत्वा मतिमान् साधकोदेव्याः नासिकायाअधोनियोजयोन्निवेदयेत् ॥ इति ॥

९।५ ॥ अयं धूपनिवेदनविधिरस्मत्कृतश्रीबहुचरचिन्तामण्यपरनामकश्रीबालातन्त्र-चन्द्रिकायाम्-२७३ पत्रे-यथा—

॥ ततोधूपपात्रं-स्वाग्रे संस्थाप्य । ॐ अस्त्रायफट्-इति सामान्यार्घोदकेन सम्प्रोक्ष्य । वामतर्जन्या संस्पृश्य । मूलमन्त्रेण चन्दनपुष्पाणि प्रक्षिप्य । ॐ रं-इति—तत्रस्थाग्निं चन्दनपुष्पाल्यां सम्पूज्य । मूलमन्त्रेण—घृताक्तदशाङ्गादिधूपमथवा—धूपोपचारवस्तु निर्दिष्ट[1]मांसीगुग्गुलेत्यादिश्लोकस्थवस्तूनि घृताक्तानि प्रक्षिप्य ।

॥ॐ ऐं जयध्वनि मन्त्रमातः स्वाहा-इत्युक्त्वा-घण्टां वादयित्वा चन्दनाक्षतपुष्पैः सम्पूज्य । सामान्यार्घजलं गृहीत्वा ॐ ब्राह्मणोस्य० ॐ कर्दमेन० ॐ मांसीगुग्गुलेत्यादि-उपर्युक्त श्रीविद्यामानसोपचारश्लोकं—च पठित्वा—तद्देवतागायत्रीं च ॐ वनस्पतिरसोद्भूत०—इममपि श्लोकं पठित्वा । धूपमुद्रां ॥ वामहस्ततर्जनीमूले अङ्गुष्ठं स्पर्शयित्वा-धूपमुद्रां-प्रदर्श्य—ॐ ऐं० नमः धूपमाघ्रापयामीत्युक्त्वा किञ्चिज्जलमिष्टदेवतायै निवेद्य-मध्यमानामिकाङ्गुष्ठैः धूपपात्रं गृहीत्वा-देवतायाः किञ्चिद्दूरतः देवीगुणनाम गृणन् स्तुवंश्च-घण्टां वादयन् सन्-तद्धूपपात्रं त्रिवारं-देवीसमीपे भ्रामयित्वा-देव्यावामे-स्थापयेदिति ॥

( २८।९-तथा च १३।२८ वि. सर्वः सं. )

## वि. १३।२९ ॥ दीपविषये ॥

प. क. सू. ९९-पत्रे. ३-खण्डे-श्रीक्रमे-११ सूत्रे—

॥ दीपानभितोदत्वा ॥ इति-मूलसूत्रे तद्भाष्ये च-पार्श्वद्वये; समसङ्ख्याङ्कदीपप्रज्वाल-नाद्युक्तम—तदादिविषये **अनुसन्धानम्** ॥

**१ दीपशब्दार्थः** । कुलार्णवतन्त्रे-१७-उल्लासे-१५७ पत्रे-यथा—

॥ दिव्यरूपप्रदानाच्च परतत्त्वप्रकाशनात् ।
ख्यातोमोक्षोदीपइति मोक्षमार्गैकसाधनः ॥
इति श्रीशिवां प्रति-श्रीशिववचनम् ॥

**२ दीपलक्षणं वा कीदृशोदीपः कार्यस्तत्र-प्रमाणं-च** । सुदर्शने-यथा—

॥ नेत्राल्हादकरः सार्चिर्दूरतापविवर्जितः ।
सुशिखः शब्दरहितोनिर्धूमोनातिह्रस्वकः ॥ इति ॥ य. आ. सू.

२२४ पत्रे—

॥ एतावता च-घृतादि स्वल्पं व्याप्रीयेत तदर्थमत्यल्पं द्रष्टुमपि न शक्येत-तादृग्दीप देवाग्रे—कुर्वाणाआत्मानमेव पातयन्ति-मिथ्यैव च-श्राम्यन्तीत्यवधेयम् ॥ इति ॥

---

१. अयं मांसीत्यादिश्लोकः अनुगत-३।१ वि. ४७६-पत्रेस्ति—

**३ कस्य कस्य पुरतोंदीपोदेयस्तत्र-प्रमाणम्** । प्राक्तनश्रीनित्यार्चन पद्धतौ-यथा-

॥ सूर्यस्य वा हरेर्वापि शिवस्याग्रे गुरोस्तथा ।
दीपस्य ज्वलनस्यापि सन्निधानं प्रकल्पयेत् ॥ इति ॥

एतदधिकान्यपि दीपकरणस्थलानि सन्तीत्यपि-प्रकल्प्यमेवेति ॥ इति-प. क. सू. द्वितीयावृत्तिकारः ॥

**४-दीपं-भुमौ न-स्थापयेत्** । सुदर्शने-यथा—

॥ न चैव स्थापयेद्दीपं साक्षाद्भूमौ कदाचन ॥ इति ॥ य. आ. सू. २२४ पत्रे—

**२९१५ दीपे-वर्तिविषये ।**

**१ अनेनानेन वस्तुना, दीपवर्ति-न कुर्यात्-तत्र-प्र०** । सुदर्शने-यथा-

॥ कोशजं रोमजं वस्त्रं वर्तिकार्ये न योजयेत् ।
कार्पासवर्तिका प्रोक्ता दीपकृत्येषु सर्वदा ॥ इति ॥ य. आ. सू. २२४ पत्रे—

**२ दीर्घ-ह्रस्ववर्त्तिनिषेधः** । श्रीकालिकापुराणे-यथा—

॥ कार्पासवर्तिका ग्राह्या न दीर्घा न च सूक्ष्मका इति ॥
य. आ. सू. १२९ पत्रे

**३ दीपवर्त्तिस्थौल्यम्** । कुलार्णवे-१० उल्लासे-९३ पत्रे-यथा-

॥ आज्येनानामिकास्थूलवर्तिं प्रज्याल्य पार्वति ॥ इति ॥

॥ अर्थाद्घृतविशेषदहनभिया, तन्वीं वर्तिमकृत्वा-यथा सूद्योतकरी स्यात्तथोपर्युक्तप्रमाणस्थौल्या-वर्तिर्विधेया, दीपस्य, साधकवरैरिति-विनयामि विनयतः ॥

**४ दीपवर्त्याः लघुगर्भत्वम्** । प्रपञ्चसारे-६ पटले-८७ पत्रे-५५ श्लोके-यथा—

॥ गोसर्पिषा वा तैलेन वर्त्त्या च लघुगर्भया ।
दीपितं सुरभिं शुद्धं दीपमुच्चैः प्रदीपयेत् ॥ इति ॥

एतच्छ्लोकस्थलघुगर्भया-इति पदस्य स्वारस्यम्, वर्तिकामध्यभागः सुमृदुः स्यान्न तु कठिनोवा पाणिबलेनाऽतिपरिपीडितोवा-कार्यः ॥ इति ॥

॥ प. क. सू. द्वितीयावृत्तिकारः ॥

**५ दीपवर्त्याः-कर्पूरगर्भत्वं-दीपस्य उच्चैस्त्वं-च ।** स. शारदा-४ पटले-२९६ पत्रे-यथा—

॥ वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ॥ १०७ ॥

आरोप्य दर्शयेद्दीपानुच्चैः सौरभशालिनः ॥ इति ॥

" अत्र-एतच्छ्लोकस्थ, वर्त्या कर्पूरगर्भिण्या " इत्यनेन वाक्येन, वर्त्तिकापरिपीडन समये, कार्पासे, कर्पूरः क्षेप्यः, तेन च ज्वलनसमये-सुगन्धिर्दीपः प्रज्वलेत्, देवताऽपि प्रसादिता स्यादिति तात्पर्यम् ॥ इति ॥ प. क. सू. द्वितीयावृत्तिकारः ॥

**६ उर्ध्वमुखवार्तिविषये** ॥ प. क. सू. द्वितीयावृत्तिकारः । यथा—

॥ दरीदृश्यन्ते साम्प्रतं च, श्रद्धालूनां-देवालयादौ, ऊर्ध्वमुखवर्तयोदीपेषु—तच्छङ्का-स्पदम् । यद्येवं स्यात्तदा-ऊर्ध्वमुखवर्तिषु दीपेषु, दीपानां सर्वतोमुखत्वं-सुस्पष्टमेव—

ऊर्ध्ववर्तिकदीपकरणे-न कुत्रचिदपि प्रमाणोपलब्धिः ।

यदि चेत्तथाऽपि-दीपमुखान्युदिश्य दीपपरत्वेन सुफलदुष्फलनिर्देशकशास्त्रं सर्वमपि व्यर्थतामियादेव-यथाहि—

य. आ. सू. २२४ पत्रे-४६३ विषये—यदाह, मरीचिः ॥

॥ आयुर्दः प्राङ्मुखोदीपोधनदः स्यादुदङ्मुखः ।

प्रत्यङ्मुखोदुःखदोऽसौ हानिदोदक्षिणामुखः ॥

॥ प्रत्यङ्मुखनिषेधस्तु नित्यदीपविषयः ।

॥ श्रीकार्त्तवीर्यादिदीपः प्रत्यङ्मुखएवस्थापनीयः । (इदमेकमपवादवचोपि ज्ञेयम्)॥ इति ॥

**७ बहुवर्त्तिदीपपक्षे-विषमवर्तिग्रहणम्** ॥ स. शारदा-४-पटले-२९७ पत्रे-१०७ श्लो-टीकायां यथा—

॥ बहुवर्तिदीपपक्षे विषमा एव, वर्तिसङ्ख्या ग्राह्या । इत्युक्तम्

अत्र—एवकारेण बहुवर्तिदीपपक्षे-वर्तिसमसङ्ख्याकत्वं-सर्वथा निषिद्धमेवेति—ज्ञेयम्॥ इति ॥ प. क. सू. द्वितीयावृत्तिकारः ॥

८ एकदीपपात्रे, बहुवर्तिक्षेपे विचारः ॥ द्वितीयावृत्तिकारोयथा—

अन्यच्च—एकपात्राधिकरणैकदीपे बहुसङ्ख्यवर्तिक्षेपावसरसम्भवोऽपि-न सम्भाव्यते । ततोऽयमुपदेशः प्रायः स्वतन्त्राऽन्यनिमित्तोपदिष्टदीपविषये वा-बहुदीपविषयकनिराजन-विषये एव वा—समर्थयितव्यइत्याभाति-परं च नैकदीपविषये—इत्यलम्—

( २९।५ वि. सर्वः सं. )

**२९।६ दीपे-निक्षेप्यघृतादिवस्तुविषये ॥**

**१ दीपे-क्षेप्यवस्तुद्वयम्**–प्रपञ्चसारे-६ पटले-८७ पत्रे-५५ श्लोके–यथा–

॥ गोसर्पिषा वा तैलेन वर्त्या च लघुगर्भया ॥

दीपितं सुरभिं शुद्धं दीपमुच्चैः प्रदीपयेत् ॥ इति ॥ ५५ ॥

**२ दीपे-निक्षेप्यबहूनि वस्तुनि** ॥ सटीकशारदा-४ पटले-२९७ पत्रे-१०७ श्लोकटीकायां–यथा—

प्रयोगसारे—

॥ तैलेन कपिलाज्येन सिक्थकेनाऽपरेण वा ।

स्नेहेन वार्तिसंयुक्तम्० इत्यादि ॥

**३ दीपे-निक्षेप्यवर्ज्य-वस्त्वपि च** । मरीचिस्मृतौ-तत्रैव ।

॥ अथ-स्मृतिकाराणामप्याशयोऽत्रानूद्यते–

॥ घृताद्वा तिलतैलाद्वा नाऽन्यद्रव्यात्तु दीपकम् ।

॥ अत्र, नान्यद्रव्येत्यनेन, वसादिद्रव्यनिषेधोन कुसुम्भादितैलानाम् ॥ इति ॥

४ दीपे–निक्षेप्यविहिताविहितं वस्तु ॥ अन्यदपि तत्रैव–यथा–

॥ घृतेन दीपोदातव्यस्त्वथवाऽप्यौषधीरसैः ।

**वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्** ॥ इति वचनात् ।

**५ दीपे–निक्षेप्यविहितं वस्तु** । स्मृतिसमुच्चये-वृद्धहारीतः २०७ पत्रे–यथा–

॥ गव्याज्यं तिलतैलं वा कुसुमैश्च सुवासितम् ।

संयोज्य वह्निना दीपं भक्त्या विष्णोर्निवेदयेत् ॥ इति ॥

( अत्र विष्णुपदेन-ईज्यमाना सा सा देवता ग्राह्येति ज्ञेयम् । )

६ कालिकापुराणेऽपि यथा–

॥ घृतेन दीपकं नित्यं तिलतैलेन वा पुनः ।

ज्वालयेन्मुनिशार्दूल सन्निधौ जगदीशितुः ॥ इति ॥ य. आ. सू. १२९ पत्रे–

**७ मिश्रीभूतघृतादिद्रव्येण दीपकरणनिषेधः** ॥ सुदर्शने–यथा—

॥ न मिश्रीकृत्य दद्यात्तु दीपं स्नेहे घृतादिकम् ॥ इति ॥

य. आ. सू. २२४ पत्रे

**८ कालिकापुराणेऽपि**–यथा—

॥ न मिश्रीकृत्य दद्यात्तु दीपं स्नेहे घृतादिकम् ॥ इति ॥ य. आ. सू. १२९ पत्रे

( २९।६ वि. सर्वः सं. )

२९।७ ॥ **दीपस्थापनस्थलम्** ॥

**१ दीपस्थापनस्थलदर्शनम्** ॥ प. क. सू. ३ खण्डे-श्रीक्रमे-११ मूलसूत्रे ९९-पत्रे-श्रीभगवतैवोक्तं-यथा—

॥ अभितोदीपानिति "। एतत्सूत्रभाष्ये एव—सुस्फुटाऽर्थोऽस्य-दृश्यः ॥ इति ॥

२ ॥—गन्धाक्षतादिकं-पुष्पपात्रं-दीपस्तदन्यत् पूजासाहित्यं च-पूजास्थले-कुत्र स्थाप्यम्:— तत्र प्रमाणम्—सटीकप्रपञ्चसारे-६ पटले-८२-पत्रे-१८ श्लोके—

श्रीमज्जगद्गुरुशङ्कराचार्यपादाःयथा—

॥ न्यसेच्च दक्षभागे सुमनः पात्रं तथाऽभितोदीपान् ।

अन्यत् साधनमखिलं पुरतोगन्धाक्षतादिकं मन्त्री ॥ १८ ॥ इति ॥

**३ घृततैलदीपयोः पृथक्पृथक्स्थाननिर्देशः।** स. शारदा ४ पटले-२९७ पत्रे-१०७ श्लोकटीकायामपि-यथा-

॥ तत्र सर्पिषा चेद्दीपस्तदा दक्षिणतः ।

तैलेन चेत्तदा वामतः । इति सम्प्रदायः ॥ इति ॥

**४ ॥—अन्यत्रापि तान्त्रिकपूजापद्धतौ—यथा—**

॥ घृतदीपोदक्षिणे स्यात्तैलदीपस्तु वामतः ।

॥ इदं च घृततैलोभयदीपौ, चेत्तदैव-ज्ञेयम् ॥ इति ॥

**५ ॥—देवपरितोदीपस्थापनप्रमाणम्** ॥ आनन्दाश्रमसंस्कृतग्रन्थावली-७३ ग्रन्थाङ्कमुद्रितश्रीमज्जगद्गुरुश्रीशङ्कराचार्यविरचितश्रीगायत्रीपुरश्चरणे-३५ पत्रे-यथा-

॥ घृतादिज्वलितान् दीपान् स्थापयेत् परितः शुभान् ॥ इति ॥

५।२ ज्ञानार्णवे-१३-पटले-७५ पत्रे-यथा-

॥ अभितोवेदिकाचक्रं दीपमालाघृतप्लुताः ।

कर्पूररचिताश्चापि तैलपूर्णास्तु वा यजेत् ॥

धूपदीपौ निवेद्याथ तर्पयेत् पूर्ववत् प्रिये ॥ इति ॥

**६ घृतदीपोदेवदक्षिणे-अन्योवामे-तत्र प्रमाणम्।**

तत्रैव ग्रन्थे-५१ पत्रे-घारेइत्युपनामकशङ्करसूरिविरचितश्री

गा. पु. पद्धतौ-यथा-

॥ घृतदीपं देवीदक्षिणे, अन्यं वामे । इति ॥

**७ वर्तिस्थवर्णपरत्वेन दीपस्थलम्** ॥ सटीकशारदा-४ पटले-२९७-पत्रे-टीकायां-यथा-

एवञ्च-सिता वर्तिश्चेद्दक्षिणतः। रक्ता चेद्वामतोनिवेदनमिति।

॥ अत्रोपर्युक्तसर्वविषयेषु, दीपनिधापनाय, उक्तः

वामदक्षिणभागः स्वेष्टदेवतायाएव ग्राह्योनाऽऽत्मनोऽर्चकस्येति ॥ प. क. सू. द्वितीयावृत्तिकारः ॥

**८ अन्यतान्त्रिकपूजापद्धतौ**। यथा—

॥ सितवर्तियुतोदक्षे वामतोरक्तवर्तिकः ॥ इति ॥

( २९।७ वि. सर्वः सं. )

**२९-८।१ दीपार्पणे-मन्त्रादिकम्**। प. क. सू. ३ खण्डे-श्रीक्रमे ७ सूत्रे

श्रीभगवतोक्तदीपविधिर्यथा—

॥ त्रितारीमुच्चार्य-रक्तद्वादशशक्तियुक्ताय दीपनाथाय

नमः-इति-भूमौ मुञ्चेत्-पुष्पाञ्जलिम् ॥ ७ ॥ इति ॥

अत्र-वृत्तिकारः

त्रितारीं वक्ष्यमाणामुक्त्वा-नमः-इत्यन्तमुच्चरेत्। अयं दीपनाथार्हणमनुः। अनेन भूमौ-पुष्पाञ्जलिं-दद्यात् ॥ इति ॥

॥ पुष्पाणामञ्जलि**गृहीतानां** प्रचयः पुष्पाञ्जलिः।

तदुक्तं-अगस्त्यसंहितायां-सोमवारविधिप्रकरणे—

॥ संश्लिष्टहस्तद्वयमध्यवर्ती प्रसूनपुञ्जः **कुसुमाञ्जलिः** स्यात् ॥ इति ॥ ७ ॥

॥ प्रत्यक्षमन्त्रोयथा—

-ऐं ह्रीं श्रीं. रक्तद्वादशशक्तियुक्ताय दीपनाथाय नमः ॥ इति ॥

**२९ कुत्रचित्तन्त्रपुस्तके-दीपस्तम्भपूजाद्यपि-यथा—**

८।२ दीपस्तम्भे। सप्तविंशतिनक्षत्रेभ्योनमः--

पादे-अर्काय नमः। दण्डे-वासुकये नमः। अग्रे-सोमाय नमः। पात्रे-अग्नये नमः। अग्निना-अग्निरिति मन्त्रेण-दीपं प्रज्वाल्य ॥

॥ **घण्टानादं कुर्यात्** ॥ **तत्र पूजनमन्त्रोपि च** ॥ यथा—

घण्टायां-ब्रह्मणे नमः। मध्ये-रुद्राय नमः। नाले-वासुकये नमः। नादे-सरस्वत्यै नमः। मुकुटे-गरुडाय नमः।

॥ घण्टायां वसते लक्ष्मीर्जिव्हायां वायुरूर्जितः। तस्मात् सर्वप्रयत्नेन घण्टानादं तु कारयेत् (१) ॥ आगमार्थं तु० (२) ॥ सर्ववाद्यमयी घण्टा केशवस्य सदा प्रिया। वादनाल्लभते पुण्यं यज्ञकोटिशतोद्भवम् ३ ॥ इति वादयित्वा-

## ॥ श्रीगरुडध्यानम् ॥

॥ तप्तस्वर्णनिभं फणीन्द्रनिकरैः क्लृप्ताङ्गभूषं प्रभुं ।

स्मर्तॄणां शमयन्तमुग्रमनिशं नॄणां विषं तत्क्षणात् ॥

चञ्च्वग्रप्रचलद्भुजङ्गमभयं पाण्योर्वरं बिभ्रतं पक्षोच्चारितसामगीतममलं श्रीपक्षिराजं भजे ॥ इति ध्यात्वा० सम्पूज्य ॥

॥ अथवा—शटिकशारदातिलके-२४ पटले-८७३ पत्रे—श्रीगरुडध्यानं—यथा—

२—वर्गा(र्णा)न्तर्वह्नियुग्माक्षरकमलगतं पञ्चभूताद्यवर्णं

क्लृप्ताकल्पं फणीन्द्रैरभयवरकरं पद्मनेत्रं सुवक्त्रम् ।

दुष्टाहिच्छेदतुण्डं स( स्म )रदखिलविषप्रोषणं प्राणभूतं

प्राणिश्रेण्यास्त्रिवेदीतनुममृतमयं पक्षिराजं भजेऽहम् ॥ इति ॥

इति ध्यात्वा-घण्टामूर्ध्नि, श्रीगरुडं सम्पूजयेदिति ॥

### केवलदीपदानप्रयोगे—

॥ इतोऽप्यन्यथा, तत्तत्प्रकरणवशात्—तत्तद्देवताभ्यः स्वतन्त्रतयाप्यर्प्यमाणः केवलदीपदानप्रयोगस्तान्त्रिकोमिश्रो,वा, पृथगवेस्तीत्यपेक्ष्यमाणस्तत्तद्ग्रन्थादुपलब्धव्योनात्र निधीयते ग्रन्थविस्तृतिभारादिति ॥

## अथ—षोडशोपचारपूजान्तर्गतदीपार्पणप्रयोगाः ।

### ३ ॥ दीपविषये—किञ्चित् ज्ञेयम् ॥

॥ उपर्युल्लिखित ४०१ पत्रस्थ १३-२९।१ विषयादारभ्य-समाप्तिविषयावध्यवलोकनतः तत्तत्प्राकरणिकज्ञानाऽवगमेन, दीपविषयतानिरूपकोनानाशास्त्रार्थोविदितएव स्यात—

॥ अन्यच्चैतत्सूत्राऽनुयायिदेशिकवर्यैस्त्वत्रैवपत्रतोमूलसूत्रभाष्योक्तविधयैव देवाय दीपनिवेदनकरणं—युक्ततरम् ।

॥ परञ्च—“ अनुक्तमन्यतोग्राह्यम्० ” इत्येतन्मतवादिनां प्रसादनायेतरतान्त्रिकग्रन्थोक्तोऽपि षोडशोपचारपूजान्तर्गतदीपोपकल्पनविधिरपि—सर्वसाधारणतया—प्रपञ्च्यते । यथा—

**४ ॥ अपरश्च दीपार्पणप्रयोगः** आनन्दाश्रमसंस्कृतग्रन्थावलि-७३-ग्रन्थाङ्क मुद्रितघारे-इत्युपनामशङ्करसूरिविरचितगा-पु-पध्धतौ—५१ पत्रे—षोडशोपचारार्चने-यथा—

ॐ ब्राह्मणस्य०–मूलं० (सावित्रि) ते-दीपं-समर्पयामीति निवेदयेत्। कर्पूरगर्भिण्या, अगरुगर्भिण्या, वा वर्त्या युतं घृतपूरितं सुरभितैलपूरितं वा, जाज्वल्यमानं दीपमानीय—

॥ विष्णुदैवताय घृतप्रदीपाय नमो,वनस्पतिदैवताय तैलदीपाय नमः-इति–

( सम्पूज्य० नमस्कृत्य, )

सुप्रकाशोमहादीपः सर्वत्र तिमिरापहः ।

सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम ॥

इत्यनेन–पारावतभ्रमाकारं–देव्याः नेत्रादिपादान्तं-पुनः पादादिनेत्रान्तं, त्रिर्देव्यै दीपं-दर्शयेत्[1] । इति

प्राक्तन **श्रीविद्यानित्यार्चनपद्धतौ**, देव्याः–षोडशोपचारपूजान्तर्गतदीपोपचार-निवेदनं-यथा—

५ ॥ देवताग्रे-दीपपात्रं संस्थाप्य। अस्त्रेण ( ॐ फट ) इति सम्प्रोक्ष्य । ॐ नमः– इति-पुष्पं दत्वा । ॐ इति प्रज्वाल्य । [2]चक्रमुद्रां प्रदर्श्य । उत्तोल्य । ॐ सुप्रकाशो महादीपः सर्वत्रतिमिरापहः । सबाह्यभ्यन्तरं ज्योतिर्दीपोयं प्रतिगृह्यताम् ॥

ॐ–[3]जयध्वनि महाघोषविश्वमोहप्रकाशके । द्रावय हृदयं दुष्टानां नादेन भ्रमणे न च ॥ ॐ हुं फट्। इति-गन्धपुष्पाभ्यां-घण्टां सम्पूज्य-वामहस्तेन वादयन् । देवतायाः नाभ्यादि दृष्टिपर्यन्तं-त्रिवारं-भ्रामयेत् ।

ॐ सांगायै सपरिवारायै ( श्रीअमुकदेवतायै–श्रीत्रिपुरसुन्दर्यै ) दीपं दर्शयामि नमः। इति-दीपं निवेद्य-तत्तत्स्थाने संस्थाप्य-मध्यमाङ्गुष्ठयोगेन-दीपमुद्रां–प्रदर्शयेत् ॥

इत्यपि-दीपार्पणे, एकोविधिः ॥

६ ॥ अथवा-**श्रीमदाद्यार्चनपद्धतावपि**–यथा–

॥ देवतादक्षभागे, घृतदीपं संस्थाप्य, वामे तैलमयं संस्थाप्य । ( सुदर्शन मंत्रेण ) ॐ रां रीं रूं रैं रः सहस्रार हुं फट्–इति घृतदीपं सम्पूज्य । तैलदीपं च–ॐ श्रीं पशुं हुं फट–इति सम्पूज्य । हस्तद्वयेन दीपशिखे-स्पृष्टवा–ॐ घोराय घोरतमाय महारौद्राय वीरभद्राय ज्वालामालिने सर्वप्राणोपसंहर्त्रे हुं फट् स्वाहा । इति पठित्वा तत्तेजसात्मानं-संमार्ज्य–इति

इत्यपि दीपार्पणविधिः ॥

---

१ अत्रापि–घण्टां वादयेत्तत्र प्रमाणमनुगतद्वि–परिशिष्ठे १३–२८।८।१३–२८।९ विषययोः–४७८-३७९ पत्रयोश्च–दृश्यम्–

२ एतस्याश्चक्रमुद्रायाउध्धारः–अग्रे–दि–परिशिष्टे १५–विषये-दृश्यः ।

३ **गजध्वनिमये मातर्महाघोषप्रदायिनि ।** त्रासय सर्वदुष्टानि मातः स्वाहे नमोनमः ॥ उपरितन–३–चिह्नितमन्त्रग्रहणानिच्छायाम्–अयमपि मन्त्रोग्रहीतुं शक्यते, इति ज्ञेयम्–

७ ॥ **दीपनिवेदनरीतिः**, महानिर्वाणतन्त्रे—६ उल्लासे—१३३ पत्रे—यथा

दीपन्तु दृष्टिपर्य्यन्तं दशधा भ्रामयेत् पुरः ॥ ८६ ॥ इति—

अत्र-टीका—

दीपन्तु पुरोदेव्यग्रे—पादमारभ्यदृष्टिपर्य्यन्तं-दशधा

दशवारं—भ्रामयेत् ॥ ८६ ॥ इति—

२९।८ **दीपनिवेदनफलम्**—स्मृतिसमुच्चये—संवर्तस्मृतौ—४१६ पत्रे—यथा—

॥ देवागारे द्विजातीनां दीपं दद्याच्चतुष्पथे ।

मेधावी ज्ञानसंपन्नश्चक्षुष्मान—ससदा भवेत् ॥ ९१ ॥ इति ॥

( २९।८ तथा च १३।२९ वि. सर्व. सं. )

॥ **इति—दीपविषयः सर्वः सम्पन्नः** ॥

श्रीः ॥

द्वि-परिशिष्ट-वि. १३।३० ॥ **नैवेद्यविधिः** ॥

१ ॥—**नैवेद्यशब्दार्थः** । कुलार्णवे—७ उल्लासे—१५७ पत्रे—यथा—

॥ चतुर्विधं कुलेशानि द्रव्यञ्च षड्रसान्वितम् ।

निवेदनाद्भवेत्तृप्तिर्नैवेद्यं **समुदाहृतम्** ॥ इति ॥

२ **श्रीजगदम्बायानैवेद्ये—प्रियाप्रियपदार्थाः** ॥

श्रीयोगिनीतन्त्रे—७ पटले—१९८ पत्रे—श्रीगुरुगुरुशिवभगवद्वचांसि—यथा—

॥ कदलं बीजपूरञ्च दुग्धं पक्कं निवेदयेत् ॥

कन्दु पक्कं कशेरुञ्च जम्बू बालप्रियं भवेत् ।

आर्द्रकं लवणञ्चैव जीवकं पिप्पलीयकम् ॥

जातीकोषं तिन्दुकञ्च देव्याः **प्रियतरं महत्** । इति ॥

अन्यच्चापि तत्रैव—यथा—

॥ नारिकेलं सुवर्णाभं नारिकेलञ्च वामकम् ।

निवेदयेन्महादेव्यै तोयं तस्य विशेषतः ॥

॥ बकुलस्य फलं पक्कं पद्मस्य च फलं तथा ।

नियोजयेन्महादेव्यै चान्द्रायणफलं लभेत् ॥ इति ॥

॥ नैवेद्ये—**वर्ज्यवस्तु** ॥ तत्रैव—यथा—

॥ रामरम्भाफलं पुष्पं वदनं धूम्रतापितम् ॥

न योजयेन्महादेव्यै उत्पलस्य च बीजकम् ।

धान्यं श्रावणकं मर्त्योद्भिःस्विन्नञ्च **विवर्जयेत्** ॥ इति ॥

**३०-३।१ ॥ नैवेद्ये-निवेद्यपदार्थाः-नैवेद्यं सङ्कल्प्य-नित्यहोमविधिश्च ॥**

**श्रीज्ञानार्णवतन्त्रे**-१६ पटले-७६ पत्रे-२१२ श्लोकतः—

श्रीश्रीविद्यायजनविधौ-यथा—

॥ नैवेद्यं षड्रसोपेतं सितापूपादिसंयुतम् ॥२१२॥
शर्करापूरभरितमण्डकैः पायसान्वितम् ।
मुक्ताकर्पूरधवलं शुद्धोदनसुपूरितम् ॥ २१३ ॥
घृतकर्पूरशोभाढ्यं सम्पूर्णघृतमाण्डितम् ।
नानाव्यञ्जनशोभाढ्यं वटकैः कुङ्कुमप्रभैः ॥ २१४ ॥
माषान्नभरितं नानारसपानविराजितम् ।
घृतक्षीरेण भरितं चतुर्मुद्राविराजितम् ॥ २१५ ॥
सङ्कल्प्य परमेशान्यै नित्यहोमविधिं चरेत् ॥ इति ॥

**३।२ ॥ आरात्रिकानन्तरं नैवेद्यं-नैवेद्ये-वस्तूनि-मन्त्रश्च ।** ज्ञानार्णवे ५ पटले--१९ पत्रे-यथा—

॥१॥ आरात्रिकविधिं कृत्वा नैवेद्यं तु विकेदयेत् ।

**नैवेद्यपदार्थाः-तत्रैव—**

॥२॥ शुद्धस्फटिकसङ्काशश्चन्द्ररश्मिसमप्रभः ॥ १७ ॥
लसत्तण्डुलजोदेवि चारुशुद्धोदनः प्रिये ।
हीङ्गुजीरमरीचाढ्यैरार्द्रकैरुचिरः प्रिये ॥ १८ ॥
वटकः कुङ्कुमाकारः पायसं हेमसंनिभम्
दुग्धगम्भीरसुभगं शर्करापूरपूरितम् ॥ १९ ॥
कपिलाघृतसंयुक्तं भूर्जत्वङ्मण्डकाः प्रिये ।
शर्करालोलितादेवि सूपं मुद्गोद्भवं तथा ॥ २० ॥
नानाविधानि पेयानि व्यञ्जनानि बहूनि च ।
इत्याद्यन्नरसोपेतं नैवेद्यं कल्पयेद्बुधः ॥ २१ ॥

**मनःकल्पितनैवेद्यमपि तत्रैव—**

॥३॥ मनः कल्पितरूपं वा त्रिपुरायै निवेदयेत्[1] ।

**नैवेद्यार्पणे-तान्त्रिकमन्त्रोऽपि-तत्रैव—**

॥४॥ हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ॥ २२ ॥

---

१-अधस्थः -३०-३-३।३०-६ वि. द्रष्टव्यः-

पञ्चधा षड्सोपेतं गृहाण परमेश्वरि ।
विद्यान्ते परमेशानि **नैवेद्यमनुरीरितः** ॥ २३ ॥
॥५॥ परिषिच्य ततोदेवि नित्यहोमं समाचरेत् ॥ इति ॥

(३०-३-२ वि. सं. )

**३०-३।३ ॥ पुनरपि नैवेद्ये-पदार्थाः** ॥ य. आ. सू. १३० पत्रे-यथा—

पाद्मे—

॥ हविः शाल्योदनं दिव्यमाज्ययुक्तं च शर्कराम् ।
नैवेद्यं देवदेवाय यावकं पायसं तथा ।
नैवेद्यवस्त्वलाभे तु फलानि च निवेदयेत् ।
फलानामप्यलाभे तु तोयान्यपि निवेदयेत् ॥ इति ॥

( ३०-$\frac{३}{३}$ वि. सर्वः सं. )

**४ ॥ नैवेद्यभरणाय कीदृशं पात्रं, ग्राह्यं-तत्र प्रमाणम्** ॥ य. आ. सू. १३० पत्रे-यथा—

पाद्मे—॥ हैरण्यं राजतं कांस्यं ताम्रं मृन्मयमेव च ।
पालाशं पद्मपत्रं वा पात्रं-विष्णोरतिप्रियम् ॥ इति ॥

**५।१ ॥ नैवेद्यार्पणविधिकारिकाः** ॥ य. आ. सू. १३० पत्रे-ब्रह्मसंहितायां-यथा—

॥ तुलसीगन्धपुष्पैश्च सम्पूज्याऽन्नं हरेः प्रियम् ।
सम्प्रोक्ष्यार्घ्यजलेनैव संरक्ष्यास्त्रेण सर्वदा ॥
धेनुमुद्रां प्रदर्श्याथ ततोदेवं निवेदयेत् ।

॥ गौतमः—अथाऽमृतोपस्तरणमसि स्वाहार्पयेज्जलम् ।

॥ चन्द्रिकायाम्—**प्राणापानव्यानोदानसमानास्तारपूर्वकाः**
**चतुर्थ्याग्निवधूयुक्ताः प्राणमन्त्राः स्मृताइति—**

॥ भविष्ये—पानीयं वामृतीकृत्य परेशाय निवेदयेत् ।
मूलमन्त्रं (गायत्रीमन्त्रं) जपेदत्र ततोनारायणात्मकम् ॥
अष्टोत्तरशतं चैव अष्टाविंशतिमेव वा
क्षणं विमृश्य मतिमान् दद्यादाचमनं ततः ॥ इति ॥

## ५१२ ॥ पुनश्चापि-श्रीमहानैवेद्यार्पणविधिकारिका: ॥

**अत्र-प्रमाणं-श्रीमहानिर्वाणतन्त्रे-६ उल्लासे-१३४-पत्रे-८९ श्लोकतोयथा—**

॥ ततः सामान्यविधिना पुरतोमण्डलं लिखेत् ।
तस्योपरि न्यसेत् पात्रं नैवेद्यपरिपूरितम् ॥ ८९ ॥
प्रोक्षणञ्चावगुण्ठञ्च रक्षणञ्चामृतीकृतम् ।
मूलेन सप्तधामन्त्र्य अर्घ्याद्भिर्विनिवेदयेत् ॥ ९० ॥
मूलमेतत्तु सिद्धान्नं सर्वोपकरणान्वितम् ।
निवेदयामीष्टदेव्यै जुषाणेदं हविः शिवे ॥ ९१ ॥
ततः प्राणादिमुद्राभिः पञ्चभिः प्राशयेद्धविः ॥ ९२ ॥
वामे नैवेद्यमुद्राञ्च विकचोत्पलसन्निभाम् ।
दर्शयेन्मूलमन्त्रेण पानार्थं तीर्थपूरितम् ॥ ९३ ॥
कलशं विनिवेद्याथ पुनराचमनीयकम् ।
ततः श्रीपात्रसंस्थेनामृतेन तर्पयेत् त्रिधा ॥ ९४ ॥ इति ॥
(३०१५ वि. सर्वः स.)

**३०१६-नैवेद्यवस्तूनि-तदर्पणं-च ।** सटीकशारदा० ४-पटले-२९.८ पत्रे-१०८ श्लोकः ।

॥ स्वादुपदंशं विमलं पायसं सहशर्करम् ।
कदलीफलसंयुक्तं साज्यं मन्त्री निवेदयेत् ॥ इति ॥ १०८ ॥

॥ अत्र-टीका—

—मन्त्रीत्यनेनैतदुक्तं भवति-नैवेद्यम्—अस्त्रमन्त्रजप्तजलेन--सम्प्रोक्षयेत् ।

॥ शैवागमे तु—ततोमृत्युञ्जयेनैव वौषडन्तेन सप्तधा ।
जप्तैः सदर्भशङ्खस्थैः सिञ्चेत् तत्तोयबिन्दुभिः ॥ इति ॥

### ॥ नैवेद्यार्पणविधिः—

॥ ततश्चक्रमुद्रयाऽभिरक्ष्य-वायुबीजेन द्वादशवाराभिमन्त्रितजलेन-हविः--सम्प्रोक्ष्य तदुत्थ-वायुना तद्दोषं संशोष्य(ध्य)-दक्षिणकरतलेऽग्निबीजं विचिन्त्य-तत् पृष्ठलग्नं वामकरतलं कृत्वा-नैवेद्ये प्रदर्श्य-तदुत्थाग्निना तद्दोषं दग्ध्वा, वामकरतलेऽमृतबीजं विचिन्त्य, तत् पृष्ठलग्नं दक्षिणकरतलं कृत्वा, नैवेद्ये प्रदर्श्य, तदुत्थामृतधारया प्लावितं विभाव्य, मूलमन्त्रजप्त-जलेन सम्प्रोक्ष्य, तदखिलममृतात्मकं ध्यात्वा, तत् स्पृष्ट्वा मूलमन्त्रमष्टधाजप्त्वा, धेनु-

मुद्रां प्रदर्श्य--जलगन्धपुष्पैरभ्यर्च्य, देवतायै पुष्पाञ्जलिं-समर्प्य, तन्मुखात्तेजोनिर्गतमिति ध्यात्वा, वामाङ्गुष्ठेन मुख्यं नैवेद्यपात्रं स्पृष्ट्वा, दक्षिणकरेण जलं गृहीत्वा, स्वाहान्तं मूलमन्त्रम्

॥ [1]सत्पात्रसिद्धं सुहविर्विविधानेकभक्षणम् ।
निवेदयामि देवाय सानुगाय गृहाण तत् ॥

इति--श्लोकञ्च जपित्वा, साङ्गाय सपरिवाराय देवाय-नैवेद्यं समर्पयामि नमः, इति जलमुत्सृज्य, नैवेद्यमुद्रां-प्रदर्शयेत् । ततः सपुष्पाभ्यां हस्ताभ्यां, नैवेद्यपात्रं-त्रिःप्रोद्धरन्-

" निवेदयामि भवते जुषाणेदं हविर्हरे " इति जपेत् ।

( तत्र हरे इति पदस्थाने तत्तद्देवतानामोह्यम् )

यदाहुः—

॥ **नैवेद्यविधौ-कारिकाः**-तत्रैव—

॥ अस्त्रोक्षितं तदरिमुद्रिकयाऽभिरक्ष्य वायव्यतोयपरिशोषितमग्निदोष्णा ।
संदह्य, वामकरसौधरसाभिपूर्णं मन्त्रामृतीकृतमथाभिमृशन् प्रजप्यात् ॥
मनुमष्टशः सुरभिमुद्रिकया परिपूर्णमर्चयतु गन्धमुख्यैः ।
हरिमर्चयेदथ कृतप्रसराञ्जलिरास्यतोऽस्य विसरेच्च महः ॥
वीतिहोत्रदयितान्तमुच्चरन् मूलमन्त्रमथ निक्षिपेज्जलम् ।
अर्पयेत्तदमृतात्मकं हविर्दोर्युजा सकुसुमं समुद्धरन् ॥
निवेद्यार्पणमन्त्रोऽयं सर्व्वार्चासु निजाख्यया ॥ इति ॥

ततोवामकरेण ग्रासमुद्रां-दक्षिणकरेण प्राणादिमुद्राश्च-दर्शयन्-प्राणायस्वाहेत्यादि मन्त्रान्-जपेत् ।

॥ यदाहुः-

॥ **पञ्चप्राणादिमुद्रोद्धारः** ॥

॥ ग्रासमुद्रां वामदोष्णा विकचोत्पलसन्निभाम् ।
प्रदर्शयन् दक्षिणेन प्राणादीनाञ्च दर्शयेत् ॥
॥ [1]स्पृशेत् कनिष्ठोपकनिष्ठिके द्वे स्वाङ्गुष्ठमूर्ध्ना प्रथमेहमुद्रा ।
तथा परा तर्जनिमध्यमे स्यादनामिकामध्यमिके च मध्या ॥
अनामिकातर्जनिमध्यमा स्यात्तद्वच्चतुर्थी सकनिष्ठिकास्ताः ।
स्यात् पञ्चमी तद्वदिहोपदिष्टाः प्राणादिमुद्रानिजमन्त्रयुक्ताः ।

---

१. एतदादि सर्वनैवेद्यविधावनुक्तमपि घण्टावादनं विधेयमित्यत्र-प्रमाणमत्रैवानुगत ४७८-४७९. पत्रयोः १३-२८।८।१३-२८।९ विषये-च-द्रष्टव्यम् ॥

॥ पञ्चप्राणाहुत्यभिधास्तन्मन्त्राश्च ॥

॥ प्राणापानोदानव्यानसमानाः क्रमाच्चतुर्थ्या युक्ताः ।
ताराधारा वध्वा चेद्वाः कृष्णाध्वनस्तएते मनवः ॥

( इति सटीकशारदा० ४–पटले–२९८–पत्रे–१०९–श्लोकटीकायाम् )

**७ अत्र–प्रत्येकोपचारमध्ये–देवाय जलदानप्रमाणम् ॥**

सटीकशारदा० ४ पटले २९७ पत्रे–यथा—

॥ तत्र तत्र जलं दद्यादुपचारान्तरान्तरा ॥ इति ॥ १०९ ॥

८ तान्त्रिकोमहानैवेद्यविधिरस्मत्कृतश्रीबहुचरचिन्तामण्यपरनामक**श्रीबालातन्त्र-चन्द्रिकानामकपुस्तके**–२९४ पत्रे–यथा—

नैवेद्यम्, देवतायाः यन्त्रराजस्य वा समीपे–दक्षिणभागे–जलेन चन्दनेन वा चतुरस्रं-अथवा केषांश्चिन्मते–षट्कोणवृत्तचतुरस्रं–अथवा केवलषट्कोणमथवा–त्रिकोणवृत्तं–एषा-मन्यतमं–मण्डलं विधाय ।

॥ ॐ आधारशक्तये नमः–इति तत्र–चन्दनपुष्पाणि–समर्प्य ।

॥ ॐ अस्त्राय फट्–इत्यनेन शुद्धजलक्षालितमाधारपात्रं–तत्र–मूलमन्त्रेण–निधाय ।

॥ पुनश्च मूलमन्त्रं–तथा च–ॐ श्रीनैवेद्यपात्राधाराय नमः–इत्युक्त्वा तदुपरिचन्दन पुष्पाणि समर्प्य ।

॥ तत्रदेवतामात्रो–पयुक्तस्वर्णादिपात्रं–निधाय ।

तस्मिन्–देवतार्थपाचितान्नादि–परिवेष्य ( अथवा परिवेषितान्नपात्रं तत्र–निधाय । )

मूलमन्त्रं–तथा च–ॐ श्रीदेवतानैवेद्यद्रव्याय नमः–इत्युक्त्वा–नैवेद्ये–चन्दनपुष्पाणि समर्प्य–नमस्कृत्य ।

॥ प्रोक्षणीपात्रात्–अथवा–तदभावे सामान्यार्घजलेन–ॐ ह्रीं नमः–इति–अथवा स्वेष्टदेवतामूलमन्त्रेण, नैवेद्यं दक्षिणहस्तेन–सम्प्रोक्ष्य ।

**नैवेद्यस्य शोधनम्** ।– नैवेद्यस्योपरि धेनु[१]चक्रमुद्रे–प्रदर्श्य—

**अमृतीकरणं च** ॥ १२ वारम् । ॐ यं नमः–इति जपित्वा–प्रोक्षणीपात्रजलेन-अथवा सामान्यार्घजलेन–सम्प्रोक्ष्य–तदेव बीजमावर्तयन् अनामिकाग्रेण नैवेद्यपात्रं स्पृशन्–अभिमन्त्रयेत् निर्दोषतां-च-भावयेत् ।

---

१. एतत्प्राणाहुत्यादिपञ्चमुद्रोध्धारइतरथा–आगामि ४९७–पत्रेस्ति–

१. अत्रोक्तधेनुमुद्रोद्धाराय तथा च चक्रमुद्रोद्धाराय–अत्रैव द्वि. प. १५-८/१-२ १५-७/९-१ विषययोश्च–दृश्यम् ।

पुनश्च तथैव—ॐ रं नमः—इत्यपि द्वादशवारं जपित्वा—नैवेद्यस्य दोषाः—भस्मीभूताः—इति विभाव्य, नैवेद्यस्य अतिपवित्रतां—भावयेत् ।

ततः—स्वदक्षिणकरे—अमृतबीजं—भावयित्वा—अधोमुखं तं हस्तं—नैवेद्योपरि धृत्वा तदुपरि—तथैव वामहस्तमपि धृत्वा । ॐ वम् । इत्यमृतबीजं—दशवारमभिधाय

तद्धस्तान्नैवेद्ये—पतन्तीममृतधारां भावयित्वा—नैवेद्यममृताप्लावितममृतमयं जातमिति—भावयेत् ।

ततश्च—नैवेद्योपरि दक्षिणहस्तं निधाय—स्वेष्टदेवतामूलमन्त्रमष्टवारं—जपित्वा तेनैव सामान्यार्घजलेन—अथवा—प्रोक्षणीपात्रजलेन पुनश्च नैवेद्यं सम्प्रोक्ष्य ।

ततश्च दक्षिणहस्ते सामान्यार्घजलमादाय वामहस्तं नैवेद्योपरि—धृत्वा—अथवा केवलमङ्गुष्ठेन संस्पृश्य ।

ॐ तद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ १ ॥ य. सं. अ. ६-५ मन्त्रः

ॐ तद्विप्रासोविपन्यवोजागृवाꣳसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥ २ ॥ य. सं. अ. ३४-४४ मन्त्रः

एतौ मन्त्रावुक्त्वा—हस्तस्थजलेन—नैवेद्यं सम्प्रोक्षेत् । पुनरपि

ॐ वम्—इत्युक्त्वा—धेनुमुद्रया अमृतमयं भावयेत् ।

ॐ अस्त्राय फट्—इत्युक्त्वा—दक्षहस्तानामिकामध्यमे—वामहस्ते—त्रिरास्फालयेत् ।

ततः विशेषार्घजले एकं पुष्पमाप्लाव्य नैवेद्येर्पयेत् ।

॥ इति **श्रीमहानैवेद्यार्पणात् प्रागूतनोविधिः**[1] ॥

अथ—**श्रीमहानैवेद्यार्पणम्**—यथा—

इष्टदेवतायै पुष्पाञ्जलिं दत्वा—नैवेद्यपात्रमात्रमुथाप्य श्रियै—प्रदर्श्य—श्रीमुखतेजस्तत्र पतितमिति मत्वा—वामहस्ताङ्गुष्ठेन नैवेद्यं संस्पृश्य । दक्षिणहस्तेन सामान्यार्घजलमादाय—मूलमन्त्रं -पठित्वा —

१ ॐ सत्पात्रे सद्धविः सौख्यं विविधानेकभक्षणम् ।
निवेदयामि ते देव्यै सानुगायै जुषाण तत् ॥ १ ॥

---

अत्र ज्ञेयम्—

१. अस्मान्महानैवेद्याद्बटुकादिपञ्चदेवतानां, मुख्यदेवतायाः, सर्वभूतानां-च, बलिकृते-सर्वान्नादि किञ्चित् किञ्चित् पृथक् उद्धृत्य-एकत्र-स्थापयेत् । अथवा महानैवेद्यान्नपरिवेषणात् प्रागेव तान् बलीन्-पृथगेवोध्धृत्यैकत्र-स्थापयेदिति ज्ञेयम् ।

२ हेमपात्रस्थितं दिव्यं परमान्नं सुसंस्कृतम् ।
नैवेद्यं षड्रसोपेतं गृहाण परमेश्वरि ॥ २ ॥

३ ॐ सौरभ्यं शरदिन्दुशुभ्रमनिशं शाल्योदनं व्यञ्जनै ।
र्युक्तं हिङ्गुमरीचचन्द्रसुघृतैः सच्छार्करं पायसम् ॥
पक्वान्नं मनुना सहैव बटुकं सौवर्णपात्रस्थितं ।
नैवेद्यं तु निवेदयामि मनसा मातस्त्वया गृह्यताम् ॥ ३ ॥

४ ॐ सितमौक्तिकलड्डुकव्रजैर्मृदुपूपामृदुलाश्च पूरिकाः ।
परमान्नमिदं च पार्वति प्रणयेन प्रतिपादयामि ते ॥४॥

५ ॐ सद्यो दुग्धमिदं करौष्ण्यशमनं गव्यं तथा माहिषम् ।
सावर्तं नवनीतसुन्दरदधि क्षीराज्यमध्वासवम् ॥
भक्ष्यं चापि चतुर्विधं चरुयुतं लेह्यं तथा चर्वणम् ।
पेयं स्वाद्यमिदं निवेदितमुमे त्वत्प्रीतिदं गृह्यताम् ॥५॥

६ ॐ अग्रे ते परिवेश्य भक्ष्यमखिलं सौवर्णपात्रव्रजे ।
दत्वा तत्वचतुष्टयं च कलयन् यन्त्रावशिष्टं मुदा ॥
चञ्चत्काञ्चनभाजनेषु परितः पात्रेषु संस्थापितम् ।
शक्तिभ्योविनिवेदयामि सकलं पूर्वोक्तमीशप्रिये ॥६॥

७ ॐ वामेन स्वर्णपात्रीमनुपमपरमान्नेन पूर्णां दधाना-
मन्येन स्वर्णदर्वीं निजजनहृदयाभीष्टदां धारयन्तीम् ।
सिन्दूरारक्तवस्त्रां विविधमणिलसद्भूषणां मेचकाङ्गीम्
तिष्ठन्तीमग्रतस्ते मधुमदमुदिताम**न्नपूर्णां नमामि** ॥७॥

उपर्युक्तषट्श्लोकेभ्यएकतमं कच्चनापि श्लोकमन्त्यश्लोकं-च पठित्वा-अथवा समयश्चेत् सर्वानपि पठित्वा

॥ ॐ ऐं० साङ्गायै सपरिवारायै सायुधायै सवाहनायै सशक्तिकायै ( श्रीअमुकेश्वर शक्तिसहितायै )

श्रीअमुकेष्टदेवतायै नमः-यथामिलितं-श्रीपक्वान्नमहानैवेद्यं-समर्पयामि नमः-इत्युक्त्वा पूर्वोपात्तसामान्यार्घजलं-श्रियै-समर्प्य ।

पुनस्सामान्यार्घ्यजलं गृहीत्वा । ॐ अमृतोपस्तरणमसि स्वाहा-इत्युक्त्वा-देव्यावाम हस्ते-अथवा-श्रीयन्त्रोपरि-तज्जलमर्पयेत् ॥

॥ ततोवामहस्तं-पृथक्पृथगङ्गुलं कमलसदृशं कृत्वा-दक्षिणहस्तेन-ग्रासमुद्रां प्रदर्श्य ॥

॥ ॐ ऐंप्राणायस्वाहा. २, ॐ क्लीं अपानायस्वाहा. ३, ॐ सौः व्यानायस्वाहा. ४, ॐ ऐं—क्लीं उदानायस्वाहा. ५. ॐ ऐं क्लीं सौः समानायस्वाहा.

॥ अत्र केचित्—प्राणाहुतिविषये—प्रत्येकाहुतौ–मुद्रां प्रदर्शयन्ति—सा यथा

(१) ॐ प्राणाय स्वाहा—इत्यङ्गुष्ठतर्जनीमध्यमाभिः

(२) ॐ अपानाय स्वाहा—इत्यङ्गुष्ठमध्यमानामिकाभिः

(३) ॐ व्यानाय स्वाहा—इत्यङ्गुष्ठानामिकाकनिष्ठिकाभिः

(४) ॐ उदानाय स्वाहा—इत्यङ्गुष्ठतर्जनीकनिष्ठिकाभिः

(५) ॐ समानाय स्वाहा—इति सर्वाभिः ।

॥ एवं आनन्दाश्रमसंस्कृतग्रन्थावलि ७३ ग्रन्थाङ्के पुस्तके—श्रीमच्छङ्कराचार्य, धोरे—इत्युपाभ्यामपि विरचितश्रीगायत्रीपुरश्चरणपद्धतौ-४५ पत्रे तथा ५२ पत्रे-च—

॥ अन्यत्रापि, शारदातिलकादिग्रन्थेषु—नैवेद्यावसरे—दीयमानामुद्रावर्तन्ते ताः अपेक्ष्यन्ते चेत्—ततोग्राह्याः ॥ (अत्र ग्रन्थेऽपि च द्वि. प. शि. १५ वि. द्रष्टव्यः) ॥

॥ बहुषु ग्रन्थेषु तद्ग्रहणे-तल्लेखाभावोऽपि विभाव्यताम्—

अतएव—केषांचित् ता—अचिकीर्षिताइति भाति—

इमाः ५—प्राणाहुतयएकवारमेव देयाः ।

॥ एतत्पञ्चप्राणाहुतीनां द्विरावर्तने, न, स्पष्टतरा प्रमाणोपलब्धिरिति, सकृदेवात्र, तानिरूपिताः ॥ इति ज्ञेयम् ॥

**॥ नैवेद्यमध्ये, इष्टदेवतायास्तर्पणप्रयोगोयथा—॥**

पूर्ववत् खण्डादिना विशेषार्धजलमादाय

(१) ॐ ऐं आत्मतत्त्वव्यापिनी श्रीत्रिपुरसुन्दरी (अमुकी) देवता—तृप्यतु

(२) ॐ क्लीं विद्यातत्त्व० ,, ,,

(३) ॐ सौः शिवतत्त्व० ,, ,,

(४) ॐ ऐं क्लीं सौः सर्वतत्व० ,, ,,

॥ एवं श्रीभगवतीं तर्पयित्वा—भुञ्जानां च तां ध्यात्वा—उशीरचन्दादिसुवासितसलिलं शुद्धपात्रे निहितं गृहीत्वा—नैवेद्यपार्श्वे संस्थाप्य

॥ ॐ नमस्ते देवदेवेशि सर्वतृप्तिकरं परम् ॥
अखण्डानन्दसम्पूर्ण गृहाण जलमुत्तमम् ॥ १ ॥

ॐ ऐं श्रीअमुकदेवतायै नमः–पानार्थं–जलं समर्पयामि–एवमुक्त्वा–सामान्यार्घजलं किंचित् देवतायै समर्प्य । श्रीभगवत्या तज्जलं प्राशितमिति भावयित्वा–आत्मदेवतयोर्मध्ये अन्तःपटं धृत्वा–शिवादिदेवैः सह-आनन्दमूर्तिः श्रीजगदम्बिका भगवती भुङ्क्ते, तां तस्यादूतिकाः व्यजनं कुर्वते-तथा भावयित्वा

॥ सर्वान् देवान् हासयन्ती सुवर्णपात्रपरिवेषितमहानैवेद्यं समास्वादतीत्येवं स्वेष्ट-देवतां ध्यायन् अधस्तनौ-श्लोकौ-च-पठेत्

॥ १. ॐ ब्रह्मेशाद्यैस्सरससमभितः सूपविष्टैः समन्तात् ।
सिञ्जद्वालव्यजननिकरैर्वीज्यमाना सखीभिः ॥
नर्मक्रीडाप्रहसनपरा-पङ्क्तिभोक्तॄन् हसन्ती ।
भुङ्क्ते पात्रे कनकघटिते षड्रसान् देवदेवी ॥ १ ॥

॥ २. ॐ शालीभक्तं सुपक्वं शिशिरकरसितं पायसापूपसूपं
लेह्यं पेयं च चोष्यं सितममृतफलं घारिकाद्यं सुखाद्यम् ।
आज्यं प्राज्यं सुभोज्यं नयनरुचिकरं राजिकैलामरीचैः
स्वादीयैः शाकपाकैः परिकरममृताहारजोषं जुषस्व ॥ २ ॥

१३–३०।८ ॥ एवं-सम्प्रार्थ्य–भुञ्जानामेव-देवतां–ध्यात्वा–अष्टोत्तरशतमनवकाशे-च-दशवारं-वा-मूलं जपेत्[1] ॥ अत्राग्रतनः– १३-३०।२५ वि. दृश्यः–इति ॥

॥ ततोमालां-स्वमूर्ध्नि संस्थाप्य–ॐ ऐं हृदयायनमः-इत्यादि-तत्तद्देवतामूलेन-षडङ्ग-न्यासान्-कृत्वा–

॥ ॐ गुह्यातिगुह्यगोप्त्री-त्वं गृहाणास्मत्कृतं जपम्
सिद्धिर्भवतु-मे-देवि त्वत्प्रसादान्महेश्वरि ॥

॥ इत्युक्त्वा सामान्यार्घजलमादाय

ॐ अनेन यथाशक्ति मूलमन्त्रजपकर्मणा–श्रीभगवती ( अमुकी ) देवता प्रीयता-मित्युक्त्वा-देव्यै समर्प्य–योनिमुद्रया प्रणमेत् ॥ ( १३-३०।८ वि. सं. )

**३०।९ एतदवधिकनैवेद्यविधिरपूर्णएवात्र–समापनीयः ।**

पुरस्तनोपूर्णनैवेद्यविधिरत्रैव द्वि. परिशिष्टे ३०-२५ अङ्केऽस्ति–ततः पूरयितव्यः–इति ज्ञेयम् ॥ ( इत्येकः प्रकारः ३०–९ वि. सं. )

---

१–अयं जपविधिरग्रतनहोमबलग्रपूर्णनैवेद्यताम्बूलछत्रचामराद्यर्पणानन्तरं–विधेयः इति–सटीकशारदा० ४-२दले-३०५ पत्रे-१२४-श्लोकः प्रमाणमस्तीत्यवधीयताम् इति-प. क. सू. द्वितीयावृत्तिकारः–

**१३-३० नैवेद्यवल्यावरणपूजाङ्गंहोमानां–प्रथमं-किं-करणीयमित्या**
**१०**

**शङ्कायां-समादधे-किञ्चित् ॥**

**१ महानिर्वाणतन्त्रे**-६ उल्लासे–८९ श्लोकतः-१७६–श्लोकान्तग्रन्थे, श्रीशिवो-भगवान–आदौ नैवेद्यं-पश्चात् बलिः-पश्चात् होमः-ततोजपः-इत्यनुक्रममाह ।

२ ॥ सटीकशारदायामपि–४ पटले–२९७ पत्रे-१०९-श्लोकतः–१२५ श्लोकैः सहोमनैवेद्यं-बलिर्जपः–एवमेवानुक्रमोऽभ्यधायि ॥

३ श्रीपरशुरामकल्पसूत्रे-च-श्रीमता भगवता–२ खण्डे-१० सूत्रे-मूले-८३ पत्रे–

॥ यद्यग्निकार्यसम्पत्तिरित्यादिना–होमानन्तरमेव बलिदानमुक्तम् ॥

अर्थादादौ नैवेद्यं-ततोहोमोवशिष्टान्नादिना च बलिरित्यनुक्रमउपात्तः ॥

**॥ पूजाङ्गहोमस्य–कृताकृतत्वम् ॥**

४ अत्रैव पत्रे प. क. सू. वृत्तिकारः-यथाह—

॥ यदीत्यनेन होमस्य कृताकृतत्वं सूचितम् ॥ इत्याह ॥

५ श्रीललितानवावरणपूजायाम् ५–खण्डे १७ सूत्रभाष्ये-च

॥ एषएव वृत्तिकारः एतदुत्तरं निबन्धे, होमः पाक्षिकउक्तः–सनिर्मूलः यद्यग्निकार्यसम्पत्तिः इति सूत्रस्य–गणपतिप्रकरणस्थस्य अन्यत्र प्रापकप्रमाणाभावात् –इति ग्रन्थेन-**होमस्य पाक्षिकत्वमपि खण्डयामासेति**-वेत्तव्यमवलोकयितृभिः ॥ इति ॥ (३०।१० वि. सं.)

**३०।११–उपरि १०–विषये०-चिह्नितेन–अङ्गशब्देन किमभिप्रेतम् कोऽर्थो वा-अङ्गशब्दस्य ? तत्र-तन्त्रोदितमेवानूद्यते-किञ्चित् ॥**

१ ॥ **अङ्गलक्षणम्** ॥ मीमांसाग्रन्थे–यथाः–

**॥ मुख्यफलाजनकत्वे सति–मुख्यफलव्यापारजनकमङ्गमिति ॥**

**२ ॥ पुरश्चरणे-इमान्यङ्गानि दशसङ्ख्यानि, तेभ्यः पञ्च–**

सप्तटीकायुक्सप्तशती १–पत्रे-यथाः–

॥ [1]पटलं [2]पद्धति [3]र्वर्म तथा [4]नामसहस्रकम् ॥ ४३ ॥

[5]स्तोत्राणि चेति **पञ्चाङ्गं देवतोपासने स्मृतम्** ॥ इति ॥

**॥ पञ्चाङ्गानां-देवताङ्गत्वेन घटनम्—**

कवचं देवतागात्रं पटलं देवताशिरः ॥ ४४ ॥

पद्धतिर्देवहस्तौ तु मुखं साहस्रकं स्मृतम् ।

स्तोत्राणि देवतापादौ **पञ्चाङ्गं पञ्चभिः स्मृतम्** ॥ ४५ ॥

इति—पञ्चपाठ्यविषयकान्यङ्गानि—॥ इति ॥

**॥ अपराण्यपि पञ्च-तत्रैव-यथा-**

॥ १जपो२होमस्३तर्पणं च ४मार्जनं ५विप्रभोजनम् ।

आराधनं पञ्चविधं देवतानां प्रकीर्तितम् ॥ ४६ ॥

**पञ्चाङ्गैः सहितं त्वेतद्दशाङ्गं कथ्यते बुधैः** ॥

इति-क्रियात्मकान्यपि पञ्च-इत्येवं-१० अङ्गानि—जातानि-तानि च-पुरश्चरणे नियतानि ॥ इति ॥

३ ॥ तथैव च-सटीकशारदायां-१६ पटले-६६० पत्रे-टीकायामपि-यथा—

॥ दशाङ्गोपासनं भक्तया पुरश्चरणमुच्यते ।

॥ इत्यपि—दशाङ्गपुरश्चरणेऽपरं प्रमाणम्, परं चैतानि पुरश्चरणक्रियामधिकृत्यैव ज्ञेयानि—इति ॥

**४ ॥ इतोऽपराणि-जपादिपञ्चाङ्गानि—तत्रैव-शारदायां-यथा—**

॥ १जपो२होमस्३तर्पणं च ४पूजा ५ब्राह्मणभोजनम् ॥

**पूर्वपूर्वदशांशेन कुर्यात् पञ्चाङ्गसयुतम्** ॥ इति ॥

( १३–३०।११-४ वि. सं.)

**३०–११ तन्त्रैव ॥ आवरणपूजाङ्गहोमोऽप्येकं पूजाङ्गमेव—तत्र ॥**
५–१

॥ अर्थात्-पुरश्चरणमन्तरापि-तदतिदेशेन-केवलश्रीष्टदेवतासावरणार्चनकर्मण्यपि-तन्त्रशास्त्रोक्तावरणपूजाङ्गहोमोऽप्येकमङ्गमेवेत्यादृतं-प्राचीनशिष्टैस्तदनवद्यमेव ॥

॥ तत्र प्रमाणम्, श्रीतन्त्रकर्ता, श्रीमता, गुरुगुरुणा श्रीशिवेनैव-उक्तम् ॥

॥ महानिर्वाणतन्त्रे-६ उल्लासे-महाबलिदानानन्तरं-यथा ॥

॥ ततोहोमं प्रकुर्वीत०-इति ११९ श्लोकतः

होमकर्म-समाप्यैव—साधकोजपमाचरेदित्यन्तेन १६५ श्लोकान्तग्रन्थेन—॥ इति ॥

२ ॥ अन्यत्र-चैतत्—श्रीपरशुरामकल्पसूत्रे-श्रीमद्भगवता-२ खण्डे-१० सूत्रे मूले-८३ पत्रे-यद्यग्निकार्यमित्यादिनापि-पूजाङ्गहोमः

**बलेः पूर्वं**-प्रत्यपादयेवेति-किं बहुना पल्लवितेन ॥ इति ॥

॥ अर्थादावरणपूजायामपि तदङ्गत्वेन-विधीयमानहोमोऽपि

तदङ्गमेवेत्यादृतमास्तां सुधियां धियामिति ॥

प. क. सू. द्वितीयावृत्तिकारः ॥ (५-वि. तथा-च-३०।११ वि. सं.)

३०।१२– ॥ तस्मात्तदकरणे-मन्त्रसिध्यभावाद्यपायोदर्शितः-श्रीभगवता शिवेनैव-बहुतन्त्रग्रन्थेषु—शारदायाञ्चापि-निम्नस्थग्रन्थलेखेन-—तस्मादयमावरणपूजाङ्गहोमविधिरवश्यं-कार्यस्तदभावे—तत्तद्देवतार्चनपरत्वेनोक्तपञ्चाङ्गगतकहोमकर्माकरणमपि न्यूनत्वसम्पादकं स्यादेवेत्यलम् ॥ तद्यथा:–

**१–॥ एकाङ्गकरणाभावे-ब्राह्मणभोजनाभावे-च, कर्मनिष्फलता-विप्रभोजनकर्मरहस्यं-च ॥**

सटीकशारदा–२०–पटले-६६०–६६१ पत्रयोर्भाष्ये यथा–

अन्यत्रापि—

॥ अङ्गहीनं भवेद्यद्यत् तत्तन्नेष्टार्थसाधकम् ।
सर्वथा भोजयेद्विप्रान् कृतसाङ्गत्वसिद्धये ॥
**विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेत् सदा ।**
न्यूनातिरिक्तकर्माणि न फलन्ति मनोरथान् ॥
तान्येव पूर्णतां यान्ति समस्तानि कृतानि च ।
अतोयत्नेन विदुषोभोजयेत् सर्वकर्मसु ॥
**यानि यान्यपि कर्माणि हीयन्ते द्विजभोजनैः ।**
**निरर्थकानि तानि स्युर्बीजान्यूषरगाणि च** ॥ इति ॥

२–तत्रैव–**कुलप्रकाशकतन्त्रेऽपि**-यथा—

॥ एकमङ्गं विहीयेत मन्त्रान्नेष्टमवाप्नुयात् ।
अन्नैश्चतुर्विधैर्देवि पदार्थैः षड्रसान्वितैः ॥
**सुभोजितेषु विप्रेषु सर्वं हि सफलं भवेत्** ॥ इति ॥

(३०।१२ वि. सं.)

१३–३०।१३ ॥ एवमावरणपूजाङ्गहोमाकरणजन्यापायं—दर्शयित्वा—कदाचिद्दैवोपघातादिना तत्करणासामर्थ्ये-**तत्प्रतिनिधिमाह** ॥ तद्यथा—

॥ **आवरणपूजाङ्गहोमाशक्तौ** ॥

१–आनन्दाश्रमसंस्कृतग्रन्थावलि १३ अङ्कमुद्रितमीमच्छङ्कराचार्यविरचितगायत्री-पुरश्चरणपद्धतौ-५२ पत्रे-यथा:—

तत्रैव-रुद्रयामले—

**॥ होमाशक्तौ जपं कुर्याद्धोमसङ्ख्याचतुर्गुणम् ।**
**षड्गुणं चाष्टगुणितं यथासङ्ख्यं द्विजातयः ॥**

साङ्गतादि विना देवि जपहोमादि निष्फलम् ।

तस्मात् कुर्यात् प्रयत्नेन देवीपूजनमादरात् ॥ इति ॥

२–**ब्रह्मसंहितायाम्**—

॥ अशक्तावुक्तहोमस्तु ( स्य ) जपस्तद्द्विगुणोभवेत् ॥

३–सटीकशारदा० १६ पटले–६६० पत्रे-५३ श्लोकटीकायां-यथाः—

मन्त्रतन्त्रप्रकाशे-नारायणाष्टाक्षरे-यथाः–

॥ यद्यदङ्गं विहीयेत तत्सङ्ख्याद्विगुणोजपः ।

कर्तव्यश्चाङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः ॥ इति ॥

४–तत्रैव–॥ असम्भवे तु होमस्य होमात्–स्याद्द्विगुणोजपः ॥ इति ॥

५–अन्यत्रापि ॥ **होमाभावकजपे वर्णपरत्वेन द्विगुणत्रिगुणादिर्जपः** ॥

॥ होमकर्मण्यशक्तानां विप्राणां द्विगुणोजपः ।

इतरेषां तु वर्णानां त्रिगुणादिः समीरितः ॥ इति ॥ सटीकशारदायां-तत्रैव

६–सटीकशारदातिलके १५ पटले-६६० पत्रे-कुलप्रकाशतन्त्रेऽपि–

॥ यद्यदङ्गं विहीयेत तत्सङ्ख्याद्विगुणं जपम् ।

कुर्वीत त्रिचतुःपञ्चसङ्ख्या साधकः प्रिये ॥

कुर्वीत साङ्गसिध्यर्थं तदशक्तेन भक्तितः ।

॥ **एकमङ्गं विहीयेत मन्त्रान्नेष्टमवाप्नुयात्** ॥ इति ॥

७–तत्रैव-सटीकशारदा० ६६१ पत्रे-१६ पटले–वर्णपरत्वेन-स्त्रीशूद्रयोश्च

होमाशक्तौ–तदर्थकजपसङ्ख्या–उक्ता-यथाः–

अन्यत्र-विशेषः–

॥ अशक्तानां होमे निगमरसनागेन्द्रगुणितो

जपः कार्यश्चेति द्विजनृपविशामाहुरपरे ।

सहोमश्चेदेषां समइह जपोहोमरहितो

यउक्तोवर्णानां सखलु विहितस्तच्चलदशाम् ॥ इति ॥

॥ यं वर्णमाश्रितोयः शूद्रः सच तन्नतभ्रुवां विहितम् ।

विदधीत जपं विधिवच्छ्रद्धावान् भक्तिभारनम्रतनुः ॥ इति ॥

( १३।३०–१ वि. सर्वः सं. )

## १३–नैवेद्यमध्ये–होमविधिप्रमाणकारिका: ॥

३०-२

१–आनन्दाश्रमसंस्कृतग्रन्थावलि-७३-अङ्गमुद्रितश्रीमच्छङ्कराचार्यविरचित **श्री. गा**

**पु. पद्धतौ**-४६ पत्रे–

**ब्रह्मेशाद्यैरित्येत**च्छ्लोकपठनान्तं यावत्, श्रीमुख्यदेवतां भुञ्जानां ध्यायन् अत्रावसरे नैवेद्यपूजाङ्गहोमं कुर्यात्-तत्र प्रमाणम्-वसिष्ठसंहितायाम्-यथाः—

॥ भोजनावसरे मन्त्री वैश्वदेवं समाचरेत् ।
दक्षिणे स्थण्डिलं कृत्वा तत्राऽऽधाय हुताशनम् ॥
संस्कृत्य विधिना विद्वान् वैश्वदेवं समाचरेत् ।
तत्र सम्पूज्य गन्धाद्यैर्गायत्रीमुक्तविग्रहाम् ॥
सप्तव्याहृतिभिर्हुत्वा गन्धाद्यैः पुनरर्चयेत् ।
देवतां योजयेत् पीठमूर्तौ वह्निं विसर्जयेत् ॥
**अवशिष्टेन हविषा विकिरेत् परितोबलिम् ।**
देवतायाः पार्षदेभ्योगन्धपुष्पाक्षतान्वितम् ॥ इति ॥

**२-नित्यहोमे-स्थण्डिललक्षणं ।** तत्रैव-यथा-

॥ नित्यं नैमित्तिकं होमं स्थण्डिले वा समाचरेत् ।
हस्तमात्रं हि तत् कुर्याद्वालुकाभिः सुशोभनम् ॥
अङ्गुलोत्सेधसंयुक्तं **चतुरस्रं समन्ततः** ।
॥ सर्पिषा वा तिलैर्वाऽपि भक्तेन पायसेन वा ॥
**जुहुयात् साधकश्रेष्ठश्चतुर्विंशतिसङ्ख्यया** ॥ इति ॥

**३-स्वल्पोनित्यहोमविधिरपि**-ज्ञानार्णवे-१६ पटले-७६ पत्रे-२१६-श्लोकतोयथा—

॥ [1]सङ्कल्प्य परमेशान्यै नित्यहोमविधिं चरेत् ।
मूलेन प्राणसहिताआहुतीः पञ्च होमयेत् ॥ २१६ ॥
षडाहुर्ताः षडाङ्गानां **नित्यहोमः प्रकीर्तितः** ॥ इति ॥

**४-आवरणपूजाङ्गहोमबलिविधौ-कारिकाः**-सटीकशारदा० ४ पटले-११८ श्लोकतः ३०४ पत्रे-यथा—

**॥ होमविधौ कर्तव्यम् ॥**

॥ एवं सम्पूज्य विधिवन्निवेद्यान्तं ततोगुरुः ।
दक्षिणे स्थण्डिलं कृत्वा तत्राऽऽधाय हुताशनम् ॥ ११८ ॥
संस्कृत्य विधिवद्विद्वान् वैश्वदेवं समाचरेत् ।

---

१. अत्र-सङ्कल्पयेत्यनेन-महानैवेद्यमिति पूर्वग्रन्थानुसन्धानमनुसंधेयम् ॥

तत्र सम्पूज्य गन्धाद्यैर्देवतामुक्तविग्रहाम् ॥ ११९ ॥
तारव्याहृतिभिर्हुत्वा मूलमन्त्रेण मन्त्रवित् ।

**॥ पूजाङ्गहोमे २५ आहुतिप्रमाणम् ॥**

॥ **सर्पिष्मता पायसेन पञ्चविंशतिसङ्ख्यया** ॥ १२० ॥
हुत्वा व्याहृतिभिर्भूयोगन्धाद्यैः पुनरर्चयेत् ।
तां योजयित्वा पीठस्थमूर्त्तौ वह्निं विसर्जयेत ॥ १२१ ॥

**॥ होमावशिष्टान्नेन-बलिदानप्रमाणम् ॥**

अवशिष्टेन हविषा विकिरेत् परितोबलिम् ।
देवतायाः पार्षदेभ्योगन्धपुष्पाक्षतान्वितम् ॥ १२२ ॥
॥ ततोनिवेद्यमुद्धृत्य शोधयित्वा जलं पुनः ।
पञ्चोपचारैः सम्पूज्य दर्शयेच्छत्रचामरे ॥ १२३ ॥

**॥ बलिताम्बूलादि दत्वा जपः कार्यः ॥**

॥ कर्पूरशकलोन्मिश्रं ताम्बूलञ्च निवेदयेत् ।
सहस्रावृत्य संजप्य मूलमन्त्रमनन्यधीः ।
तज्जप्तं सर्वसम्पत्यै देवतायै समर्पयेत् ॥ १२४ ॥

**५-सटीकमहानिर्वाणतन्त्रस्थावरणपूजाङ्गहोमकारिकाः--श्रीशिवोक्ताः**-६ उल्लासे-१३९ पत्रे-११९ श्लोकतोयथा—

॥ ततोहोमं प्रकुर्वीत तद्विधानं शृणु प्रिये ॥ ११९ ॥
स्वदक्षिणे वालुकाभिर्मण्डलं **चतुरस्रकम्** ।
॥ चतुर्हस्तपरिमितं कृत्वा मूलेन वीक्षणम् ।
अस्त्रेण ताडयित्वा च तेनैव प्रोक्षणं चरेत् ॥ १२० ॥
कुर्च्चबीजेनावगुण्ठय देवतानामपूर्वकम् ।
स्थण्डिलाय नमः-इति यजेत् साधकसत्तमः ॥ १२१ ॥
॥ प्रागग्राउदगग्राश्च रेखाः प्रादेशसम्मिताः ।
तिस्रस्तिस्रोविधातव्यास्तत्र सम्पूजयेदिमान् ॥ १२२ ॥
प्रागग्रासु च रेखासु मुकुन्देशपुरन्दरान् ।
ब्रह्मवैवस्वतेन्दूंश्च उत्तराग्रासु पूजयेत् ॥ १२३ ॥
॥ ततः स्थण्डिलमध्ये तु हसौः गर्भ-त्रिकोणकम् ॥
षट्कोणं तद्बहिर्वृत्तं ततोऽष्टदलपङ्कजम् ॥

भूपुरं तद्बहिर्विद्वान् विलिखेद्यन्त्रमुत्तमम् ॥ १२४ ॥
मूलेन पुष्पाञ्जलिना सम्पूज्य प्रणवेन तु ।
होमद्रव्याणि सम्प्रोक्ष्य कर्णिकायां यजेत् सुधीः ।
मायामाधारशक्त्यादीन् प्रत्येकं वा प्रपूजयेत् ॥ १२५ ॥
अग्न्यादिकोणे धर्मञ्च ज्ञानं वैराग्यमेव च ।
ऐश्वर्यं पूजयित्वा तु पूर्वादिषु दिशां क्रमात् ॥ १२६ ॥
अधर्ममज्ञानमिति अवैराग्यमनन्तरम् ।
अनैश्वर्यं यजेन्मन्त्री मध्येऽनन्तञ्च पद्मकम् ॥ १२७ ॥
कलासहितसूर्यस्य तथा सोमस्य मण्डलम् ।
प्रागादिकेशरेष्वेषु मध्ये चैताः प्रपूजयेत् ॥ १२८ ॥
पीताश्वेतारुणा कृष्णा धूम्रा तीव्रा तथैव च ।
स्फुलिङ्गिनी च रुचिरा ज्वलिनीति तथा क्रमात् ॥ १२९ ॥
प्रणवादिनमोऽन्तेन सर्वत्र पूजनं चरेत् ।
॥ रं वहनेरासनायेति नमोऽन्तेन प्रपूजयेत् ॥ १३० ॥
॥ वागीश्वरीमृतुस्नातां नीलेन्दीवरलोचनाम् ।
वागी श्वरेण संयुक्तां ध्यात्वा मन्त्री तदासने ॥ १३१ ॥
॥ मायया तौ प्रपूज्याथ **विधिवद्वह्निमानयेत्** ।
मूलेन वीक्षणं कृत्वा फटावाहनमाचरेत् ॥ १३२ ॥
प्रणवं च ततोवह्नेर्योगपीठाय हृन्मनुः ।
यन्त्रे पीठं पूजयित्वा दिक्षु चैताः प्रपूजयेत् ।
वामा ज्येष्ठा तथा रौद्री अम्बिकेति यथाक्रमात् ॥ १३३ ॥
॥ ततोऽमुक्यादेवतायाः स्थण्डिलाय नमः पदम् ।
इति स्थण्डिलमापूज्य तन्मध्ये मूलरूपिणीम् ॥ १३४ ॥
ध्यात्वा वागीश्वरीं देवीं वह्निबीजपुरःसरम् ।
॥ वह्निमुद्धृत्य मूलान्ते कूर्चमन्त्रं समुच्चरन् ॥ १३५ ॥
**क्रव्यादिभ्योवह्निजायां क्रव्यादांशं परित्यजेत्**
॥ अस्त्रेण वह्निं संवीक्ष्य कुर्च्चेनैवावगुण्ठयेत् ॥ १३६ ॥
धेन्वा चैवामृतीकृत्य हस्ताभ्याममग्निमुद्धरेत् ।
प्रादक्षिण्यक्रमेणाग्निं भ्रामयन् स्थण्डिलोपरि ॥ १३७ ॥

त्रिधा जानुस्पृष्टभूमिः शिवबीजं विचिन्तयन् ।
आत्मनोऽभिमुखीकृत्य योनियन्त्रे नियोजयेत् ॥ १३८ ॥
॥ ततोमायां समुच्चार्य वह्निमूर्त्तिञ्च ङेयुताम् ।
नमोऽन्तेन प्रपूज्याथ रं वह्निपरतः सुधीः ।
चैतन्याय नमोवह्नेश्चैतन्यं परिपूजयेत् ॥ १३९ ॥
नमसा वह्निमूर्त्तिञ्च चैतन्यं परिकल्प्य च ।
॥ प्रज्वालयेत्ततो वह्निं मन्त्रेणानेन मन्त्रवित् ॥ १४० ॥
प्रणवं पूर्वमुद्धृत्य चित् पिङ्गलपदं तथा ।
हनद्वयं दह दह पच पचेति ततोवदेत् ॥ १४१ ॥
सर्वज्ञाज्ञापय स्वाहा—**वह्निप्रज्वालने मनुः** ।
॥ ततः कृताञ्जलिर्भूत्वा प्रकुर्यादग्निवन्दनम् ॥ १४२ ॥
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णममलं समिद्धं सर्वतोमुखम् ॥ १४३ ॥
॥ इत्युपस्थाप्य दहनं छादयेत् स्थण्डिलं कुशैः ।
स्वेष्टनाम्ना वह्निनाम कृत्वाभ्यर्चनमाचरेत् ॥ १४४ ॥
तारोवैश्वानरपदात् जातवेदपदं वदेत् ।
**इहावहावहेत्युक्त्वा लोहिताक्षपदान्तरम्** ॥ १४५ ॥
**सर्वकर्माणि पदतः साधयान्तेऽग्निवल्लभा** ।
॥ इत्यभ्यर्च्य हिरण्यादिसप्तजिह्वाः प्रपूजयेत् ॥ १४६ ॥
सहस्रार्चिःपदं ङेऽन्तं हृदयाय नमोवदेत् ।
॥ षडङ्गं पूजयेद्वह्नेस्ततोमूर्त्तीर्यजेत् सुधीः ॥ १४७ ॥
जातवेदप्रभृतयोमूर्त्तयोऽष्टौ प्रकीर्त्तिताः ॥ १४८ ॥
ततोयजेदष्ट शक्तीर्ब्राह्म्याद्यास्तदनन्तरम् ।
पद्माद्यष्टनिधीनिष्ट्वा यजेदिन्द्रादिदिक्पतीन् ॥ १४९ ॥
॥ वज्राद्यस्त्राणि सम्पूज्य प्रादेशपरिमाणकम् ।
कुशपत्रद्वयं नीत्वा घृतमध्ये निधापयेत् ॥ १५० ॥
वामे ध्यायेदिडां नाडीं दक्षिणे पिङ्गलान्तथा ।
मध्ये सुषुम्णां सञ्चिन्त्य दक्षभागात् समाहितः ॥ १५१ ॥
॥ आज्यं गृहीत्वा मतिमान् दक्षनेत्रे हुताशितुः ।
मन्त्रेणानेन जुहुयात् प्रणवान्तेऽग्नये पदम् ॥ १५२ ॥

**स्वाहान्तोमनुराख्यातोवामभागाद्धविर्हरेत् ।**
॥ वामनेत्रे हुनेद्वह्नेर्ं सोमाय द्विठोमनुः ॥ १५३ ॥
मध्यादाज्यं समानीय ललाटे हवनं चरेत् ।
॥ अग्नीषोमौ सप्रणवौ तूर्यद्विवचनान्वितौ ॥ १५४ ॥
**स्वाहान्तोऽयं मनुः प्रोक्तः** पुनर्दक्षिणतोहविः ।
गृहीत्वा नमसा मन्त्री प्रणवं पूर्वमुद्धरेत् ॥ १५५ ॥
**अग्नये च स्विष्टिकृते वह्निकातां ततोवदेत् ।**
अनेन वह्निवदने जुहुयात् साधकोत्तमः ॥
॥ **भूर्भूवःस्वर्द्विठान्तेन व्याहृत्या होममाचरेत्** ॥ १५६ ॥
॥ तारोवैश्वानरपदात् जातवेदइहावह ।
वहलेहि पदान्ते च ताक्षसर्वपदं वदेत् ॥
कर्माणि साधय स्वाहा त्रिधानेनाहुतीर्हरेत् ॥ १५७ ॥
॥ ततोऽग्नौ स्वेष्टमावाह्य पीठाद्यैः सहपूजनम् ।
॥ **कृत्वा स्वाहान्तमनुना मूलेन पञ्चविंशतिः** ॥ १५८ ॥
हुत्वा वह्न्यात्मनोर्देव्याऐक्यं सम्भावयन् धिया ।
॥ एकादशाहुतीर्हुत्वा मूलेनैवाङ्गदेवताः ॥ १५९ ॥
॥ हुत्वा स्वकाममुद्दिश्य तिलाज्यमधुमिश्रितैः ॥ १६० ॥
पुष्पैर्बिल्वदलैर्वापि यथाविहितवस्तुभिः ।
॥ यथाशक्त्याहुतिं दद्यान्नाष्टन्यूनां प्रकल्पयेत् ॥ १६१ ॥
॥ ततः पूर्णाहुतिं दद्यात् **फलपत्रसमन्विताम्** ।
॥ स्वाहान्तमूलमन्त्रेण ततः संहारमुद्रया ।
तस्माद्देवीं समानीय स्थापयेत् हृदयाम्बुजे ॥ १६२ ॥
क्षमस्वेति च मन्त्रेण विसृजेत्तं हुताशनम् ।
॥ कृतदक्षिणकोमन्त्री अच्छिद्रमवधारयेत् ॥ १६३ ॥
॥ हुतशेषं भुवोर्मध्ये धारयेत् साधकोत्तमः ॥ १६४ ॥
**एषहोमविधिः प्रोक्तः सर्वतन्त्रागमकर्मणि ।**
॥ होमकर्म समाप्यैवं साधको ज[1]पमाचरेत् ॥ ॥१६५॥ इति

---

१. १३-३१-११० वि. द्दयः

७ ॥ **वैश्वदेवं कृत्वा नैवेद्यं देयं-तत्र प्रमाणम्** ॥ आश्वलायनः यथा—

॥ वैश्वदेवं पुरा कृत्वा नित्ये चाभ्युदये तथा ।
स्वाभीष्टदेवतादिभ्योनैवेद्यं च निवेदयेत् ॥
अकृत्वा वैश्वदेवं तु नैवेद्यं योनिवेदयेत् ।
तदन्नं न च गृह्णन्ति देवाविष्ण्वादयोध्रुवम् ॥ इति ॥

(अत्र–प्रस्तुतविषये--पूजाङ्गहोमएव–वैश्वदेव शब्दापरनामधेयइत्यवगम्यम्) इति ॥ अतोनिहितोयं विषयोस्माभिः श्रीबालातन्त्रचन्द्रिकायाम्—श्रीमहानैवेद्यमध्ये एव । अपूर्णश्च श्रीमहानैवेद्यविधिर्होमानन्तरमेव परिसमापितस्तेन च—

॥ **अकृत्वावैश्वदेव**मित्यस्य निषेधस्याप्यप्रवृत्तिरित्यनवद्यतां–सुधियोविभावयन्त्विवत्यलम् ॥ प. क. सू. द्वितीयावृत्तिकारः ॥

८ अस्य नित्यहोमस्य—प्रयोगश्चिकीर्षितश्चेद्बालातन्त्रचन्द्रिकायां–२९४–अथवा ३०३–पत्रतोप्यस्तीति ततोग्राह्यः अथवा एतन्मूलग्रन्थोक्तएव ग्राह्यः–इति ।

॥ अत्र–महानैवेद्यपूजाङ्गहोमावुभावपि सम्पन्नाविति–ज्ञेयम् ॥

(१३।३०-२ वि. सर्वोऽपि सं.)

## ॥ होमानन्तरं–बलिदानविषये ॥

एवमनूक्तरीत्या–यथेष्टमावरणपूजाङ्गहोमं परिसमाप्य–पुरस्तन--द्वि–परिशिष्टस्थ १३।३०–३ विषयगतः प्रकीर्णविषयसहितोबलिदानप्रयोगविषयआश्रयणीयः करणीयश्चेत्याशासे ॥ प. क. सू. द्वितीयावृत्तिकारः ॥

॥ वि. १३।३०-३–**बलिविषयेप्रकीर्णम्** ॥

१ ॥ **बलिशब्दार्थः**–यथा—

बङ्गदेशीयसंस्कृतभारतीतिमुद्रितमासिके--४--अङ्कीयपुस्तके--श्रीयुतबलरामशास्त्रिणो-यथाहुः ।

॥ बलङ् दाने–वधे--च– । बलक्-च निरुपणे । इति कविकल्पद्रुमे ।
॥ बल्दाने–निरूपणें हिंसायां-च, इति–धातुकौमुद्याम् ।
॥ बल्धातोरिन् प्रत्ययेन निष्पन्नोऽयं बलिशब्दः ।

इत्याद्यत्रोक्तप्रमाणेन दानवधनिरुपणार्थेषु बलिशब्दः प्रवर्तते–तथाप्यत्र पुस्तके लक्षणादिशास्त्रार्थबलेन–बलिशब्दस्य– हिंसार्थकत्वमुपपादितमेवेति ।

२ ॥ **बलिशब्दनिरुक्तिः–कुलार्णवतन्त्रे**–१७ उल्लासे-१५७ पत्रेऽपि-यथा—

॥ बहुप्रकारविचरद्भूतौघविनिवारणात् ।
लिप्तपापप्रशमनाद्बलिरित्यभिधीयते ॥ इति ॥

**३ ॥ अयं-बलिरुपचारोवा; उपहारोवा; तत्र-प्रमाणम्**

तत्रैव-बङ्गदेशीय ५ भागीयमुद्रितमासिके-यथा—

॥ अयं बलिः-षट्त्रिंशदुपचारान्तर्गतएकउपचारः-इति-तोडलतन्त्रे,-इति ॥

**४-॥ बलिविषये-प्राचामाचारः ॥**

अत्र बलिदानविषये-तटस्थेन मया किञ्चिदेतदुच्यते ॥

॥ अधोनिर्देक्ष्यमाणबलिविषयव्रातेन, श्रीशिवोक्तिप्रामाण्यगणेन च, सर्वत्र कर्मणि बलिदानावश्यकतास्त्येवेति-निःशङ्कमुद्घोष्यतएव-तद्विद्भिः ॥

॥ अकृते च बलौ-पुजाफलं न लभ्यते-देवतापि, प्रसन्ना न स्यात्-राजप्रजानां च-दुःखं स्यादेतादृकतन्त्रसिद्धान्तोजागर्त्येवेति-॥

॥ अयं बलिः-पशुनैव विधेयः-इत्येकान्तसिद्धान्ताभावः ॥

एतदाद्यर्थमधोनिरूप्यमाणोबलिविषयकोऽशेषलेखः-कृपयावलोक्यइत्याशास्ते-॥ प. क. सूत्रद्वितीयावृत्तिकारः

( ३-३।१ वि. सं. )

**३०-३/२ ॥ बलिभेदाः-अमांससमांसबलिश्च ॥ समयाचार तन्त्रे-यथाः-**

१-॥ बलिश्च द्विविधोदेवि सात्त्विकोराजसस्तथा ॥

**॥ तत्र-सात्त्विकबलिलक्षणं-यथाः-**

सात्त्वि[1]की जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः ।
सात्त्विकोबलिराख्यातोरक्तमांसविवर्जितः ॥ इति ॥
( अर्थात्-साधकानां जातिगुणभेदेन-बलौ भेदोज्ञेयः-इति ॥ )

**२-॥ मांसप्रतिनिधित्वेन तत्समानवस्तूनि ॥**

॥ ७-टीकायुक्तसप्तशतीगुप्तवतीटीकायां-९ पत्रे-यथा—

॥ तत्राशक्तानामपि-तत्रैव ।
[ कूष्माण्डमिक्षुदण्डं च मद्यमासवमेव च । ]
एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा ।
॥ छागसमाः पञ्चविंशतिवर्षावस्थायितृप्तिजनकाः ॥ इति ॥

---

१ अत्र सात्त्विकी, पूजा-इति-सम्बन्धोज्ञेयः ॥

**३–समांसादिबलिः ॥**

॥ अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम् ।

तृप्तिमाप्नोति परमां शार्दुलरुधिरैस्तथा ॥ इति ॥ तत्रैवाक्तैः ॥

**४–॥ छागबलिर्ब्राह्मणैर्न कार्यः । मद्यासवे–अपि च–न–देये ॥**

इत्यपि–तत्रैव–यथा—

॥ वस्तुतस्तु न हिंस्यादिति निषेधस्य सङ्कोचमन्तरेणैव

छागसमानतृप्तिसम्भवे–छागबलिर्ब्राह्मणैर्न कार्यएव ।

॥ एवं मद्यासवे–अपि–न–देये ।

वरं प्राणाः प्रगच्छन्तु ब्राह्मणोनार्पयेत् सुराम् ॥ ब्राह्मणोमदिरां दत्वा–**ब्राह्मण्यादेव** हीयते ॥ इति च–बृहत्सङ्गमतन्त्रवचनात् ॥ इति ॥

**५–॥ विप्रस्य–मद्यप्रतिनिधिवस्तुद्वयम् ॥**

॥ अतएव–तत्प्रतिनिधिरपि–कालिकापुराणे–स्मर्यते

अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः ॥

नारिकेलजलं कांस्ये ताम्रे वा विसृजेन्मधु ॥ इति ॥ कात्यायनीतन्त्रएवेति ॥

**६–॥ सात्विकराजसिकबलिविषये** । सटीकशारदा–२०-पटले-७६८ पत्रे-यथा—

॥ द्विविधोबलिराख्यातोराजसः सात्त्विकोबुधैः ।

**राजसबलिः ।** राजसोमांसरक्ताढ्यः पलत्रयसमन्वितः ॥ ९५ ॥

मुद्गपायससंयुक्तोमधुरत्रयलोलितः ।

**सात्विकबलिः ॥** सात्विकोमांसरहितः शेषमन्यत् पुरोक्तवत् ॥ ९६ ॥ इति ॥

( ३०–३।२–वि. सं. )

**सर्वसाधारणत्वेन–बलौ, उक्तद्रव्याणि—**

**३०–३।३–१–बल्यर्थमुक्तद्रव्यविषये—**

सटीक**शारदातिलके**–१६ पटले–६७२ पत्रे–१०२ श्लोके–यथा—

॥ प्रस्थार्धं चरुणा पिण्डं कृत्वा तस्मिन् विनिक्षिपेत् ।

बाह्ये बलिप्रदानार्थं तदर्धमवशेषयेत् ॥ १०२ ॥ इति ॥

**२ ॥ हुतावशेषान्नेन बलिदानप्रमाणम् ॥**

तत्रैव–सटीकशारदातिलके–१६ पटले, ६७३ पत्रे–१०५ श्लोके–यथा—

दशदिक्पालबलिदानप्रसङ्गेऽपि-यथा—

॥ हुत्वा वह्नौ यथापूर्वं शिष्टान्नेन बलिं हरेत् ।
मनुना वक्ष्यमाणेन दशदिक्षु यथाविधि ॥ १०५ ॥
सहृद्विष्णुगणेभ्योऽन्ते सर्वशान्तिकरे पुनः ।
भ्योबलिं प्रतिगृह्णन्तु शान्तये हृदयं ततः ॥ १०६ ॥

**अत्र टीका**-यथापूर्वमित्यष्टभिर्द्रव्यैः उक्तप्रमाणेन च-शिष्टान्नेनेति हुतशिष्टान्नेन । तदुक्तं नारायणीये-दद्यादनेन मन्त्रेण हुतशेषान्धसा बलिम् । इति ॥ आचार्योः अपि-हुतशेषान्नेन बलिम् । इति ॥

यथाविधीति । लोकपालबलिरपि सूचितः ॥ १०५ ॥ इति ॥

॥ अत्र दिक्पालबलिदाने उपरितनसहृद्० इत्यादि १०६ श्लोकोप्यस्तीति-ज्ञेयम् ।

**३ ॥ साधकेच्छावशाद्बलौ देयवस्तुसिद्धान्तः ॥**

**महानिर्वाणतन्त्रे**-६ उल्लासे-४ श्लोकतः-श्रीशिववचोयथा—

॥ यस्मात् तस्मात् समानीतं येन तेन विधातितम् ।
तत् सर्वं देवताप्रीत्यै भवेदेव न संशयः ॥ ४ ॥
**साधकेच्छा बलवती देये वस्तुनि दैवते ।**
**यद्यदात्मप्रियं द्रव्यं तत्तदिष्टाय कल्पयेत्** ॥ ५ ॥ इति ॥

**॥ बलौ स्त्रीपशुनिषेधोऽत्रैव**—

॥ बलिदानविधौ देवि विहितःपुरुषःपशुः ।
**स्त्रीपशुर्न च हन्तव्यस्तत्र शाम्भवशासनात्** ॥ इति ॥

**४ ॥ तत्तदेवतावाहनार्चनपूर्वकबलिवस्तुविषये-सटीकप्रपञ्चसार तन्त्रे** ५ पटले-७० पत्रे-दीक्षाविधौ-१६ श्लोकोयथा—

इतीरितानामपि देवतानां चित्राणि कृत्वा रजसा पदानि ।
पयोऽन्धसा साधु बलिः प्रदेयोद्रव्यैश्च वा तन्त्रविशेषसिद्धैः ॥ १६ ॥

॥ अत्र टीका-इतीरितानामपीति-अपिशब्दः क्षेत्रपालादिसूचनार्थः ।

॥ साध्विति-मुष्टिमात्रैः दर्भाग्रैः सकूर्चैः पदानि आस्तीर्य-तां तां देवतामावाह्य-जलादिभिः सम्पूज्य-प्रणवशक्तिपूर्वैः नमोऽन्तैः नामभिः-बलिर्देयः-इत्यर्थः ।

॥ द्रव्यैश्च वा तन्त्रेति-दध्याज्यगुडमिश्रमन्नं ब्रह्मणः, पायसकृसरमाषान्नमुद्गान्नगुलान्न घृतान्नदध्यन्नैरेकैकस्य वर्गस्य बलिरित्यर्थः ॥ १६ ॥ इति ॥

## ५ ॥ बलिवस्तूनि–तत्प्रोक्षणमन्त्रश्च ॥

श्रीआनन्दाश्रमसंस्कृतग्रन्थावलि ७२ ग्रन्थाङ्कमुद्रिते घारे-इत्युपनामकशङ्करसूरिविरिचित-श्रीगायत्रीपुरश्चरणपद्धतौ-९.५ पत्रे-गायत्रीपुरश्चरणाङ्गत्वेन श्रीगायत्र्याः बलिदानावसरे-यथा—

॥ ततोगायत्रीपीठसमीपे, दध्यक्तं पयसाऽक्तं च-धृताक्तं **चाऽऽहारपरिमितं बलिं** शिरोव्याहृतिसहितगायत्र्या त्रिवारं, प्रोक्षितं–दद्यात्। इति।

## ६ ॥ पुनश्चापि–बलौ–देयवस्तूनि।

सटीकशारदातिलके-२० पटले-७६६ पत्रे-७६ श्लोकतः–दुर्गाबलिदाने-यथा–

॥ शाल्यन्नं पललं सर्पिर्लाजाचूर्णानि शर्करा।
गुडमिक्षुरसापूपैर्मध्वक्तैः परिमिश्रितैः ॥ ७७ ॥
कृत्वा कवलमाराध्य देवं प्रागुक्तवर्त्मना।
रक्तचन्दनपुष्पाद्यैर्निशि तस्मै बलिं हरेत् ॥ ७८.

**ततः सिध्यन्ति कार्याणि बलिनाऽनेन मन्त्रिणः** । इति ॥

## ७ ॥ राजसबलिपदार्थाः ॥

सटीकशारदा०-२० पटले-७६८ पत्रे, ९५ श्लोकटीकायां-तदुक्तं, विश्वसारोद्धारे यथा—

॥ मेषकुक्कुटयोर्मांसं शाल्यन्नं घृतसंयुतम्।
लाजाचूर्णमपूपं च गुडमिक्षुरसान्वितम् ॥
मधुमत्स्यकपित्थादि बलिद्रव्यं समीरितम् ॥ इति ॥
मरीचैर्जीरकैश्चैव गुडखण्डैस्तथैव च।
शालितन्दुलसम्भक्तगोक्षीरेण समन्वितम् ॥
सैन्धवं दग्धमीनेन पलत्रयसमन्वितम् ॥ इति ॥

केचित् फलत्रयमिति पाठं पठन्ति। तच्चिन्त्यम् ॥ ९५ ॥ इति–तत्रैव ॥

## ८ ॥ तथाऽन्यत्रापि–बलौ–देयपदार्थाः—

पलत्रयं माषचूर्णं दधि क्षीरं घृतं तथा।
गुडौदनेन संयुक्तं मिश्रीकृत्य विचक्षणः ॥

## ९. ॥ कुलार्णवतन्त्रे–७ उल्लासे–६१ पत्रे-अपि—

॥ बटुकादीन् यजेत्तस्माद्गन्धपुष्पासवामिषैः।
**तत्तन्मन्त्रैर्विधानेन देवताप्रीतिमाप्नुयात्** ॥

यत् किञ्चिद्द्रव्यसङ्घातं पूजार्थं भोगहेतुना ।
आनीतं दीयते भक्त्या क्षेत्रेभ्यश्च कुलेश्वरि ॥ इति ॥

**॥ इदमिदं बलौ न स्यात् ॥**

१० ॥ अत्रावरणपूजान्तर्गतबलिषु—अन्यत्र वा—सामान्यबलौ—सर्वसाधारणत्वेन ग्राह्य-वस्तुषु—द्विदलसूपादिसामान्यभोज्यपदार्थाभावः ।

अपि तु—घृततैलपाचितमाषचणकपिष्टमयौण्डेरकसंयावौदनपललतत्प्रतिनिधि-कुश्माण्ड-खण्डान्यतमशर्कराघृतयुक्सुपाचितान्नसलवणपाचितमाषचणकदध्याद्युत्तमसङ्केतितसमयलभ्यप-दार्थायथार्हं—ग्रहीतुं शक्यन्ते ॥ इति ॥ प. क. सूत्रद्वितीयावृत्तिकारः ॥

**॥ ब्राह्मणादिवर्णपरत्वेन—बलौ—देयवस्तूनि ॥**

११।१ वर्णपरत्वेन-बलिवस्तूनि, श्रीयोगिनीतन्त्रे-७ पटले-१९५ पत्रे-यथा—

॥ विप्राणां क्षीरबलयः शाल्यन्नं वाथ पायसम् ।
घृतप्लुतं चर्व्यफलं पुष्पं तस्य घृतान्वितम् ॥
दद्यात् क्षरिञ्च दुग्धान्नं भक्तान्नं वा निवेदयेत् ॥
शाल्यन्नं वाथ समधु कृषरं खण्डमोदकम् ।
राज्ञां हि पशवः शस्तावैश्यानां व्रीहयस्तथा ॥
क्षौद्रं वृषलजातीनां सर्वेषां पशवोऽथवा ।

अत्र-सर्ववर्णसाधारणत्वेन—पश्वादिबलयोप्युक्ताः । इति ॥

२ ॥ टीकायुक्तसप्तशतीगुप्तवतीटीकायां—९ पत्रे-यथा—

बलिश्च-ब्राह्मणादिभेदेन-व्यवस्थयोक्तः—कालिकापुराणे-द्रष्टव्यः ॥ इति ॥

**॥ ब्राह्मणेन सात्विकोबलिर्देयः ॥**

३ ॥ सटीकशारदातिलके-२० पटले-७६९ पत्रेपि-यथा——

ब्राह्मणोनियतः शुद्धः सात्विकं बलिमाहरेत् ॥ इति ॥

( ३०-३।३ वि. सर्वः सं )

**३०-३।४ अविधानेन—बल्यर्थं—पशुवधे—नरके वासः ॥**

१ ॥ अशास्त्रपद्धत्या—आत्मार्थं वा-पशुहनने—दोषातिशयउक्तः—श्रीकुलार्णवतन्त्रे २ उल्लासे—२१ पत्रे-श्रीमहादेववचोयथाः—

**॥ अविधानेन योहन्यादात्मार्थं प्राणिनः प्रिये ।**
**निवसेन्नरके घोरे दिनानि पशुरोमभिः ॥**

**सम्मितानि दुराचारस्तिर्यग्योनिषु जायते ॥**

**अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ॥**

**संस्कर्त्ता चोपहर्त्ता च खादिताष्टौ च घातकाः ॥**

धनेन च क्रेता हन्ति खादिता चोपभोगतः ।

घातकोघातबन्धाभ्यामित्येषत्रिविधोवधः ॥

**मांससंदर्शनं कृत्वा सूर्य्यदर्शनमाचरेत् ।**

**तस्मादविधिना मांसं मद्यश्च नाचरेत् क्वचित् ॥**

विधिवत् सेव्यते देवि परमार्थं प्रसीदसि ।

नाशयस्वपरज्ञानं सत्यमेतद्वरानने ॥

**तृणं वाप्यविधानेन छेदयेन्न कदाचन** ॥ इति ॥

२–तथैव-कुलार्णवतन्त्रे, ५–उल्लासे–४६–पत्रेऽपि-यथाः–

**॥ आत्मार्थं प्राणिनां हिंसा कदाचिन्नोदिता प्रिये ।**

**स्वनिमित्तं तृणं वापि छेदयेन्न कदाचन–॥** इति॥

॥ पाश्चात्य ३०।३-३ विषयोद्दश्यः ॥ इति ॥ ( ३०-३।४ वि. सं. )

**३०-३।५॥ मांसाद्यभावे-बलौ-प्रतिनिधिः ॥**

कुलार्णवतन्त्रे ६ उल्लासे-४७ पत्रे–यथा–

**॥ मांसाभावे तु लशुनमार्द्रकं नागपल्लवम् ।**

**आदाय पूजयेद्देवीमन्यथा निष्फलं भवेत्** ॥ इति ॥

**३०-३।६ ॥ आवरणपूजाङ्गबलयः–कस्य कर्मणोनन्तरं–देयास्तत्र सिद्धान्तः[१] ॥ बलिदानसमयश्च ।**

१–स्वतन्त्रतन्त्रनाम्नि-तन्त्रग्रन्थे-यथा—

॥ **पूजान्ते भोजनादौ तु बलिं दद्यान्महेश्वरि** ॥ इति ॥

प्रामाण्येन महानैवेद्यात्-प्रागेव-बलिदानं प्राप्तं-तर्हि साम्प्रतं कथं तत्प्रयोगोविधीयते इति-कैश्चिदाशङ्कयेत ॥ इति ॥

ततोऽत्रोपरितननैवेद्यविध्युल्लिखितब्रह्मेशाद्यैरित्यादि

श्लोकद्वयं-पठित्वा-भुञ्जानां देवतां साम्प्रतं-ध्यायेदित्यविरोधः ।

अर्थात्–भोजनपरिसमाप्तेः प्रागेव-बलिदानप्रयोगकरणेन उपरितनपूजान्ते–भोजनादौ तु एतच्छ्लोकोक्तिः [१]सङ्गतेति विभावयन्तु सुधियः ॥ इति ॥

---

१. महानिर्वाणादितन्त्रग्रन्थानामादावेव-महाबलिस्ततो नैवेद्यमिति-श्रीशिवोक्तिः प्र. उभथा शास्त्रसद्भावोत्र-

**२-होमाभावकर्माणि-बल्यवसरः ॥**

कुत्रचित् तादृशप्रसङ्गे-आवरणपूजाङ्गहोमोअनुक्तश्चेत्तत्र, तमकृत्वा वक्ष्यमाणबलीन-दद्यात् ॥ इति वृत्तिकारः ॥

**३-॥ होमात्मककर्माणि-बल्यवसरः ॥**

॥ श्रीपरशुरामस्य भगवतोमते-तत्सूत्रानुयायिभिस्तु-यद्यग्निकार्यमित्यादि २ खण्डगत श्रीगणपतिक्रमीय १० सूत्रप्रमाणतः-इमे आवरणपूजाङ्गत्वेन दीयमानाबलयः-अग्निकार्यो-नन्तरं-देयाइति तत्सिद्धान्तः ॥ इति ॥

**४-तत्रैव ॥ स्वगुरूपदिष्टानुसारेण बल्यवसरः ॥**

**श्रीपरशुरामसूत्रेतर**तन्त्रग्रन्थानुसारिभिस्तु स्वसाम्प्रदायिकगुरूपदिष्टविधिना ते-सर्वे बलयोअर्पणीयाः-इत्यवसेयम् ॥ इति ॥

॥ प. क. सूत्रद्वितीयावृत्तिकारः ॥

**५-१ ॥ श्रीमदाद्यार्चनपद्धतिस्थोबल्यवसरः ॥**

॥ कुत्रचि**न्नेपालदेशोल्लिखित**श्रीमदाद्यार्चनपद्धतौ-नैवेद्यानन्तरमावरणहोमस्तदनु-बलयोलिखिताः ॥ इति ॥

२-कुत्रचिदन्यस्यां **श्रीश्यामार्चनपद्धतौ**-देवतापुरतोनैवेद्यपात्रनिधानपूजनानन्त-र्भावीयभूतान्तपञ्चबलिदानं, तदनुच नैवेद्यसम्पूर्णविधिस्तदनु, चावरणार्चनाङ्गहोमः तत्पश्चाच्च-मुख्यदेवताबलिरुल्लिखितः ॥ इति ॥ ( ३०-३।६-५ वि. सं. )

३०-३।६-६ तथात्रैव-प. क. सू. ६ खण्डे-**श्रीश्यामाक्रमे** २०४ पत्रे-३४ सूत्रे-आवरणपूजागुरुपादुकार्चनषोडशोपचारानन्तरं बलयोग्रहीताः ॥ इति ॥

**७-॥ प. क. सूत्रमात्रानुसारिणां-बलिसमयः ॥**

॥ अन्यचात्रैव **प. क. सूत्रे** ५ खण्डे-**श्रीललिताक्रमे**ऽपि पञ्चदशसूत्रोक्त नैवेद्यानन्तरं-१८ सूत्रे-बालिरुपात्तः ततश्चैषप्रकारः प. क. सूत्रानुसार्योश्र्पणीयएवेति ॥इति ॥

**८-॥ श्रीश्रीविद्यार्चनपद्धतौ-बलिसमयः ॥**

॥ अन्यस्यां-सपादशत १२५ वर्षेभ्यः प्राग्लिखित**श्रीश्रीविद्यार्चन**पद्धतौ च-महानैवेद्यं, तदनुपूजाङ्गहोमः, तदनुबलयः, ततश्च-पूर्वतनोऽपूर्णोनैवेद्यविधिरस्तीति ॥

**९-श्रीमहानिर्वाणतन्त्रे**-६ उल्लासे-५३ श्लोके-**बटुकादिभ्योबलिदान-समयोक्तिर्यथा**:—

॥ योगिनीपात्रसंस्थेन सायुधां सपरीकराम् ।
संतर्प्य कालिकामाद्यां बटुकेभ्योबलिं हरेत् ॥

एतावता-च-तां तां प्रधानदेवतां-सपरिवारामभ्यर्च्य-बटुकादिभ्योबलिं-हरेदित्युपपन्नम् ॥ इति ॥

॥ तत्रैवोपर्युक्तश्रीबटुकादिबलिदानानन्तरं-११९ श्लोकेः-ततोहोमं प्रकुर्व्वीत तद्विधानं णु प्रिये० इत्यादिना-

उपारीलिखितवत्-बलिप्रदानानन्तर्भावी, होमः प्रतिपादितोभगवता श्रीशिवेनेति-मार्मिकम्-॥ इति ॥

**॥ होमानन्तरं-बलिः ॥**

१०-श्रीज्ञानार्णवे-५ पटले-१९ पत्रे-२६ श्लोके-॥

॥ नित्यहोमविधिं कृत्वा बलिदानविधिं चरेत् ॥

एतावता च-श्रीमद्भगवच्छ्रीपरशुरामोक्तिवदत्रापि नित्यहोमानन्तरं-बलिविधिरिति-सिध्यति-॥ इति ॥

( ३०-३।६-१० वि. सं. )

**३०-३ ॥ निवेदनम् ॥**

६-११

**॥ पृथक् पृथक्-देवतार्चनपद्धतिषु, बलिविषयकनानाविधयोवरीवर्तन्तइति-ततः-**

मोहमप्राप्य-एतत् प. क. सूत्रापरतन्त्रग्रन्थोभयोक्तमशेषमप्यादरणीयमिति निवेदयाम्याप्तविद्वद्भ्यइत्यलम् ॥ ३०-३।६ वि. सं. ॥

**३०-३-आवरणपूजाङ्गबलयः-कां कां देवतामुद्दिश्य-कुत्र कुत्र स्थले देयास्तत्र-प्रमाणानि ॥**

७

सटीकज्ञानार्णवे-१६ पटले-७७ पत्रे-यथा-

१ ॥ बटुकाय महेशानि योगिनीभ्यश्च वल्लभे ॥ २२२ ॥
क्षेत्रपालगणेशाभ्यां पूर्ववद्बलिमुत्सृजेत् ॥ इति ॥
वामभागे कृतस्याथ मण्डलस्योपरि क्षिपेत् ॥ २२३ ॥
आधारं पूजयेत्तत्र पात्रं चात्रोदकान्वितम् ।
सकारणं मन्त्रयित्वा सर्वभूतबलिं हरेत् ॥ इति ॥२२४॥

॥ अत्र-कारिकायामनुक्तमपि प्रधानदेवताबलिमपि संदध्यादेवेति ज्ञेयम् ॥ इति ॥

२-सर्वदेवतावरणार्चनसाधारणधर्मेण-दीयमानाः श्रीबटुकादिप्रधानदेवतानां बलयः कस्यां कस्यां दिशि-देयास्तत्र-भिन्नभिन्नभिदावर्तन्ते-तास्सर्वाअप्यनुपेक्ष्याएवेति-राद्धान्तः प्रतिभाति। अत्रतनाः काश्चिद् भिदाः-प्रदर्शयन्तेधस्तात्-

तत्रादौ-**बटुकादिदेवताबलीनां-स्थानानि-**

कुलार्णवतन्त्रे-७ उल्लासे-६३ पत्रे-श्रीशिववचोयथा—

॥ पश्चिमे [1]बटुकं देयमुत्तरे योगिनीबलिम्।
पूर्वे भूतबलिं दद्यात् क्षेत्रपालं च दक्षिणे।
[2]राजराजेश्वरं मध्ये पूजयेत् कुलनायिके॥ इति॥

३-अन्यत्र च, साम्प्रतमुद्रित**दुर्गाकल्पद्रुम**संक्षिप्तपुस्तिकायाम्-१६३ पत्रेऽप्युक्तम्-यथा-

उक्तं च-कुलार्णवे॥ [3]ऐशाने बटुकं देयमाग्नेये योगिनीबलिम॥
नैऋत्ये क्षेत्रपालं च वायव्ये गणनायकम्॥१॥
उत्तरे सर्वभूतेभ्योमध्ये च [4]मुख्यदेवताम्॥ इति॥

**४॥ श्रीनेपालदेशीयश्रीश्यामार्चनपद्धतावपि**

उपरितनाङ्कगत। २-विषयवदेव- श्रीगणपतिबल्यन्तं तुल्यमेवास्ति-

अथ च-श्रीप्रधानदेवताबलिः उत्तरे। इत्येव व्यत्ययोऽस्ति-इत्यादि"॥

अपरस्यामपि-**श्रीमदाद्यार्चनपद्धत्यां**-पूर्वपूजितमण्डले बटुकादिनां बलिं दद्यात् इत्युक्त्वा। दक्षिणे योगिनीबलिः-पश्चिमे क्षेत्रपालबलिः-उत्तरे श्रीगणपतिबलिः-स्ववामे सर्वभूतबलिः-स्वदक्षिणभागे मुख्यदेवता[5]बलिरित्येवं-भिन्ना बलिस्थानभिदा-वर्तते-इति।

॥ अत्रानुक्तोपि-श्रीबटुकबलिरीशाने-देयइति-स्वबुद्धिविलासोस्तु॥ ३०-३।७-४ वि. सं.

३०-३।७-५ अपरस्यां-**शताधिकवर्षसमयप्राग्लिखितायां-श्रीविद्यार्चन**पद्धत्यां च॥ श्रीचक्रस्य, ईशानकोणे व्यापकमण्डले श्रीबटुकबलिः।

॥ आग्नेय्यां श्रीयोगिनीबलिः। नैऋत्यां क्षेत्रपालबलिः। श्रीचक्रस्य वायुकोणे श्रीगणपतिबलिः। श्रीचक्रस्य उत्तरभागे सर्वभूतबलिरिति-प्रपञ्चितम्॥

---

१. बटुकं देयमिति पाठः साधुः।
२. एतद्विषये, अग्रतनबलिचित्रं १ क चिह्ने-द्रष्टव्यम्।
३. बलिचित्रं-२ ख-चिन्हे-द्रष्टव्यम्॥
४. इमे-प्रमाणश्लोकाः मन्निकटस्थमुद्रितकुलार्णवे न सन्ति॥ स्युर्वात्र कस्यचित् प्रागलिखितालभ्य पुस्तकेषु॥
५. बलिचित्रं- ३ ग-दृश्यम्॥
६. बलिचित्रं-४ घ-चिन्हे-दृश्यम्।

॥ प्रधानदेवताबलिस्त्वन्यथा विधया-प्रत्यपादीति-तान्त्रिकं मार्मिकम् ॥ प. क. सू. द्वितीयावृत्तिकारः ॥

**६-श्रीमहानिर्वाणतन्त्रे,** ६ उल्लासे, ५५ श्लोकतः **श्रीबटुकादिबलि-स्थानानि**-यथाः-

॥ [1]सम्पूज्य पूर्वभागे च बटुकस्य बलिं हरेत् ॥ ५५ ॥
॥ ततस्तु यां योगिनीभ्यः स्वाहा याम्यां हरेद्‌बलिम् ॥ ५६ ॥
॥ षड्दीर्घयुक्तं सम्बर्तं क्षेत्रपालाय हृन्मनुः।
अनेन क्षेत्रपालाय बलिं दद्यात्तु पश्चिमे ॥ ५७ ॥
॥ खान्तबीजं समुद्धृत्य षड्दीर्घस्वरसंयुतम् ।
ङेन्तं गणपतिं चोक्त्वा **वह्निजायां ततोवदेत्** ॥ ५८ ॥
॥ उत्तरस्यां गणेशाय बलिमेतेन कल्पयेत् ।
मध्ये तथा सर्वभूतबलिं दद्याद् यथाविधि ॥ ५९ ॥ इति ॥

( अत्र ११७ श्लोके-प्रधानबलिरपि )

**७-सटीकज्ञानार्णवे-**५ पटले-१९ पत्रे-यथाः-

॥ [2]ईशाने च तथाऽऽग्नेये नैऋत्ये च तथा प्रिये ।
वायव्ये क्रमतोदेवि मण्डलानां चतुष्टयम् ॥ २७ ॥
श्रीचक्रमभितोदेवि त्रिकोणं व्योम चालिखेत् ॥ २७॥ इति ॥

८-पुनश्चापि-तत्रैव ज्ञानार्णवे-१६ पटले ७६ पत्रे-श्रीश्रीविद्यायजनविधौ-यथाः-

॥ [2]ईशानवह्निनैऋत्यवायुकोणेषु पूर्ववत् ॥
मण्डलानि विधायाथ पूर्ववत् पूजयेत् प्रिये ॥ २२१ ॥ इति ॥

**३०-३।७-॥ उपर्युक्तावरणपूजाङ्गबलिस्थानभिदादर्शकचित्राणि ॥**

१-क-**कुलार्णवमते**— पूर्वादिक्




पश्चिमा

१-अत्र-बलिचित्रं-५ ङ चिन्हे-दृश्यम् ॥
२-एतयोः-७-८-अङ्कयोश्चित्र प्रत्यक्षमप्रतन ख/२-ग/३ चिह्नितचित्रतुल्यत्वान्न चित्रितम् ॥

२–ख–उपर्युक्तादन्यथा–इदमपि कुलार्णवे—




३–ग–**श्रीनेपालदेशीयश्रीश्यामार्चनपध्धतौ—**




४–घ–अपरस्या श्रीश्यामार्चनपध्धतौ—



५-ङ- निर्वाणतन्त्रे—




अत्र-११७ श्लोकोक्तः प्रधानबलिरप्यस्ति-

॥ इति ३०-३।७ वि. सं. ॥

**३०-३।८ श्रीबटुकादिदेवताबल्यर्थकमण्डलाकृति, स्तत्तदेवतानां पूजनं, तन्मन्त्रादिज्ञानं-च**

**श्रीज्ञानार्णवे**-१६ पटले-७६ पत्रे-२१७ श्लोकतोयथा-

**॥ सर्वसाधारणम् ॥**

॥ १ ॥ उपविश्याऽऽसने रम्ये वामभाग ततः परम् ॥ २१७ ॥
वहत्करोर्ध्वपुटतः **साधकोभूमिजानुकः** ।
मण्डलं चतुरस्रं तु तन्मध्ये विलिखेत् प्रिये ॥ २१८ ॥
त्रिकोणमध्ये व्योमाख्यं मण्डलं पूजयेत्ततः ।
व्यापकान्ते मण्डलाय हृदन्तोवाग्भवं परम् ॥ २१९ ॥
मुखे कृत्वा पूजनीयं मण्डलं मनुनाप्रिये ।
एतन्मण्डलमभ्यर्च्य मण्डलानां चतुष्टयम् ॥ २२० ॥ इति ॥

९ ॥ **बलिपञ्चकविषये**-ज्ञानार्णवे १६ पटले-७७ पत्रे-यथा-

॥ [1]बटुकाय महेशानि [2]योगिनीभ्यश्च वल्लभे ।
[3]क्षेत्रपाल[4]गणेशाभ्यां पूर्ववद्बलिमुत्सृजेत् ॥
॥ वामभागे कृतस्याथ मण्डलस्योपरि क्षिपेत् ॥ २२३ ॥
आधारं पूजयेत्तत्र पात्रं चान्नोदकान्वितम् ।
सकारणं मन्त्रयित्वा [5]सर्वभूतबलिं हरेत ॥ २२४ ॥
षोडशार्णेन मनुना त्रिवारं वीरवन्दिते ।
तारं च भुवनेशानि सर्वविघ्नपदं ततः ।२२५ ॥

कुद्धयश्च सर्वभूतेभ्योहुंकारं **वह्निवल्लभाम्**।

समुच्चरन् बलिं दद्यान्मुद्रया तत्त्वसंज्ञया ॥ २२६ ॥

बलिपञ्चकमाख्यातं सर्वरक्षाकरं सताम् ॥ इति ॥ २२६ ॥

( ३०-३।९ वि. सं. )

**३०-३।१० एकपात्रे एव ५-बलयः ॥**

१—इमे—आवरणपूजाङ्गबलयोभिन्नभिन्नस्थानेषु निदर्शितास्तथापि पृथक् पृथक् पात्रेषु बलिदानानिच्छया एकस्मिन् पात्रे एव, दातुं—शक्यन्ते—इति ज्ञेयम् ॥ **( प्रधानबलिस्तु स्वतन्त्रएव देयइत्याभाति )**

अत्र प्रमाणं—भैरवयामले:—

॥ एकपात्रे पृथक् पात्रे दद्यात् पञ्च बलीन् प्रिये।

वामभागस्स्थितोदेवि सर्वविघ्नहरोभवेत् ॥ इति ॥

२—॥ ज्ञानार्णवतन्त्रे ५-पटलान्ते—२०-पत्रेऽपि—यथाः—

॥ अथवा वामभागे तु मण्डलं चैकमादिशेत्।

तत्रैव बलिदानं तु कुर्यात् सर्वार्थसिद्धये ॥ ४४ ॥ इति ॥

३—ज्ञानार्णवतन्त्रे-१६ पटले—७७ पत्रेपि—

॥ बलिपञ्चकमाख्यातं सर्वरक्षाकरं सताम्।

एकत्र वा पञ्च बलीन् दद्याद्व्यापकमण्डले ॥ इति ॥ २२७ ॥

वामभागे स्थितोदेवि सर्वविघ्नहरोभवेत् ॥ ( ३०-३।१० वि. सं. )

**३०-३।११ ॥ मुख्यदेवताबलिविषये ॥**

१—आवरणपूजाङ्गत्वेन दीयमानबलिषु—**प्रधानदेवतायाः बलिः कस्य बलेरनन्तरं देयस्तत्र-प्रमाणम्:—**

**श्रीमहानिर्वाणतन्त्रे** ६ उल्लासे-१०५ श्लोकतः ११७ श्लोकैः—भैरव दिक्पालबलेरनन्तरं प्रधानदेवताबलिरुक्तः—इति ॥

२—॥ आनन्दाश्रमसंस्कृतग्रन्थावलि ७३ ग्रन्थाङ्कमुद्रितश्रीमच्छङ्कराचार्यविरचितगायत्री-पुरश्चरणपद्धतौ ४८ पत्रे—

नैवेद्यमध्ये-आवरणपूजाङ्गहोमं विधाय-ततःस्तुतिस्ततोनीराजनं ततोजपस्तदनु च, कस्मैचिदपि बलिमदत्वा-श्रीभगवत्याः प्रधानदेवतायाः श्रीगायत्र्याबलिरुक्तोयथाः—

॥ नात्युच्चं नातिनीचं च ध्यात्वा मन्त्री जपेन्मनुम् ।

बलिं दत्त्वा नमस्कृत्य स्तुत्वा देवीं विसर्जयेत् ॥

अग्रतश्चतुरस्रवृत्तत्रिकोणमण्डलं कृत्वा–तत्र गायत्रीं ध्यात्वा–मूलेन पुष्पाक्षतैः सम्पूज्य-चतुष्पदां गायत्रीमुच्चार्य-यथालाभान्नादिना-नित्यबलिं–दद्यात् ॥ इति ॥

( ३०–३।११ वि. सर्वैः सं. )

## ३०-३।१२ ॥ मुख्यदेवताबलिस्थानविषये ॥

॥ ( अत्र. प. क. सूत्रे ) अन्यतन्त्रेषु च अमुकामुकदेवतानामावरणपूजान्ते–दीयमानमुख्यदेवतामात्रबलिस्थानम्–अमुकामुकदिश्युक्तं–तत्र स्मरणी-यथाः–

१--**श्रीगणपतेः** प. क. सू. २ खण्डे श्रीगणनायकपद्धतौ ८३ पत्रे–९–सूत्रे मूले, प्रधानदेवतायाः श्रीगणपतेः पूजाङ्गबलिदानावसरे, कस्यां दिश्ययं बलिर्देय इति-नाभ्यधायि–

अपि तु एतत्सूत्रभाष्यकारमहोदयेन देशाकाङ्क्षायां श्रीक्रमोक्तं स्ववामभागतः–इत्युक्तम्-एतावता, बलिनिधानस्थलमुपलब्धप्रायमेवेति ।

२--प. क. सू. ५ खण्डे-नवावरणपूजान्ते १७२–पत्रे–१८ सूत्रे

**अथ बलिप्रकारमाह–**

॥ वामभागविहितत्रिकोणवृत्तचतुरस्रे, गन्धाक्षतार्चिते, इत्युक्तम् ।

अत्रैतत्सूत्रभाष्यकारोयथाः–

अत्र-वामभागेत्यनेन-शीघ्रोपस्थितत्वात्–स्वस्यैव-वामभागोग्राह्यइत्याह ॥ एतावता च, स्ववामभागेऽयं बलिर्देय,इति-तदभिमतम् ॥

३–॥ अत्र–प. क. सूत्रे-६ खण्डे श्रीश्यामाक्रमे ३४ सूत्रे–च–श्रीमत्प्रधानदेवतायाआद्यायाबलिदानस्थानमेव, न प्राणायि तथापि–श्रीमल्ललिताम्बाबलिस्थानमेवैतद्देवताबलिस्थानं मन्तुं योग्यम्

॥ अथवा अनुगते–३०–३-७ विषये-बलिस्थानचित्राङ्क ग. ३–घ. ४ स्थानयोरेकतमस्थाने देयमित्यदोषलेशम् ॥ इति

तथा च-प. क. सूत्रे ७ खण्डे-श्रीवाराहीक्रमे ८–खण्डे–श्रीपराक्रमे चानयोर्भगवत्योर्मुख्यबलिस्तत्स्थानं च न स्पष्टीकृतं-मूले-तद्भाष्ये-च–

तथाप्यत्र-यथायोग्यं तद्विधेयमेव, साम्प्रदायिकैरिति विनयामि–प. क. सू. द्वितीयावृत्तिकारः

(३०-३।१२ वि. सं.)

**३०-३।१३ ॥ बलिदाने, श्रीक्रमोक्तधर्मग्रहणप्रमाणम् ॥**

अत्र स्पष्टीकृतं-प. क, सूत्रे-८-खण्डे-पराक्रमे-२४५-पत्रे-२७-सूत्रभाष्ये वृत्तिकृता-यथा—

॥ **बलिदाने धर्माः श्रीक्रमोक्ताग्राह्याः**-एकदेवताकत्वेन साजात्यात्-इति-॥

॥ एतदपि प. क. सूत्रानुसारिणां प्रायोज्ञेयम्—अन्यथा तत्तदितरग्रन्थोक्त तत्तद्देवतास्वतन्त्रविधिवैयर्थ्यं-स्यादेवेत्यलम् ॥ इति ॥

**१४ ॥ पार्षदेभ्यः एकएवबलिः ॥**

॥ आनन्दाश्रमग्रन्थावलि-७३-अङ्कमुद्रितश्रीमच्छङ्कराचार्यविरचितश्रीगा.पु.पध्दतौ-४६ पत्रे-आवरणपूजाङ्गहोमानन्तरं-यथा-**तत पार्षदबलिमन्त्राः**—।

॥ ये रौद्रारौद्रकर्माणोरौद्रस्थाननिवासिनः ।
योगिन्योऽप्युग्ररूपाश्च गणानामधिपाश्च ये ॥
विघ्नभूतास्तथाचान्ये दिग्विदिक्षु समाश्रिताः ।
ते सर्वे तृप्तिमनसोभूतागृह्णन्त्विमं बलिम् ॥
। गन्धपुष्पाक्षतान्वितबलिमष्टदिक्षु विकिरेत् ।
भूतानि यानीह वसन्ति भूतले बलिं गृहीत्वा विधिवत् प्रयुक्तम् ।
अन्यत्र वासं परिकल्पयन्तु क्षमन्तु तान्यत्र नमोऽस्तु तेभ्यः ॥
॥ अनेन अष्टदिक्षु **विकिरेदिति भूतबलिः ॥**
॥ अत्र प्रधानदेवताबलिरनुक्तोपि विधेयएवेति—॥

**३०-३।१५ ॥ आवरणपूजाङ्गश्रीबटुकादिबलिदानसङ्कल्पे जल-मोचने-अङ्गुल्यादिकम् ।**

**१-प्रथमः प्रकारः ।**

सर्वसाधारणत्वेन—श्रीबटुकादिभ्योबल्यर्पणसङ्कल्पे—पृथक् पृथगङ्गुल्यादिकं । **कौलार्णव**तन्त्रे-७ उल्लासे-६३ पत्रे-यथाः—

**१-॥ श्रीबटुकस्य-बलिदाने ॥**

अङ्गुष्ठानामिकाभ्याञ्च बटुकस्य बलिः स्मृतः ॥

**२-श्रीयोगिनीनाम्० ॥**

तर्जनीमध्यमाऽनामा अङ्गुष्ठोयोगिनीबलिः ॥

**३-भूतानाम्-**

अङ्गुलीभिश्चसर्वाभिरुक्तोभूतबलिः प्रिये ॥

**४-श्रीक्षेत्रपालस्य,**

अङ्गुष्ठतर्जनीभ्यां च क्षेत्रपालबलिं हरेत् ॥

**५-श्रीराजराजेश्वरस्य,**

अङ्गुष्ठमध्यमाभ्यां च राजराजेश्वरस्य च-॥ इति ॥

॥ अत्र, तत्तत्प्रधानदेवताबलौ-अङ्गुल्यादि, नोपदिष्टं तथापि-तत्र तत्र स्वतन्त्रप्रकरणोक्तमथवा, स्वगुरूपदिष्टमथवा-सामान्यसङ्कल्पकल्पोदितमबाधकं प्रमाणं ग्राह्यमित्यलंतद्विदांकृते विशिष्टलेखरेखाभिः-॥ इति ॥ ( ३०-३।१५-१ वि. सं. )

**३०-३ / १५-२ द्वितीयः प्रकारः ।**

पूजाङ्गश्रीबटुकादिबलिदाने-**ज्ञानार्णवतन्त्रे**-५-पटलसमाप्तौ २० पत्रे-यथाः-

१-ब-बलौ । वामाङ्गुष्ठानामिकाभ्यां बटुकस्य बलिं हरेत् ।

२-यो. ॥ तर्जन्यनामिके चैव मध्यमोपरि योजयेत् ॥ ४० ॥
योन्याकारेण वामेन योगिनीनां बलिर्भवेत् ।
॥ अङ्गुष्ठमध्यमानामा योन्याकारेण योजयेत् ॥ ४१ ॥

३-क्षे. ॥ वाममुष्टिं विधायादौ तर्जनीं सरलां कुरु
अनया मुद्रया देवि क्षेत्रपालबलिर्भवेत् ॥ ४२ ॥

४-गणेश. तथामुष्टेस्तु मध्यस्थामङ्गुलीं दण्डवत् कुरु
गजतुण्डा महामुद्रा गणपस्य बलिर्भवेत् ॥ ४३ ॥ इति ॥

( ३०-३।१५ वि. सर्वः सं. )

**३०-३।१६ ॥ बलेरकरणे-दोषः ॥**

१ ॥ बङ्गदेशीयसंस्कृतभारतीति मुदितमासिके-४ अङ्कीयपुस्तके-निबन्धे तृतीयपटले च-यथा—

॥ बलिदानं विना यस्तु पूजयेत्तारिणीं नरः ।
न धर्म्मो न च मोक्षः स्यात्तेषां पशुधियां प्रिये ॥ इति ॥

२ ॥ श्रीकुलार्णवतन्त्रे ७ उल्लासोरम्भे-एव-६० पत्रतः-बटुकादिबल्यावश्यकत्वे-श्रीपार्वतीपृच्छायां-श्रीशिवोक्तोत्तरं-यथा —

॥ देव्युवाच ॥ कुलेशबटुकादीनां बलिञ्च शक्तिलक्षणम् ।
तद्द्रव्यस्यैव स्वीकारं वद मे करुणानिधे

॥ ईश्वरउवाच । शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।

तस्य श्रवणमात्रेण तत्त्वज्ञानं प्रकाशते ॥

यावन्नो बटुके दद्यात्तावन्नैव कुलेश्वरि ।

तृप्यन्ति देवताः सर्वाः स्मरणाद्यजनादपि ॥

बटुकादीन् यजेत्तस्मात० इत्यादि ॥

३-॥ महानिर्वाणतन्त्रे, ६ उल्लासे-११८ श्लोकः श्रीशिववचोयथा —

॥ एवं बलिविधिःप्रोक्तः कौलिकानां कुलार्चने ।

अन्यथा देवताप्रीतिर्जायते न कदाचन ॥ इति

(३०-३।१६ वि. सं.)

**३०-३।१७ ॥ बलेरावश्यकत्वं-बलिकरणे-फलं च ॥**

**१-॥ बलिदानेन-पूजाफलं-प्राप्नोति**-तत्र प्रमाणम्-सप्तटीकायुक्तसप्तशती **गुप्तवतीटीकायां**-९ पत्रे-काम्यप्रयोगे-विशेषः इत्यत्र-यथा —

॥ एकावृत्तादिपाठानां प्रत्यहं पठतां नृणाम् । सङ्कल्पपूर्वं सम्पूज्य-न्यस्याङ्गेषु मनून्-सकृत् । **पश्चाद्बलिप्रदानेन फलं प्राप्नोति मानवः** ॥ इति ॥

**२-॥ बलिदानफलम् ॥**

**श्रीकालिकापुराणे**ऽपि-सप्तषष्ठितमे ध्याये-यथा-

॥ बलिभिः साध्यते मुक्तिर्बलिभिः साध्यते दिवम् ।

बलिदानेन सततं जयेच्छत्रुन् नृपान् नृपः--॥ इति ॥

एवं दददबलिं वीरोयथोक्तविधिनामुना ।

**बलिदानादेव चतुर्वर्गमाप्नोत्यसंशयम्** ॥ इति ॥

३-॥ तत्रैव **मातृकाभेदतन्त्रे** १० पटले-यथाः-

॥ विधिना परमेशानि यदि पूजादिकं चरेत् ।

**वत्सरान्ते प्रदातव्योबलिरेकः सुरेश्वरि** ॥

**अन्यथा नैव सिद्धिः स्यादाजन्म पूजनादपि** ।

**बलिदानं महायज्ञः कलिकाले च चण्डिके** ॥

**अश्वमेघादिकोयज्ञः कलौ नास्ति सुरेश्वरि** ।

**केवलं बलिदानेन चाश्वमेघफलं लभेत्** ॥ इति ॥—

४–॥ तथा च-**निबन्धे-पञ्चमपटले**–यथाः—

॥ सर्व्वत्र कोटितीर्थेषु स्नात्वा यत् फलमश्नुते ।

तत्फलं लभते **भक्त्या बलिभिः पूजनान्मम** ॥ इति ॥

५–॥ **एतद्बलिदानमण्डनविषयः ब्रह्मवैवर्तपुराणे**–उत्तरखण्डेऽप्यस्ति ॥ इति ॥

६–**बलिदानावश्यकत्वे**–श्रीमदाद्यायाः **कर्पूरस्तवराजे,** ॥ सलोमास्थि स्वैरमित्यादिश्लो**कोक्तविधिरप्यत्र**–सम्भाव्यताम् ॥ इति ॥

७–श्रीबटुकार्चनफलं–सटीकशारदा० २० पटले–७६६ पत्रे–७५ श्लोके–यथाः–

॥ इति सम्पूजयेद्देवं बटुकं प्रोक्तवर्त्मना ।

**धर्मार्थकाममोक्षाणां पतिर्भवति मानवः** ॥ ७५ ॥ इति ॥

८–॥ आवरणपूजाङ्गश्रीबटुकादिबलिदाने फलमुक्तं **ज्ञानार्णवतन्त्रे**–१६ पटले ७६ पत्रे-यथाः—

**पूर्ववद्बलिदानं च दद्यात् सर्वसमृद्धये** ॥ इति ॥ २२२ ॥

९–तत्रैव ७६ पत्रेः—

॥ **बलिपञ्चकमाख्यातं सर्वरक्षाकरं सताम्** ॥ इति ॥ २२६ ॥

( ३०–३।१७ वि. सर्वः सं. )

**३०–३।१८ ॥ उपर्युक्तपूजाङ्गश्रीबटुकादिश्रीराजराजेश्वरदेवतान्त बलिदानप्रमाणप्रयोगकारिकाः** ॥

१–कुलार्णवतन्त्रे–७ उल्लासे–६१ पत्रतो यथा—

॥ बटुकमन्त्रान् वक्ष्यामि श्रृणुष्व कुलनायिके ।

यैः समर्च्चितमात्रेण सर्वे नश्यन्त्युपद्रवाः ॥

तारत्रयं ततोदेवीपुत्रेति बटुकेति च ।

नाथश्च कपिलजटाभारभासुरपिङ्गल ॥

त्रिनेत्रेति पदं पश्चात् ज्वालामुखपदं ततः ।

इमां पूजां बलिं गृहणद्वयं **पावकवल्लभा** ॥

**उक्तोबटुकमन्त्रोऽयं चत्वारिंशद्भिरक्षरैः** ।

बलिनानेन सन्तुष्टोबटुकः सर्वसिद्धिदः ॥

शान्तिं करोतु मे नित्यं भूतवेतालसेवितः ।
तारत्रयं ततः सर्वयोगिनीभ्यः पदं वदेत् ॥
तत्पश्चात् सर्वभूतेभ्यः सर्वभूताधिपाय च ।
पदं ततोडाकीनीभ्यः शाकिनीभ्यः पदं वदेत् ॥
त्रैलोक्यनिपदं चैव वासिनीभ्यइमां वदेत् ।
**पूजां बलिं गृह्णयुग्मं स्वाहान्तोयोगिनीमनुः ॥**
**कथितोऽयं महेशानि मन्त्रः पञ्चदशाक्षरः**
या काचिद् योगिनी रौद्रा सौम्या सौम्यतरा यदि ॥
खेचरी भूचरी व्योमचरी प्रीतास्तु मे सदा ।
तारत्रयं वदेत् सर्वभूतेभ्यः सर्वएव हि ॥
**पश्चाद् भूपतिभ्योहुँ फट् सप्तदशाक्षरः ।**
भूताये विविधाकारादिक्षु भौमान्तरिक्षगाः ॥
पातालसंस्थाये केचिच्छिवे ये च न भाविताः ।
ब्रह्माद्याः सत्यसन्धाश्च भृत्याः शक्त्युपबृंहिताः ॥
तृप्यन्तु प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ।
॥ तारत्रयं ततोदेवि युग्मं देवीपदं वदेत् ।
सर्वविघ्नान् पदं पश्चान्नाशय द्वितीयं तथा ॥
सर्वोपचारसहितामिमां पूजां बलिं वदेत् ।
गृह्ण गृह्ण दिठान्तोयं भैरवाधिष्ठिताय च ॥
अक्षोभ्यवन्दितः पश्चाद् हृदयाधिष्ठितं परम् ।
सिद्धार्थं पदमाभाष्य पश्चादवतरद्वयम् ॥
क्षेत्रपालद्वयं पश्चान्महाक्षेत्रपदं ततः ।
अस्मिन् ग्रामाधिपतयेऽस्मिन् देशाधिपतये ततः ॥
वदेद्वटुकनाथेति देवीपुत्रपदं ततः ।
मेघनादपदं पश्चात् प्रचण्डोग्रपदं वदेत् ॥
कपालीति पदं पश्चाद्भीषणेतिं पदं वदेत् ।
स्यात् सर्वविघ्नाधिपतये इमां पूजां बलिं वदेत् ॥
गृह्ण गृह्ण कुरुद्वन्द्वं मम दूरय युग्मकम् ।
ज्वलयुग्मं प्रज्वलयुग्मं सर्वविघ्नानितीरयेत् ॥

नाशय द्वितयं क्षांक्षीं क्षूं क्षैं क्षौं क्षः-ततः परम् ।
मातृपुत्रपदं पश्चात् कुलपुत्रपदं ततः ॥
क्षेत्रपालाय वौषट् हुँ **षडुत्तरशताक्षरः ।**
तारत्रयं वदेत् पश्चादमुक क्षेत्रपाल च ॥
राजराजेश्वर-इमं पूजां बलिमतः परम्
गृह्णयुग्मं द्विठान्तोऽय**मष्टाविंशाक्षरोमनुः** ॥
अनेन बलिदानेन बटुवृन्दसमवितः ।
राजराजेश्वरोदेवोमे प्रसीदतु सर्वदा ॥ इति ॥

३०-३ तत्रादौ-**श्रीबटुकबलिदानविधौ-कर्तव्यप्रमाणम् ।**
१९

**श्रीमहानिर्वाणतन्त्रे** ६ उल्लासे यथा—

१—संतर्प्य कालिकामाद्यां बटुकेभ्योबलिं हरेत् ॥ ५३ ॥
स्ववामभागे सामान्यं मण्डलं रचयेत् सुधीः ।
सम्पूज्य स्थापयेत्तत्र सामिषान्नं सुधान्वितम् ॥५४॥
वाङ्माया कमला बं च बटुकाय नमः पदम्[1] ।

**अत्र टीका—बटुकादिभ्योबलिदानस्य विधिमाह**-स्ववामभागे०—इत्यादि ।
॥ सुधीः धीरः स्ववामभागे सामान्यं चतुष्कोणं मण्डलं रचयेत्
तन्मण्डलं सम्पूज्य-तत्र मण्डले, चतुर्दिक्षु-तन्मध्ये च-सुधान्वितं
सुरासंयुक्तं सामिषान्नं मांसादिसहितमन्नं स्थापयेत् ॥ ५४ ॥

२ ॥ ज्ञानार्णवे ५ पटले-१९ पत्रे-यथा—
॥ श्रीचक्रमभितोदेवि त्रिकोणं व्योम चाऽऽलिखेत् ।
[1]पूर्वमन्त्रैः समभ्यर्च्य बटुकादिभिरद्रिजे ॥ २८ ॥ इति

---

१ वांकारं पूर्वमुच्चार्य बटुकाय नमोलिखेत् ॥ ७३ ॥ (बं-इति-साध्वत्र-)
यांकारं बीजमुच्चार्य योगिनीभ्योनमस्तथा ॥
क्षांकारं बीजमुच्चार्य क्षेत्रपालाय वै नमः ॥ ७४ ॥
गांकारं बीजमुच्चार्य ततोगणपतिं यजेत् ॥
॥ इमे चत्वारोमन्त्राः श्रीबटुकादिदेवतापूजोपयोगिनः ॥ इति ।
॥ इदं ज्ञानार्णवे-१६ पत्रे-४ पटले ॥
अत्र-महानिर्वाणतन्त्रे ६ उल्लासे-५४ श्लोकतः ५८ श्लोकाद्दृश्यः-तत्र च बटुकबलिमन्त्रे वा
इति-न-अपि तु-बं-इत्यस्ति—

**श्रीबटुकबलिमन्त्रोद्धारः** ॥ यथा—

॥ एह्येहि देवि पुत्रान्ते बटुकान्तेऽथ नाथ च
कपिलान्ते जटाभार भासुरान्ते त्रिनेत्र च ॥ २९ ॥
ज्वालामुख च सर्वान्ते विघ्नान्नाशय नाशय ।
सर्वोपचारसहितं बलिं गृह्ण द्विधा पदम् ॥ ३० ॥
वह्निजायान्वितोमन्त्रोबटुकस्य उदाहृतः ॥
अनेन विधिना देवि बटुकस्य बलिं प्रिये ॥ ३१ ॥ इति ॥

**३ श्रीबटुकबलिदानफलम् ॥**

सटीकशारदा० २० पटले—७६७ पत्रतो**राज्ञोजनपदस्यच—निर्विघ्नकरण-प्रसङ्गे—यथा—**

॥ बटुकेश्वरमभ्यर्च्य भक्ष्यभोज्यफलान्वितम् ॥ ८७ ॥
नित्यं निवेद्य नैवेद्यं मध्यरात्रे बलिं हरेत् ।
एवं जपित्वा प्रयतः सहस्राण्येकविंशति ॥ ८८ ॥
समाप्तिदिवसे रात्रावजं हत्वा बलिं हरेत् ।
ततः कारयिता राजा तोषयेत् साधकं धनैः ॥ ८९ ॥
**विधिनाऽनेन सन्तुष्टोबटुकेशः प्रयच्छति ।**
**तेजोबलं यशः पुत्रान् कान्तिं लक्ष्मीमरोगताम् ॥९०॥**
**नश्यन्ति शत्रवः सर्वे वर्धन्ते बन्धुबान्धवाः ।**
**अवग्रहोन जायेत विषये तस्य भूपतेः ॥ ९१ ॥** इति ॥

( ३०—३।१९ वि. सं. )

**३०—३।२०—१ श्रीयोगिनीबलिविधौ—कर्तव्यम्—श्रीमहानिर्वाण-तन्त्रे—**६ उल्लासे-यथा—

॥ ततस्तु यां योगिनीभ्यः स्वाहा-याम्यां हरेद्बलिम् ॥ ५६ ॥

**अत्र टीका**—ततस्त्विति । ततोऽनन्तरम्-एषः सुधामिषान्वितोबलिर्यां योगिनीभ्यः स्वाहेति मन्त्रेण-याम्यां मण्डलस्य दक्षिणे भागे योगिनीभ्योबलिं हरेत् ॥ ५६ ॥ इति

२ श्रीज्ञानार्णवे, ५ पटले—१९ पत्रे—यथा—

॥ उर्ध्वं ब्रह्माण्डतोवा दिवि गगनतले भूतले निष्कले वा ।
पाताले वाऽनले वा सलिलपवनयोर्यत्र कुत्र स्थितावा ॥
क्षेत्रे पीठोपपीठादिषु च कृतपदाधूपदीपादिकेन ।
प्रीतादेव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः ॥ ३२ ॥

एतदन्ते महेशानि यां बीजं योगिनी ततः ।
भ्यः स्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ॥ ३३ ॥
कवचं चास्त्रमालिख्य वह्निजायां पुनर्लिखेत् ।
अनेन मनुना देवि योगिनीनां बलिं हरेत् ॥ ३४ ॥ इति ॥

( ३०-३।२०-१ वि. सं. )

**३०-३ श्रीक्षेत्रपालबलिविधौ०** । श्री**महानिर्वाण**तन्त्रे ६ उल्लासे-यथा-
२१-१

॥ षडदीर्घयुक्तं सम्बर्तं क्षेत्रपालाय हृन्मनुः ।
अनेन क्षेत्रपालाय बलिं दद्यात्तु पश्चिमे ॥ ५७ ॥

**अत्र टीका**-षडित्यादि । षड्दीर्घयुक्तं सम्बर्तं क्षकारमुक्त्वा-ततः क्षेत्रपालायेत्युक्त्वा ततोहृत्-नमः-इति वदेत्-सर्वपदयोजनया-क्षां क्षीं क्षुं क्षैं क्षौं क्षः क्षेत्रपालाय नमः-इति मनुर्जातः एषःसुधामिषान्वितान्नबलिरित्याद्यनेनैव मनुना-मण्डलस्य पश्चिमे भागे क्षेत्रपालाय-बलिं दद्यात् ॥ ५७ ॥

**२-श्रीज्ञानार्णवे** ५ पटले १९ पत्रे-यथा—

॥ षड्दीर्घस्वरसंभिन्नं क्षकारं विलिखेत् प्रिये ।
स्थानक्षेत्रपदं पालधूपदीपादि चाऽऽलिखेत् ॥ ३५ ॥
सहितं बलिमालिख्य गृह्ण गृह्ण ततोवदेत् ।
**वह्निजायान्वितोमन्त्रः क्षेत्रपालस्य सुन्दरी** ॥ ३६ ॥
अनेन मनुना देवि क्षेत्रपालबलिः स्मृतः ॥ इति ॥

**३-श्रीक्षेत्रपालबलिदाने—मन्त्रादिकं विधिश्च**-सटीक**शारदा-तिलके**--२० पटले-७६१ पत्रे-यथा—

॥ तस्मै सपरिवाराय बलिमेतेन निर्हरेत् ।
पूर्वमेहिद्वयं पश्चाद्विदुषि स्यात् पुरुद्वयम् ॥ ३९ ॥
भञ्जयद्वितयं भूयोनर्त्तयद्वितयं पुनः ।
ततोविघ्नपदद्वन्द्वं महाभैरव तत्परम् ॥ ४० ॥
क्षेत्रपालबलिं गृह्णद्वयं **पावकसुन्दरी** ।
**बलिमन्त्रोऽयमाख्यातः सर्वकामफलप्रदः** ॥ ४१ ॥
सोपदंशं बृहत् पिण्डं कृत्वा रात्रिषु साधकः ।
स्मृत्वा यथोक्तं क्षेत्रेशं तस्य हस्ते बलिं हरेत् ॥ ४२ ॥

**बलिनाऽनेन सन्तुष्टः क्षेत्रपालः प्रयच्छति ।**

**कान्ति मेधां बलारोग्यतेजःपुष्टियशःश्रियः ॥ ४३ ॥इति ॥**

**४–श्रीक्षेत्रपालपूजनाकरणे अपायउक्तः**--सटीकशारदा २० पटले ७६० पत्रे ३२ श्लोकटीकायां–यथा —

॥ क्षेत्रपालमसम्पूज्य यः कर्म कुरुते क्वचित् ।

तस्य कर्मफलं हन्ति क्षेत्रपालोन संशयः ॥ इति ॥

( ३०–३।२१ वि. सं. )

**३०–३।२२–१ श्रीगणपतिबलिविधौ०** । श्रीमहानिर्वाणतन्त्रे ६ उल्लासे–यथा —

१ ॥ खान्तबीजं समुद्धृत्य षड्दीर्घस्वरसंयुतम् ।

ऐऽन्तं गणपतिं चोक्त्वा **वह्निजायान्ततोवदेत्** ॥ ५८ ॥

उत्तरस्यां गणेशाय बलिमेतेन कल्पयेत् ॥ इति ॥

अत्रटीका—खान्तेत्यादि । षड्दीर्घस्वरसंयुतं खान्तबीजं

खस्यान्तोगकारस्तद्रूपं बीजं समुद्धृत्य ततोएऽन्तं-गणपति

श्चोक्त्वा ततोवह्निजायां स्वाहेति वदेत् योजनया

**गां गीं गुं गैं गौं गः गणपतये स्वाहेति मन्त्रोजातः**

एषः सुधामिषान्वितान्नबलिरित्याद्येनानेनैव–मन्त्रेण

उत्तरस्यां मण्डलस्योत्तरे भागे–गणेशाय बलिं कल्पयेद्दद्यात् ॥ इति ॥

२–इतोन्यप्रकारेण श्रीज्ञानार्णवे ५ पटले २० पत्रे–यथा—

॥ गां गीं गूं त्रयमालिख्य ऐन्तं गणपतिं ततः ॥ ३७ ॥

वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत् ।

मे वशं चाऽऽनय प्रोच्य सर्वोपपदमालिखेत् ॥ ३८ ॥

चारान्ते सहितं चोक्त्वा बलिं गृह्ण द्विधा पदम् ।

**वह्निजायान्वितोमन्त्रोगणपस्य बलिं हरेत्** ॥ ३९ ॥ इति ॥

( ३०–३।२२ वि. सं. )

३०–३।२३–**सर्वभूतबलिविधौ०** । श्रीमहानिर्वाणतन्त्रे-६ उल्लासे यथा—

॥ मध्ये तथा सर्वभूतबलिं दद्याद्यथाविधि ॥ ५९ ॥

**ह्रीं श्रीं सर्वपदं-चोक्त्वा विघ्नकृद्भ्यस्ततोवदेत् ।**

**सर्वभूतेभ्यइत्युक्त्वा हूं फट् स्वाहा मनुर्मतः** ॥६०॥ इति ॥

**अत्र टीका**—तथैव मण्डलस्य मध्ये-यथाविधि विधिवत्-सर्व्वभूतबलिं—दद्यात् ॥५९॥

सर्वभूतेभ्योबलिदानस्य मन्त्रमाह-एकेन ह्रीमिति। ह्रीं श्रीं सर्व्वपदमुक्त्वा ततो विघ्नकृद्भ्यः-इति वदेत्-ततः सर्व्वभूतेभ्यो-इत्युक्त्वा हूं फट् स्वाहेति वदेत्—योजनया-ह्रीं श्रीं सर्व्वविघ्नकृद्भ्यः—सर्व्वभूतेभ्योहूं फट् स्वाहेति—मनुर्जातः—एषः—सुधामिषान्विता-न्नबलिरित्याद्योऽयमेव मनुः सर्व्वभूतेभ्योबलिदाने मतः ॥ ६१ ॥ इति ॥

॥ **किञ्चिन्निवेदनमत्र** ॥

॥ अन्यच्च-नैवेद्योपयोगिपदार्थाः प्रमाणग्रन्थसहिताः प्रागभीरिताः। बल्युपयुक्तपदार्थाश्चापि वि. १३।३०-३ तः १३।३०-२३।५०८ पत्रतः—५३१ पत्रान्तं यावन्निरूपिताः। अन्यच्चात्र बलिविषयकं नानाग्रन्थतोयथामत्यलेखीति-किं बहुना-तद्विदां पुरतोविशिष्टप्रतिपादनश्रमेण।

अथ चैतत्सूत्रोक्तदेवतेतरतन्त्रग्रन्थानुसारिबलिधित्सूनां कृते—तान्त्रिकपद्धत्यैवावरण पूजाङ्गश्रीबटुकादिपञ्चबलयः—प्रधानदेवताबलिश्च —सर्वसाधारणतयास्मद्ग्रथितबालातन्त्र-चन्द्रिकाग्रन्थस्थश्चाधस्ताल्लिख्यते सोपेक्षितश्चेत् स्वस्वकार्ये उपादेय-इति

३०-३।२४ अथ **श्रीवडोदराराज्याधिपतिविद्वत्प्रियस्वर्यातश्रीमत्सयाजीरावनृपेन्द्रमुद्रापितश्रीबालातन्त्रचन्द्रिका**नामकग्रन्थस्थावरणपूजाङ्गः **श्रीबटुकादिदेवताबलिप्रयोगः** ॥ ३१६ पत्रस्थः—

१—तत्रादौ **श्रीबटुकबलिदानप्रयोगोयथा**—

॥ ईशान्यां-प्रोक्षणीपात्रजलेन—मण्डलं विधाय। तदुपरि चन्दनादिना-अथवा-विशेषार्घ जलेन-बिन्दुत्रिकोणवृत्तचतुरस्रात्मकं मण्डलं विलिख्य—तन्मण्डलपूजा कार्या—यथा—

दक्षहस्ते—गन्धाक्षतपुष्पाण्युपादाय—ॐ ऐं ह्रीं व्यापकमण्डलाय नमः—इति सम्पूज्य, ॐ अस्त्रायफट् इत्युक्त्वा—क्षालितमाधारपात्रं तन्मण्डले निधाय-तत्र च-चतुर्दिक्प्रकटित-दींपप्रदीप्तं-यथाधिकारं सखण्डं सधूपशलाकं हविःशेषपूरितबलिपात्रमास्थाप्य-मृन्मयजलपात्रं चास्थाप्य[1]

॥ **अथ श्रीबटुकतद्बलिपूजा—च-यथा** ॥

ॐ श्रीदेवीपुत्राय बटुकाय नमः—गन्धपुष्पाभ्यां पूजयामि नमस्करोमि—इत्युक्त्वा. श्रीबटुकं ध्यात्वा-आकाशे तत् समर्प्य-तस्मै नमः कुर्यात्

॥ पुनश्चापि गन्धाक्षतपुष्पाद्युपादाय-ॐ श्रीबटुकबलिद्रव्याय नमः—गन्धाक्षतपुष्पाभ्यां पुजयामि इति-बलिं सम्पूज्य नमस्कुर्यात्—

---

१ एतदवधिक्रमधस्तनश्रीयोगिनी क्षेत्रपाल गणपति सर्वभूत बलिष्वप्यूह्यम् ॥

ततोबलिपात्रात्तदभावे सामान्यार्घाज्जलमादाय

॥ ॐ ऐं ह्रीं एह्येहि देवीपुत्र बटुकनाथ कपिलजटाभारभासुर पिङ्गलत्रिनेत्र ज्वालामुख सर्वविघ्नान्नाशय, सर्वोपचारसहितमिमं बलिं गृह्णगृह्ण स्वाहा-इति

अथवा

॥ ॐ ह्रीं बटुकाय मे आपदुद्धारणं कुरु कुरु बटुकाय ह्रीं बटुक एष ते बलिर्न मम-इत्युक्त्वा वामाङ्गुष्ठानामिके एकीकृत्य दक्षिणहस्तस्थं बलिपात्रसामान्यार्घपात्रान्यतमजलं तत्र प्रसिञ्चेत् । ततः पुष्पाञ्जलिमादाय

॥ ॐ बलिदानेन संतुष्टोबटुकः सर्वसिद्धिदः ।
शान्तिं करोतु मे नित्यं भूतवेतालसेवितः ॥

इति पठित्वा—श्रीबटुकेनायं बलिर्गृहीतएवैवं ध्यात्वा-पुष्पाञ्जलिं समर्प्य—ॐ एष बलिः श्रीबटुकाय न मम-इत्युक्त्वा सामान्यार्घजलं प्रक्षिपेद्योन्या च-प्रणमेदिति श्रीबालातन्त्र चन्द्रिकास्थ**श्रीबटुकबालिप्रयोगः** सम्पूर्णः ॥

२—अथ **श्रीयोगिनीबलिप्रयोगः** ॥ तत्रैव ॥

॥ ततआग्नेयकोणे-श्रीबटुकबलिवन्मण्डलं विरच्य-तथैव सम्पूज्य-तथैव तत्राधारं संस्थाप्य-तथैव-दीपादिसहितं-बलिद्रव्यसम्भृतं पात्रमास्थाप्य । दक्षकरे गन्धपुष्पादि सङ्गृह्य

ॐ यां योगिनीभ्योनमः इत्युक्त्वा—श्रीप्रधानदेवतायाः परिसेविकाः श्रीविश्वदुर्गादि ६४ योगिनीर्ध्यात्वा तथैवाकाशे पुष्पादि समर्प्य । पुनश्चापि चन्दनाक्षतपुष्पाणि हस्ते कृत्वा—

ॐ श्रीयोगिनीदेवताबलिद्रव्याय नमः इति—बलिं सम्पूज्य-नमस्कृत्य—ततोयोगिनी-पात्रं पात्रासादने स्थापितं चेत्तस्मान्नो चेत् सामान्यार्घाज्जलं गृहीत्वा

॥ ॐ ऊर्ध्वं ब्रह्माण्डतोवा दिवि गगनतले भूतले निस्तले वा ।
पाताले वा तले वा सलिलपवनयोर्यत्र कुत्र स्थितावा ॥
क्षेत्रे पीठोपपीठादिषु च कृतपदाधूपदीपादिकेन ।
प्रीतादेव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः ॥ १ ॥

॥ ॐ शुक्लवर्णे त्रिशूलडमरुपाशासिधरे सर्वालङ्कारभूषिते ससैन्ये सौम्ये चतुःषष्टि योगिनीसहिते एह्येहि आगच्छ आगच्छ सर्वयोगिनीभ्यः सर्वभूतेभ्यः सर्वभूताधि-पतिभ्योडाकिनीभ्यः शाकिनीभ्यः त्रैलोक्यनिवासिनीभ्यः इमं बलिं गृह्णीत ममेप्सितं कार्यं कुरुत कुरुत स्वाहा । इत्युभयमन्तिमं वा-पठित्वा बलिपात्रात् सामान्यार्घाद्वा जलं गृहीत्वा,

वामहस्तमध्यमानामिकाङ्गुष्ठं मिश्रीकृत्य तदुपरि तज्जलं निक्षिपेद्यथा बलौ पतेत् ततश्च पूर्ववत् पुष्पाञ्जलिमादाय

ॐ याः काश्चियोगिनीरौद्राः सौम्याघोरतराः पराः

खेचरीभूचरीव्योमचर्यः प्रीतास्तु मे सदा ॥

इत्युक्त्वा–श्रीयोगिनीर्ध्यात्वाक्षतपुष्पाण्यञ्जलिस्थानि–ताभ्योऽर्पयेत् । ॐ एषबलि-र्योगिनीभ्योन मम-इत्युक्त्वा-सामान्यार्घजलमुत्सृज्य नमस्कृत्य योन्या प्रणमेदिति—

श्रीबालातन्त्रचन्द्रिकायां **योगिनीबलिप्रयोगः सम्पूर्णः**

३–॥ तत्रैव ॥ **अथश्रींक्षेत्रपालबलिः** ॥

ततोनैर्ऋत्यकोणे-श्रीबटुकबलिदानवन्मण्डलं विधाय सम्पूज्य-पूर्ववत् तत्र-बलिपात्रा-धारं मुक्त्वा-तत्र पूर्ववत् सदीपधूपबलिपात्रं निधाय-ॐ क्षं क्षेत्रपालाय नमः–इत्युक्त्वा-तं ध्यात्वा चन्दनाक्षतपुष्पाणि आकाशे तस्मै समर्प्य नमस्कृत्य ।

॥ ॐ श्रीक्षेत्रपालबलिद्रव्याय नमः–इत्युच्चार्य-बलिं चन्दनादिना सम्पूज्य । बलिपात्रा-त्तदभावे सामान्यार्घपात्राज्जलमादाय–ॐ क्षां क्षीं क्षूं क्षैं क्षौं क्षः एह्येहि देवीपुत्र उच्छिष्ट-हारिन् मुहुर्मुहूरक्ष रक्ष क्षेत्रपाल सर्वविघ्नान्नाशय नाशय सर्वोपचारसहितं इमं बलिं गृह्ण-गृह्ण स्वाहा-इत्युक्त्वा-वामाङ्गुष्ठं तर्जनीं च मिश्रीकृत्य तज्जलं तत्र पातयेद्यथा बलौ पतेत्–ततस्तं प्रार्थयेद्यथा-पुष्पाञ्जलिमादाय

ॐ यं यं यं यक्षरूपं दशदिशिवदनं भूमिकम्पायमानं ।

सं सं संहारमूर्तिं शिरसि धृतजटाशेखरं चन्द्रबिम्बम् ॥

दं दं दं दीर्घकायं कृतनरवपुषं ऊर्ध्वरेखाकरालं[1] ।

पं पं पं पापनाशं प्रणमत सततं भैरवं क्षेत्रपालम् ॥ १ ॥

योयस्मिन् क्षेत्रवासी च क्षेत्रपालः सकिङ्करः ।

प्रीतोसौ बलिदानेन सर्वरक्षां करोतु मे ॥

इति ध्यात्वा श्रीक्षेत्रपालाय पुष्पाञ्जलिं समर्प्य–

एषबलिः–क्षेत्रपालाय न मम-इति जलमुत्सृज्य-योन्या प्रणमेदिति ॥

॥ इति **श्रीक्षेत्रपालबलिः** सम्पूर्णः ॥

४ तत्रैव० ॥ अथ **श्रीगणपतिबलिः** ॥

ततोवायव्यकोणे-श्रीबटुकबलिवन्मण्डलं विधाय–सम्पूज्य–पूर्ववत्तत्र बलिपात्राधारं मुक्त्वा-तत्र पूर्ववत् सदीपधूपं बलिपात्रं निधाय-ॐ गं गणपतये नमः इत्युक्त्वा तं ध्यात्वा-

१–अत्र चोर्ध्वरेखा० इति पाठः समीचीनः–॥

आकाशे गन्धाद्यर्पयेत् नमेच्च-ततः श्रीगणपतिबलिद्रव्याय नमः-इत्युक्त्वा बलिमपि पूजये-न्नमेच्च। ततः बलिपात्रात्तदभावे सामान्यार्घपात्राज्जलमादाय-ॐ गां गीं गूं गैं गौं गः श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय सर्वोपचारसहितं इमं बलिं गृह्ण गृह्ण स्वाहा-इत्युक्त्वा वामाङ्गुष्ठमध्यमे मिश्रीकृत्य पूर्ववत् बलौ जलं पातयेत्-ततश्च पुष्पाञ्जलिमादाय

सर्वदा सर्वकार्याणि निर्विघ्नं साधयाम्यहम्।
शान्तिं करोतु मे नित्यं विघ्नराजः सदा क्रियाम्॥

इत्युक्त्वा-तं ध्यात्वाकाशे पुष्पादि प्रक्षिपेत्।

॥ ॐ एष बलिः श्रीगणपतये न मम-इति जलमुत्सृज्य योन्या प्रणमेच्च इति॥

॥ इति **श्रीगणपतिबलिः** सम्पूर्णः॥

॥ उपर्युक्तश्रीबटुकयोगिनीक्षेत्रपालगणपतीनां चतुर्णां देवानां बलिदानप्रार्थनयोरनन्तरं-पुनश्चापि तांश्चतुरोदेवान् प्रार्थयेत्

अथवा स्व स्वदिशि एषां चतुर्णां चतुरोबलीन् पृथगेवोक्तरीत्या पूर्ववद्दत्वा प्रार्थयेद्यथा—

ॐ गणाधिनाथं बटुकं च योगिनीः।
क्षेत्राधिनाथं च विदिक्चतुष्टये॥
सर्वोपचारैः परिपूज्य भक्तितो।
निवेदयामोबलिमुक्तयुक्तिभिः॥

एवं-श्लोकोक्तदेवान्नमस्कुर्या**दित्यपरः पक्षः**॥ इति॥

॥ ५—तत्रैव०॥ **अथ सार्वभौतबलिः**॥

चतुर्णां श्रीबटुकादिबलीनामुत्तरे (शुद्धोत्तरस्यां दिशि) श्रीबटुकादिबलिवन्मण्डलं विधाय

ॐ श्रीसर्वभूतबलिमण्डलाय नमः—इत्युक्त्वा-तत्र-चन्दनादि समर्प्य-नमस्कृत्य। तत्राधारपात्रं संस्थाप्य-तत्र सदीपधूपं बलिद्रव्यपूरितं पात्रं निधाय।

ॐ ह्रीं सर्वभूतगण इहागच्छ आगच्छ सर्वभूतगणाय नमः—इति-चन्दनाक्षत पुष्पाद्याकाशे निक्षिप्य पुनश्च चन्दनाक्षताद्यादाय—ॐ श्रीसर्वभूतबलिद्रव्याय नमः इत्युक्त्वा तत् पुष्पादिकं बलौ प्रक्षिप्य नमस्कुर्याच्च। ततोबलिपात्रात्तदभावे सामा-न्यार्घपात्राद्वा जलमादाय।

ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्योहुं फट् इमं बलिं गृह्ण गृह्ण स्वाहा।

इत्युक्त्वा--वामाङ्गुष्ठतर्जन्यग्रमेकीकृत्य ( अथवा वामहस्तसर्वाङ्गुलिभिः ) तज्जलं बलौ प्रक्षिपेत्

ततः पुष्पाञ्जलिमादाय

॥ ॐ भूताये विविधाकारादिव्यभूम्यन्तरिक्षगाः ।
पातालतलसंस्थाश्च शिवयोगेन भाविताः ॥ १ ॥
क्रूराद्याः शतसङ्ख्याकाः पाखण्डाद्याव्यवस्थिताः ।
तृप्यन्तु प्रीतमनसोभूतागृह्णन्त्विमं बलिम् ॥ २ ॥
नानावर्णाकृतैर्वक्रैर्नानाभूषाम्बरायुधैः ।
नानाभूतगणैर्यूथं सर्वभूतेश्वरं भजे ॥ ३ ॥

इत्युक्त्वा-सर्वभूतगणेभ्यआकाशे तं पुष्पाञ्जलिं क्षिपेत् प्रणमेच्च ।

॥ ततः-एषबलिः सर्वभूतगणेभ्योन ममेत्युक्त्वा-जलमुत्सृज्य-बाणमुद्रया भूतानि विसृज्य तृप्ताः सन्तोभूतगणाः प्रयाताः-इति भावयेत्-योन्या प्रणमेच्च ।

ततोहस्तपादं प्रक्षाल्य मूलेनाचम्य प्राणानायम्य-स्वशरीरे सामान्यार्घजलं-प्रोक्षणीपात्र-जलं वा किञ्चित् सिञ्चेदिति

॥ इति **सर्वभूतबलिप्रयोगः** सम्पूर्णः ॥

**६–तत्रैव–॥ अथ मुख्यदेवाग्रे मुख्यबलिप्रयोगोयथा–**

ततः-श्रीमुख्यदेवताग्रे-अथवा श्रीयन्त्रसमीपे–श्रीबटुकबलिवन्मण्डलं कृत्वा–ॐ श्री-अमुकदेवताबलिमण्डलाय नमः-इति-सम्पूज्य । तत्र पूर्ववदाधारपात्रमास्थाप्य चतुर्मुख दीपप्रदीप्तं सधूपं बलिद्रव्यपूरितं बलिपात्रं निधाय । ततोगन्धाक्षतपुष्पाण्यादाय सप्रणवं मूलं पठित्वा-सपरिवारायै श्रीअमुकमुख्यदेवतायै नमः । इत्युक्त्वा-गन्धाक्षतपुष्पैरर्चयित्वा ।

पुनश्च गन्धाक्षतपुष्पाण्यादाय-ॐ श्रीअमुकप्रधानदेवताबलिद्रव्यायनमः गन्धाक्षत-पुष्पाण्यर्पयामि नमस्करोमीत्युक्त्वा-तद्गन्धादिकं बलेरुपरि प्रक्षिप्य प्रणमेत् ।

ततश्च बलिपात्रात सामान्यार्घपात्राद्वा जलमादाय-ॐ ह्रीं साङ्गायै सपरिवारायै सवाहनायै सायुधायै सशक्तिकायै ( श्रीमदमुकेश्वरसहितायै ) श्रीअमुकमुख्यदेवतायै नमः ।

॥ ॐ एह्येहि जगतां मातर्जननि इमं समीपं बलिं गृह्ण गृह्ण सिद्धिं देहि देहि शत्रुक्षयं कुरु कुरु ऐं-ह्रीं हुं-फट् स्वाहा ॥ –

इत्युक्त्वा-देवतीर्थेन, तज्जलं बलावर्पयेत्–मूलन पुष्पाञ्जलिमर्पयेत् प्रणमेच्च ।

ततश्च--एषबलिः श्रीअमुकमुख्यदेवतायै न मम, इत्युक्त्वा-जलमुत्सृज्य–योन्या प्रणमेदिति ।

## ॥ इति मुख्यदेवताबलिः सम्पूर्णः ॥

॥ इति श्रीसर्वसाधारणत्वेन श्रीबालातन्त्रचन्द्रिकाग्रन्थस्थावरणपूजाङ्गश्रीबटुकादि मुख्यदेवतान्तबलिप्रयोगः सम्पूर्णः ॥

इदं बलिविशेषकं हि परिशिष्टमुक्तं मया
न तत्र मम किञ्चिदप्यभिहितं शिवोच्छिष्टकम् ।
स्वतन्त्रनिजतन्त्रतश्च विदधीत वैतान् बलीन्
यथाधिकृति साधकः परममम्बिकाराधकः ॥ प. क. सू. द्वितीयावृत्तिकर्ता– ॥

( ३०-३।२४ वि. सं. )

३०-३।२५ ॥ **पूर्वतन ४९८-पत्रगत १३-३०१८-३०१९ विषयस्था-पूर्णमहानैवेद्यविधिसमाप्तिः–**

॥ एवमावरणपूजाङ्गहोमं निर्वर्त्य, पुनश्चापि **योनिमुद्रया प्रणमेदित्यतोऽपूर्णोमहानैवेद्यविधिर**धस्तनविधया सुधिया पूरयितव्यः इति—

स यथा—

॥ एवं हवनबल्यात्मकमहानैवेद्याशनेन-स्वेष्टदेवतामतितृप्तां विभाव्य सामान्यार्घ-जलं गृहीत्वा-ॐ० अमृतापिधानमसि स्वाहा–इति (पश्चादाचमनं० श्री. मा. पू. श्लोकं) पठित्वा-ॐ उत्तरापोशनं समर्पयामि, इत्युक्त्वा-तत् सामान्यार्घ जलं स्वेष्टदेवतायै-समर्प्य । ( ततउष्णोदकैः० मा. पू. ३५ श्लोकं-पठित्वा । ) ॐ० नमः हस्तप्रक्षालनं स०–मुखप्रक्षालनं स०–गण्डूषपाद्यादिकं–करोद्वर्तनाय गन्धांश्च समर्पयामि, इत्युक्त्वा-इष्ट दे०यै-यन्त्रे वा-सामान्यार्घजलं-त्रिरर्पयेत् ॥

॥ ततोमुख्यदेवतायै-निवेदितं नैवेद्यपात्रम्–ॐ० अस्त्राय फट-इत्युक्त्वा-नैर्ऋत्य-कोणे-अथवा-पूजास्थानाद्बहिर्भूतपवित्रस्थले-निदध्यात्–हस्तौ क्षालयेच्च ।

॥ ततआचमनीयपात्रादथवा–सामान्यार्घपात्राज्जलमादाय (ॐ अतिशीत० इति पत्रस्थं ३६ श्लोकमन्त्रमथवा )

॥ ॐ० गङ्गोत्तरीवेगसमुद्भवेन सुशीतलेनातिमनोहरेण ॥
त्वं पद्मपत्राक्षि मयार्पितेन शङ्खोदकेनाचमनं गृहाण ॥

इति श्लोकमथवोभावपि–पठित्वा-ॐ० नमः–नैवेद्यान्ते शङ्खोदकेनाचमनं–स० इत्युक्त्वा-तज्जलं श्रीकरे, वा श्रीयन्त्रराजस्योपरि वा, समर्पयेत् ॥

एवमाचमनं दत्वानन्तरं सामान्यार्घजलेन पुनरपि श्रीहस्तं क्षालयेदिति ॥

॥ इति श्रीबालातन्त्रचन्द्रिकास्थस्तान्त्रिकोमहानैवेद्यविधिः सम्पूर्णः ॥

अत्रापूर्णं सुधिया-स्वस्वसम्प्रदायानुसारित्वेन, पूरणीयं किमाधिकं तद्विदां पुरः प्रचुरप्रतिपादनेन—

॥ एवमन्तर्गतहवनबल्यात्मकमहानैवेद्यसमाप्तेरूर्ध्वमधस्तनरीत्या श्रीष्टदेवतायै ताम्बूलादिमुखवासं सुसमर्पयेदिति ॥

३०-३।२६-॥ देवाय नैवेद्यार्पणफलम् ॥ स्कान्दे-यथा—

॥ नानाव्यञ्जनसंयुक्तं रसषट्केन संस्कृतम् ।
निवेद्याऽन्नं समाप्नोति फलं यज्ञाधिकं द्विज ॥ ॥ इति ॥

इति-श्रीमहानैवेद्यान्तर्गतश्रीबटुकादिप्रधानदेवतान्तबलिविधिसहितोमहानैवेद्यविधिः सर्वोऽपि सम्पूर्णः ॥

( १३।३०-३ वि. सर्वः सं. )

श्रीः

द्वि. प. वि. १३।३१-॥ श्रीपरदेवतायै ताम्बूलादिमुखवासफळदक्षिणासमर्पणम् ॥

॥ तत्रादौ-॥ ताम्बूलसाहित्यधृक्-श्रीदूतीध्यानम् ॥ श्रीबालातन्त्रचन्द्रिकायां-२२२-पत्रे-यथा—

१ ॥ ताम्बूलादिमुखवाससाहित्यसम्भृतरत्नखचितहिरण्मयानर्घ्यताम्बूलकरण्डधारिणीः श्रीदुतीर्ध्यायेद्-यथा—

॥ ॐ कर्पूरादिकवस्तुजातमखिलं सौवर्णशृङ्गारकं
ताम्बूलस्य करण्डकं मणिमयं चैलाञ्चलं दर्पणम् ॥
विस्फूर्जन्मणिपादुके च दधतीः सिंहासनस्याभित
स्तिष्ठन्तीः परिचारिकास्तव सदा वन्दामहे सुन्दरि ॥

इत्युक्त्वा श्रीपराम्बिकामहासिंहासनपरितः स्थिताः ताम्बुलकरण्डहस्ताः श्रीदुती ध्र्यायन् नमेत् ॥

२।१ अथ ताम्बूलादिमुखवासार्पणं—तत्र वैदिकतान्त्रिकमन्त्राश्च ॥

ॐ यत् पुरुषेण०—ॐ याः फलिनीर्या०

इति वैदिकमन्त्रद्वयं-पठित्वा

२ ॥ ॐ देवानां ललनालिभिः प्रदलितं कर्पूरचूर्णाकुलं
पूगीनागलतादलं मुहुरहो, मातर्मया तेऽर्पितम् ॥
स्वर्णालङ्कृतरत्नपात्ररचितं शैत्यं पयः पीयतां
ताम्बूलं पुनरर्पयामि मनसा श्रीसुन्दरि स्वीकुरु ॥ श्री. मा. पू.

३ ॥ ॐ पूगीनागलतादलं जलकणाकर्पूरचूर्णाकुलं
जातीपत्रलवङ्गलाङ्गलिफलं द्राक्षाकषायान्वितम् ॥
जिह्वोष्ठाधरपल्लवोज्ज्वलकरं कन्दर्पदर्पोदितं
ताम्बूलं परमेश्वरि प्रियतरं दत्तं मया गृह्यताम् ॥ श्री. मा. पू.

इमौ द्वौ श्लोकौ पठित्वा—ॐ० नमः मुखवासार्थे पूगीफलताम्बूलं च समर्पयामि—

४ ॥ **अथवा—श्रीमानसपूजोक्तताम्बूलार्पणश्लोकमन्त्रोयथा—**

॥ कर्पूरेण युतैर्लवङ्गसहितैः कङ्कोलचूर्णान्वितैः ।
सुस्वादुक्रमुकैः सगौरखदिरैः सुस्निग्धजातीफलैः ॥
मातः केतकिपत्रकेन्दुरुचिभिस्ताम्बूलवल्लीदलैः ॥
सानन्दं मुखमण्डनीयमतुलं ताम्बूलमङ्गीकुरु ॥ ४७ ॥

५ ॥ तत्रैव—

॥ एलालवङ्गादिसमन्वितानि कङ्कोलकर्पूरसुमिश्रितानि ।
ताम्बूलवल्लीदलसंयुतानि पूगानि ते देवि समर्पयामि ॥ ४८ ॥

६ ॥ तत्रैव—

॥ ताम्बूलवल्लिदलनिर्जितहेमवर्णं
स्वर्णाक्तपूगफलमौक्तिकचूर्णयुक्तम् ॥
रत्नस्थलीस्थितमिदं खदिरेण सार्धं
ताम्बूलमम्ब वदनाम्बुरुहे गृहाण ॥ ४१ ॥

७ ॥ अथवा—श्री दु. क. पुस्तिकायां—१६९ पत्रोक्त**ताम्बूलार्पणश्लोकमन्त्रोयथा—**

॥ ताम्बूलं विनिवेदयामि विलसत्कर्पूरकस्तूरिका
जातीपूगलवङ्गचूर्णखदिरैर्भक्त्या समुल्लासितम् ॥
स्फूर्जद्रत्नसमुद्गकप्रणिहितं सौवर्णपात्रे स्थितैर्
दीपैरुज्ज्वलमन्त्रचूर्णरचितैरारार्तिकं गृह्यताम्[१] ॥ ९ ॥ इति ॥

---

१ एतेषां श्लोकमन्त्राणामेकोवा सर्वेऽपि वा यथावकाशं पाठ्याः ॥

उपरितनान् सर्वानेकं वा पठित्वा-द्वाभ्यां चतुर्भिस्ताम्बूलैर्वा सुविरचितां-ताम्बूलवीटिकां श्रीपुरतोधृत्वा-यथामिलितताम्बूलं समर्पयामीत्युक्त्वा० श्रियै-सामान्यार्घजलमर्पयेदिति ॥

( ३११२ तथा च १३-३१ वि. सर्वः सं. )

**१३-३२ ॥ अथ फलार्पणम् ॥**

**श्रीष्टदैवतायै फलार्पणे श्लोकमन्त्राः** श्री. बा. तं. चं. ११३-११४

पत्रयोः श्रीबालामानसोपचारस्तोत्रे-यथा—

१ ॥ एलालवङ्गादिसमन्वितानि
कङ्कोलकर्पूरविमिश्रितानि ।
ताम्बूलवल्लीदलसंयुतानि
फलानि ते देवि समर्पयामि ॥ ४० ॥ इति ॥

॥ एतस्मिन् समयेऽधस्तनश्लोकद्वयोक्तान्यपि नानाफलाण्यर्प्यपणीयानि तानि च तत्रैव-यथा—

२ ॥ [1]आताम्ररम्भाफलसंयुतानि
द्राक्षाफलाक्षोटसमन्वितानि ।
सनारिकेलानि सदाडिमानि
फलानि ते देवि समर्पयामि ॥ ३७ ॥

३ तत्रैव ॥ कलिङ्गकोशातकसंयुतानि
जम्बीरनारिङ्गसमन्वितानि ।
सबीजपूराणि सदाडिमानि
फलानि ते देवि समर्पयामि ॥ ३८ ॥ इति ॥

( १३।३२ वि. सं. )

**१३।३३ ॥ अथ महादक्षिणार्पणम् ॥** दक्षिणायां ज्ञेयम् यथा—

१ पूजान्ते दीयमानेयं महादक्षिणा, सद्धनिनां कृते, रौप्यसौवर्णान्यतममुद्रात्मिका ज्ञेया ॥

२ ॥ स्वल्पधनिनां कृते, च स्वल्पद्रव्यादानात्मिका ज्ञेया-

३ केवलविरक्तानां कृते च, यथा लब्धं किञ्चिन्निवेदनीयमिति विवेकः-

१ इमानि फलानि पूर्वदत्तताम्बूलतोभिन्नान्यखण्डितानि चेति सुबुद्धिविलसितमास्तामिति प. क. सू. द्वितीयावृत्तिकारः ॥

४ अत्रैकः प्रश्नउपतिष्ठते—यथा—

॥ किमेषा दक्षिणा, भक्तकृते अथवा देवताकृते ?—
यदि देवतार्थिका स्यात्तदा महाधनादिसम्पत्त्प्रदात्र्यै
श्रीभगवत्यै दक्षिणादानानौचित्यात्-तद्दानमयुक्तं स्यात्—
ततोभक्तजनार्थमात्रैवेयं दक्षिणेति निश्चीयते ॥ इति ॥

प. क. सू. द्वितीयावृत्तिकारः ॥

**५—॥ दक्षिणार्पणे--विशेषश्लोकमन्त्रः ॥**

॥ श्रीमद्जगद्गुरुपूज्यपादश्रीशङ्कराचार्यकृतबालामानसपूजाश्रीविद्यामानसपूजास्तोत्रयोर्यथा-

॥ अथ बहुमणिमिश्रैर्मौक्तिकैस्त्वां विकीर्य
त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः ॥
मिलितविविधमुक्तां दिव्यमाणिक्ययुक्तां
जननि कनकवृष्टिं दक्षिणां तेऽर्पयामि ॥ ४२ ॥ इति ॥

( १३।३३ वि. सर्वः सं. )

**१३।३४ ॥ पूजान्ते क्रियमाणोजपः कदा कार्यस्तत्र—विचारः ॥**

गा. पु. पद्धतौ. तु. ४७—५५—पत्रयोस्त्वयं जपः—नीराजनानन्तरं मन्त्रपुष्पानन्तरं चोपात्तस्ततोयथार्हमनुष्ठेयमिति प. क. सू. द्वितीयावृत्तिकारः ॥

अत्रानुगत द्वि. प. शि. १३-३।१ विषयोद्दश्यः ॥ इति ॥

**वि. ३५।१ ॥ [1]जपविषये ॥**

१ ॥ सर्वेषां कर्मणां जपयज्ञः श्रेष्ठः तत्र प्रमाणम् ॥

योगिनीतन्त्रे-१३ पटले—७५ पत्रे—श्रीगुरुगुरुश्रीशिवोक्तं यथा—

॥ सर्वेषां कर्मणां श्रेष्ठं जपज्ञानं महेश्वरि ।
जपयज्ञोमहेशानि मत्स्वरूपोन संशयः ॥ इति ॥
जपेन देवता नित्यं स्तूयमाना प्रसीदत्ति ॥
प्रसन्ना विपुलान् कामान् दद्यान्मुक्तिं च शाश्वतीम्—इत्यादि तत्रैव ७६ पत्रे—

तथैव—श्री. भ. गी. १० अ. २५ श्लोके—यथा—.

२ ॥ यज्ञानां जपयज्ञोऽस्मि स्थावरणां हिमालयः ॥ इति ॥

---

१-एतज्जपकरणसमयप्रमाणाद्यानुगत द्वि.. प. शि. १३।३०—२/१० वि. गतटीपण्यादि दृश्यम् । तथात्रैव विषये पुरस्तनः १३।३५—१।२—५ वि. दृश्यः

३ ॥ **जपयज्ञः वैदिकतान्त्रिकधर्मेभ्योपि श्रेष्ठः** ॥ यो. तं. १३ पटले–७५ पत्रे–यथा–

॥ वैदिकास्तान्त्रिकाये ये धर्माः सन्ति महेश्वरि ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम ॥ इति ॥

( ३५११ सर्वः सं. )

३५१२ ॥ **जपयज्ञोद्विविधः तत्फलं च** ॥ तत्रैव यथा–

१ ॥ जपयज्ञे हि तिष्ठेद्यो बाह्ये वा चान्तरेऽपि वा ।
सर्वदा परमेशानि जीवन्मुक्तोन संशयः ॥ इति ॥

२–॥ **जपयज्ञस्य विधागुणश्च** ॥ तत्रैव ७६ पत्रे–यथा–

॥ उपांशुः स्यात् शतगुणः सहस्त्रोमानसोमतः ।
मन्त्रमुचारयेद्वाचा वाचिकोजपईरितः ॥
किञ्चित् सुश्रवणोपेतउपांशुः परिकीर्त्तितः ।
**निजकर्णागोचरोयोमानसः परिकीर्त्तितः ।**
वाचिकस्तु जपोबाह्योमानसोऽभ्यन्तरोमतः ॥
उपांशुर्मिश्रएव स्यात् त्रिविधोऽयं जपः स्मृतः ॥ इति ॥

३–तथैव. मनुः–यथा–

॥ **विधियज्ञाज्जपयज्ञोविशिष्टोदशभिर्गुणैः ।**
**उपांशुः स्याच्छतगुणः साहस्त्रोमानसः स्मृतः** ॥ इति ॥

य. आ. सू. ५३ पत्रे

४ **तथैव नृसिंहपुराणे** ॥ यथा—

॥ त्रिविधोजपयज्ञः स्यात्तस्य भेदं निबोधत ।
वाचिकश्च उपांशुश्च मानसस्त्रिविधः स्मृतः ॥
त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः ॥

॥ **एतेषां लक्षणान्याह विश्वामित्रः**–

॥ यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः ।
मन्त्रमुच्चारयेद्वाचा **वाचिकोऽयं** जपः स्मृतः ॥
॥ शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ च चालयेत् ।
अपरैर्न श्रुतः किञ्चित **सउपांशुर्जपः** स्मृतः ॥

॥ धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम् ।
शब्दार्थचिन्तनं भूप कथ्यते **मानसोजपः** ॥ इति ॥ य. आ. सू. ५३ पत्रे

( ३५१२ वि. सं. )

**३५१३-१ जपकरणविधिकारिका:** महानिर्वाणतन्त्रे-६ उल्लासे-यथा-
॥ होमकर्मसमाप्यैवं साधकोजपमाचरेत् ॥ १६५ ॥
विधानं शृणु देवेशि ! **येन विद्या प्रसीदति** ।
देवतागुरुमन्त्राणामैक्यं सम्भावयेद्धिया ॥ १६६ ॥
**मन्त्राणां देवता प्रोक्ता देवता गुरुरूपिणी** ।
**अभेदेन यजेद्यस्तु तस्य सिद्धिरनुत्तमा** ॥ १६७ ॥
गुरुं शिरसि सञ्चिन्त्य देवतां हृदयाम्बुजे ।
रसनायां मूलविद्यां तेजोरूपां विचिन्त्य च ॥
त्रयाणां **तेजसात्मानमेकीभूतं विचिन्तयेत्** ॥ १६८ ॥
तारेण सम्पुटीकृत्य मूलयन्त्रञ्च सप्तधा ।
जप्त्वा तु साधकः पश्चान्मातृकापुटितं स्मरेत् ॥ १६९ ॥
मायाबीजं स्वशिरसि दशधा प्रजपेत् सुधीः ।
बदने प्रणवं तद्वत् पुनर्मायां हृदम्बुजे ॥
प्रजप्य सप्तधा मन्त्री प्राणायामं समाचरेत् ॥ १७० ॥
॥ ततोमालां समादाय **प्रवालादिसमुद्भवाम्** ।
माले माले महाभागे सर्वशक्तिस्वरूपिणि ॥ १७१ ॥
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥
**इति सम्पूज्य मालान्तां श्रीपात्रस्थामृतेन च** ॥ १७२ ॥
त्रिधा मूलेन सन्तर्प्य **स्थिरचित्तोजपं चरेत्** ।
॥ **अष्टोत्तरसहस्रं वाप्यथवाष्टोत्तरं शतम्** ॥ १७३ ॥
प्राणायामन्ततः कृत्वा श्रीपात्रजलपुष्पकैः ।
गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ॥ १७४ ॥
सिद्धिर्भवतु मे देवि ! त्वत्प्रसादान्महेश्वरि ।
इति मन्त्रेण मतिमान् **देव्या वामकराम्बुजे** ॥ १७५ ॥
**तेजोरूपं जपफलं समर्प्य प्रणमेद्भुवि**
**ततः कृताञ्जलिर्भूत्वा स्तोत्रञ्च कवचं पठेत्** ॥ १७६ ॥ इति ॥

**३५-३।२ ॥ श्रीगुरुगुरुश्रीशङ्करोक्तं जपकर्तृकर्तव्यम् ॥**

**जपकरणस्थलं**—कुलार्णवतन्त्रे-१५ उल्लासे-१३६ पत्रे-यथा—

॥ पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम् ।
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ॥
उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः ।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥
**साधनेषु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम् ।**
॥ अथवा निवसेत्तत्र यत्र चित्तं प्रसीदति ॥
सूर्य्यस्याग्नेर्गुरोरिन्दोर्दीपस्य स्यन्दनस्य च ।
गोरक्षकुलवृक्षाणां सन्निधौ शस्यते जपः ॥
॥ गृहे शतगुणं विन्द्याद्गोष्ठे लक्षगुणं भवेत् ।
**कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ ॥**
म्लेच्छदुष्टमृगव्यालशङ्कातङ्कविवर्जितः ।
एकान्तपावने निन्दारहिते भक्तिसंयुते ॥
स्वदेशे धार्म्मिके देशे सुभिक्षे निरुपद्रवे ।
रम्ये भक्तजनस्थाने निवसेत्तापसाश्रये ॥
राजानः सचिवाराज्ञः प्रभवाः पुरुषाजनाः ।
चरन्ति येन मार्गेण निवसेत्तत्र मन्त्रवित् ॥
॥ जीर्णदेवालयोद्याने गृहे वृक्षतलेषु च ।
नदीतडागकूपेषु **भूच्छिद्रादिषु नो विशेत् ॥**
॥ दीपनाथमविज्ञाय योजपादिकमाचरेत् ।
वंशाश्मधरणीदारुतृणवन्नवनिर्मितम् ॥
**वर्जयेदासनं धीमान्** दारिद्र्यव्याधिदुःखदम् ।
॥ तूलकम्बलवस्त्राणां सिंहव्याघ्रमृगाजिनम् ॥
**कल्पयेदासनं धीमान्** सौभाग्यज्ञानवृद्धिदम् ।
पद्मस्वस्तिकवीरादिष्वासनेषूपविश्य च ॥
**जपार्चनादिकं कुर्य्यादन्यथा निष्फलं भवेत् ।**
द्वादशावर्त्तयेद्बुद्ध्या प्रणवन्तु त्रिमातृकम् ॥
मुञ्चेत् पिङ्गलया वायुं अन्तस्थं रेचकोभवेत् ।
षोडशावर्त्तकं तारं पूरयेद्बाह्यमारुतम् ॥

शनकैरिडया बद्ध्वा पूरकं परिकीर्त्तितम् ।
द्वादशावर्त्तकं तारं वायुमध्ये तु कुम्भयेत् ॥
शोषयेद्वायुबीजेन देहशोषणमीरितम् ।
पुनश्च पूरयेद्वायुं विरेच्यापूर्य्य कुम्भयेत् ॥
देहं दहनबीजेन देहदाहनमीरितम ।
पुनश्च पूर्ववद्वायुं विरेच्यापूर्य्य कुम्भयेत् ॥
शिवकुण्डलिनीयोगस्पन्दनामृतधारया ।
आपादमस्तकं देवि प्रापयेत् प्लावनं भवेत् ॥
॥ जपोध्यानं विना गर्भः सगर्भस्तद्विपर्य्ययः ।
अगर्भगर्भसंयुक्तः प्राणायामः शताधिकः ॥
तपांसि तीर्थयात्राद्यमथ दानव्रतादयः ।
**॥ प्राणायामस्य तस्यैते कलां नार्हन्ति षोडशीम् ॥**
मानसं वाचिकं पापं कायिकं वापि यत् कृतम् ।
तत् सर्वं निर्दहेच्छीघ्रं प्राणायामत्रयेण वै ॥
दह्यते ध्मायमानानां धातूनाञ्च यथा मलम् ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य संयमात् ॥
**॥ प्राणायामैर्विशुद्धात्मा यद्यत् कर्म करोति हि ।**
**तत्तत् फलत्यसन्देहादप्रयत्नेन वा कृतम् ।**
**॥ आगमोक्तेन मार्गेण न्यासं नित्यं करोति यः ।**
**देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥**
**योन्यासकवचच्छन्दोमन्त्रं जपति च प्रिये ।**
**विघ्नादृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥**
**अकृत्वा न्यासजालं योमूढत्वात् प्रजपेन्मनुम् ॥**
**बाध्यते सर्वविघ्नैश्च सिंहैर्मृगपशुर्यथा ॥**
॥ अक्षमाला द्विधा प्रोक्ता कल्पिताकल्पितेति च ।
कल्पिता मालाभिः क्लृप्ता मातृका स्यादकल्पिता ॥
**आदिक्षान्ताक्षरान्तत्वादक्षमालेति कीर्तिता ।**
अनुलोमविलोमाभ्यां गणयेन्मन्त्रवित्तमः ॥

॥ एकैकमङ्गुलिभिः स्याद्रेखाभिर्दशधा फलम् ।
मालाभिः शतसाहस्रं मालिन्यानन्तमुच्यते ॥
॥ त्रिंशद्भिः स्याद्धनं पुष्टिः सप्तविंशतिभिर्भवेत् ।
पञ्चविंशतिभिर्मोक्षं पञ्चदश्याभिचारके ॥
पञ्चाशद्भिः कुलेशानि सर्वसिद्धिरितीरिता ।
॥ अङ्गुष्ठेन च मोक्षः स्यात्तर्जनी शत्रुनाशिनी ॥
मध्यमां धनदां विद्यात् शान्तिकर्म्मण्यनामिका ।
कनिष्ठा स्तम्भनाकर्षी चाङ्गुलिषु प्रकीर्तिता ॥
एतावच्च जपिष्यामीत्यादौ सङ्कल्प्यन्त्रवित् ।
स्थिरासनोजपित्वा च देव्यै सोदकमर्पयेत् ॥
॥ उच्चैर्जपोऽधमः प्रोक्तउपांशुर्मध्यमः स्मृतः ।
उत्तमोमानसोदेवि त्रिविधः कथितोजपः ॥
अतिहृस्वोव्याधिहेतुरतिदीर्घे तपःक्षयः ।
अक्षराक्षरसंयुक्त्या जपेन्मौक्तिकपङ्क्तिवत् ॥
॥ मनसा यः स्मरेत् स्तोत्रं वचसा वा मनुं जपेत् ।
उभयं निष्फलं देवि भिन्नभाण्डोदकं यथा ॥
जातसूतकमादौ स्यात्तदन्ते मृतसूतकम् ।
सूतकद्वयसंयुक्तोयोमन्त्रः सन सिध्यति ॥
अतस्तद्वहितं कृत्वा मन्त्रमावर्त्तयेत् सदा ॥
सूतकद्वयासंयुक्तोयोमन्त्रः सहि सिध्यति ।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ॥
शतकोटिजपेनापि तस्य सिद्धिर्न जायते ।
गुप्तवीर्य्याश्च ये मन्त्रान दास्यन्ति फलं प्रिये ॥
मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ।
चैतन्यरहितामन्त्राः प्रोक्तावर्णास्तु केवलम् ॥
फलं नैव प्रयच्छन्ति लक्षकोटिजपादपि ।
मन्त्रोच्चारे कृते यादृक् स्वरूपं प्रथमं भवेत् ॥
शतैः सहस्रैर्लक्षैर्वा कोटिजापेन तत् फलम् ।
हृदये ग्रन्थिभेदश्च सर्वावयववर्द्धनम् ॥

आनन्दाश्रु च पुलकोदेहावेशः कुलेश्वरि ।
गद्गदोक्तिश्च सहसा जायते नाम संशयः ॥
सकृदुच्चरितेऽप्येवं मन्त्रे चैतन्यसम्पुटे ।
दृश्यन्ते प्रत्ययायत्र पारम्पर्य्यं तदुच्यते ॥
बहुकूटाक्षरोमुग्धोबद्धः क्रुद्धश्च भेदितः ।
बालःकुमारोयुवकोवृद्धः प्रौढश्च गर्वितः ॥
स्तम्भितोमूर्च्छितः कष्टः संवीतः खण्डितः प्रिये ।
मन्त्रः पराङ्मुखश्छिन्नोबधिरोऽन्धस्त्वचेतनः ॥
केकरः क्षुधित : क्लृप्तः स्थानदुष्टश्च पीडितः ।
निस्नेहो विकलः स्तब्धोनिर्जीवः खण्डितारिकः ॥
सुप्तस्तिरस्कृतोलीढोमलिनश्च दुरासदः ।
निःसत्वोनिर्दयोदग्धश्चपलश्च भयङ्करः ॥
निस्त्रिंशोविकृताचारः फलहीनोनिकृन्तनः ।
निर्बीजोभूमितः शप्तोरूक्षः कृष्टोऽङ्गहीनतः ॥
जडोरिपुरुदासीनोलज्जितोमोहितः प्रिये ।
**सन्त्येतान् मन्त्रदोषांश्च ज्ञात्वा पश्चाज्जपेन्मनुम् ॥**
**सिद्धिर्न जायते तस्य लक्षकोटिजपादपि ।**
॥ कथ्यन्ते **दश संस्कारामन्त्रदोषहराः** प्रिये ॥
जननं जीवनं पश्चात्ताडनं बोधनं ततः ।
अभिषेकोऽथ विमलीकरणाप्यायने तथा ॥
तर्पणं दीपनं गुप्तिः संस्काराः कुलनायिके ।
शाणोल्लीढानि शस्त्राणि यथास्युर्निशितानि वै ॥
मन्त्राश्च स्फूर्तिमायान्ति संस्कारैर्दशभिस्तथा ।
॥ भक्ष्यं हविष्यं शाकादिविहितानि फलान्यपि ॥
मूलं सक्तुर्यवानाश्च शस्तान्येतानि मन्त्रिणाम् ॥
**यस्यान्नपानमश्नाति कुरुते धर्मसञ्चयम् ॥**
**अन्नदातुः फलं चार्द्धं कर्त्तुश्चार्द्धं न संशयः ॥**
तस्मात् सर्वप्रयत्नेन परान्नं वर्जयेत् सुधी: ॥
पुरश्चरणकाले च काम्यकर्मस्वपीश्वरि ॥

॥ जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ।
मनोदग्धं परस्त्रीभिः कार्य्यसिद्धिः कथं भवेत् ॥

इन्द्वग्निरुद्रग्रहयुग्वेदार्कदिक्षडष्टसु ॥
षोडशमनुबाणाब्धितिथित्रयोदशस्वपि ।
लिखेत् षोडशकोष्ठेषु मातृकार्णान् विचक्षणः ॥
स्वनामाद्यक्षराद्यावन्मन्त्राद्यक्षरदर्शनम् ।
सिद्धादीन् कल्पयेन्मन्त्री कुर्य्यात् सिद्धादिभिः पुनः ॥
सिद्धसिद्धोजपात् सिद्धोद्विगुणात् सिद्धसाध्यकः ।
सिद्धसुसिद्धोऽर्द्धजपात् सिद्धारिर्हन्ति बान्धवान् ॥
साध्यसिद्धोऽतिसङ्केशात् साध्यसाध्योनिरर्थकः ।
साध्यसुसिद्धोभजनात् साध्यारिर्हन्ति गोत्रजान् ॥
सुसिद्धसिद्धोऽर्द्धजपात् तत्साध्यस्तु यथोक्ततः ।
तत्सुसिद्धोग्रहादेव सुसिद्धारिः सगोत्रहा ॥
अरिसिद्धः सुतं हन्यादरिसाध्यस्तु योषितम् ।
तत् सुसिद्धः कुलं हन्ति स्वात्मानं हन्ति तद्रिपुः ॥
सिद्धार्णाबान्धवाः प्रोक्ताः साध्यास्ते सेवकाः स्मृताः ॥
सुसिद्धाः पोषकाज्ञेयाः शत्रवोघातकाः स्मृताः ॥
बान्धवानवबाणैकाः स्युर्द्विषड्दश सेवकाः ।
प्रापलेपपट्टप्रापैरुद्रश्चातिवकं नरः ॥
लोकालोकपट्टप्रापघनघातेषु भेदितः ॥
वर्णाः क्रमात् युवान्त्यौ तु रेवत्यंशगतौ तयोः ॥
जन्मसम्पद्विपत्क्षेमप्रत्यरिः साधकोबधः ।
मित्रं परममित्रश्च जन्मादीनि पुनः पुनः ॥
बाणं गौरं खुरं शोणं समीनोभेति राशिषु ।
क्रमेण भेदितावर्णाः कन्यायां शादयः स्मृताः
॥ लग्नोधनं भ्रातृ बन्धु पुत्र शत्रु कलत्रकाः ।
मरणं धर्मकर्मायव्यया द्वादश राशयः ॥
नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ।
त्रिधा कृत्वा स्वरैर्भिन्द्यात् तदन्यद्विपरीतकम् ॥

---

१. अत्राशुद्धं-शोध्यम्-

कृत्वाधिकमृणं ज्ञेयमृणी चेन्मन्त्रवित्तमः ।
स्वयमृणी चेत्तन्मन्त्रं जपेत् पूर्वमृणी यत: ॥
वायग्निभूजलाकाशाः पञ्चाशल्लिपयः स्थिताः ।
व
महीसलिलयोर्मित्रमनिलानलयोरपि ॥
शात्रवं वैपरीत्येन मैत्रं सर्वत्र चापरम् ।
परस्परविरुद्धानां वर्णानां यत्र सङ्गतिः ॥
वर्जयेत्तादृशं मन्त्रं नासकृत् तत् कुलेश्वरि ।
एकाक्षरे तथा कूटे त्रैपुरे मन्त्रनायके ॥
स्त्रीदत्ते स्वप्नलब्धे च सिद्धादींनैव शोधयेत् ।
मन्त्रसिद्धोपदिष्टेषु चतुराम्नायजेषु च ॥
मालामन्त्रेषु देवेशि सिद्धादींनैव शोधयेत् ।
नृसिंहार्कवराहाणां प्रासादप्रणवस्य च ॥
सपिण्डाक्षरमन्त्राणां सिद्धादींनैव शोधयेत् ।
मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः ॥
न सिध्यति वरारोहे लक्षकोटिजपादपि ।
वादार्थं पठ्यते विद्या परार्थं क्रियते जपः ॥
स्वात्यर्थं दीयते दानं कथं सिद्धिर्वरानने ।
धनार्थं गम्यते तीर्थं दम्भार्थं क्रियते तपः ॥
अमेध्येन तु देहेन न्यासं देवार्चनं जपम्- ।
होमं कुर्वन्ति ये मूढास्तत् सर्वं निष्फलं भवेत् ॥
विण्मूत्रत्यागशेषादियुक्तः कर्म करोति यः ॥
जपार्चनादिकं सर्वमपवित्रं भवेत् प्रिये ॥
मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः ।
योजपेत्तं दहत्याशु देवतासु जुगुप्सितम् ॥
आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम् ।
नीचाङ्गस्पर्शनं कोपं जपकाले विवर्जयेत् ॥
अत्याहारः प्रलापश्च प्रजल्पोनियमाग्रहः ।
अन्यासङ्गश्च लौल्यश्च षड्भिर्मन्त्रोन सिध्यति ॥
उष्णिषी कञ्चुकी नग्नोमुक्तकेशोगणीवृतः ।
अपवित्रोत्तरीयस्तु निर्गच्छन्न जपेत् प्रिये ॥

**जाड्यं दुःखं तृणच्छेदं विवादं वा मनोरथम् ।**
**बहिः स्वदेहवासं च जपकाले विवर्जयेत् ॥**
शान्तः शुचिर्मिताहारोभूशायी भक्तिमान् वशी ।
निर्द्वन्द्वः स्थिरधीर्मौनी संयतात्मा जपेत् प्रिये ॥
विश्वासास्तिक्यकरुणाश्रद्धानिष्ठमनिश्चयैः ।
सन्तोषौत्सुक्यधर्मादिगुणैर्युक्तोजपेन्नरः ॥
सुगन्धिपुष्पाभरणवस्त्रादिभिरलङ्कृतः ।
**तस्य हस्तगता सिद्धिर्नान्यस्य जपकोटितः ॥**
**तन्निष्ठस्तद्गतप्राणस्तच्चित्तस्तत्परायणः ।**
**तत्पदार्थानुसन्धानं कुर्वन् मन्त्रं जपेत् प्रिये ॥**
**जपात् श्रान्तः पुनर्ध्यायेत् ध्यानात् श्रान्तः पुनर्जपेत् ।**
इति ते कथितं किञ्चित् पुरश्चरणलक्षणम् ॥
समासेन कुलेशानि किम्भूयः श्रोतुमिच्छसि ॥ इति ॥

॥ इति कुलार्णवे महारहस्ये पुरश्चरणकथनं नाम पञ्चदशउल्लासः ॥

वि. १३ **जपस्थानशुद्धिः ।** व्यासः–यथा —

३५-३-३

॥ धृत्वा पवित्रं सम्प्रोक्ष्य जपस्थानं कुशोदकैः ।
आधारदीन् नमस्कृत्य कुशाग्रैरासनं ततः ॥
बद्ध्वा पद्मासनं वापि स्वस्तिकं वा यथा सुखम् ।
ॐ भुभूर्वः स्वरोमिति जपित्वासनमुपविशेत् ॥ इति ॥

य. आ. सु. ५३ पत्रे–

**४ ॥ जपसमये शिरोग्रीवादिकम्पनादिनिषेधः-जपगुह्यकरणमपि ॥**

तत्रैव–श्रीयाज्ञवल्क्यः ॥

॥ ध्यायेत्तु मनसा मन्त्रं जिह्वोष्ठौ न विचालयेत् ।
न कम्पयेच्छिरोग्रीवां दन्तान्नैव प्रकाशयेत् ॥
यक्षरक्षः पिशाचाश्च सिद्धविद्याधरागणाः ।
**यस्मात् प्रभावं गृह्णन्ति तस्माद्गुह्यं तु कारयेत् ॥** इति ॥ तत्रैव

( ३५–३ वि. सर्वः सं. )

**३५–४॥ जपसमये समालिकोहस्तः कुत्र स्थाप्यः ?॥**

तत्रैव–धर्मप्रवृत्तौ–यथा–

॥ प्रातर्नाभौ करं कृत्वा मध्याह्ने हृदि संस्थितम् ।
सायं जपति नासाग्रे जपस्तु त्रिविधः स्मृतः ॥

॥ प्रातर्मध्याह्नयोस्तिष्ठन् गायत्रीजपमारभेत् ।
उर्ध्वजानुस्तु सायाह्ने ध्यानालोकनतत्परः ॥

॥ कृत्वोत्तानौ करौ प्रातः सायं न्युब्जौ करौ तथा ।
मध्याह्ने हृदयस्थौ तु कृत्वा जपमुदीरयेत् ॥ इति ॥

इदं—श्रीगायत्रीजपमात्रविषयकम्—

५ ॥ **नित्यकाम्यधर्मेण—जपे मालाग्रहणाग्रहणयोः** ॥

गा. पु. पद्धतौ—'१५ पत्रे—वसिष्ठसंहितायां—यथा—

॥ **नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन** ॥ इति ॥

६ ॥ **जपकरणे मालायुक्तहस्तस्य गौमुखीवस्त्रान्यन्तरच्छादना-वश्यकत्वम्** । वृद्धमनुः यथा—

॥ वस्त्रेणाच्छाद्य तु करं दक्षिणं यः सदा जपेत् ।
तस्य स्यात् सफलं जाप्यं **तद्धीनमफलं स्मृतम्** ॥
**अतएव जपार्थं सा ( गोमुखी ) ध्रियते जनैः** ॥ इति ॥

य. आ. सु. ५३ पत्रे

७ ॥ **पुरश्चरणमन्तरा, जपे सङ्ख्याविकल्पः** ॥ व्यासः यथा—

॥ अष्टोत्तरशतं नित्यमष्टाविंशतिरेव वा ।
विधिना दशकं वापि त्रिकालेषु जपेद्बुधः ॥ इति ॥ तत्रैव

८ ॥ **जपसमये मूलमन्त्रस्य उच्चारसङ्केतः**

श्रीविश्वामित्रः ॥

यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः ।
मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः ॥ इति ॥ तत्रैव

९. ॥ **जपसङ्ख्यासमाप्तौ च** मालाचेत्तां स्वमूर्ध्नि निधाय षडङ्गन्यासादि विधाय गुह्येति तेजोमयं जपफलमिष्टदेवतायै समर्प्येत्यादिविधिः स्वगुरूपदिष्टसम्प्रदायेन पर्यवसादयितव्यइत्यलं तदिदां पुरतः । इति-प. क. सू. द्वितीयावृत्तिकारः—

१०—१ ॥ **जपकरणफलम्** ॥

योगिनीतन्त्रे-१३ पटले—७५ पत्रे—यथा—

॥ ग्रहभूतपिशाचाद्यायक्षरक्षोगणाश्च ये ।
व्याघ्राद्याजन्तवोदेवि तथैव कुपितान्तराः ॥
डाकिन्योगुह्यकाश्चैव गन्धर्वाश्च सरीसृपाः ।
दानवाभैरवादुष्टाये वै श्मशानवासिनः ॥
केऽपि नेक्षन्ति तं देवि जापिनं भयविह्वलाः ।
न स्पृशन्ति च पापानि कदापि साधकं प्रिये ॥
फलमेतद्वाचिकस्य जपस्य परिकीर्तितम् ॥ इति ॥

१०–२ ॥ **पुनश्चापि जपयज्ञफलं गौरवं च** ॥ तत्रैव–

॥ **जपेन देवता नित्यं स्तूयमाना प्रसीदति।**
**प्रसन्ना विपुलान् कामान् दद्यान्मुक्तिं च शाश्वतीम्** ॥
साधनं च जपश्चैव ध्यानश्चैव वरानने ।
नाल्पेन तपसा देवि केनापि कुत्र लभ्यते ।
यदि भाग्येन देवेशि । बहुजन्मार्जितेन च ॥
प्राप्यते यत्र तच्चेत्तु जन्मनाप्येकमोक्षभाक् ।
ब्रह्मज्ञानञ्च यत् प्रोक्तं समाधिस्तत् प्रकीर्त्यते ॥
इत्येवं कथितं रम्यं समासेन महेश्वरि ।
इतः परं महादेवि किं पुन श्रोतुमिच्छसि ॥ इति ॥

१०–३ ॥ **जपफलम्** ॥ वामकेश्वरतन्त्रे–२ विश्रामे–१०२ पत्रे–यथा–

॥ चक्रं समर्चयेद्देवि सकलं नियतव्रतः ।
बाह्यमध्यगतं वाऽपि मध्यं वा चक्रमर्चयेत् ॥
उपचारैः समाराध्य सहस्रं प्रजपेद्बुधः ।
तदग्रे संस्थितोमन्त्री ततोऽनन्तफलं लभेत् ॥
**ध्यात्वाऽथवा चक्रराजं मनःपूजासमन्वितः ।**
**जपारम्भं सुधीः कुर्यान्महापातकहा भवेत्** ॥ इति ॥

१०–४ तथैव–तत्रैव–१०४ पत्रे-यथाः–

॥ तत्र स्थित्वा जपेल्लक्षं साक्षाद्देवीस्वरूपकः ॥
ततोभवति विघ्नेयं **त्रैलोक्यवशकारिणी** ॥ इति ॥

१०–५ तथैव–तत्रैव–१०५ पत्रे-श्रीक्रमसंहितायां–यथा–

॥ लक्षमेकमिमां **जप्त्वा सर्वपापहरोभवेत** ॥ इति ॥

१०–६ ॥ तथैव–तत्रैव–५–विश्रामे १६२ पत्रे–यथाः–

श्रीदेव्युवाच—

इदानीं जपहोमानां विधानं वद शङ्कर

**येनानुष्टितमात्रेण मन्दभाग्योऽपि सिध्यति ॥ २ ॥**

श्रीभैरवउवाच—

शृणु देवि प्रवक्ष्यामि त्रिपुरामन्त्रसाधनम् ।

जपहोमविधानं च समीहितफलप्रदम् ॥ ३ ॥

**अत्र भाष्यम्**–मन्त्रसाधने हि द्वावुपायौ **यावज्जीवं नियतोजपः–पुरश्चरणरूपश्च** ।

ऐहिके काम्यप्रयोगे तु पुरश्चरणं विना नाधिकारः ।

आमुष्मिकमात्रार्थे पुरश्चरणं विनाऽपि नित्यजपमात्रेण निर्वाहइति–स्थितिः ॥ ३ ॥

तत्राऽऽद्यमाह–चक्रमभ्यर्च्य सकलं विधिवत् परमेश्वरि ।

मध्यं वा केवलं देवि बाह्यमध्यगतं च वा ॥ ४ ॥

तदग्रसंस्थितोमन्त्री सहस्रं यदि वा जपेत् ।

व्रतस्थः परमेशानि ततोऽनन्तफलं भवेत् ॥ ५ ॥

**अत्र भाष्यम्**–त्रिविधचक्रार्चनेषु पूर्वोक्तेषु शक्त्यनुसारेणैकं कृत्वा प्रत्यहं सहस्रं नियमविशिष्टोजपेदित्यर्थः ॥ इति ॥

१०–७ तथैव–तत्रैव–८–विश्रामे–३४६ पत्रे-यथाः–

**॥ एवं चिन्तयमानस्य जपकाले तु पार्वति ।**

**सिद्धयः सकलास्तूर्णं सिध्यन्ति त्वत्प्रसादतः ॥ १९७ ॥**

॥ जपविधिमुपसंहरन् कतिचिद्गुणविधीनाह—

एवं कृत्वा जपं **देव्यावामहस्ते निवेदयेत्**

**अनामाङ्गुष्ठयोगेन तर्पयेच्चक्रदेवताः ॥ ॥ १९८ ॥**

त्स्यं सं था यं म मां त म देव्यै तु विनिवेदयेत् ।

कौलाचारसुसंयुक्तैर्वीरैस्तु सह पूजयेत् ॥ १९९ ॥ इति ॥

॥ इति समाप्तं श्रीमहापूजाविध्यङ्गभूतनैवेद्यहोमबलिताम्बुलफलदक्षिणाजपकार्यप्रकरणम् ॥ इति ॥

( ३५–१० तथा च १३–३५ वि. सर्व. सं०)

**परिशिष्ट वि. १३।३६ ॥ मङ्गलारार्तिसामान्यारात्रिकविषये ॥**

अत्रैव. प. क. सू. १४१ पत्रे-४-खण्डे श्रीललिताक्रमे-५-सूत्रभाष्ये

॥ १ ॥ **मङ्गलारार्तिलक्षणमथवा तद्विधिकारिका:** ॥ परमानन्दतन्त्रे ॥

॥ ततआरार्तिकं कुर्यात्तद्विधानं शृणु प्रिये । –

लोहभिन्ने सुवर्णादिपात्रे सिन्दूररेणुभिः ॥

नानाविधैर्वर्णकैश्चाप्यष्टपत्रं सकर्णिकम् ।

स्वस्तिकं वा प्रकल्प्याथ पिष्टजान् डमरुप्रभान् ॥

घृतपक्वान् नव सप्त पञ्च त्रितयमेव वा ।

सवर्त्तिकं घृतैः पूर्णं क्रमाद्विन्यस्य पात्रके ॥

प्रज्वाल्य मायया पश्चान्नवरत्नैश्च मन्त्रयेत् ।

चक्रमुद्रां प्रदर्श्याथ नवरत्नैश्च पूजयेत् ॥

**आमस्तकं तु तत्पात्रमुद्धरेत् स्वयमुत्थितः ।**

समस्तचक्रचक्रेशि युते देवि नवात्मिके ॥

आरार्तिकमिदं दिव्यं, गृहाण मम सिद्धये ।

इति घण्टां वादयन् वै देव्याआपादमस्तकम् ॥

दक्षहस्तेन त्रिर्भ्राम्य पात्रं स्थाप्य नतिं चरेत् ।

एवमारार्तिकं कुर्यात् ॥ इति ॥

॥ **उपरितनकारिकार्थः**–

नीराजनकरणाय आदौ, लोहभिन्नस्वर्णादिपात्रे, सिन्दूररजसा, नानाविधवर्णैर्मध्ये सकर्णिकमष्टपत्रं लेख्यम्– ।

॥ अथवा–स्वस्तिकमेव लेख्यम् – ॥

॥ तत्र च–गोधूमपिष्टमयान्, घृतपक्वान्, डमरुसमानाकारान् - नव सप्त, पञ्च, त्रीन् वा सवर्त्तिकान्–घृतैः पूर्णान्, दीपान्–मायया प्रज्वाल्य,–अग्रतन–नवरत्नेश्वरीमन्त्रेण–अभिमन्त्र्य

चक्रमुद्रां प्रदर्श्य, तेनैव नवरत्नेश्वरीमन्त्रेण सम्पूज्य । श्रीष्टदेवतायाः–आमस्तकम् उत्तोल्य–स्वयमुत्थितः सन्

॥ समस्तचक्रचक्रेशि, युते देवि नवात्मिके ।

आरार्तिकमिदं दिव्यं, गृहाण मम सिद्धये ॥

इमं मन्त्रमुच्चरन्, घण्टां च ध्वनयन्–श्रीदेवतायाः पादतः–आमस्तकं-दक्षिणहस्तेन, प्रदक्षिणक्रमेण, त्रिर्भ्राम्य पात्रमधःसंस्थाप्य–निवेद्य-प्रणमेदिति ॥ ( **एकः–प्रकारः**– )॥

॥ २–**नि. प्रकारः** द्वितीयः–श्रीकुलार्णवे–७–उल्लासे–६३–पत्रे–श्रीशिवोक्तनीराजनकर्मकारिका ॥ **नीराजनदीपाधाराकृतिमानसङ्ख्या च** ॥

॥ बटुकादीन् समर्च्यैवं कुलदीपान् समर्चयेत् ।
ईषत्पललपिष्टेन कुर्याद्वेदाङ्गुलान्वितान् ॥
दीपान्ऽमरुकाकारान् त्रिकोणानतिशोभितान् ।
**कर्षाज्यग्राहिणः कुर्यान्नव सप्ताथ पञ्च वा ॥**

**॥ नीराजननिवेदनमन्त्राः ॥**

॥ अन्तस्तेजोबहिस्तेजएकीकृत्यामितप्रभान् ।
त्रिधा देव्युपरिभ्राम्यन् कुलदीपान्निवेदयेत् ॥
समस्तचक्रचक्रेशि युते देवि कुलात्मिके ।
आरात्रिकमिदं देवि गृहाण मम सिद्धये ॥

॥ कुलदीपान् प्रदर्श्याथ० । शक्तिपूजां समाचरेत् ॥ इति ॥

३–तृतीय**आरात्रिकप्रकारः** । ज्ञानार्णवे–५–पटले–१७ पत्रे–यथा—

॥ आरात्रिकं ततः कुर्यात् सर्वकार्यार्थसिद्धये ।

**॥ नीराजने पात्रादि ॥**

सौवर्णे राजते कांस्ये स्थालके परमेश्वरि ।
कुङ्कुमेन लिखेत् पद्मं वसुपत्रं मनोहरम् ॥ ६ ॥

**॥ दीपरचना– ॥**

॥ चन्द्ररूपं चरुं कृत्वा तन्मध्ये मस्तके शिवे ।
दीपमेकं विनिक्षिप्य वसुपत्रेऽष्ट दीपकान् ॥ ७ ॥
**यवगोधूममुद्गादिरचिताञ्शर्करायुतान्**
चषकान्वितमुद्राभिः शोभितान् घृतपूरितान् ॥ ८ ॥

॥ अभिमन्त्र्य महेशानि रत्नेश्वर्या ततः परम् ।
श्रीबीजं च पराबीजं संलिख्य वरवर्णिनि ॥ ९ ॥

**॥श्री नवाक्षरीरत्नेश्वरीमन्त्रोद्धारः** ॥ तत्रैव ज्ञाना. ५ प.–१८ पत्रे—

॥ गसौ च मपनाः पश्चादिन्द्रस्थाः क्रमतः प्रिये ।
वामकर्णसमायुक्ता बिन्दुनादविभूषिता ॥ १० ॥
बीजपञ्चकमेतत्तु पञ्चरत्नानि सुन्दरि ।
**पूर्वबीजं विलोमेन रत्नेशीयं नवाक्षरी ॥ ११ ॥**

॥ मूलमन्त्रेण चाभ्यर्च्य ततश्चाऽऽरात्रिकं चरेत् ।

**स्थालकं तु समुद्धृत्य मस्तकान्तं पुनः पुनः ॥ १२ ॥**

**नववारं महेशानि ततोनीराजनं चरेत् ।**

॥ समस्तचक्रचक्रेशीयुते देवि नवात्मिके ॥ १३ ॥

आरात्रिकमिदं देवि गृहाण मम सिद्धये ।

नीराजनमनुर्देवि विद्यान्ते प्रगटीकृतः ॥ १४ ॥

**॥ तत्रमुद्रा ॥**

॥ आरात्रिके महेशानि चक्रमुद्रा व्यवस्थिता ।

वामहस्ताङ्गुष्ठगर्भे कनिष्ठां दक्षिणां नयेत् ॥ १५ ॥

कनिष्ठागर्भगे वामे दक्षाङ्गुष्ठं विनिक्षिपेत् ।

अन्योन्यकरयोर्देवि चक्रमुद्रेयमीरिता ॥ १६ ॥

आरात्रिकविधिं कृत्वा [1]नैवेद्यं तु निवेदयेत् ॥ इति ॥

**४-उपर्युक्तादन्योमहानीराजनविधिः** । तत्रैव ज्ञानार्णवे-वि. १६ पटले-७५ पंत्रे-यथा—

॥ धूपदीपौ निवेद्याथ तर्पयेत् पूर्ववत् प्रिये ॥ २०३ ॥

॥ आरात्रिकविधिं कुर्यात् पूर्ववद्देववन्दिते ।

॥ **अन्यदारार्तिकं वक्ष्ये** सर्वकामप्रपुरकम् ॥ २०४ ॥

स्वर्णादिनिर्मिते पात्रे मध्ये चक्रं लिखेद्बुधः ।

तण्डुलोल्लासितं कृत्वा नवधा कारयेत्ततः ॥ २०५ ॥

नवगोलांश्चन्द्ररूपांन् विरच्य तदनन्तरम् ।

शर्करागर्भभरितान् मण्डकान् युग्मरूपकान् ॥ २०६ ॥

विरच्य घटिकाःकार्यायोजयित्वा तु सप्तकम् ।

सप्तसप्तप्रकारेण घटिकानव योजयेत् ॥ २०७ ॥

अष्टकोणेषु संस्थाप्य गोलकांश्चोपरि क्षिपेत् ।

चणमुद्राविकीर्याथ दीपकान् घृतपाचितान् ॥ २०८ ॥

**मुष्टिकाकृतिमुष्टीश्च स्थापयेत् तत्र तत्र तु ।**

दीपान् प्रज्वाल्य पश्चात्तु पञ्चरत्नैः प्रपूजयेत् ॥ २०९ ॥

---

१-अयमारात्रिकविधिरनेन लेखेन-नैवेद्यात् प्राक्तनः अथ च एतदधस्तान्निर्देक्ष्यमाणोपरोपि नीराजनविधिश्च पुनराश्रयणीयएवेति द्वावप्येतौ विधी मान्यतरावेवेति सविनयनिवेदनम् ॥

पञ्चसिंहासनगताविद्यास्तत्र प्रपूजयेत् ।
आमस्तकं समुद्धृत्य नववारं पुनःपुनः ॥ २१० ॥
नवावरणवद्देवि परिभ्राम्य पुनःपुनः ।
उत्तीर्य स्थापयेत् पश्चाद्दीपमालामयं महः ॥ २११ ॥
नेत्रयोः सुस्थिरं ध्यायेदारार्तिकविधिः प्रिये ॥ इति ॥

५ ॥ एकदीपात्मकः **पञ्चदीपात्मकनीराजनविधिश्च ।** श्रीशिवपुराणे-वायुसंहितायां यथा–

॥ धेनुमुद्रां च सन्दर्श्य पाणिभ्यां पात्रमुद्धरेत् ।
अथवा रोपयेत् पात्रे पञ्च दीपान् यथाक्रमम् ॥
विदिक्ष्वपि च मध्ये च दीपमेकमथापि वा ।
ततस्तत्पात्रमुद्धृत्य लिङ्गादेरुपरि क्रमात् ॥

**नीराजनभ्रामणे सङ्ख्या ॥**

॥ त्रिःप्रदक्षिणयोगेन भ्रामयेन्मूलविद्यया ॥ इति ६०–श्लोकतो-६२–श्लोकान यावत् ॥

१३ ॥ **देव्यामहानीराजनारात्रिकयोर्विधिः** ॥
३६-६

प्राक्तनश्रीविद्यानित्यार्चनपद्धतौ यथा–

**६–प्रकारः–**

अथारात्रिकं ॥ **'प्रथमं महानीराजनं कृत्वा पश्चादारात्रिकं कार्यं** ॥तदुक्तं॥ सौवर्णे राजते कांस्ये स्थालके परमेश्वरि । कुङ्कुमेन लिखे त्पद्मं वसुपत्रं मनोहरं ॥ १ ॥ मध्ये चरुं चंद्ररूपं कृत्वा तन्मस्तके प्रिये । दीपमेकं विनिक्षिप्य वसुपत्रेऽष्टदीपकान् ॥ २ ॥ यवगोधूमपिष्टादिरचितान् शर्करायुतान् । चणकान्वितमुद्राभिः शोभितान् घृतपाचितान् ॥ ३ ॥ कर्पूरवृर्त्तिकायुक्तान् गोघृतेन च पूरयेत् । सङ्कल्पं कारयेत् पश्चात् कामनामनसेप्सितम् ॥ ४ ॥ अभिमन्त्र्य महेशानि रलेश्वर्य्या ततःपरं ॥ तं स्थालकं समुद्धृत्य मस्तकान्तं पुनः पुनः ॥ ५ ॥ नवकृत्वोमेहशानि, ततोनीराजनं चरेत् ॥ इति महानीराजनं ॥

**तदनंतरमारात्रिकं** कार्यं ॥ लोहंवर्ज्यस्वर्णादिपात्रे–चन्दनेनाष्टदलं कमलं लिखित्वा ॥ तत्र मध्यदलाष्टके यवगोधूमपिष्टादिरचितानि नवपात्राणि संस्थाप्य ॥ घृतेनापूर्य ॥ वर्त्तीर्निक्षिप्य ॥ भुवनेश्वर्याप्रज्वाल्य ॥ श्रीं ह्रीं ग्लूं स्लूं म्लूं प्लूं न्लूं ह्रीं श्रीं,**–एभिर्नवभिर्बीजैर्नवदीपान्** सम्पूज्य ॥ चक्रमुद्रां प्रदर्श्य ॥ (वामहस्ताङ्गुष्टगर्भे

कनिष्टां दक्षिणां क्षिपेत् ॥ कनिष्टागर्भके वामे दक्षाङ्गुष्ठं विनिक्षिपेत् ॥ अन्योन्ययोगतोदेवि **चक्रमुद्रा** समीरिता ॥ १ ॥ ) मूलेनाभिमन्त्र्य ॥ मूलेन देव्याः पुष्पाञ्जलिं दत्वा जानुभ्यामवनीं गतः उत्थाय ॥

तत् पात्रमामस्तकमुधृत्य घण्टावादनपूर्वकं देव्यामस्तकादिपादपर्यंतं मूलमुच्चार्य ॥

॥ ॐ अन्तस्तेजोबहिस्तेजएकीकृत्यामितप्रभं ॥ त्रिधा देव्युपरि भ्राम्यन् कुलदीपान् निवेदयेत् ॥ १ ॥

॥ समस्तचक्रचक्रेशीयुते देवि नवात्मके ॥ आरात्रिकमिदं देवि गृहाण परमेश्वरि ॥२॥

इति–( अत्र शेषविधिः स्वधिया पूरणीयः ) ॥ इत्याराात्रिकविधिः ॥

**२–द्वितीयः प्रकारः–**

श्रीआनन्दाश्रमसंस्कृतग्रन्थावलि ७२ ग्रन्थाङ्कमुदितश्रीघारेइत्युपानामकशङ्करसूरिविरचित श्रीगायत्रीपुरुश्चरणपद्धतौ-५२ पत्रे–यथा–

मूलं-सावित्रि ते नीराजनम् । ततोयथविधि विहितमारात्रिकपात्रमानीय ।

चक्रमुद्रां प्रदर्श्य, वमिति धेनुमुद्रयाऽमृतीकृत्य मूलेनाभ्यर्च्य

॥ ॐ समस्तदेवताचक्रमुनिपितृगणावृते ।
आरात्रिकं गृहाणेदं सावित्रि मम सिद्धये ॥

इत्यनेन घण्टावादनपूर्वकं–पारावतभ्रमाकारमुच्चैर्देवीं पूर्ववन्नीराजयेत्–इति–

श्री

## अपरश्च-महानीराजनारात्रिकयोर्विधिः

॥ ३ प्र. ॥ श्रीवटपत्तनेशः स्व०-**श्रीमत्सयाजिरावगायकवाड, सरकार** इत्येतेषामाज्ञानुरोधेन, मत्सङ्ग्रथित**श्रीबह्वृचचिन्तामण्यपरनामकश्रीबालातन्त्र-चन्द्रिका,** इत्येतत्पुस्तक ३३२ पत्रोल्लिखितमहानीराजनारात्रिकयोर्विधिः । यथा–

। लोहवर्जिते स्वर्णरौप्याद्यन्यतमभाजने गैरिकसिन्दुरकुङ्कुमाद्यन्यतमेन ललितं अष्टदलं विरचय्य ।

तत्राष्टदलपत्रेषु घृतपक्वगोधूमचूर्णनिर्मितडमरुसदृशाकृतीनि अष्ट दीपपात्राणि संस्थाप्य मध्ये चैकं तादृशमेव संस्थाप्य ।

मूलेन-तत्र वर्तिकां निक्षिप्य-मूलेनाज्यं सम्पूर्य, मायाबीजेन वन्हिबीजेन वा प्राकटय्य, ॐ श्रीं ह्रीं ग्लूं स्लूं म्लूं प्लूं न्लूं ह्रीं श्रीं नमः । इति **नवरत्नेश्वरीमन्त्रेणार्चयित्वा** नमस्कृत्य चक्रमुद्रां प्रदर्श्य, तदारात्रिकपात्रं स्पृष्ट्वा, । मूलमन्त्रेण परदेवतायै, चन्दन पुष्पाणि समर्प्य । जानुयुग्मं धरिण्यां पातयित्वा, देवतायाः दृक्पर्यन्तं–आरात्रिक पात्रमुत्तोल्य अधोलिखितं पठन् सार्धत्रिवारं अथवा नववारं–आरात्रिकपात्रं देवतायाः मस्तकात् पादावधि-प्रदक्षिणक्रमेण भ्रामयेत् ॥

ॐ ऐं क्लीं सौः-अम्बेऽअम्बिकेम्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ १ ॥ यजुः सं. २३ अ. १८ मन्त्रः-

ॐ इद॑ᳪहविः, प्रजननम्मेऽअस्तु दशवीर॑ᳪसर्व्वगण॑ᳪस्वस्तये ॥ आत्मसनि प्रजासनि पशुसनि लोकसन्न्यभयसनि ॥ अग्निः प्रजां बहुलां मे करोत्वन्नं पयोरेतोऽअस्मासु धत्त ।

## ॥ नीराजने गेयम्-१

ॐ जय देवि जय देवि जय जननि शरण्ये । जय जय नवचक्रेश्वरि सकलागमगम्ये-ध्रुवम् ।
अपरिमितामृतसागरविपुलमणिद्वीपे, तपनोपमचिन्तामणिधामनि घननीपे ॥
कृपया परयाविष्कृतकेवलनिजरूपे-त्रिपुरे जय जगदीश्वरि धृतचन्द्र-कपाले ॥ जय देवि० ॥ १ ॥

जय हिमगिरिकुलनन्दिनि समुदितलावण्ये । जय भगवति कात्यायनि संततकारुण्ये ।
परमकृपारससम्भृतपरदैवतरूपे । करविनिहितपाशाङ्कुशकौसुमशरचापे ॥ जय देवि० ॥ २ ॥

कमनीयाननहिमकरकस्तूरीतिलके । सुरचामीकरचामरमरुदुल्लसदलके ॥
कल्पककुसुमालङ्कृतकचभरमणिमौले । मुक्ताताटकङ्कद्युतिमण्डितसुकपोले । जय देवि० ॥ ३ ॥

कविवरनिकराराधितकोणत्रयशरणे । त्रिपुरे जय जगदीश्वरि जय-बालकपाले ॥
सनकादिकबहुमुनिजनसंस्तुतशुभचरिते । पदपल्लवशरणागतपरिपालन निरते ॥ जय देवि० ॥ ४ ॥

दुष्टग्रहभयभञ्जनि दूरीकृतदुरिते ॥ गिरिजे मयि करुणां कुरु गुण-गणमणिगणिते ॥
मधुरारुणबिम्बाधरमन्दस्मितवदने । जगदीश्वरि ललिते जय चम्पक-वनसदने ॥ जय देवि० ॥ ५ ॥

यइमां शङ्करपठितां स्तुतिमिति भावयते । त्रिभुवजननीमेवं योनीराजयते ॥
सभवति कविरतुलधनः सकलागमवेत्ता । उपैति मातुः पदवीं रविमण्डलभेत्ता ॥ जय देवि० ॥ ६ ॥

१ ॐ महति कनकपात्रे स्थापयित्वा विशालान् । डमरुसदृशरूपान् पक्व गोधूमदीपान् ॥

बहुघृतमथ तेषु न्यस्य दीपैरकम्पैर्भुवनजननि कुर्वे नित्यमारात्रिकं ते ॥

२ सविनयमथ दत्वा जानुयुग्मं धरायां सपदि शिरसि धृत्वा पात्रमारात्रिकस्य ॥

मुखकमलसमीपे तेम्ब सार्धत्रिवारं, भ्रमयति मयि भूयात् ते कृपार्द्रः कटाक्षः ॥

३ ॐ कर्पूराकलितैः सुवर्तिवलिभिः कार्पाससूत्रोद्भवैर्दीपैः पञ्चभिरेभिरम्ब नवभिः सौवर्णपात्रस्थितैः ।

पूर्णैर्गोघृतगुग्गुलैस्तु सरलैस्तैलैश्च वा प्रज्वलैरेतत्तद्बहिरन्तरं गिरिसुते नीराजनं दीयते ॥

४ ॐ समस्तचक्रचक्रेशि नवावरणसंयुते । आरात्रिकमिदं देवि गृहाण मम सिद्धये ॥ ७ ॥

५ ॐ अन्तस्तेजोबहिस्तेजएकीकृत्य च तत्परम् । आरात्रिकं महेशानि साम्प्रतं ते समर्पितम् ॥ ८ ॥ एतेभ्यः पञ्चभ्योयथेष्टश्लोकाग्राह्याः ।

। आरात्रिकपात्रं भूमौ संस्थाप्य । ॐ भू० ऐं क्लीं सौः साङ्गायै० श्रीत्रिपुरसुन्दर्यै नमः नीराजनदीपं दर्शयामि, इति जलमुत्सृज्य । पुष्पादिना परदेवतायै महानीराजनं-निवेद्य० ।

॥ पुनश्चापि कर्पूरादिना तथैव सामान्यारात्रिकं प्राकल्प्य, सम्पूज्य ॥

॥ सविनयमथ दत्वा जानुयुग्मं धरिण्यां सपदि शिरसि धृत्वा पात्रमारात्रिकस्य ।

मुखकमलसमीपे तेम्ब सार्धत्रिवारं भ्रमयति मयि भूयात् ते कृपार्द्रः कटाक्षः ॥

॥ कदलीगर्भसम्भूतं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

इति पठित्वा पात्रमधः संस्थाप्य. । ॐ भू० ऐं. क्लीं सौः श्रीपरदेवतायै नमः कर्पूरात्रिकयं समर्पयामि,–इत्युक्त्वा, पुष्पादिना इष्टदेवतायै निवेद्य, स्वयमपि वन्दनं कुर्यात् ॥ इति ॥

**४–अत्र–महानीराजने विषमावर्तिः।** शारदायां–४–पटले–२९७ पत्रे–२०७ श्लोकटीकायां–यथा–

आरात्रिकं तु विषमबहुवर्तिसमन्वितम्-अर्थादारात्रिकदीपे तु–विषमसङ्ख्याकाबहुवर्तयः क्षेप्याः–इत्यर्थः —

( ३६–६ वि. सर्वोपि सं. )

१३।३६-७ ॥ **श्रीदेव्यागेयसंस्कृतनानानीराजनानि ॥**

**॥ नीराजने गेयं-द्वितीयम्-२-॥ अथ-श्रीचक्रनीराजनम्**

जय देवि जय देवि जय मातस्त्रिपुरे २
दीपावलिमवलोकय२ मामव सुखसारे ॥ जय देवि० ॥ १ ॥
बिन्द्वङ्कितगुणकोणे तदुपरि वसुकोणे २
दशारयुग्मे भगवति२ [1]भूतवमनुकोणे ॥ जय देवि० ॥ २ ॥
चेतः क्रीडति चाष्टौ षोडशदलरम्ये २
मुदापि वलयत्रितये२ धरणीगृहरम्ये ॥ जय देवि० ॥ ३ ॥
रेखात्रयपरिनिर्मितनिगमद्वारयुते २
सुवर्णमणिगणखचिते२-श्रीचक्रे युवते ॥ जय देवि० ॥ ४ ॥
ब्रह्मादिकमयमञ्चकमृद्वासनखाचिते २
तदुपरि भूषणसायुध२ कामेश्वरसहिते ॥ जय देवि० ॥ ५ ॥
अङ्कुशपाशशरासनशरशोभितहस्ते २
किशोरवेषालङ्कृत२त्रिपुरेशी नमिते ॥ जय देवि० ॥ ६ ॥
स्यर्णाभरणसुगेहेरुणकञ्चुकिचैले २
निधेहि शिवपदचिद्घनचिद्रसकल्लोले २ ॥ जय देवि० ॥ ७ ॥

इति-श्रीअमदादस्थमन्मित्रशास्त्रिगणपतत्र्यम्बकरामदिवेदिकृतश्रीविद्यार्चनपुस्तिकायाम् ॥

**नीरा. गेयं. तृतीयम्-३-॥ श्रीनवचक्रेश्वरीनीराजनम् ॥**

ॐ जय देवि जय देवि जय जननि शरण्ये ।
जय जय नवचक्रेश्वरि सकलागमगम्ये । ध्रुवम् ॥
अपरिमितामृतसागरविपुलमणिद्वीपे ।
तपनोपमचिन्तामणिधामनि घननीपे ॥
कृपया परयाविष्कृतकेवलनिजरूपे ।
त्रिपुरे जय जगदीश्वरि धृतचन्द्रकपाले ॥ जय देवि० ॥ १ ॥
जय हिमागिरिकुलनन्दिनि समुदितलावण्ये ।
जय भगवति का[2]त्यायनि सन्ततकारुण्ये ॥
सिन्दूररसारूणरूचि सन्दोहिशरीरे
सदा च निजकुचागिरिविरतटचन्दनसारे ॥ २ ॥

---

१. भूतवमनुकोणे-इति संशोध्य वाच्यम् ॥
२. कामेश्वरि इत्यपिपाठः

मन्दस्मितमधुराधरसुन्दरहृद्दहीरे
कन्दर्पारातिप्रियसुन्दरकुसुमारे ॥
परमकृपारससम्भृतपरदैवतरूपे ।
करविनिहितपाशाङ्कुशकौसुमशरचापे ॥ जय देवि० ॥ ३ ॥
अणिमादिमयूखादिभिरधिरूढसमीपे ।
सपुरन्दरदिग्जाधिपसमुदयदूर्वापे ॥
कमनीयाननहिमकरकस्तूरीतिलके
सुरचामीकरचामरमरुदुल्लसदलके ॥ जय देवि० ॥ ४ ॥
कलझङ्कृतमदबम्भरकर्णोत्पलकलिके ।
नवमुक्ताफलरञ्जितनासामणिनलिके ॥
कल्पककुसुमालङ्कृतकचभरमणिमौले ।
मुक्ताताटङ्कद्युतिमण्डितसुकपोले ॥ जय देवि० ॥ ५ ॥
कुङ्कुमरसपङ्किलघनकुचबहुहाराले
काञ्चीगुणवलयितकटीसत्कौसुमदुकूले ॥
निखिलागममुकुटितमणिनीराजितचरणे ।
मिहिरोपमहीरोज्वलमञ्जीराभरणे ॥ जय देवि० ॥ ६ ॥
कविवरनिकराराधितकोणत्रयशरणे ।
त्रिपुरे जय जगदीश्वरि जय बालकपाले ॥
सनकादिकबहुमुनिजनसंस्तुतशुभचरिते ।
पदपल्लवशरणागतपरिपालननिरते ॥ जय देवि० ॥ ७ ॥
दुष्टग्रहभयभञ्जनि दूरीकृतदुरिते ।
गिरिजे मयि करुणां कुरु गुणगणमणिगणिते ॥
मधुरारुणबिम्बाधरमन्दस्मितवदने ।
विपुलायतनयनोचितविकचोत्पलकदने ॥ जय देवि० ॥ ८ ॥
कलिताखिलवरदायिनि कामेश्वरि मदने ।
जगदीश्वरि ललिते जय चम्पकवनसदने ॥ जय देवि० ॥
यइमां शङ्करपठितां स्तुतिमिति भावयते
त्रिभुवनजननीमेवं योनीराजयते

सभवति कविवरतुल्यः सकलागमवेत्ता ।
( सभवति कविरतुलधनः सकलागमवेत्ता )
उपैति मातुः पदवीं रविमण्डलभेत्ता[1] ॥ जय देवि० ॥ ९ ॥ इति

इति—श्रीबहुचरचिन्तामण्यपरनामकश्रीबालातन्त्रचन्द्रिकायां ३३३ पत्रे ।

**नि. गे. ४—॥ श्रीललिताम्बिकानीराजनम् ॥** चतुर्थम्-

॥ जय देवि जय देवि जय ललिते जननि
कारुण्यं कुरु वरदे पङ्कजदलनयने ॥ ध्रुवम् ॥
ध्यानस्तवनपरायणशमिताखिलतापे
रक्तकबीजविनाशिनि पावितकृततापे ॥
दनुजाधीशविमर्द्दनि पावककृतविमले
विधिवृषवाहनमाधववन्दितपदकमले ॥ जय देवि ॥ १ ॥
प्राप्य तवान्तिकमगजे रक्षितसुरवृन्दे
चरणसरोरुहयुग्मं नित्यमहं वन्दे ॥
शुम्भासुरमथिनि त्वं मामाश्रयहीनं
करुणापूरितनयने पश्य जनं दीनं ॥ जय देवि० ॥ २ ॥
निजभक्ताभयवरदे कल्पितबहुरूपे
मातस्त्वं मामुद्धर पतितं भवकूपे ॥
महिषासुरहननेना[2]मरकृतसानन्दे
मग्नं कुरु मामीश्वरि तव भजनानन्दे ॥ जय देवि० ॥ ३ ॥
निशुम्भमानध्वंसिनि रचितासुरमरणे
मातर्मयि कुरु करुणामरुणद्युतिचरणे ॥
पापं मे हर गिरिजे तव पूजनकरणे
भक्तिं देहि महेश्वरि भीतिहरस्मरणे ॥ जय देवि० ॥ ४ ॥
मात्रातनयगुणानामरुणाम्बुजवदने
क्रियतेऽन्वेषणमपि नाखिलभयहरभजने ॥
निर्गुणमपि यदि सगुणं मत्वाव महेशि
शरणागतमसुरार्दिनि मामिह भूतेशि ॥ जय देवि ॥ ५ ॥
चेदपराधोयदि वा संहृतजनशोके
क्षन्तव्योमेऽसुरवधतोषितसुरलोके ॥

---

१—अत्राशुद्धं काचित्कं स्वधियाशोध्यम्— २—मरविहितानन्दे-इति साधुः पाठः ॥

निर्जरमुकुटस्थितमणिनीराजितचरणे

शक्तं कुरु मां कृपया भववारिधितरणे ॥ जय देवि ॥ ६ ॥

अङ्गीकुरु गिरितनये नीराजनकरणं

दानवकुलपतिहन्त्रि त्वं भव मम शरणं ॥

यद्यङ्गीकुरुषे नो मद्रचितस्तवनं ।

जगति न कोपि करिष्यति भक्त्या तव भजनम् ॥ जय देवि० ॥ ७ ॥

धनदाभिधकविरिच्छति मम चेतः सततं

तिष्ठतु चरणसमीपे त्वं भव सुखशरणम् ॥

यःकश्चित्प्रपठिष्यति नीराजनसमये

तुष्टा भवतु भवेऽस्मिन् देवि दुःखमये ॥ जय देवि० ॥ ८ ॥ इति

श्रीदुर्गाकल्पद्रुमपुस्तिकायां १७४-पत्रे

**नीरा. गेयम्-५ ॥ श्रीललिताम्बानीराजनमपरं** ॥ तत्रैव-१७१-पत्रे

जय देवि जय देवि जय सुन्दरि तनये जय सुन्दरि ललिते ।

शश्वद्वसतिं कुरु भोरीश्वरि मम हृदये ॥ जय देवि जगदम्ब ॥ ध्रुयम् ॥

बिन्दुत्रिकोणसहितं षट्कोणं वृत्तम्

तदुपरि वसुदलपत्रं वर्तुलमपि धत्तं ॥

द्विगुणीकृतवसुपत्रं मोहितहरचित्तं ।

द्वारचतुष्टयनिर्मितयन्त्रोपरि तन्त्रम् ॥ जय देवि० ॥ १ ॥

वामे कलशे पूजितपूरितमाधारम्

तस्मिन्नर्पितपूजितपूरितमाधारम्

एवं पञ्चावरणितकर्णितगुणसारं ।

मा देहि त्वं भूवने दुर्घटसंसारं ॥ जय देवि० ॥ २ ॥

कलशामृतजलपूजितनवपात्रसमेतं ।

गणपतियोगिनीबटुकक्षेत्राधिपयुक्तम्

अर्चनविधिना सहितं श्रीगुरुविधियुक्तम् ।

तारकपण्डितविद्याभक्त्याखिलदत्तम् ॥ जय देवि० ॥ ३ ॥

॥ नीराजनमालिकायाम्-७२-पत्रे ॥ अत्राशुद्धं शोध्यम्

**नीरा. गे. ६ ॥ श्रीमहालक्ष्मीनीराजनम्-षष्ठम् ॥**

जय देवि जय देवि जय मातः कमले
द्रुतजाम्बुनदविमले सुरनुतपदकमले[1] ॥ ध्रुवम्० ॥
अलिकुलकोमलबाले धृतमौक्तिकमाले
स्तनयुगनिर्जितताले क्षीराम्बुधिबाले ॥
काश्मीराङ्कितभाले नाशितभवजाले
लीलामर्दितकोले शरणागतपाले ॥ जय देवि० ॥ १ ॥
कमलदलायतनयने शशिनिभशुभवदने
सिंहविराजितगमने हीरावलिरदने ॥
मुनिजनविरचितनमने कृतराक्षसकदने
कोकिलमञ्जुलगदने विष्णूरःसदने ॥ जय देवि० ॥ २ ॥
नागाद्यङ्कितमस्तकभुवनावनसक्ते
प्राशनभाजनखेटादिककृतकरयुक्ते ॥
**कृतकरवीरनिवासे** रिपुमर्दनसक्ते
शुकनासासमनासे तारितनिजभक्ते ॥ जय देवि० ॥ ३ ॥
अधरविनिर्जितबिम्बे विश्वस्तुतरूपे
पृथुतरचारुनितम्बे कृतदानवकोपे ॥
भ्रूजितमन्मथचापे निजजनहृततापे
शुकशनकादिकनारदपदनतिहृततापे ॥ जय देवि० ॥ ४ ॥ इति
**दाजीज्योतिर्विद्वत्प्रणतिहृततापे** ॥ जय देवि० ॥ ४ ॥ इति ॥
॥ दु. क. पु. ११३ पत्रे ॥

**नीरा. गे. ७ ॥ श्रीमहालक्ष्मीनीराजनम्-सप्तमम् ॥**

जय देवि जय देवि क्षीरसागरतनये
लक्ष्यालक्ष्यस्वरूपे लाक्ष्मिः सुरवरदे ॥ ध्रुवम् ॥
नानामणिमयभूषामण्डितदोर्युगले
नूपुरझुधुरध्वनिभिर्नादितदिक्पटले ॥
उद्यद्दिनकरभानुप्रतिभटरुचिरास्ये
ध्यानं किं[2] किं दुर्लभमहमिह न हि जाने ॥ जय देवि० ॥ १ ॥

---

१. पदयुगले इत्यपिपाठः । २. तत्तद्दभेतिसाधु ।

भवभयसागरपारं कर्तुं दशहस्ता
विदिताविदितादन्यत् प्रापयितुं मुदिता ॥
सर्वाप्येवं लीला जनिता जनतायै
कथं न [1]द्रयसे हृदये जपतोममतायै ॥ जय देवि० ॥ २ ॥
जगतः सृष्टिः स्थितयोहृतयः प्रतिकल्पे
लोचनमीलनलीलोन्मेषणतः कुरुषे ॥
कोवा प्रभवति तस्याः स्मृतये मनसा ये
महता वेदायत्र स्मृतिभिः सह चकिताः ॥ जय देवि० ॥ ३ ॥
मध्यस्थापितदीपैरालीशतसहितैः
निजकरतालध्वनिभिर्नादितदिक्पटले ॥
क्रीडनगायनहासैर्नन्दितमृदुहृदयाम्
भावय चेतः सततं भुवनेशीं सदयाम् ॥ जय देवि० ॥ ४ ॥
धर्षितधीं धीं धिननं दुन्दुभि[2]नादयते
घर्षित झं झं झणण झंझरि वादयते ॥
कर्शितघणणणघण्टाघोषं श्रावयते
हर्षितमधुरामृतघनसुरपतिराद्रियते ॥ जय देवि० ॥ ५ ॥ इति
( नीराजनमालिका पुस्तिकायां ७१ पत्रे–अत्र काचित्क्रमशुद्धं शोध्यम् )

**नीरा. गे. ८ ॥ श्रीबालात्रिपुरानीराजनम् ॥**

॥ जय देवि जय देवि जय हिमगिरिबाले ।
भवभयभञ्जिनि भगवति भुवनत्रयपाले ॥
योगेश्वरि विश्वेश्वरि भुवनेश्वरि दुर्गे ।
ज्वालामुखि परमेश्वरि शान्तीश्वरि दुर्गे ॥
जय महिषासुरमर्दिनि मर्दितसुरभीते ।
मृगपतिवाहिनि वन्दे मुकुन्दसुतगीते ॥ जय देवि० ॥ १ ॥
विन्ध्याचलवनवासिनि शाकम्भरि दुर्गे ।
भ्रामरि लोहितरत्ने रचिताखिलस्वर्गे ॥
श्रीपतिगोपतिवरदे जय मातर्ललिते ।
सप्तस्वरविनिवासिनि भव मम तापहरे ॥ जय देवि० ॥ २ ॥ इति ॥
॥ नीराजनमालिकापु–८८ पत्रे ॥

१. कथं न दयसे हृदये–इति पाठः साधुः । २. शङ्क्यमिदमपदं पदम्– ।

**नीरा. गे. ९ ॥ श्रीभगवत्याःश्रीदुर्गादेवतायानीराजनम्- ॥**

जय देवि जय देवि जय मातस्त्रिपुरे
[1]दासानुग्रहकारिणि ईश्वरि सुखवरदे ॥ धृव० ॥
दुर्गे दुर्गतिनाशिनि भवसागरतारे
मृगेन्द्रवाहनगिरिजे दानवसंहारे ॥
अष्टादशभुजमूर्तिः [2]कण्ठरूढमाले
सप्तश्रृङ्गनिवासिनि रुद्रात्मकशक्ते ॥ जय देवि० ॥ १ ॥
बालार्कारुणशोभितबन्धुककुसुमाभे
कुङ्कुमशोभितदेहे दाडिमकुसुमाभे
पादाहतमहिषासुरदेवासुरसर्गे
नानादानवमर्द्दिनि अलिकुलरिपुवर्गे ॥ जय देवि० ॥ २ ॥
जय त्रिपुरासुरमर्द्दिनि मर्दय मम दोषान्
तारय तारय मातर्भवजलकूपस्थान्
कामक्रोधा[3]दीन् मम मारय मारय देहस्थान्
करुणाद्रष्टया मातारक्षय निजभक्तान् ॥ जय देवि० ॥ ३ ॥
मूले चाधिष्ठाने मणिपूरे चक्रे
हृदयेनाहतचक्रे षोडशदलपद्मे ॥
आज्ञाचक्रे [4]बालय बालयकृतवलये
ब्रह्मस्थाने विहरसि मातः शिवसहिते ॥ जय देवि० ॥ ४ ॥
विधिहरिशङ्करवन्द्ये पण्डितजनवन्द्ये
सनकादिकमुनिवन्द्ये यक्षासुरवन्द्ये ॥
नारदतुम्बरुकिन्नरगीते सुरवन्द्ये
अघनाशिनि भवशोषिणि मातः सुखसहिते ॥ जय देवि० ॥ ५ ॥ इति ॥

॥ नीराजनमालिकापुस्तिकायां—७३ पत्रे—

---

१. भक्तानुग्रहकारिणि इश्वरि सुरवरदे—इत्यपिपाठः ।
२. कण्ठरूढमाले—इति साधुः पाठोभाति ॥
३. कामक्रोधादिकमपि मारय देहस्थमित्यपि साधुःपाठोभाति ॥
४. अत्र बालयेति द्विरपि शङ्क्यम् ॥

**नीरा. गेयं-१० ॥ श्रीमद्भागीरथीगङ्गानीराजनम् ॥**

जय देवि जय देवि विश्वेश्वरि गङ्गे गङ्गोत्तरि गङ्गे
काशीपुरविनिवासिनि जनिमृतिभयभङ्गे ॥ ध्रुवम् ॥
प्रवरातीरनिवासिनि निगमप्रतिपाद्ये ।
पारावारविहारिणि नारायणि हृद्ये ॥
प्रपञ्चसारे जगदाधारे श्रीविद्ये ।
प्रपन्नपालननिरते मुनिवृन्दाराध्ये ॥ जय देवि० ॥ १ ॥
गभीरघोषविराजितजनमोहनरूपे ।
मामिह जननि समुद्धर पतितं भवकूपे ॥
दिव्यसुधाकरवदने कुन्दोज्ज्वलरदने ।
पदनखनिर्जितमदने पापव्रजकदने ॥ जय देवि० ॥ २ ॥
मञ्जीराङ्कितचरणे मणिमुक्ताभरणे ।
कञ्चुकीवस्त्रावरणे वक्राम्बुजधरणे ॥
शक्रामयभयहरणे भूसुरसुखकरणे ।
करुणाङ्कुरु मयि शरणे गजनक्रोद्धरणे ॥ जय देवि० ॥ ३ ॥
कुङ्कुमकेसरपटिकाविभ्राजितभाले ।
मालतिचम्पकपाटलिकण्ठस्थितमाले ॥
रत्नजडितमणिमण्डितहेमाङ्कितसारे ।
उद्यद्दिनकरभानुचूडामणिहारे ॥ जय देवि० ॥ ४ ॥
नानामणिमयभूषा मण्डितदोर्युगले ।
नूपुरमधुरध्वनिभिर्नादितदिक्पटले ॥
दुष्टग्रहभयभञ्जिनि दूरीकृतदुरिते ।
गिरिजे मयि करुणां कुरु गुणगणमभिगणिते ॥ जय देवि० ॥ ५ ॥ इति
॥ दु. क. पु. १७६ पत्रे—

॥ इत्यादिना स्वगुरूपदिष्टाचारेणायं विधिः-समापनीयइति ॥

( १३।३६-७ वि. सर्वोपि-सं. )

**१३।३६-८-॥ देवनीराजनफलम् ॥**

श्रीयोगिनीतन्त्रे-९-पटले-२२७ पत्रे-श्रीशिवभगवद्वचोयथा—

॥ नीराजनेन यः पूजां करोति वरवर्णिनि ।
अनुक्तं प्राप्नुयात् सोऽपि इह लोके परत्र च ॥ इति ॥

**३६।९-॥ नीराजनशब्दार्थस्फोटः ॥**

अत्र नीराजनशब्देन-सर्वत्र दीपरूपोदीपाद्भिन्नश्च तत्तद्देवपूजोपचारान्तर्गतैकोपचारः—

॥ अथवा नीराजनं नाम, अनेकदीपप्रकाशेन तत्तद्देवस्य सर्वाङ्गनिष्ठं सौन्दर्यमाधुर्य-निरीक्षणम्-इत्यर्थोज्ञेयः ॥ इति ॥ ( प. क. सू. द्वितीयावृत्तिकारः )

॥ इति श्रीमहानीराजनविधिः १३।३६-सर्वोऽपि सम्पूर्णः ॥

वि. १३।३७ ॥ **मन्त्रपुष्पाञ्जलिविषये ज्ञेयं प्रयोगश्च** ॥

१ ॥ **मन्त्रपुष्पाञ्जलिशब्दार्थोयथा**—

॥ तद्विधिप्रतिपादकप्रमाणग्रन्थोक्तमन्त्रादिपठनपूर्वकः पुष्पादिसम्भृतोऽञ्जलिः । **मन्त्रपुष्पाञ्जलिरिति** सामान्यार्थः-( प. क. सू. द्वितीयावृत्तिकारः )

२-अपरश्च श्रीकुलार्णवतन्त्रमाश्रित्य **मन्त्रपुष्पाञ्जलिशब्दसमासार्थौ** यथा-

॥ अत्र समासस्तु उपर्युक्तवत् । तत्र च मन्त्रशब्दार्थः—कुलार्णवे १५६ पत्रे-१७-उल्लासे-यथा—

॥ मननात् तत्वरूपस्य देवस्यामिततेजसः ।
त्रायते सर्वभयतस्तस्मान्मन्त्र **इतीरितः** ॥ इति ॥

॥ **अथ पुष्पशब्दार्थोऽपि तत्रैव**-१५७ पत्रे-यथा—

॥ पुण्यसंवर्द्धनाच्चापि पापौघपरिहारतः ।
पुष्कलार्थप्रदानाच्च **पुष्प-इत्यभिधीयते** ॥ इति ॥

अर्थात् मन्त्रपठनपूर्वकः पूष्पसम्भृतोञ्जलिरिति शब्दार्थस्सुगमः शिष्टसम्मतः स्यादेवेति ॥ ( ३७।१ वि. सर्वः सं )

३७।२ ॥ **कस्योपचारस्यानन्तरमयं मन्त्रपूष्पाञ्जल्युपचारः-आचरितव्यस्तत्र** विचारः ॥ यथा—

॥ अयं मन्त्रपुष्पाञ्जलिः, कुत्र चिद्ग्रन्थे नीराजनात् पूर्वमनन्तरं चाभिहित स्ततस्तत्सिध्धान्तैकज्ञानाय

अत्रैव द्विपरिशिष्टे उपचाराणां सङ्ख्याविषयक-७-विषये-३८६ पत्रतः ३९० पत्रेषु-द्रष्टव्यमिति सुविदितमास्तां सताम् ॥ इति प. क. सू. द्वितीयावृत्तिकारः ॥

३ ॥ **वैदिकतान्त्रिकमन्त्रपूष्पाञ्जलिप्रयोगः** ॥

अयं वैदिकतान्त्रिकमन्त्रपुष्पाञ्जालिप्रयोगः श्रीबालातन्त्रचन्द्रिकायां ३३४ पत्रे-यथा-

१ ॐ० मूलं

ॐ अम्बेऽअम्बिकेम्बालिके न मा नयति कश्चन ॥

ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ य. सं.

२ यज्ञेन यज्ञ० ( पु. सू. १५ मत्रः य. सं. अ. ३१।१५ )

३ ॐ यः शुचिः प्रयतो० ( श्री. सु. मं. १६— )

४ ॐ राजाधिराजाय० इत्यतः सभासदः—इत्यन्तम्

५ ॐ विश्वतश्चक्षुरुत० (य. सं. अ. १७।१९ )

६ चरणनलिन युग्मं० ( श्री. बा. मा. पू. ५३ श्लोकः बालातं. चं. ११७–३३५ पत्रयोश्च )

७ ॐ शिवे शिवसुशीतलामृततरङ्गगन्धोल्लस ।

न्नवारणदेवते नवनवामृतस्पन्दिनि ॥

गुरुक्रमपुरस्कृते गुणशरीरनित्योज्वले ।

षडङ्गपरिवारिते कलितएषपुष्पाञ्जलिः ॥

॥ इत्युक्त्वा, ॐ० मूलं० नमः—मन्त्रपुष्पाञ्जलिं समर्पयामि

इत्युक्त्वा अञ्जलिस्थाक्षतपुष्पादिकं श्रियै, यन्त्रे वा समर्प्य ॥

सामान्यार्घजलमर्पयेदिति—**मन्त्रपुष्पाञ्जलिविधिः**–१३–३७३–वि. च. सं.

४।१ ॥ **मन्त्रपूष्पाञ्जलिकरणफलम्** ॥ य. आ. सू १३१ पत्रे-देवपूजा-विधौ-यथा——

१ ॥ नानासुगन्धपूष्पाणि यथाकालोद्भवानि च ।

पूष्पाञ्जलिः शुभोदेयः देवताप्रितये सदा ॥ इति ॥

२ अन्यच्च—तथैव——

श्री बालामानसपूजास्तोत्रे श्रीमच्छङ्करपादैरभिहितं यथा——

॥ चरणनलिनयुग्मं पङ्कजैः पूजयित्वा ।

कनककमलमालां कण्ठदेशेर्पयित्वा ।

शिरसि विनिहितोऽयं रत्नपूष्पाञ्जलिस्ते ।

हृदयकमलमध्ये देवि हर्षं तनोतु ॥ इति ॥ ( ३७-४ वि. सं. )

## ५–॥ अथ श्रीश्रीविद्योपासनविधिपुस्तिकायां पुष्पाञ्जलिस्तोत्रम्॥

ॐ [1]समस्तमुनियक्षकिंपुरुषसिद्धविद्याधरग्रहासुरसुराप्सरोगणमुखैर्गणैः सेविते ॥

निवृत्तितिलकाम्बराप्रकृतिशान्तिविद्याकलाकलापमधुराकृते कलितएषपुष्पाञ्जलिः ॥ १ ॥

१ अत्र सर्वश्लोकादौ मूलमन्त्रोच्चारइति–प्रायिन; श्रीविद्यार्चनपुस्तिकाकाराः श्रीगणपतरामशास्त्रिणः ॥

त्रिवेदकृतविग्रहे त्रिविधकृत्यसन्धायिनि त्रिरूपसमवायिनि त्रिपुरमार्गसञ्चारिणि ॥
त्रिलोचनकुटुम्बिनि त्रिगुणसंविदुद्यत्पदे त्रयि त्रिपुरसुन्दरि त्रिजगदीशि पुष्पाञ्जलिः ॥ २ ॥
पुरन्दरजलाधिपान्तककुबेररक्षोहरप्रभञ्जनधनञ्जयप्रभृतिवन्दनानन्दिते ॥
प्रवालपदपीठिकानिकटनित्यवर्त्तिस्वभूविरिञ्चिविहितस्तुते विहितएषपुष्पाञ्जलिः ॥ ३ ॥
यदा नतिबलादहङ्कृतिरुदेति विद्यावयस्तपोद्रविणरूपसौरभकवित्वसंविन्मयि ॥
जरामरणजन्मजं भयमुपैति तस्यै समाखिलसमीहितप्रसवभूमि तुभ्यं नमः ॥ ४ ॥
निरावरणसंविदुद्भ्रमपरास्तभेदोल्लसत्परात्परचिदेकतावरशरीरिणि स्वैरिणि ॥
रसायनतरङ्गिणीरूचितरङ्गसञ्चारिणि प्रकामपरिपूरिणि प्रकृतएषपुष्पाञ्जलिः ॥ ५ ॥
तरङ्गयति सम्पदं तदनुसंहरत्यापदं सुखं वितरति श्रियं परिचिनोति हन्ति द्विषः ॥
क्षिणोति दुरितानि यत् प्रणतिरम्ब तस्यै सदा शिवङ्करि शिवे पदे शिवपुरन्ध्रि तुभ्यं नमः ॥ ६॥
शिवे शिवसुशितलामृततरङ्गगर्भोल्लसन्नवावरणदेवते नवनवामृतस्पन्दिनि ॥
गुरूक्रमपुरस्कृते गुणशरीरनित्योज्वले षडङ्गपरिवारिते कलितएषपुष्पाञ्जलिः ॥ ७ ॥
त्वमेव जननी पिता त्वमथ बन्धवस्त्वं सखा त्वमायुरपरा त्वमाभरणमात्मनस्त्वं कलाः ॥
त्वमेव वपुषः स्थितिः स्त्वमखिला यतिस्त्वं गुरुः प्रसीद परमेश्वरि प्रणतपात्रि तुभ्यं नमः ॥८॥
कञ्जासनादिसुरवृन्दलसत्किरीटकोटिप्रघर्षणसमुज्वलदङ्घ्रिपीठे ॥
त्वामेव यामि शरणं विगतान्यभावं दीनं विलोकय दयार्द्रविलोकनेन ॥ ९ ॥ इति ॥

( १३।३७ वि. सर्वः सं.)

## ॥ वि. १३।३८ पूजोपचारान्तर्गतप्रदक्षिणाविषये ज्ञेयम् ॥

**१ प्रदक्षिणाशब्दः** देवस्य दक्षिणतोवा सामान्यदक्षिणदिक्तः इत्यर्थं—समर्थयति अर्थात् शुद्धाग्नेय्याः दक्षिणादिदिगनुक्रमेण ईशानीदिगन्तं परिक्रमणमिति तदर्थः—॥

॥ अत्र कुत्रचिदुदङ्मुखदेवस्य तामेवोदीचीं प्राचीं
प्रकल्प्य ततआग्नेय्यादिक्रमः—इति न विस्मर्तव्यम् इति ॥

(प. क. सू. द्वितीयावृत्तिकारः )

३८—२।१ ॥ इयं प्रदक्षिणा कस्योपचारस्यानन्तरं विधेयेत्यत्र, विचारणा ॥

॥ इयमुपचारान्तर्गता देवप्रदक्षिणा कुत्रचिद् ग्रन्थे-नीराजनदीपमन्त्रपुष्पाञ्जल्योरप्यन्तरा, तत्पूर्वं तदनन्तरं च, प्रतिपादितास्ति । कुत्रचिद् ग्रन्थे तु पौनःपुन्येनाप्यमिधायि, तदर्थं तन्निश्चेतव्यमिति कुर्वैतद्यथा ज्ञानं, शिष्टोक्तमेवेदानीं किञ्चिद्विविच्यते— ( प. क. सू. द्वितीयावृत्तिकारेण)

२–यथा अत्रैव द्विपरिशिष्टे ७–९।४ विषये-३८८ पत्रे नागदेवकृतषोऽशोपचार-कारिकासु–नैवेद्यानन्तरीयनमस्कारानन्तरं प्रदक्षिणोक्ता–

३–तत्रैव पत्रे–एतत् प. क. सू.–२ खण्डे–परमानन्दतन्त्रे च पुष्पाञ्जल्यनन्तरं प्रदक्षिणोक्ता–

४–कर्मप्रदीपे च-नैवेद्यताम्बुलयोरनन्तरं पुष्पाञ्जलेः प्रागेषा प्रदक्षिणोक्ता इत्यादि०

॥ एवमृषिवचोभेदः प्रदक्षिणायां विद्यते तत्रासंमुह्य सर्वाण्यपि तानि
प्रमाणान्यादरणीयान्येवेति विनयामि सानातनिकानित्यलम् ॥

५–अथवा–एतत्सिध्धान्तावलोकनाय पाश्चात्यः–द्विपरिशिष्टे० षोडशोपचारविषये ३८८ तः ३९० पत्रेषु–७।९–१—७।९–४—७।९–६—७।१०–१—७।१०–२–एते विषयाः द्रष्याः ॥ इति ॥

६–॥ कुत्रचित् षोडशोपचारे इयं प्रदक्षिणैव नोक्ता–इति ज्ञेयम् ॥

( इति प. क. सू. द्वितीयावृत्तिकारः ) ( ३८।२ वि. सर्वः सं. )

## वि. ३८–३ ॥ देवतापरत्वेन प्रदक्षिणासङ्ख्याप्रमाणम् ॥

बहृचपरिशिष्टे– ।

१–एकं विनायके कुर्यात् द्वे सूर्ये त्रीणि शङ्करे ॥
चत्वारि केशवे कुर्यात् सप्ताश्वत्थे प्रदक्षिणम् ॥

॥ अन्यच्च–एका चण्ड्या रवेः सप्त तिस्रोदद्याद्विनायके ॥ चतस्रोविष्णवे देयाः शिवस्यार्धप्रदक्षिणा ॥ इति ॥

**२–एका प्रदक्षिणा**–श्रीदेव्याउक्ता-अत्रैव-प. क. सूत्रे–५ खण्डे १७३ पत्रे, श्रीश्रीक्रमे–२० सूत्रे तद्भाष्ये च–यथा—

प्रदक्षिणनमस्कारजपस्तोत्रैः सन्तोष्य -२०–मूलसूत्रम् ।

॥ अत्र भाष्यं–यथा– । प्रदक्षिणमेकं कार्यम्, ( तत्रान्यत् प्रमाणम् )

अजेशशक्तिगणपभास्कराणां प्रदक्षिणे ।
बेदाऽर्ध चन्द्र वह्न्याद्रिसङ्ख्याः सर्वार्थसिद्धयः ॥ इति ॥
४ ०॥ १ ३ ७

इति सङ्गमतन्त्रे उक्तत्वात् । ( अस्यार्थोयथा– )

॥ १–अजोविष्णुः ( तस्य ) वेदाः चतस्रः ४ प्रदक्षिणाः
॥ २–ईशः शिवः ॥–अर्धं तदर्धं द्वयम्– ॥

॥ ३–शक्तिः देवी–तस्याः–चन्द्रः एका–१–॥

॥ ४–गणपः गणेशः–तस्य–वह्निः–तिस्रः-३–॥

॥ ५–भास्करः सूर्यः ॥ अद्रिः सप्त–७–॥ ॥

इमाः सङ्ख्याः अजादिप्रदक्षिणे क्रमाद्ज्ञेयाः इत्यर्थः । (१३–३८।३–२ वि. सं.)

३ ॥ **देव्याएकतोलक्षसङ्ख्याक्रान्तपृथक् प्रदक्षिणाकरणे प्रमाणम्**–

श्रीमच्छङ्करपादैरपि-प्रदक्षिणं ते परितः करोमि-इत्येकवचनान्तमेवोक्तम्० ॥इति॥

अयं श्लोकमन्त्रः अत्रैव, प. क. सू. १७३ पत्रेऽस्ति--

॥ पुनश्च-श्रीजगदम्बायाः–१-३-९-५-७-२१-सङ्ख्यप्रदक्षिणकरणप्रमाणम्-श्रीबाला-तन्त्रचन्द्रिका-३३६ पत्रे-श्रीविद्यामानसपूजायां ५२ श्लोके–यथा—

॥ एकं त्रयं वा नव पञ्च सप्त प्रदक्षिणां यः परदेवतायाः ।
एकाधिकं विंशतिकं तु कृत्वा प्रमाणमस्याविबुधोभवेत् सः ॥ इति ५२ ॥

(अत्रार्षप्रयोगत्वाद्व्याकरणं न–विमृश्यम्)

**॥ एकलक्षाष्टोत्तरसङ्ख्यप्रदक्षिणाप्रमाणम् ॥**

पुनश्च–१०८ एकलक्षसङ्ख्यप्रदक्षिणाकरणमपि-तत्रैव ३३५–पत्रे श्रीविद्यामानसपूजायाम्–यथा–

॥ अष्टोत्तरं यच्छतमुत्तमं तत् प्रदक्षिणं चैव तथा प्रणामान्
भक्त्या पुनर्लक्षमितं च कृत्वा **कैलासवासं लभते मनुष्यः**॥ ५३ ॥इति॥

॥ तत्रैव-**एकप्रदक्षिणाप्युक्ता**–यथा—

॥ ॐ श्रीचक्रराजस्यसपर्ययास्य श्रीसुन्दरीशङ्करमन्दिरस्य ।
प्रदक्षिणालोकनमेकवारं **कृत्वाऽपवर्गं लभते मनुष्यः** ॥ इति ॥

**प्रदक्षिणायां नमस्कारकरणे विधिज्ञानं**–योगिनीतन्त्रे-९-पटले-२३१-पत्रेऽपि-यथा–

॥ प्रदक्षिणत्रयं कुर्यात् पश्चाकारं नमेत्ततः ।
दक्षिणादुत्तरं गत्वा देवस्य च महेश्वरि ।
कृत्वाञ्जलिस्ततोभक्त्या भ्रमयित्वा [1]नमेत्ततः ॥
प्रत्येकं प्रणमेद्देवि दण्डवत् प्रणिपातयेत् ॥
योनो नमेद् भ्रमित्वा च, अपराधोभवेत्तदा ॥ इति ॥

(३८।३ वि. सर्वः सं.)

---

१ नमस्करणं-मण्डलाबहिरिति–न–विस्मरणीयम्—

३८।४ ॥ **प्रदक्षिणाकरणे फलम्** ॥

१ श्री. बा. मा. पूजायां गदितमेव श्रीमज्जगद्गुरुश्रीशङ्कराचार्यपादैर्यथा—

॥ पदे पदे या परिपूजकेभ्यः **सद्योऽश्वमेधादिफलं ददाति** ।

तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥ ६१ इति ॥

२ अन्यच्च श्रीश्रीविद्या-श्री. मा. पूजायांश्रीमच्छङ्कराचार्यपादाः—यथा—

२ ॥ एकत्रयं वा नव पञ्च सप्त प्रदक्षिणां यः परदेवतायाः ।

एकाधिकं विंशतिकं तु कृत्वा **प्रमाणमस्याविबुधोभवेत् सः** ॥५२॥

३ ॥ अष्टोत्तरं यच्छतमुत्तमं तत् प्रदक्षिणं चैव तथा प्रणामान् ।

भक्त्या पुनर्लक्षमितं च कृत्वा **कैलासवासं लभते मनुष्यः** ॥५३॥ इति॥

४ ॥ श्रीचक्रराजस्य सपर्ययास्य श्रीसुन्दरीशङ्करमन्दिरस्य ।

प्रदक्षिणालोकनमेकवारं **कृत्वापवर्गं लभते मनुष्यः** ॥ इति ॥

॥ **पुराणे, कर्मग्रन्थेषु** च—यथा—

५ ॥ यानि कानि च पापानि जन्मान्तरकृतानि वै ।

तानि सर्वाणि नश्यन्ति प्रदक्षिणपदे पदे ॥ इति ॥

( ३८।४ तथा च १३।३८ वि. सर्वः सं. )

**वि. १३।३९–१ स्तुतिविषये–** ॥

॥ अथ श्रीमज्जगद्गुरुश्रीशङ्कराचार्यविरचितं श्रीबालात्रिपुरसुन्दरीमानसपूजास्तोत्रम् ॥

१—ॐ—उषसि मागधमङ्गलगायनै- ।

झटिति जागृहि जागृहि जागृहि ॥

अतिकृपार्द्रकटाक्षनिरीक्षणै- ।

र्जगदिदं जगदम्ब सुखीकुरु ॥ १ ॥

कनकमयवितर्दिशोभमानं दिशि दिशि पूर्णसुवर्णकुम्भयुक्तम् ॥

मणिमयमण्डपमध्यमेहि मातर्मयि कृपया हि समर्चनं गृहीतुम् ॥ २ ॥

कनककलशशोभमानशीर्षं जलधरचुम्बिसमुल्लसत्पताकम् ॥

भगवति तव संनिवासहेतोर्मणिमयमन्दिरमेतदर्पयामि ॥ ३ ॥

तपनीयमयी सतूलिका कमनीया मृदुलोत्तरच्छदा ॥

नवरत्नविभूषिता मया शिबिकेयं जगदम्ब तेर्पिता ॥ ४ ॥

कनकमयवितर्दिस्थापिते तूलिकाढ्ये विविधकुसुमकीर्णे कोटिबालार्कवर्णे ॥

भगवति रमणीये रत्नसिंहासनेस्मिन्नुपविश पदयुग्मं हेमपीठे निधेहि ॥ ५ ॥

मणिमयमौक्तिकनिर्मितं महान्तं कनकस्तम्भचतुष्टयेन युक्तम् ॥
कमनीयतमं भवानि तुभ्यं नवमुल्लोचमहं समर्पयामि ॥ ६ ॥
दूर्वया सरसिजान्वितविष्णुक्रान्तया च सहितं कुसुमाढ्यम् ॥
पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ॥ ७ ॥
गन्धपुष्पयवसर्षपदूर्वासंमितं तिलकुशाक्षतमिश्रम् ॥
हेमपात्रनिहितं सहरत्नैरर्घ्यमेतदुररीकुरु मातः ॥ ८ ॥
जलजद्युतिना करेण जातीफलकङ्कोललवङ्गगन्धयुक्तैः ॥
अमृतैरमृतैरिवाहृतैर्भगवत्याचमनं विधीयताम् ॥ ९ ॥
निहितः कनकस्य सम्पुटे पिहितोरत्नपिधानकेन सः ॥
तदयं भवतीकरेर्पितोमधुपर्कोभवति प्रतिगृह्यताम् ॥ १० ॥
एतच्चम्पकतैलमेव विविधैः पुष्पैर्मुहुर्वासितं ।
न्यस्तं रत्नमये सुवर्णचषके भृङ्गैर्भ्रमद्भिर्वृतम् ॥
सानन्दं सुरसुन्दरीभिरभितोहस्तैर्धृतं यन्मया ।
केशेषु भ्रमरप्रभेषु सकलेष्वङ्गेषु चालिप्यताम् ॥ ११ ॥
मातः कुङ्कुमपङ्कनिर्मितमिदं देहे तवोद्वर्तनम् ।
भक्त्याहं कलयामि हेमरजसा संमिश्रितं केसरम् ॥
केशानामलकैर्विशोध्य विशदान् कस्तूरिकाद्यन्वितम् ।
स्नानं ते नवरत्नकुम्भसहितैः संवासितोष्णोदकैः ॥ १२ ॥
दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः ।
स्नपयामि तवाहमादृतोजननि त्वां पुनरुष्णवारिभिः ॥ १३ ॥
एलोशीरसुवासितैः सुकुसुमैर्गङ्गादितीर्थोदकै—॥
र्माणिक्यामलमौक्तिकामृतयुतैः स्वच्छैः सुवर्णोदकैः ॥
मन्त्रान् वैदिकतान्त्रिकान् परिपठन् सानन्दमत्यादरात् ।
स्नानं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु ॥ १४ ॥
बालार्कद्युतिदाडिमीयकुसुमप्रस्पर्धि सर्वोत्तमं ।
मातस्त्वं परिधेहि दिव्यवसनं भक्त्या मया कल्पितम् ॥
मुक्ताभिर्ग्रथितं सकञ्चुकमिदं स्वीकृत्य पीतप्रभं ।
तप्तस्वर्णसमानवर्णबहुलं प्रावर्णमङ्गीकुरु ॥ १५ ॥
नवरत्नयुते मयार्पिते कमनीये तपनीयपादुके ॥
सविलासमिदं पदद्वयं कृपया देवि तयोर्निधीयताम् ॥ १६ ॥

बहुभिरगरूधूपैः सादरं धूपयित्वा ।
भगवति तव केशान् कङ्कतैर्मार्जयित्वा ॥
सुरभिभिररविन्दैश्चम्पकैश्चार्चयित्वा ॥
झटिति कनकसूत्रैर्जूटमावेष्टयामि ॥ १७ ॥
सौवीराञ्जनमिदमम्ब चक्षुषोस्ते ।
विन्यस्तं कनकशलाकया मया यत् ।
तन्नूनं मलिनमपि त्वदक्षिसङ्गाद्
ब्रह्मेन्द्राद्यभिलषणीयतामियाय ॥ १८ ॥
मञ्जीरे पदयोर्निधाय रुचिरे विन्यस्य काञ्चीं कटौ ।
मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले ॥
केयूराणि भुजेषु रत्नवलयश्रेणीः करेषु क्रमात् ।
ताटङ्के तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम् ॥ १९ ॥
धंमिले तव देवि हेमकुसुमान्याधाय भालस्थले ।
मुक्ताराजिविराजि हेमतिलकं नासापुटे मौक्तिकम् ॥
मातर्मौक्तिकजालिकां च कुचयोः सर्वाङ्गुलीषूर्मिकाः ।
कट्यां काञ्चनकिङ्किणीर्विनिदधे रत्नावतंसं श्रुतौ ॥ २० ॥
मातर्भालतले तवातिविमले काश्मीरकस्तूरिका ।
कर्पूरागुरुभिः करोमि तिलकं देहेऽङ्गरागं ततः ॥
वक्षोजादिषु यक्षकर्दमरसैः सित्काञ्चपुष्पद्रवैः ।
पादौ कुङ्कुमलेपनादिभिरहं सम्पूजयामि क्रमात् ॥ २१ ॥
रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैश्चारुरुचैर्विचित्रैः ।
अखण्डितैर्देवि यवादिभिर्वा काश्मीरपङ्काङ्किततण्डुलैर्वा ॥ २२ ॥
जननि चम्पकतैलमिदं पुरो ।
मृगमदोयमयं पटवासकः ॥
सुरभिगन्धमिदं च चतुःसमं ।
सपदि सर्वमिदं प्रतिगृह्यताम् ॥ २३ ॥
सीमन्ते ते भगवति मया सादरं न्यस्तमेतत् ।
सिन्दूरं मे हृदयकमले देवि हर्षं तनोतु ॥
बालादित्यद्युतिरिव सदा लोहिता यस्य कान्ति ।
रन्तर्ध्वान्तं हरतु सकलं चेतसा चिन्तयामि ॥ २४ ॥

मन्दारकुन्दकरवीरलवङ्गपुष्पै
स्त्वां देवि संततमहं परिपूजयामि ॥
जातीजपाबकुलचम्पककेतकादि
नानाविधानि कुसुमानि च तेऽर्पयामि ॥ २५ ॥
मालतीबकुलहेमपुष्पिका
काञ्चनारकरवीरचम्पकैः ।
कर्णिकारगिरिकर्णिकादिभिः
पूजयामि जगदम्ब ते वपुः ॥ २६ ॥
पारिजातशतपत्रपाटलै
र्मल्लिकाबकुलचम्पकादिभिः
अम्बुजैश्च कुसुमैश्च सादरं पूज० ॥ २७ ॥
लाक्षासम्मिलितैः शिलारसयुतैः श्रीवाससम्मिश्रितैः
कर्पूराकलितैः सितामधुयुतैर्गोसर्पिषा लोडितैः ॥
श्रीखण्डागुरुगुग्गलप्रभृतिभिर्नानाविधैर्वस्तुभिः
धूपं ते परिकल्पयामि जननि त्वं धूपमङ्गीकुरु ॥ २८ ॥
रत्नालङ्कृतहेमपात्रनिहितैर्गोसर्पिषोद्दीपितैः
र्दीपैर्दीर्घतरान्धकारभिदुरैर्बालार्ककोटिप्रभैः ॥
आताम्रज्वलदुज्वलज्वलनवद्रत्नप्रदीपैः सदा
मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः ॥ २९ ॥
महति कनकपात्रे स्थापयित्वा विशालान्
डमरुसदृशरुपान् पक्वगोधूमदीपान् ।
बहुघृतमथ तेषु न्यस्य दीपैरकम्पै
र्भुवनजननि कुर्वे नित्यमारात्रिकं ते ॥ ३० ॥
सविनयमथ दत्वा जानुयुग्मं धरायाम्
सपदि शिरसि घृत्वा पात्रमारात्रिकस्य ।
मुखकमलसमीपे तेम्ब सार्धत्रिवारं
भ्रमयति मयि भूयात् ते कृपार्द्रः कटाक्षः ॥ ३१ ॥
मातस्त्वां दधिदुग्धपायसमहाशाल्यन्यसन्तानकान्
सूपापूपसिताघृतैः सवटकैः सक्षौद्ररम्भाफलैः ॥

एलाजीरकहिङ्गुनागरनिशाकौस्तुम्बरीसंयुतैः
शाकैः साकमहं सुधाधिकरसैः संतर्पयाम्यर्पयन् ॥ ३२ ॥
सापूपसूपदधिदुग्धसिताघृतानि
सुस्वादुभक्ष्यपरमान्नपुरःसराणि ॥
शाकोल्लसन्मरिचजीरकवल्लिकानि
भक्ष्याणि भुङ्क्ष्व जगदम्ब मयार्पितानि ॥ ३३ ॥
क्षीरमेतदिदमुत्तमोत्तमं
प्राज्यमाज्यमिदमुज्ज्वलं मधु ।
मातरेतदमृतोपमं त्वया
सम्भ्रमेण परिपीयतां मुहुः ॥ ३४ ॥
उष्णोदकैः पाणियुगं मुखं च
प्रक्षाल्य मातः कलधौतपात्रे ।
कर्पूरमिश्रेण सुकुङ्कुमेन
हस्तौ समुद्धर्तय चन्दनेन ॥ ३५ ॥
अतिशीतमुशीरवासितम्
तव पाणौ च मया निवेदितम् ॥
पटपूतमिदं जितामृतं
शुचिगङ्गामृतमम्ब पीयताम् ॥ ३६ ॥
आताम्ररम्भाफलसंयुतानि
द्राक्षाफलाक्षोटसमन्वितानि ॥
सनारिकेलानि सदाडिमानि
फलानि ते देवि समर्पयामि ॥ ३७ ॥
कलिङ्गकोशातकसंयुतानि
जंम्बीरनारिङ्गसमन्वितानि ॥
सबीजपूराणि सदाडिमानि
फलानि ते देवि समर्पयामि ॥ ३८ ॥
कर्पूरेण युतैर्लवङ्गसहितैः कङ्कोलचूर्णान्वितैः
सुस्वादुक्रमुकैः सगौरखदिरैः सुस्निग्धजातीफलैः ॥
मातः केतकिपत्रपाण्डुरुचिरैस्ताम्बूलवल्लीदलैः
सानन्दं मुखमण्डनार्थमतुलं ताम्बूलमङ्गीकुरु ॥ ३९ ॥

एललवङ्गादिसमन्वितानि
कङ्कोलकर्पूरविमिश्रितानि ॥
ताम्बूलवल्लीदलसंयुतानि
फलानि ते देवि समर्पयामि ॥ ४० ॥
ताम्बूलवल्लीदलनिर्जितहेमवर्णं
स्वर्णाक्तपूगफलमौक्तिकचूर्णयुक्तम् ॥
रत्नस्थलीस्थितमिदं खदिरेण सार्धं
ताम्बूलमम्ब वदनाम्बुरुहे गृहाण ॥ ४१ ॥
अथ बहुमणिमिश्रैर्मौक्तिकैस्त्वां विकीर्य
त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः ।
मिलितविविधमुक्तां दिव्यमाणिक्ययुक्तां
जननि कनकवृष्टिं दक्षिणां तेऽर्पयामि ॥ ४२ ॥
मातः काञ्चनदण्डमण्डितमिदं पूर्णेन्दुबिम्बप्रभं
नानारत्नविशोभि हेमकलशं लोकत्रयाल्हादकम् ॥
भास्वन्मौक्तिकजालिकापरिवृतं प्रीत्यात्महस्ते धृतं
छत्रं ते परिकल्पयामि शिरसि त्वष्ट्रा स्वयं निर्मितम् ॥ ४३ ॥
शरदिन्दुमरीचिगौरवर्णै
र्मणियुक्तैर्विलसत्सुवर्णदण्डैः ॥
जगदम्ब विचित्रचामरैस्त्वा-
महमानन्दभरेण वीजयामि ॥ ४४ ॥
मार्तण्डमण्डलनिभोजगदम्ब योऽयं
भक्त्या मया मणिमयोमुकुटोऽर्पितस्ते ॥
पूर्णेन्दुबिम्बरुचिरं वदनं स्वकीय
मस्मिन् विलोकय विलोलविलोचने त्वम् ॥ ४५ ॥
इन्द्रादयोनतिनतैर्मुकुटप्रदीपै
र्नीराजयन्ति सततं तव पादपीठम् ॥
तस्मादहं तव शरीरमशेषमेतन्
नीराजयामि जगदम्ब सहस्रदीपैः ॥ ४६ ॥
प्रियगतिरतितुङ्गोरत्नपल्लाणयुक्तः
कनकमयविभूषः स्निग्धगम्भीरघोषः ॥

भगवति कलितोऽयं वाहनार्थं मया ते
तुरगशतसमेतोवायुवेगस्तुरङ्गः ॥ ४७ ॥
मधुकरवृतकुम्भोन्यस्तसिन्दूररेणुः
कनककलितघण्टः किङ्किणीशोभिकण्ठः ॥
श्रवणयुगलचञ्चच्चामरोमेघतुल्यो
जननि तव मुदेस्यान्**मत्तमातङ्गएषः** ॥ ४८ ॥
द्रुततरतुरगैर्विराजमानं, मणिमयचक्रचतुष्टयेन युक्तम् ॥
कनकमयमहं वितानवन्तं भगवति ते हि **रथं समर्पयामि** ॥ ४९ ॥
हयगजरथपत्तिशोभमानं
दिशि दिशि दुदुम्भिमेघनादयुक्तम् ॥
अभिनव**चतुरङ्गसैन्यमेतद्**
भगवति भक्तिभरेण तेऽर्पयामि ॥ ५० ॥
परिधीकृतसप्तसागरं
बहुसम्पत्सहितं मयाऽम्ब ते ॥
विपुलं धरणीतलाभिधं
प्रबलं **दुर्गमिदं** समर्पितम् ॥ ५१ ॥
शतपत्रयुतैः स्वभावशीतै
रतिसौरभ्ययुतैः परागपीतैः
भ्रमरीमुखरीकृतैरनेकै-
**र्व्यजनैस्त्वां** जगदम्ब वीजयामि ॥ ५२ ॥
भ्रमविलुलितलोलकुन्तलालि
विंगलितमाल्यविकीर्णरङ्गभूमिः ॥
इयमतिचतुरा **नटी नटन्ती**
तव हृदये मुदमातनोतु मातः ॥ ५३ ॥
मुखचलनविलासलोलवेणी
विलसितनिर्णितलोलभृङ्गमाला ॥
युवजनसुखकारिचारुलीला
भगवति ते पुरतो[1]**नटन्तिबाला** ॥ ५४ ॥
रुचिरकुचतटीनां नाट्यकाले नटीनां
प्रतिगृहमथ तत्र प्रत्यहं प्रादुरासीत् ।

---

१ अत्र-नटन्तिबाला-इत्यत्र-आर्षं मन्तव्यम्

धिमिकि धिमिकि धिद्धी धिद्धि धिद्धेति धिद्धि
धिकिति धिकिति तत्थै, **त्थै थथे थेति शब्दः** ॥ ५५ ॥
**भ्र**मदलिकुलतुल्या लोलधम्मिलभारा
स्मितमुखकमलोद्यद्दिव्यलावण्यपूरा ॥
अभिनवनववेषा **वारयोषा नटन्ती**
परभृतकलकण्ठी देवि मोदं तनोतु ॥ ५६ ॥
डमरु डिण्डिम झर्झरझल्लरी
मृदुरवार्द्र**घटार्द्रघटादयः ।**
जटिति, झाङ्कृतिभिर्जगदम्बिके
बहुदयं हृदयं सुखयन्तु ते ॥ ५७ ॥
विपञ्चीषु सप्तस्वरान् वादयन्त्य
स्तवद्वारि **गायन्ति गन्धर्वकन्याः** ॥
क्षणं सावधानेत चित्तेन मातः
समाकर्णय त्वं, मया प्रार्थितासि ॥ ५८ ॥
अतिशयकमनीयै**र्नर्तनैर्नर्तकीनां**
जटिति च रमयित्वा चेतएवं त्वदीयम् ॥
**स्वयमहमपि** चित्रैर्नृत्यवादित्रगीतै
र्भगवति भवदीयं मानसं रञ्जयामि ॥ ५९ ॥
तव देवि गुणानुवर्णने
चतुरानो चतुराननादयः
तदिहैकमुखेषु जन्तुषु
**स्तवनं कस्तव कर्तुमीश्वरः** ॥ ६० ॥
पदे पदे या परिपूजकेभ्यः
सद्योऽश्वमेधादिफलं ददाति ॥
तां सर्वपापक्षयहेतुभूतां
**प्रदक्षिणां** ते परितः करोमि ॥ ६१ ॥
रक्तोत्पलारक्तलताप्रभाभ्यां
ध्वजोर्ध्वरेखाकुलिशाङ्किताभ्याम् ॥
अशेषवृन्दारकवन्दिताभ्यां
**नमो**भवानीपदपङ्कजाभ्याम् ॥ ६२ ॥

चरणनलिनयुग्मं पङ्कजैः पूजयित्वा
कनककमलमालां कण्ठदेशेऽर्पयित्वा ।
शिरसि विनिहितोऽयं **रत्नपुष्पाञ्जलिस्ते**
हृदयकमलमध्ये देवि हर्षं तनोतु ॥ ६३ ॥

अथ मणिमयमञ्चकाभिरामे
द्युतिमति पुष्पवितानराजमाने ॥
प्रसरदगरूधूपैर्धूपितेऽस्मिन्
भगवति **वासगृहेस्तु ते निवासः** ॥ ६४ ॥

एतस्मिन् मणिखचिते सुवर्णपीठे
त्रैलोक्याभयवरदौ निधाय पादौ ॥
विस्तीर्णे मृदुलतरच्छदेऽस्मिन्
**पर्यङ्के कनकमये** निषीद मातः ॥ ६५ ॥

तव देवि सरोजचिह्नयोः—
पदयोर्निर्जितपद्मरागयोः ।
अतिरक्ततरैरलक्तकैः
पुनरुक्तां **रचयामि रक्तताम्** ॥ ६६ ॥

अथ मातरुशीरवासितं
निजताम्बुलरसेन राजितम् ॥
तपनीयमये हि पात्रके
मुखगण्डूषजलं विधीयताम् ॥ ६७ ॥

क्षणमथ जगदम्ब मञ्चकेऽस्मिन्
मृदुतरतूलिकया विराजमाने ॥
अतिमहति मुदा निजेच्छया त्वं
**सुखशयनं** कुरु मां हृदि स्मरन्ती ॥ ६८ ॥

मुक्तांकुन्देन्दुगौरां मणिमयमुकुटां रत्नताटङ्कयुक्ता
मक्षस्रक्पुष्पहस्तामभयवरकरां चन्द्रचूडां त्रिनेत्राम् ॥
नानालङ्कारयुक्तां सुरमुकुटलसद्द्योतितस्वर्णपीठां
सानन्दां सुप्रसन्नां त्रिभुवनजननीं **चेतसा चिन्तयामि** ॥ ६९ ॥

एषा भक्त्या तव विरचिता या मया देवि पूजा
स्वीकृत्यैनां सपदि सकलान् मेऽपराधान् क्षमस्व ॥

न्यूनं यत्तत् तव करुणया पूर्णतामेतु सद्यः
सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ॥ ७० ॥

**पूजामिमां पठेत् प्राज्ञः पूजां कर्तुमनीश्वरः ।**
**पूजाफलमवाप्नोति वाञ्छितार्थांश्च विन्दाति** ॥ ७१ ॥

प्रत्यहं भक्तियुक्तोयः देवीपूजामिमां पठेत् ।
वाग्वादिन्याः प्रसादेन **वत्सरात् सकविर्भवेत्** ॥ ७२ ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यविरचितं देवीमानसपूजनस्तोत्रं सम्पूर्णम् ॥

शुभमस्तु

( अनेन स्तोत्रपाठकर्मणा श्रीकालिका बालाम्बा प्रीयताम् ॥ )

**३९।२-अथ सटीकप्रपञ्चसारे-११ पटले-१५६ पत्रे-श्रीभुवनेश्वरी स्तुतिरत्नं-यथाः-**

॥ ॐ श्रीभुवनेश्वर्यै नमः ॥

ॐ ॥ एभिर्विधानैर्भुवनेश्वरीं तां समर्च्य सिद्धयै तु जपंश्च मन्त्री ।
स्तुत्याऽनया स्तौतु सदा समग्रप्रीत्यै समस्तार्तिविभञ्जिकायाः ॥ ४८ ॥

प्रसीद प्रपञ्चस्वरूपे प्रधाने प्रकृत्यात्मिके प्राणिनां प्राणसंज्ञे ।
प्रणन्तुं प्रभो प्रारभे प्राञ्जलिस्त्वां प्रकृत्याऽप्रतर्क्ये प्रकामप्रवृत्ते ॥ ४९ ॥

स्तुतिर्वाक्यबद्धा पदात्मैव वाक्यं प्रदं त्वक्षरात्माऽक्षरं त्वं महेशि ।
ध्रुवं त्वां त्वमेवाऽक्षरैस्त्वन्मयैस्तोष्यसि त्वन्मयी वाक्प्रवृत्तिर्यतः स्यात् ॥५०॥

अजाधोक्षजत्रीक्षणाश्चाऽपि रूपं परं नाभिजानन्ति मायामयं ते ।
स्तुवन्तीशि तां त्वाममी स्थूलरूपां तदेतावदम्बेदयुक्तं ममापि ॥ ५१ ॥

नमस्ते समस्तेशि बिन्दुस्वरूपे नमस्ते परत्वेन तत्त्वाभिधाने ।
नमस्ते महत्त्वं प्रपन्ने प्रधाने नमस्ते त्वहङ्कारतत्त्वस्वरूपे ॥ ५२ ॥

नमः शब्दरूपे नमोव्योमरूपे नमः स्पर्शरूपे नमोवायुरूपे ।
नमोरूपतेजोरसाम्भःस्वरूपे नमस्तेऽस्तु गन्धात्मिके भूस्वरूपे ॥ ५३ ॥

नमः श्रोत्रचर्माक्षिजिह्वाख्यनासास्यवाक्पाणिपत्पायुसोपस्थरूपे ।
मनोबुद्ध्यहङ्कारचित्तस्वरूपे विरूपे नमस्ते विभो विश्वरूपे ॥ ५४ ॥

रवित्वेन भूत्वाऽन्तरात्मा दधासि प्रजाश्चन्द्रमस्त्वेन पुष्णासि भूयः ।
दहस्यग्निमूर्तिर्वहन्त्याहुतिं वा महादेवि तेजस्त्रयं त्वत्तएव ॥ ५५ ॥

चतुर्वक्त्रयुक्ता लसद्धंसवाहा रजःसंश्रिता ब्रह्मसंज्ञां दधाना ।
जगत्सृष्टिकार्ये जगन्मातृभूते परं त्वत्पदं ध्यायसीशि त्वमेव ॥ ५६ ॥
विराजत्किरीटा लसच्चक्रशङ्खा वहन्ती च नारायणाख्यां जगत्सु ।
गुणं सत्त्वमास्थाय विश्वस्थितिं यः करोतीह सोंऽशोऽपि देवि त्वमेव ॥ ५७ ॥
जटाबद्धचन्द्राहिगङ्गा त्रिनेत्रा जगत् संहरन्ती च कल्पावसाने ।
तमःसंश्रिता रुद्रसंज्ञां दधाना वहन्ती परश्वक्षमाले विभासि ॥ ५८ ॥
सचिन्ताक्षमाला सुधाकुम्भलेखाधरा त्रीक्षणार्धेन्दुराजत्कपर्दा ।
सुशुक्लांशुका कल्पदेहा सरस्वत्यपि त्वन्मयैवेशि वाचामधीशा ॥ ५९ ॥
लसच्छङ्खचक्रा चलत्खड्गभीमा नदत्सिंहवाहा ज्वलत्तुङ्गमौलिः ।
द्रवद्दैत्यवर्गा स्तुवत्सिद्धसङ्घा त्वमेवेशि दुर्गाऽपि सर्गादिहीने ॥ ६० ॥
पुरारातिदेहार्धभागा भवानी गिरीन्द्रात्मजात्वेन यैषा विभाति ।
महायोगिवन्द्या महेशा सुनाथा महेश्यम्बिका तत्त्वतस्त्वन्मयैव ॥ ६१ ॥
लसत्कौस्तुभोद्भासिते व्योमनीले वसन्तीं च वक्षःस्थले कैटभारेः ।
जगद्वल्लभां सर्वलोकैकनाथां श्रियं तां महादेव्यहं त्वामवैमि ॥ ६२ ॥
अजाद्रीड्गृहाब्जाक्षपोत्रीन्द्रकाणां महाभैरवस्यापि चिह्नं वहन्त्यः ।
विभो मातरः सप्त तद्रूपरूपाः स्फुरन्त्यस्त्वदंशामहादेवि ताश्च ॥ ६३ ॥
समुद्यद्दिवाकृत्सहस्राभभासा सदा सन्तताशेषविश्वावकाशे ।
लसन्मौलिबद्धेन्दुलेखे सपाशाङ्कुशाभीत्यभीष्टात्तहस्ते नमस्ते ॥ ६४ ॥
प्रभा कीर्तिकान्ती दिवारात्रिसन्ध्याः क्रियाशा तमिस्राक्षुधाबुद्धिमेधाः ।
धृतिर्वाङ्(म)तिः सन्नतिः श्रीश्च भ(श)क्तिस्त्वमेवेशि येऽन्ये च शक्तिप्रभेदाः ॥६५॥
हरे बिन्दुनादैः सशक्त्याख्यशान्तैर्नमस्तेऽस्तु भेदप्रभिन्नैरभिन्ने ।
सदा सप्तपातालल़ोकाचलाब्धिग्रहद्वीपधातुस्वरादिस्वरूपे ॥ ६६ ॥
नमस्ते समस्ते समस्तस्वरूपे समस्तेषु वस्तुष्वनुस्यूतशक्ते ।
श्रितस्थूलसूक्ष्मस्वरूपे महेशि स्मृते बोधरूपेऽप्यबोधस्वरूपे ॥ ६७ ॥
मनोवृत्तिरस्तु स्मृतिस्ते समस्ता तथा वाक्प्रवृत्तिः स्तुतिः स्यान्महेशि ।
शरीरप्रवृत्तिः प्रणामक्रिया स्यात् प्रसीद क्षमस्व प्रभो सन्ततं मे ॥ ६८ ॥
हृल्लेखाजपविधिमर्चनाविशेषानेतांस्तां स्तुतिमपि नित्यमादरेण ।
योऽभ्यस्येत् स खलु परां श्रियं च गत्वा शुध्यं तद्व्रजति पदं परस्य धाम्नः ॥६९॥
इति हृल्लेखाविहितोविधिरुक्तः सङ्(ग्र)हेण सकलोऽयम् ।
योऽस्मिन्नियतमनामन्त्री योगी स्यात् सएव भोगी च ॥ ७० ॥ इति ॥

३ ॥ **श्रीश्रीराजराजेश्वरीतर्पणस्तोत्रम्** ॥ श्रीविद्यार्चनपद्धतौ ३७-पत्रे—यथाः—

॥ कल्याणायुतपूर्णबिम्बवदनां पूर्णेश्वरानन्दिनीम् ।
पूर्णापूर्णपरापरेशमहिषीं पूर्णामृतास्वादिनीम् ॥
सम्पूर्णां परमोत्तमामृतकलां विद्यावतीं भारतीम् ।
**श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम्** ॥ १ ॥

एकानेकमनेककार्यविविधां कार्यैकचिद्रूपिणीम् ॥
चैतन्यात्मकएकचक्ररचितां चक्राङ्कएकाकिनीम् ॥
भावाभावविवर्द्धिनीं भयहरां सद्भक्तिचिन्तामणिम् ।
श्री........................................॥ २ ॥

ईशाधीश्वरयोगवृन्दविदितां सानन्दभूतां पराम् ।
पश्यन्तीं तनुमध्यमां विलसतीं श्रावैष्णुसद्रूपिणीम् ॥
आत्मानात्मविचारिणीं त्रिवरणां विद्यात्रिबीजत्रयीम् ।
श्री........................................॥ ३ ॥

लक्ष्मीलक्षनिरीक्षणां निरुपमां रूद्राक्षमालाधराम् ।
साक्षात्कारणदक्षवंशकलितां दीर्घाक्षदीर्घेश्वरीम् ॥
भद्रां भद्रवरप्रदां भगवतीं भद्रेश्वरीं मुद्रिणीम् ।
श्री........................................॥ ४ ॥

ह्रींबीजान्वितनादबिन्दुभरितां ॐकारनादात्मिकाम् ।
ब्रह्मानन्दघनोदरीं गुणवतीं ज्ञानेश्वरीं ज्ञानदाम् ।
इच्छाज्ञानक्रियावतीं जितवलीं[1] गन्धर्वसंसेविताम् ।
श्री........................................॥ ५ ॥

हर्षोन्मत्तसुवर्णपात्रभरितां पानोन्नताघूर्णिताम् ।
हुङ्कारप्रियशब्दब्रह्मनिरतां सारस्वतोल्लासिनीम् ॥
सारासारविचारवादचतुरां वर्णाश्रमाकारिणीम् ।
श्री........................................॥ ६ ॥

सर्वज्ञानकलावतीं सकरुणां स्वंनादिनीं मादिनीम् ।
सर्वान्तर्गतशालिनीं शिवतनुं सन्दीपिनीं दीपिनीम् ॥

---

१. आर्षत्वाच्छन्दोभङ्गोऽव्याकरणदोषश्च त्रादोषाय

संयोगप्रियरूपिणीं प्रियवतीं प्रीतिप्रतापोन्नताम् ।
श्री..........................................॥ ७ ॥

कर्माकर्मविवर्जितां कुलवतीं कर्मप्रदां कौलिनीम् ।
कारुण्यां तनुबुद्धिकर्मविरतां सिन्धुप्रियां शालिनीम् ॥
पञ्चब्रह्मसनातनान्तरगतां ज्ञेयाङ्गयोगान्विताम् ।
श्री..........................................॥ ८ ॥

हस्ते कुम्भनिभां पयोक्तभरितां पीनोन्नतां नौमि ताम् ।
हीराढ्याभरणां सुरेन्द्रवनितां शृङ्गारपीठालयाम् ॥
योग्याकारिणी[1] योनिमुद्रितकरां नित्यामवर्णात्मिकाम् ।
श्री..........................................॥ ९ ॥

लक्ष्मीलक्षणपूर्णभक्तिवरदां लीलाविनोदस्थिताम् ।
लक्ष्म्या रञ्जितपादपद्मयुगलां ब्रह्मेन्द्रसंसेविताम् ॥
लोकालोकितलोककामजननीं लोकप्रियाङ्कस्थिताम् ।
श्री..........................................॥ १० ॥

ह्रींकारीं सुतरां करप्रियतनुं श्रीयोगपीठेश्वरीम् ।
माङ्गल्यायतपङ्कजाभनयनां माङ्गल्यसिद्धिप्रदाम् ॥
तारूण्यान्तपसार्चितान्तरुणिकां तन्व्यर्चितां नर्तिनीम् ।
श्री..........................................॥ ११ ॥

सर्वेशाङ्गविहारिणीं सकरुणां सर्वेश्वरीं सर्वगाम् ।
सत्यां सर्वमयीं सहस्रदलनां सप्तार्णवोपस्थिताम् ॥
संसर्गादिविवर्जिनीं शुभकरीं बालार्ककोटिप्रभाम् ।
श्री..........................................॥ १२ ॥

कादिक्षान्तसुवर्णबिन्दुसुतनुं स्वर्णादिसिंहासिनीम् ।
नानावर्णविचित्रचित्रचरितां चातुर्यचिन्तामणिम् ॥
चित्तानन्दविधायिनीं सुविपुलां रूढत्रयां शेषिकां ।
श्री..........................................॥ १३ ॥

लक्ष्मीशादिविधीन्द्रचन्द्रमुकुटां षष्ठाङ्गपीठार्चिताम् ।
सूर्येन्द्राग्निमयैकपीठनिलयां त्रिस्थां त्रिकोणेश्वरीम् ॥

---

१. अत्र योन्याकारिणी इत्यत्र-छन्दोभङ्गः सोढव्यआर्षत्वात्

गोश्रीगुर्विणीगर्विता गगनगां गङ्गागणेशप्रियाम् ।
श्री.............................................॥ १४ ॥

ह्रींकूटत्रयरूपिणीं समयगां संसारिणीं हंसिनीम् ।
वामाचारपरायणां सुकुलजां [2]बीजावतीं मुद्रिकाम् ॥
कामाक्षीं करुणार्द्रचित्रचरितां श्रीमन्त्रमूर्त्यात्मिकाम् ।
**श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ( १५ सं. )**

( अत्रस्तोत्रे मूललेखवशादशुद्धं संशोध्यम् )

## ४ ॥ श्रीहयग्रीवावताराय श्रीवेदकृता श्रीदेवीस्तुतिः ॥

श्री. दे. भा. १–स्कं. ५-अ.

**ॐ श्रीवेदाऊचुः ॥**

॥ ॐ नमोदेवि माहामाये विश्वोत्पत्तिकरे शिवे ।
निर्गुणे सर्वभूतेशि मातः शङ्करकामदे ॥ १ ॥

त्वं भूमिः सर्वभूतानां प्राणः प्राणवतां तथा ।
धीः श्रीः कान्तिः क्षमा शान्तिः श्रद्धा मेधा धृतिः स्मृतिः ॥ २ ॥

त्वमुद्गीथेऽर्धमात्रासि गायत्री व्याहृतिस्तथा ।
जया च विजया धात्री लज्जा कीर्तिः स्पृहा दया ॥ ३ ॥

त्वां संस्तुमोम्ब भुवनत्रयसंविधानदक्षां दयारसयुतां जननीं जनानाम् ।
विद्यां शिवां सकललोकहितां वरेण्यां वाग्बीजवासनिपुणां भवनाशकर्त्रीम् ॥ ४ ॥

ब्रह्मा हरः शौरिसहस्रनेत्रवाग्वह्निसूर्याभुवनाधिनाथाः ।
ते त्वत्कृताः सन्ति ततोन मुख्यामाता यतस्त्वं स्थिरजङ्गमानाम् ॥ ५ ॥

सकलभुवनमेतत् कर्तुकामा यदा त्वं सृजसि जननि देवान् विष्णुरुद्राजमुख्यान् ।
स्थितिलयजननं तैः कारयस्येकरूपा न खलु तव कथंचिद्देवि संसारलेशः ॥ ६ ॥

न ते रूपं वेत्तुं सकलभुवने कोऽपि निपुणोन नाम्नां सङ्ख्यां ते कथितुमिह योग्योऽस्ति पुरुषः ।
यदल्पं कीलालं कलयितुमशक्तः स तु नरः कथं पारावाराकलनचतुरः स्याद्गतमतिः ॥ ७ ॥

न देवानां मध्ये भगवति तवानन्तविभवं विजानात्येकोऽपि त्वमिह भुवनैकासि जननि ।
कथं मिथ्या विश्वं सकलमपि चैका रचयसि प्रमाणं त्वेतस्मिन्निगमवचनं देवि विहितम् ॥ ८ ॥

---

१ आर्षत्वान्न छन्दोभङ्गोदोषाय ॥ २ अत्राशुद्धं स्वयं शोध्यम्

निरीहैवासि त्वं निखिलजगतां कारणमहो चरित्रं ते चित्रं भगवति मनोनोव्यथयति ।
कथङ्कारंवाच्यः सकलनिगमागोचरगुणप्रभावः स्वं यस्मात् स्वयमपि न जानासि
परमम् ॥ ९ ॥

न किं जानासि त्वं जननि मधुजिन्मौलिपतनं शिवे किं वा ज्ञात्वा विविदिषसि शक्तिं
मधुजितः ।
हरेः किं वा मातर्दुरिततितिरेषा बलवती भवत्याः पादाब्जे भजननिपुणे क्वास्ति-
दुरितम् ॥ १० ॥

( ॥ श्रीहयग्रीवावताराय श्रीवेदाः प्रार्थयन्ते श्रीभगवतीं परां देवताम् ॥ )

॥ उपेक्षा किं चेयं तव सुरसमूहेतिविषमा हरेर्मूर्ध्नोनाशोमतमिह महाश्चर्यजनकम् ॥
महद्दुःखं मातस्त्वमसि जननच्छेदकुशला न जानीमोमौलेर्विघटनविलम्बः
कथमभूत् ॥ ११ ॥

ज्ञात्वा दोषं सकलसुरतापादितं देवि चित्ते किं वा विष्णावमरजनितं दुष्कृतं पातितं ते ।
विष्णोर्वा किं समरजनितः कोपि गर्वोतिवेगात् छेत्तुं मातस्तव विलसितं नैव विद्मोत्र
भावम् ॥ १२ ॥

किं वा दैत्यैः समरविजितैस्तीर्थदेशे सुरम्ये घोरं तीर्त्वा भगवति वरं लब्धवद्भिर्भवत्याः ।
अन्तर्धानं गमितमधुना विष्णुशीर्षं भवानि द्रष्टुं किं वा विगतशिरसं वासुदेवं
विनोदः ॥ १३ ॥

सिन्धोः पुत्र्यां रोषिता किं त्वमाद्ये कस्मादेनां प्रेक्षसे नाथहीनाम् ।
क्षन्तव्यस्ते स्वांशजातापराधोप्युत्थाप्यैनं मोदितं मां कुरुष्व ॥ १४ ॥
एते सुरास्त्वां सततं नमन्ति कार्येषु मुख्याः प्रथितप्रभावाः ।
शोकार्णवात्तारय देवि देवान् उत्थाप्य देवं सकलाधिनाथम् ॥१५॥
मूर्धा गतः काम्ब हरेर्न विद्मोनान्योस्त्युपायः खलु जीवनेऽद्य ।
यथा सुधाजीवनकर्मदक्षा तथा जगज्जीवितदाऽसि देवि ॥ १६ ॥ इति-सं.

## ५ ॥ अथ मधुकैटभनाशाय–श्रीविष्णुकृता श्रीजगदम्बास्तुतिः

दे. भा. ३ स्कन्ध ४. अध्याये–

ॐ श्रीभगवानुवाच—

नमोदेव्यै प्रकृत्यै च विधात्र्यै सततं नमः ।
कल्याण्यै कामदायै च वृद्ध्यै सिद्ध्यै नमोनमः ॥ १ ॥

सच्चिदानन्दरूपिण्यै संसारारणये नमः ।
पञ्चकृत्यविधात्र्यै ते भुवनेश्यै नमोनमः ॥ २ ॥
सर्वाधिष्ठानरूपायै कूटस्थायै नमोनमः ।
अर्धमात्रार्थभूतायै हृल्लेखायै नमोनमः ॥ ३ ॥

ज्ञातं मयाखिलमिदं त्वयि सन्निविष्टं त्वत्तोऽस्य सम्भवलयावपि मातरद्य ।
शक्तिश्च तेस्य करणे विततप्रभावा ज्ञाताऽधुना सकललोकमयीति नूनम् ॥ ४ ॥
विस्तार्य सर्वमखिलं सदसद्विकारं संदर्शयस्यविकलं पुरुषाय काले ।
तत्वैश्च षोडशभिरेव च सप्तभिश्च भासीन्द्रजालमिव नः किल रञ्जनाय ॥ ५ ॥
न त्वामृते किमपि वस्तुगतं विभाति व्याप्यैव सर्वमखिलं त्वमवस्थिताऽसि ।
शक्तिं विना व्यवहृतौ पुरुषोप्यशक्तोबम्भण्यते जननि बुद्धिमता जनेन ॥६॥
प्रीणासि विश्वमखिलं सततं प्रभावैः स्वैस्तेजसा च सकलं प्रकटीकरोषि ।
अस्येव देवि तरसा किल कल्पकाले कोवेद देवि चरितं तव वैभवस्य ॥७॥
त्राता वयं जननि ते मधुकैटभाभ्यां लोकाश्च ते सुवितताः खलु दर्शितावै ।
नीताः सुखस्य भवने परमां च कोटिं यद्दर्शनं तव भवानि महाप्रभावम् ॥ ८ ॥
नाहं भवोन च विरिञ्चि[1] विवेद मातः कोऽन्योहि वेत्ति चरितं तव दुर्विभाव्यम् ।
कानीह सन्ति भुवनानि महाप्रभावे ह्यस्मिन् भवानि चरिते रचनाकलापे ॥ ९ ॥
अस्माभिरत्र भुवने हरिरन्यएव दृष्टः शिवः कमलजः प्रथितप्रभावः ।
अन्येषु देवि भुवनेषु न सन्ति किं ते किं [1]विद्म देवि विततं तव सुप्रभावम् ॥ १० ॥
याचेम्ब तेऽङ्घ्रिकमलं प्रणिपत्य कामं चित्ते सदा वसतु रूपमिदं तवैतत् ।
नामापि वक्त्रकुहरे सततं तवैव संदर्शनं तव पदाम्बुजयोः सदैव ॥ ११ ॥
भृत्योयमस्ति सततं मयि भावनीयं त्वां स्वामिनीति मनसा ननु चिन्तयामि ।
एषावयोरविरता किल देवि भूयाद्व्याप्तिः सदैव जननीसुतयोरिवार्ये ॥१२॥
त्वं वेत्सि सर्वमखिलं भुवनप्रपञ्चं सर्वज्ञतापरिसमाप्तिनितान्तभूमिः ।
किं पामरेण जगदम्ब निवेदनीयं यद्युक्तमाचर भवानि तवेङ्गितं स्यात् ॥१३॥
ब्रह्मा सृजत्यवति विष्णुरुमापतिश्च संहारकारकइयं तु जने प्रसिद्धिः ।
किं सत्यमेतदपि देवि तवेच्छया वै कर्तुं क्षमावयमजे तव शक्तियुक्ताः ॥१४॥
धात्री धराधरसुते न जगद्बिभर्ति आधारशक्तिरखिलं तव वै बिभर्ति ।
सूर्योविभाति वरदे प्रभया युतस्ते त्वं सर्वमेतदखिलं विरजा विभासि ॥१५॥

---

१ अत्रापदमार्षत्वात् सोढव्यम्

ब्रह्माहमीश्वरवरः किल ते प्रभावात् सर्वे वयं जनियुता न यदा तु नित्याः ।
केन्ये सुराः शतमखप्रमुखाश्च नित्यानित्ये त्वमेव जननी प्रकृतिः पुराणा ॥ १६ ॥
त्वं चेद्भवानि दयसे पुरुषं पुराणं जानेहमद्य तव सन्निधिगः सदैव ।
नो चेदहं विभुरनादिरनीहईशोविश्वात्मधीरिति तमःप्रकृतिः सदैव ॥ १७ ॥
विद्या त्वमेव ननु बुद्धिमतां नराणां शक्तिस्त्वमेव किल शक्तिमतां सदैव ।
त्वं कीर्तिकान्तिकमलामलतुष्टिरूपा मुक्तिप्रदा विरतिरेव मनुष्यलोके ॥ १८ ॥
गायत्र्यसि प्रथमवेदकला त्वमेव स्वाहा स्वधा भगवती सुगुणार्धमात्रा ।
आम्नायएव विहितोनिगमोभवत्या सञ्जीवनाय सततं सुरपूर्वजानाम् ॥ १९ ॥
मोक्षार्थमेव रचयस्यखिलं प्रपञ्चं तेषां गताः खलु यतोननु जीवभावम् ।
अंशाअनादिनिधनस्य किलानघस्य पूर्णार्णवस्य वितताहि यथा तरङ्गाः ॥ २० ॥
जीवोयदा तु परिवेत्ति तवैव कृत्यं त्वं संहरस्यखिलमेतदिति प्रसिद्धम् ।
नाट्यं नटेन रचितं वितथेऽन्तरङ्गे कार्ये कृते विरमसि प्रथितप्रभावा ॥ २१ ॥
त्राता त्वमेव मम मोहमयाद्भवाब्धेस्त्वामम्बिके सततमेमि महार्तिदे च ।
रागादिभिर्विरचिते वितथे किलान्ते मामेव पाहि बहुदुःखकरे च काले ॥ २२ ॥

नमोदेवि महाविद्ये नमामि चरणौ तव ।
सदा ज्ञानप्रकाशं मे देहि सर्वार्थदे शिवे ॥ २३ ॥ इति ॥ सं. ॥

६ ॥ **श्रीशिवेन भगवतोक्ता श्रीजगदम्बास्तुतिः** । श्रीदेवीभागवते ३–स्कं. ५–अं.

॥ **ॐ श्रीशिवउवाच** ॥

॥ यदि हरिस्तव देवि विभावजस्तदनु पद्मजएव तवोद्भवः ।
किमहमत्र तवापि न सद्गुणः सकललोकविधौ चतुरा शिवे ॥ १ ॥
त्वमसि भूः सलिलं पवनस्तथा खमपि वह्निगुणश्च तथा पुनः ।
जननि तानि पुनः करणानि च त्वमसि बुद्धिमनोप्यथ हङ्कृतिः ॥ २ ॥
न च विदन्ति वदन्ति च येऽन्यथा हरिहराजकृतं निखिलं जगत् ।
तव कृताश्रयएव सदैव ते विरचयन्ति जगत् सचराचरम् ॥ ३ ॥
अवनिवायुखवह्निजलादिभिः सविषयैः सगुणैश्च जगद्भवेत् ।
यदि तदा कथमद्य च तत् स्फुटं प्रभवतीति तवाम्ब कलामृते ॥ ४ ॥
भवसि सर्वमिदं सचराचरं त्वमजविष्णुशिवाकृतिकल्पितम् ।
विविधवेषविलासकुतूहलैर्विरमसे[1] रमसेम्ब यथारुचि ॥ ५ ॥

१ आर्षोऽयमविभक्तिकः प्रयोगः आत्मनेपदप्रयोगश्च ॥

सकललोकसिसृक्षुरहं हरिः कमलभूश्च भवाभयदेऽम्बिके ।
तव पदाम्बुजपांसुपरिग्रहं समधिगम्य तदा न च चक्रिम ॥ ६ ॥
यदि दयार्द्रमनान सदाम्बिके कथमहं विहितश्च तमोगुणः ।
कमलजश्च रजोगुणसम्भवः सुविहितः किमु सत्वगुणोहरिः ॥ ७ ॥
यदि न ते विषमा मतिरम्बिके कथमिदं बहुधा विहितं जगत् ।
सचिवभूपतिभृत्यजनावृतं बहुधनैरधनैश्च समाकुलम् ॥ ८ ॥
तव गुणास्त्रयएव सदा क्षमाः प्रकटनावनसंहरणेषु वै ।
हरिहरद्रुहिणाश्च क्रमात् त्वया विरचिताजगतां किल कारणम् ॥ ९ ॥
परिचितानि मया हरिणा तथा कमलजेन विमानगतेन वै ।
पथिगतैर्भुवनानि कृतानि वा कथय केन भवानि नवानि च ॥ १० ॥
सृजसि पासि जगज्जगदम्बिके स्वकलया कियदिच्छिसि नाशितुम् ।
रमयसे स्वपतिं पुरुषं सदा तव गतिं न हि विद्म[1] वयं शिवे ॥

**(॥ श्रीमणिद्वीपे युवतिभावमापन्नाः श्रीब्रह्मविष्णुरुद्राः ॥)**

जननि देवि पदाम्बुजसेवनं युवतिभावगतानपि नः सदा ।
पुरुषतामधिगम्य पदाम्बुजाद्विरहिताः क्व लभेम सुखं स्फुटम् ॥ १२ ॥
न रुचिरस्ति ममाम्ब पदाम्बुजं तव विहाय शिवे भुवनेष्वलम् ।
निवसितुं नरदेहमवाप्य च त्रिभुवनस्य पतित्वमवाप्य वै ॥१३॥
सुदति नास्ति मनागपि मेऽरतिर्युवतिभावमवाप्य तवान्तिके ।
पुरुषता क्व सुखाय भवत्यलं तव पदं न यदीक्षणगोचरम् ॥१४॥
त्रिभुवनेषु भवत्वियमम्बिके मम सदैव हि कीर्तिरनाविला ।
युवतिभावमवाप्य पदाम्बुजं परिचितं तव संसृतिनाशनम् ॥१५॥
भुवि विहाय तवान्तिकसेवनं कइव वाञ्छति राज्यमकण्टकम् ।
त्रुटिरसौ किल याति युगात्मतां न निकटं यदि तेऽङ्घ्रिसरोरुहम् ॥१६॥
तपसि ये निरतामुनयोऽमलास्तव विहाय पदाम्बुजपूजनम् ।
जननि ते विधिना किल वञ्चिताः परिभवोविभवे परिकल्पितः ॥१७॥
न तपसा न दमेन समाधिना न च तथा विहितैः क्रतुभिर्यथा ।
तव पदाब्जपरागनिषेवणाद्भवति मुक्तिरजे भवसागरात् ॥ १८ ॥
कुरु दयां दयसे यदि देवि मां कथय मन्त्रमनाविलमद्भुतम् ।
समभवं प्रजपन् सुखितोह्यहं सुविशदं च नवार्णवमुत्तमम् ॥१९॥

१. आर्षोयं–प्रयोगः

प्रथमजन्मनि चाधिगतोमया तदधुना न विभाति नवाक्षरः ।
कथय मां मनुमद्य भवार्णवाज्जननि तारय तारय तारके ॥२०॥

ब्रह्मोवाच—

इत्युक्ता सा तदा देवी शिवेनाद्भुततेजसा ।
उच्चचाराम्बिका मन्त्रं प्रस्फुटं च नवाक्षरम् ॥२१॥
तं गृहीत्वा महादेवः पराम्मुदमवाप ह ।
प्रणम्य चरणौ देव्यास्तत्रैवावस्थितः शिवः ॥२२॥
**जपन्नवाक्षरं मन्त्रं कामदं मोक्षदं तथा ।**
बीजयुक्तं शुभोच्चारं शङ्करस्तास्थिवांस्तदा ॥२३॥ इति सं. ॥

## ७-॥ अथ मधुकैटभदैत्यार्दितेन ब्रह्मणा कृता श्रीदेवीस्तुतिः ॥

(श्री. दे. भा. ३. स्कं. ५. अ. यथा-)

ॐ श्रीब्रह्मोवाच—

॥ न वेदास्त्वामेवं कलयितुमिहासन्नपटवोयतस्तेनोचुस्त्वां सकलजनधात्रीमविकलाम् ।
[1] स्वाहाभूतादेवी सकलमखहोमे सुविहिता तदा त्वं सर्वज्ञा जननि खलु जाता त्रिभुवने ॥ १ ॥

कर्ताहं प्रकरोमि सर्वमखिलं ब्रह्माण्डमत्यद्भुतं कोऽन्योस्तीह चराचरे त्रिभुवने मत्तः समर्थः पुमान् ।
धन्योस्म्यत्र न संशयः किल यदा ब्रह्मास्मि लोकातिगोमग्नोहं भवसागरे प्रविततेगर्वाभिवेशादिति ॥ २ ॥

अद्याहं तव पादपङ्कजपरागादानगर्वेण वै धन्योऽस्मीति यथार्थवादनिपुणोजातः प्रसादाच्च ते ।
याचे त्वां भवभीतिनाशचतुरां मुक्तिप्रदां चेश्वरीं हित्वा मोहकृतं महार्तिनिगडं त्वद्भक्तियुक्तं कुरु ॥ ३ ॥

अतोऽहं च जातोविमुक्तः कथं स्यां सरोजादमेयात्त्वदाविष्कृताद्वै ।
तवाज्ञाकरः किङ्करोऽस्मीति नूनं शिवे पाहि मां मोहमग्नं भवाब्धौ ॥ ४ ॥
न जानन्ति ये मानवास्ते वदन्ति प्रभुं मां तवाद्यं चरित्रं पवित्रम् ।
यजन्तीह ये याजकाः स्वर्गकामान ते ते प्रभावं विदन्त्येव कामम् ॥ ५ ॥
त्वया निर्मितोऽहं विधित्वे विहारं विकर्तुं चतुर्धा विधायादिसर्गम् ।
अहं वेद्मि कोऽन्योविवेदादिमाये क्षमस्वापराधं त्वहङ्कारजं मे ॥ ६ ॥

---

१ अ.र्षोत्र छन्दोभङ्गः ।

श्रमं येऽष्टधा योगमार्गे प्रवृत्ताः प्रकुर्वन्ति मूढाः समाधौ स्थितावै ।
न जानन्ति ते नाम मोक्षप्रदं वा समुच्चारितं जातु मार्तर्मिषेण ॥ ७ ॥
विचारे परे तत्वसङ्ख्याविधाने पदे मोहितानाम ते संविहाय ।
न किं ते विमुढाभवाब्धौ भवानि त्वमेवासि संसारमुक्तिमदा वै ॥ ८ ॥
परं तत्वविज्ञानमाद्यैर्जनैर्यैरजे चानुभूतं त्यजन्त्येव ते किम् ।
निमेषार्धमात्रं पवित्रं चरित्रं शिवा चाम्बिका शक्तिरीशेति नाम ॥ ९ ॥

**(॥ श्रीमदाद्याप्रकृतिभवानी ब्रह्माणमपि जनयतीति ब्रह्मैवाङ्गीकुरुते ॥)**

न किं त्वं समर्थासि विश्वं विधातुं दृशैवाशु सर्वं चतुर्धा विभक्तम् ।
विनोदार्थमेवं विधिं मां विधायादिसर्गे किलेदं करोषीति कामम् ॥ १० ॥
हरिः पालकः किं त्वयाऽसौ मधोर्वा तथा कैटभाद्रक्षितः सिन्धुमध्ये ।
हरः संहृतः किं त्वयासौ न काले कथ मे भ्रुवोर्मध्यदेशात् सजातः ॥ ११ ॥
न ते जन्म कुत्रापि दृष्टं श्रुतं वा कुतः सम्भवस्ते न कोपीह वेद ।
किलाद्यासि शक्तिस्त्वमेका भवानि स्वतन्त्रैः समस्तैरतोबोधिताऽसि ॥ १२ ॥
त्वया संयुतोऽहं विकर्तुं समर्थोहरिस्त्रातुमम्ब त्वया संयुतश्च ।
हरः संप्रहर्तुं त्वयैवेह युक्तः क्षमा नाद्य सर्वे त्वया विप्रयुक्ताः ॥ १३ ॥
यथाऽहं हरिः शङ्करः किं तथाऽन्ये न जातान सन्तीह नो वाऽभविष्यन् ।
न मुह्यन्ति केऽस्मिंस्तवात्यन्तचित्रे विनोदे विवादास्पदेऽल्पाशयानाम् ॥ १४ ॥
अकर्ता गुणस्पष्टएवाद्यदेवोनिरीहोनुपाधिः सदैवाकलश्च ।
तथापीश्वरस्ते वितीर्णं विनोदं सुसंपश्यतीत्याहुरेवं विधिज्ञाः ॥ १५ ॥

**(॥ द्वैताद्वैतविषयमुग्धोब्रह्मा श्रीभगवतीं प्रार्थयते ॥)**

दृष्टादृष्टविभेदेस्मिन् प्राक् त्वत्तोवै पुमान् परः ।
नान्यः कोऽपि तृतीयोऽस्ति प्रमेये सुविचारिते ॥ १६ ॥
**न मिथ्या वेदवाक्यं वै कल्पनीयं कदाचन ।**
विरोधोयं मयात्यन्तं हृदये तु विशङ्कितः ॥ १७ ॥

एकमेवाद्वितीयं यद्ब्रह्म वेदावदन्ति वै ।
सा किं त्वं वाप्यसौ वा किं **संदेहं विनिवर्तय** ॥ १८ ॥
निःसंशयं न मे चेतः प्रभवत्यविशाङ्कितम् ।
द्वित्वैकत्वविचारेऽस्मिन् निमग्नं क्षुल्लकं मनः ॥ १९ ॥

स्वमुखेनापि संदेहं छेत्तुमर्हसि मामकम् ।
पुण्ययोगाच्च मे प्राप्ता सङ्गतिस्तव पादयोः ॥ २० ॥

**पुमानसि त्वं स्त्रीवाऽसि वद विस्तरतोंमम ।**
ज्ञात्वाऽहं परमाशक्तिं मुक्तः स्यां भवसागरात् ॥ २१ ॥ इति ॥

( ॥ इतऊर्ध्वतनोत्र सम्बन्धोत्रैव दे. भा. स्थले द्रष्टव्यः ॥ इति-सं. ॥)

## ॥ अथ श्रीललिताम्बात्रिशतीस्तोत्रम् ॥

८ ॥ अस्यश्रीललितात्रिशतीस्तोत्रमन्त्रस्य ॥ भगवान् हयग्रीवऋषिः ॥ अनुष्टुप्छन्दः ॥ श्रीललितामङ्गभट्टारिकादेवता ॥ वाग्भवकूटं बीजं ॥ शक्तिकूटं शक्तिः ॥ कामराजकूटं कीलकं ॥ श्रीललिताप्रसादसिध्यर्थं पाठे विनियोगः ॥ अथ ऋष्यादीन् विधाय ॥ कूटत्रयेण द्विरावृत्य करहृदयादिषडङ्गद्वयं विधाय ध्यायेद्यथा—

॥ अतिमधुरचापहस्तामपराजिता(त)मोदबाणसौभाग्याम् ।
अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे ॥

॥ इति ध्यात्वा मानसोपचारैः सम्पूज्य पठेत् ॥

**ॐ श्रीहयग्रीवउवाच ॥**

ककाररूपा कल्याणी कल्याणगुणशालिनी ।
कल्याणशैलनिलया कमनीया कलावती ॥ १ ॥

कमलाक्षी कल्मषघ्नी करुणामृतसागरा ।
कदम्बकाननावासा कदम्बकुसुमप्रिया ॥ २ ॥

कन्दर्पविद्या कन्दर्पजनकापाङ्गवीक्षणा ।
कर्पूरवीटीसौरभ्यकल्लोलितककूप्तटा ॥ ३ ॥

कलिदोषहरा कञ्जलोचना कर्मविग्रहा ।
कर्माधिसाक्षिणी कारयित्री कर्मफलप्रदा ॥ ४ ॥

एकाररूपा एकाक्षर्येकानेकाक्षराकृतिः ।
एतत्तदित्यनिर्देश्या एकानन्दचिताकृतिः ॥ ५ ॥

एवमित्यागमाबोध्या एकभक्तिमदर्चिता ।
एकाग्रचित्तनिर्ध्याता एषणारहिताद्दता ॥ ६ ॥

एलासुगन्धिचिकुरा एनःकूटविनाशिनी ।
एकभोगा एकरसा एकैश्वर्यप्रदायिनी ॥ ७ ॥

एकातपत्रसाम्राज्यप्रदा एकान्तपूजिता ।
एधमानप्रभा एजदनेकजगदीश्वरी ॥ ८ ॥
एकवीरादिसंसेव्या एकप्रभावशालिनी ।
ईकाररूपिणीशित्री[१] ईप्सितार्थप्रदायिनी ॥ ९ ॥
ईदगित्यविनिर्देश्या ईश्वरत्वविधायिनी ।
ईशानादिब्रह्ममयी ईशित्वाद्यष्टसिद्धिदा ॥ १० ॥
ईशी त्रीक्षणसृष्टाण्डकोटिरीश्वरवल्लभा ।
ईडिता ईश्वरार्धाङ्गशरीरेशाधिदेवता ॥ ११ ॥
ईश्वरप्रेरणकरी ईशताण्डवसाक्षिणी ।
ईश्वरोत्सङ्गनिलया ईतिबाधाविनाशिनी ॥ १२ ॥
ईहाविरहिता ईशशक्तिरीषत्स्मितानना ।
लकाररूपा ललिता लक्ष्मीर्वाणीनिषेविता ॥ १३ ॥
लाकिनी ललनारूपा लसद्दाडिमपाटला ।
ललन्तिका लसत्फाला ललाटनयनार्चिता ॥ १४ ॥
लक्षणोज्वलदिव्याङ्गी लक्षकोटयणुनायिका ।
लक्ष्यार्था लक्षणागम्या लब्धकामा लतातनुः ॥ १५ ॥
ललामराजदलिका लम्बमुक्ता लताञ्चिता ।
लम्बोदरप्रसूर्लभ्या लज्जाढ्या लयवर्जिता ॥ १६ ॥
ह्रीङ्काररूपा ह्रीङ्कारनिलया ह्रीम्पदप्रिया ।
ह्रीङ्कारबीजा ह्रीङ्कारमन्त्रा ह्रीङ्कारलक्षणा ॥ १७ ॥
ह्रीङ्कारजपसुप्रीता ह्रीमती ह्रींविभूषणा ।
ह्रींशीला ह्रींपदाराध्या ह्रींगर्भा ह्रींपदाभिधा ॥ १८ ॥
ह्रीङ्कारवाच्या ह्रींकारपूज्या ह्रींकारपीठिका ।
ह्रीङ्कारवेद्या ह्रीङ्कारचिन्त्या ह्रींह्रींशरीरिणी ॥ १९ ॥
हकाररूपा हलधृक्पूजिता हरिणेक्षणा ।
हरप्रिया हराराध्या हरिब्रह्मेन्द्रवन्दिता ॥ २० ॥
हयारूढा सेविताङ्घ्रिर्हयमेधसमर्चिता ।
हर्यक्षवाहना हंसवाहना हतदानवा ॥ २१ ॥

१ अत्राशुद्धं-शोध्यम्—

हत्यादिपापशमनी हरिदश्वादिसेविता ।
हस्तिकुम्भोन्नतकुचा हस्तिकृत्तिप्रियाङ्गना ॥ २२ ॥
हरिद्राकुङ्कुमादिग्धा हर्यश्वाद्यमरार्चिता ।
हरिकेशसखी हादिविद्या हालामदालसा ॥ २३ ॥
सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला ।
सर्वकर्त्री सर्वभर्त्री सर्वहर्त्री सनातनी ॥ २४ ॥
सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी ।
सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी ॥ २५ ॥
सर्वाधारा सर्वगता सर्वापगुणवर्जिता ।
सर्वारुणा सर्वमाता सर्वमाता सर्वभूषणभूषिता ॥ २६ ॥
ककारार्था कालहन्त्री कामेशी कामितार्थदा ।
कामसञ्जीविनी कल्पा (ल्या) कठिनस्तनमण्डला ॥ २७ ॥
करभीरुः कलानाथमुखी कचजिताम्बुदा ।
कटाक्षस्पन्दिकरुणा कपालिप्राणनायिका ॥ २८ ॥
कारुण्यविग्रहा कान्ता कान्तिधूतजपावलिः ।
कलालापा कम्बुकण्ठी करनिर्जितपल्लवा ॥ २९ ॥
कल्पवल्लीसमभुजा कस्तूरीतिलकोज्ज्वला ।
हकारार्था हंसगतिर्हाटकाभरणोज्ज्वला ॥ ३० ॥
हारहारिकुचाभोगा हाकिनी हल्यवर्जिता ।
हरित्पतिसमाराध्या हठात्कारहतासुरा ॥ ३१ ॥
हर्षप्रदा हविर्भोक्त्री हार्दसंतमसापहा ।
हल्लीसंलास्यसन्तुष्टा हंसमन्त्रार्थरूपिणी ॥ ३२ ॥
हानोपादाननिर्मुक्ता हर्षिणी हरिसोदरी ।
हा हा हू हू मुखस्तुत्या हानिवृद्धिविवर्जिता ॥ ३३ ॥
हैय्यङ्गवीनहृदया हरिगोपारुणांशुका ।
लकारार्था लतापूज्या लयस्थित्युद्भवेश्वरी ॥ ३४ ॥
लास्यदर्शनसन्तुष्टा लाभालाभविवर्जिता ।
लङ्येतराज्ञा लावण्यशालिनी लघुसिद्धिदा ॥ ३५ ॥
घ
लाक्षारससवर्णाभा **लक्ष्मणाग्रजपूजिता** ।
लभ्येतरा लब्धभक्तिसुलभा लाङ्गलायुधा ॥ ३६ ॥

लग्नचामरहस्तश्रीशारदापरिसेविता ।
लज्जापदसमाराध्या लम्पटा लकुलेश्वरी ॥ ३७ ॥
लब्धमाना लब्धरसा लब्धसम्पत्समुन्नतिः ।
ह्रींकारिणी ह्रींकाराद्या ह्रींमध्या ह्रींशिखामणिः ॥ ३८ ॥
ह्रींङ्कारकुण्डाग्निशिखा ह्रींकारशशिचन्द्रिका ।
ह्रींकारभास्कररुचिर्ह्रींकाराम्भोदचञ्चला ॥ ३९ ॥
ह्रींकारकन्दाङ्कुरिका ह्रींकारैकपरायणा ।
ह्रींकारदीर्धिकाहंसी ह्रींकारोद्यानकेकिनी ॥ ४० ॥
ह्रींकारारण्यहरिणी ह्रींकारावालवल्लरी ।
ह्रींङ्कारपञ्जरशुकी ह्रींङ्काराङ्गणदीपिका ॥ ४१ ॥
ह्रींङ्कारकन्दरासिंही ह्रींङ्काराम्बुजभृङ्गिका ।
ह्रींङ्कारसुमनोमाध्वी ह्रींङ्कारतरुमञ्जरी ॥ ४२ ॥
सकाराख्या समरसा सकलागमसंस्तुता ।
सर्ववेदान्ततात्पर्यभूमिः सदसदाश्रया ॥ ४३ ॥
सकला सच्चिदानन्दा साध्वी सद्गतिदायिनी ।
सनकादिमुनिध्येया सदाशिवकुटुम्बिनी ॥ ४४ ॥
सकलाधिष्ठानरूपा सत्यरूपा समाकृतिः ।
सर्वप्रपञ्चनिर्मात्री समानाधिकवर्जिता ॥ ४५ ॥
सर्वोत्तुङ्गा सङ्गहीना सगुणा सकलेष्टदा ।
ककारिणी काव्यलोला कामेश्वरमनोहरा ॥ ४६ ॥
कामेश्वरप्राणनाडी कामेशोत्सङ्गवासिनी ।
कामेश्वरालिङ्गिताङ्गी कामेश्वरसुखप्रदा ॥ ४७ ॥
कामेश्वरप्रणयिनी कामेश्वरविलासिनी ।
कामेश्वरतपःसिद्धिः कामेश्वरमनःप्रिया ॥ ४८ ॥
कामेश्वरप्राणनाथा कामेश्वरविमोहिनी ।
कामेश्वरब्रह्मविद्या कामेश्वरगृहेश्वरी ॥ ४९ ॥
कामेश्वराल्हादकरी कामेश्वरमहेश्वरी ।
कामेश्वरी कामकोटीनिलया कांक्षितार्थदा ॥ ५० ॥
लकारिणी लब्धरूपा लब्धधीर्लब्धवाञ्छिता ।
लब्धपापमनोदूरा लब्धाहङ्कारदुर्गमा ॥ ५१ ॥

लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः ।
लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी ॥ ५२ ॥
लब्धातिशयसर्वाङ्गसौन्दर्या लब्धविभ्रमा ।
लब्धरागा लब्धपति र्लब्धनानागमस्थितिः ॥ ५३ ॥
लब्धभोगा लब्धसुखा लब्धहर्षाभिपूजिता ।
ह्रीङ्कारमूर्तिर्ह्रीकारसौधशृङ्गकपोतिका ॥ ५४ ॥
ह्रीङ्कारदुग्धाब्धिसुधा ह्रीङ्कारकमलेन्दिरा ।
ह्रीङ्कारमणिदीपार्चिर्ह्रीङ्कारतरुसारिका ॥ ५५ ॥
ह्रीङ्कारपेटकमणिर्ह्रीङ्कारादर्शबिम्बिका ।
ह्रीङ्कारकोशासिलता ह्रीङ्कारस्थाननर्तकी ॥ ५६ ॥
ह्रीङ्कारशुक्तिकामुक्ता मणिह्रीकारबोधिता ।
ह्रीङ्कारमयसौवर्णस्तम्भविद्रुमपुत्रिका ॥ ५७ ॥
ह्रीङ्कारवेदोपनिषध्रीङ्काराध्वरदक्षिणा ।
ह्रीङ्कारनन्दनारामनवकल्पकवल्लरी ॥ ५८ ॥
ह्रीङ्कारहिमवद्गङ्गा ह्रीङ्कारार्णवकौस्तुभा ।
ह्रीङ्कारमन्त्रसर्वस्वा ह्रीङ्कारपरसौख्यदा ॥ ५९ ॥
इत्येवं ते मयाख्यातं देव्यानामशतत्रयम् ।
रहस्यातिरहस्यत्वाद्गोपनीयं त्वया मुने ॥ इति ॥

( ॥ पुनर्हृदयादिषडङ्गविधायाऽर्पयेत् ॥ )

॥ इति त्रिशतीनामस्तोत्रं-सं. ॥ तन्त्रशास्त्रीयपूजापद्धतौ ॥

## वि. ९–ज्ञेयं स्तुतिविषये

॥ इत्थं–श्रीपरमकृपामृताब्धिस्वेष्टदेवतास्तुतेरपारणीयत्वे–यथाः–

॥ १ अतीतः पन्थानम्०

२ असितगिरिसमं स्यात्० (महिम्नःस्तोत्रे०)

३ तद्यात्रया वापकता हता ते ध्यानेन चेतः परता हता ते ।
स्तुत्यानया वाक्परता हता ते ममापराधांस्त्रिविधान् क्षमस्व ॥ इति ॥
वेदान्तेशास्त्रे ॥

४ तव देवि गुणानुवर्णने चतुरानो चतुराननादयः ॥
तदिहैकमुखेषु जन्तुषु स्तवनं कस्तव कर्तुमीश्वरः ॥ इति ॥
श्रीबालास्तवराजे ॥

५ भवानि स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः
प्रजानामीशानस्त्रिपुरमथनः पञ्चभिरपि ॥
न षड्भिः सेनानीर्दशशतमुखैरप्यहिपति
स्तदान्येषां केषां कथय कथमस्मिन्नवसरः ॥ इति ॥

(आनन्दलहर्यां—प्रथमश्लोकः)

॥ इत्यादिशिष्टोक्त्या भक्त्यापि कृतया स्तुत्या देवतागुणानुवर्णनं पारयितुं न शक्नोति जनस्ततउक्ताभ्योऽधिकापि चिकिर्षिता, सा स्यात्त्चेत्तदाः—नानातन्त्रग्रन्थेभ्योथवा स्मत्कृतबालातन्त्रचन्द्रिकापरनामकश्रीबहुचरचिन्तामण्यादिग्रन्थेभ्यआदेया-इत्यभ्यर्थयामि श्री-पराम्बोपासनाप्रियान् ॥ इति ॥ (प. क. सू. द्वितीयावृत्तिकारः)

## १०–॥ अथ क्षमापनम् ॥

इदं क्षमापनमपि केषांचिन्मते उपचारान्तर्गतमित्यवश्यमादरणीयं तच्च यथाः—

१ ॥ एषा भक्त्या तव विरचिता या मया देवि पूजा
स्वीकृत्यैनां सपदि सकलान् मेऽपराधान् क्षमस्व ॥
न्यूनं यत्तत् तव करुणया पूर्णतामेतु सद्यः
सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ॥ ७० ॥

बा. मा. पू. स्तोत्रे

२ ॥ ज्ञानतोऽज्ञानतोवापि यन्मया क्रियते शिवे ॥
मम कृत्यमिदं सर्वमिति मत्वा क्षमस्व मे ॥

३ ॥ ॐ मादृशः कृपणोनास्ति त्वादृशी न दयापरा ।
इति मत्वा महेशानि यथायोग्यं तथा कुरु ॥

४ ॥ भुमौ स्खलितपादानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेव शरणं मम ॥

श्रीविद्यार्चनपद्धतौ

५ ॥ आवाहनं यजनवर्णनमग्निहोत्रं कर्मार्पणं तव विसर्जनमत्र देवि
मोहान्मया कृतमिदं सकलापराधान् मातः क्षमस्व वरदे बहिरतरस्थे ॥

६ ॥ मया यत् क्रियते कर्म जाग्रत्स्वप्नसुषुप्तिषु ।
तत् सर्वं तावकी पूजा भूयाद्भूत्यै च मे शिवे ॥

७ ॥ क्षन्तुमर्हसि देवेशि त्रिपुरे देवि पूजिते ॥
तव पादाम्बुजे नित्यं निश्चला भक्तिरस्तुमे ॥

८ ॥ अथवा न मन्त्रं नो यन्त्रमितपराधक्षमाकारकं स्तोत्रं पठनीयम् ॥

(तदपि तत्रैव बा. तं. च. ३४८ पत्रेस्ति)

## ११–॥ पूजां ग्रहीतुं भक्तकृता श्रीभगवतीप्रार्थना ॥

(श्री. मा. पू. बा. तं. चन्द्रिकायां–३९१ पत्रे–यथा:–)

ॐ ॥ विज्ञप्तीरवधेहि मे सुमहता यत्नेन ते संनिधिं ।
प्राप्तुं मामिह कान्दिशीकमधुना मातर्न दूरीकुरु ॥
नो चेत् त्वत्पदभावनापहरणद्राग्वाटपाटच्चर
चेतोमे स्वगुणैर्बधान न यथा भूयोविनिर्गच्छति ॥ १ ॥
क्वाहं मन्दमतिः क्वचेदमखिलैरेकान्तभक्तैः स्तुतं ।
ध्यातं देवि रहस्यमद्रितनयाश्रीपादुकापूजनम् ॥
कादाचित्कमनीयचिन्तनविधौ संतुष्टया शर्मदं ।
**स्तोत्रं देवि तव त्वया प्रकटितं मन्ये मदीयानने** ॥२॥ इति ॥

( १३।३९ वि. सं. )

## ॥ समाप्तः स्तुतिविषयः ॥

### १३।४० ॥ नमस्कारे ज्ञेयम् ॥

१ ॥ अयं षोडशोपचारान्तर्गतोनमस्कारः, कस्य कर्मणोनन्तरं कर्तव्यस्तत्रापि–बहुशो भिदावर्तन्ते ताश्च अत्रैव प. क. सू. द्वि. परिशिष्टे उपचाराणां सङ्ख्याविषयकविषये ३८६ पत्रतः ३९२ पत्रेषु-दृश्याः

२ ॥ अयं नमस्कारुपोपचारः यत्र पूजाङ्कर्तुं साधकवरउपविष्टस्तत्रैव अथवा देवतातिसान्निध्येपि न कार्योऽपि तु मण्डलाद्बहिरेव कार्यस्तत्र प्रमाणमधस्तात्

**॥ मण्डललक्षणमुक्तमत्रैव**–प. क. सू. ५–खण्डे १७४ पत्रे-२० सूत्रे–तद्भाष्ये च–यथा–

प्रदक्षिणनमस्कारजपस्तोत्रैः सन्तोष्य ॥ २० ॥

अत्र भाष्यं यथा प्रदक्षिणमेकं कार्यम्

॥ अजेशशक्तिगणपभास्कराणां प्रदक्षिणे ।
वेदार्धचन्द्रवह्न्यद्रिसङ्ख्याः सर्वार्थसिद्धयः ॥

इति शक्तिसङ्गमतन्त्रे उक्तत्वात् । अजः विष्णुः । वेदाश्चतस्रः । अर्धं तदर्धं द्वयम् । चन्द्रः एकः । वह्निः तिस्रः । अद्रिः सप्त । इमाः सङ्ख्याः अजादिप्रदक्षिणे क्रमात् ज्ञेयाः इत्यर्थः । श्रीमच्छङ्करभगवत्पादैरपि "[1]प्रदक्षिणं ते परितः करोमि" इत्येकवचनान्तमेवोक्तम् ॥

[1] अयं श्लोकः अत्रैव १७३-पत्रे बा. मा, पू. स्तोत्रेऽस्ति–

नमस्कारे तु इच्छैव नियामिका शास्त्रोपलब्धिपर्यन्तम् । नमस्कारे कश्चिद्विशेषः

३–**परमानन्दतन्त्रे–चतुरङ्गप्रणामो मण्डले–नमोनिषेधश्च यथा—**

॥ पूजागृहाद्बहिर्देवीं प्रणमेत् दण्डवद्भुवि ।

**मण्डले नमनं नैव साष्टाङ्गं दण्डवत् चरेत्** ॥

[१]जानुभ्यां च [२]पदाभ्यां च [३]मूर्ध्ना [४]हस्तयुगेन च ।

**चतुरङ्गप्रणामोऽयं** मण्डले विहितः शिवे ॥ इति

४–**मण्डललक्षणं** योगिनीतन्त्रे–

॥ पूज्यते यत्र सा देवी तच्चतुर्दिक्षु शङ्करि ।

धनुश्शतप्रमाणेन **मण्डलं परिकीर्तितम्** ॥ इति ॥

॥ धनुर्मानं तु हस्तचतुष्टयम् ।

५–बृहद्वामकेश्वरे तु–

॥ **मण्डलं** तद्विजानीयात् यावद्दृश्या हि देवता ॥ इति ॥

रहस्यार्णवे तु—

६–॥ द्वारपूजा यत्र कृता तदन्त**मण्डलं विदुः** ॥ इति ॥

अयं च देशतः परिच्छेदउक्तः । कालतः परिच्छेदस्तु-**शक्तिसङ्गमतन्त्रे**–

द्वारपूजां समारभ्य यावदुद्वासनं भवेत् ।

**तावत्तन्मण्डलं विद्धि**.................... ॥ इति ॥

॥ त्रिपुरार्णवेऽपि—

७–॥ इदं तन्मण्डलं देवि प्रारभ्यैतस्य पूजनम् ।

मार्तण्डमण्डलाध्यन्तं.................... ॥ इति ॥

इद्मेव मण्डलं वक्ष्यमाणमण्डलधर्मेषु ज्ञेयम् । इति । ( इदं मण्डलमन्यत् )

॥ अर्थादेतस्य सङ्केतितपूजास्थलस्य बहिष्टादेवोपेत्य नमस्कुर्यादिति तात्पर्यं ज्ञेयमिति–

७–**अष्टाङ्गनमस्कारकरणे—**

य. आ. सू. १३१ पत्रे-साष्टाङ्गनमस्कारः ग्रन्थान्तरे–यथा–

उरसा दृष्ट्या मनसा वचसा तथा ।

पद्भ्यां कराभ्यां जानुभ्यां **प्रणामोऽष्टाङ्ग**उच्यते ॥ इति ॥

८–**पञ्चाङ्गनमस्कारे—**

कुलार्णवतन्त्रे ७ उल्लासे ६६ पत्रे–यथा—

॥ शिष्योपायनमादाय शुद्धात्मा कुसुमादिकम् ॥
यथाशक्ति विनीतात्मा वित्तशाठयविवर्जितः ॥
प्रणम्य वहिरष्टाङ्गं प्रविश्यान्तः शनैः प्रिये ।
समर्प्योपायनं भक्त्या शिवाय गुरुरूपिणे ॥
गृहीत्वाङ्गुष्ठकौ कृत्वा करौ नम्राग्रतर्जनी ।
जानुभ्यामवनिं गत्वा पञ्चाङ्गं प्रणमेद्गुरुम् ॥ इति ॥

९–सामान्यतो**देवनमस्कारकरणे बद्धाञ्जलिरेव स्यात्**–तत्र प्रमाणं यो. तं. ९-पटले २३२ पत्रे–यथा–

॥ अबद्धाञ्जलिर्लोकानां नमस्कारं करोति यः
मोहान्धकारनरके पच्यते नात्र संशयः ॥
पत्रान्तरे च प्रणमेन्मूर्ध्ना न च क्षितिं स्पृशेत् ।
शपन्ति देवतास्तस्य विफलं परिकीर्तितम् ॥ इति ॥

**१०**–सपरिवारश्रीनमस्कारश्लोकमन्त्रउत्तमः श्री. मा. पू. यथा—

ॐ सन्तुष्टां परमामृतेन विलसत्कामेश्वराङ्कस्थितां
पुष्पाद्यैरतिपूजितां भगवतीं त्वां वन्दमानोमुदा ।
स्फूर्जत्तावकदेहरश्मिकलनाप्राप्तस्वरूपाभिदाः
श्रीचक्रावरणस्थिताः सविनयं वन्दामहे देवताः ॥ इति ॥

११–**देवप्रणामकरणे फलं**–तत्रैव-योगिनीतन्त्रे–९–पटले–२३२ पत्रे-यथा-

॥ प्रणामोदेवदेवस्य यावत्योमूर्तिकाः प्रिये ।
शरीरे वा महेशानि तस्य पुण्यफलं शृणु ॥
यावन्तोरेणवस्तस्य तावत्कालं वसन्ति वै ।
**तावद्वर्षसहस्राणि ब्रह्मलोके महीयते** ॥ इति ॥ (१३।४० वि. सं.)

**वि. १३।४१ ॥ पूजोपचारार्पणफलविषये**–श्रीयोगीनीतन्त्रे–९ पटले २२९ पत्रे–

**१–श्रीविष्णुहयग्रीवयोर्वा कस्याचिदपि देवस्य पूजायां फलं-यथा–**

॥ एवं सम्पूज्य देवेशं मण्डस्थं जनार्दनम् ।
लभेदभिमतान् कामान् नरोनास्य तु संशयः ॥

---

१ अत्राशुद्धं स्वयं-शोध्यम्

अनेनैव विधानेन मण्डपस्थं हयाननम् ।
पूजितं पश्यते यस्तु न विघ्नं विष्णुमव्ययम् ॥
सकृदप्यर्चितोयेन विधिनानेन केशवः ।
**जन्ममृत्युज्वरातीतः सविष्णोः पदमाप्नुयात् ॥**
यः स्मरेत् सततं भक्त्या हयग्रीवमतन्द्रितः ।
अन्वहं तस्य द्वे सन्ध्ये श्वेतद्वीपः प्रकल्पितः ॥

२—श्री कुलार्णवे—१० उल्लासे—९५ पत्रे-श्रीशिववचोयथा—

॥ पूजात्रिकन्तु यः कुर्य्यादिच्छाज्ञानक्रियान्वितम् ॥
आगमोक्तेन विधिना पूर्ववत्तद्विधानवित् ।
पदार्थैः षड्सैः सम्यग्यथाविभवविस्तरम् ॥
सन्तुष्टादेवताः सर्वाः सर्वज्ञानफलप्रदाः ।
देवेशि साधकाभीष्टं प्रयच्छन्ति न संशयः ॥
इत्यादिदेवतापूजां विशेषदिवसेषु च ।
**भजेयुः शास्त्रविधिना सभवेदावयोः प्रियः ॥**
**॥ श्रीचक्रं कौलिकोमोहाद्विशेषदिवसेषु च ।**
**न करोति समर्थः सन् सभवेद्योगिनीपशुः ॥**
**कुलपूजां तु नियतं यः करोति सकौलिकः ।**
**कुलेशि समावाप्नोति योगिनीवीरमेलनम् ॥**
**नीचोऽपि वा सकृद्भक्त्या कारयेद्यः कुलार्चनम् ।**
**ससद्गतिमवाप्नोति किमुतान्ये द्विजातयः ॥**
**तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।**
**कुलपूजारतोभूयादभीष्टफलसिद्धये ॥**
**कुलपूजाधिकं दानं कुलपूजाधिकं फलम् ।**
**कुलपूजाधिकोयोगः कुलपूजाधिगा गतिः ॥**
**कुलपूजाधिकं भाग्यं कुलपूजाधिकं तपः ।**
**कुलपूजाधिका विद्या कुलपूजाधिकार्चना ॥**
**नास्ति नास्ति पुनर्नास्ति त्वां शपे कुलनायिके ।**
बहुनात्र किमुक्तेन रहस्यं श्रृणु पार्वति ॥

वेदशास्त्रोक्तमार्गेण कुलपूजां करोति यः ।
तत्समीपस्थितं मां त्वां बिद्धि नान्यत्र भाविनि ॥
इदं सत्यं इदं सत्यं सत्यं सत्यं न संशयः ।
सभूमिदिग्जलगिरिनभोवनचराः प्रिये ॥
सहस्रकोटियोगिन्यस्तावन्तोभैरवाअपि ।
नियुक्ताहि मया देवि कुलसंरक्षणाय च ॥
दिवसेषु विशेषेषु सर्वे च मुदितानराः ।
साधकानेव वीक्षन्ते स्वयं पूजनलिप्सया ॥
अपूजितास्तु विघ्नन्ति प्रसीदन्ति सुपूजिताः ॥ इति ॥

**३–स्वयमन्यद्वारा वा पूजाकरणे** फलप्राप्तौ सटीकशारदा-४ पटले-
३०० पत्रे–यथा—

॥ यस्तु भक्त्या प्रयत्नेन स्वयं सम्पाद्य चाखिलम् ।
साधनं चाऽर्चयेद्विद्वान् ससमग्रं फलं लभेत् ॥
**योऽर्चयेद्विधिवद्भक्त्या परानीतैश्च साधनैः ।**
**पूजाफलार्द्धमेवाऽस्य न समग्रफलं लभेत्** ॥ इति ॥

४–शम्भुरहस्ये

**स्वयं यजति चेद्देवमुत्तमा सोदरात्मजैः ।**
**मध्यमा या यजेद्भृत्यैरधमायाजनक्रिया ॥**

**॥ धर्मार्जितधनैः पूजाकरणफलम् ॥**

५–भविष्ये–यथा–

॥ धर्मार्जितधनक्रीतैर्यः कुर्यात् केशवार्चनम् ।
उद्धरेत् स्वेन सहितान् दश पूर्वान् दशापरान् ॥

**॥ श्रीहरिसेवाकरणफलम् ॥**

६–महाभारते–

॥ कलौ कलिमलध्वंसं सर्वपापहरं हरिम् ।
**येऽर्चयन्ति नरानित्यं तेपि वन्द्यायथा हरिः ॥**

**॥ श्रीजगदम्बायास्त्रिकालपूजाफलम् ॥**

७–योगिनीतन्त्रे ७ पटले-२०० पत्रे

**शुक्लपक्षे नवम्यां तु अष्टम्यां परमेश्वरीम् ।**
**त्रिकालं पूजयेद्यस्तु चतुर्दश्यां मम प्रिये ।**
**सगच्छति परं स्थानं यत्र देवी व्यवस्थिता ॥**
क्रीडयित्वा चिरं काले राजा भवति भूतले ।
स्नात्वोपवासनियमपूजाजागरमार्जनैः ॥
सर्वकालेषु सर्वेषु कामेशीं यस्तु पूजयेत् ।
विमानवरमारुह्य ध्वजमालाकुलं तथा ॥
ब्रह्मलोके नरोयाति मोदते शाश्वतीः समाः ।
विविधैर्भक्तिभावेन तस्माद्विभवविस्तरैः ॥
पूजयेत् सततं दुर्गां महापुण्यफलेच्छया ।

८—श्री. दे. भा., स्कन्धे-४० अध्याये श्रीदेवीगीतायां श्रीहिमालयं प्रति श्रीवचोयथा—

॥ विमृश्यैतदशेषेणाप्यधिकारानुरूपतः ।
**कुरु मे पूजनं तेन कृतार्थस्त्वं भविष्यसि ॥**
॥ विविधैर्भक्तिभावेन तस्माद्विभवविस्तरैः ।
पूजयेत् सततं दुर्गां महापुण्यफलेच्छया ॥

९—ज्ञानार्णवतन्त्रे १६ पटले ७७ पत्रे—यथा—

॥ चक्रमभ्यर्च्य सकलं विधिवत् परमेश्वरि ॥
श्रीगुरोः कृपया देवि **सर्वज्ञः सर्वतत्त्ववित्** ॥ २२८ ॥इति ॥

## ॥ श्रीकुलपूजाफलम् ॥

१०—कुलार्णवतन्त्रे ५-उल्लासे ४७ पत्रेपि-यथा—

**॥ कुलपूजासमं नास्ति पुण्यमन्यज्जगत्त्रये ॥**
तस्माद्यः पूजयेद्भक्त्या भक्तिमुक्त्योः सभाजनम् ।
अनधीतोऽप्यशास्त्रज्ञोगुरुभक्तोदृढव्रतः ॥
कुलपूजारतोयस्तु मम प्रियतमोभवेत् ।
चतुर्णामपि वर्णानामाश्रमाणामपीश्वरि ॥
पुंस्त्रीनपुंसकानां तु पूजितेऽष्टफलप्रदा ।
इहामुत्र शुभं दद्यात् पूजिता सुबधूरिव ॥

**अपूजिता त्वं देवेशि ? दुःखदा कुवधूरिव ॥**
कुलपूजां विना यस्तु करोत्येवं सुदुर्मतिः ।
सयाति नरकं घोरमेकविंशतिभिः सह ॥
तस्मात् सर्वप्रयत्नेन कुलपूजारतोभवेत् ।
लभते सर्वसिद्धीश्च नात्रकार्या विचारणा ॥ इति ॥

**॥ वैदिकतान्त्रिकपजाफलम् ॥**

११ श्रीमद्भागवतेपि–११ स्कन्धे श्रीवचोयथाः–

**॥ एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।**
**अर्चन्नुभयतस्सिद्धिं मत्तोविन्दत्यभीप्सिताम्** ॥ इति ॥

**॥ पुजया भोगमोक्षोभयप्राप्तिः ॥**

१२ ज्ञानार्णवतन्त्रेः ८–पटले–२५ पत्रे-यथाः–

॥ एवं पूजाविधिं कुर्याद्भोगमोक्षफलाप्तये ।
अनेनैव विधानेन नित्याख्यां भैरवीं यजेत् ॥ १३ ॥
सर्वसौभाग्यदां नित्यां सर्वसाम्राज्यदायिनीम् ॥ इति ॥

॥ एवं प्रत्यक्षसाहित्याद्देवतापूजाकरणफलमुक्त्वा–पुरस्तोष्टाष्टकार्चनपूजाफलम् ॥

१३-४१।१३ **अष्टाष्टकार्चनमहाफलम्** ॥ कुलार्णवे–१० उल्लासे–९४ पत्रे–**श्रीगुरुगुरुः श्रीशिवो भगवानाह**–यथाः–

॥ एवं यः कुरुते देवि सकृदष्टाष्टकार्चनम् ॥
**ब्रह्माविष्णुमहेशादिदेवताभिः सपूज्यते ।**
**किं पुनर्मानवाद्यैश्च साक्षात् शिवइवापरः ॥**
यदर्चनाच्चतुः षष्टियोगिनीगणसंस्थितः ।
पुनरावृत्तिरहितोनिवसेत्तव सन्निधौ ॥
समस्तदेवताप्रीतिकारिणी परमेश्वरी ।
तस्मात् परतरा पूजा नास्ति सत्यं न संशयः ॥
पश्येदेवंविधं चक्रं योभक्त्याष्टाष्टकं प्रिये ।
यज्ञदानव्रतैस्तीर्थव्रतकोटिफलं लभेत् ॥ इति ॥

१४ **श्रीदेवीपूजया सार्वभौमोराजा स्यात्** । तत्रैव–यथा–

॥ राजा यः कारयेद्देवि भक्त्याष्टाष्टकपूजनम् ।
चतुःसागरपर्य्यन्तां महीं शास्ति न संशयः ॥ इति ॥

१३-४१।१५ **मानसपूजोपचारफलम्** ॥ बा–तं–चन्द्रिकायां–३९२
पत्रे–श्री मा–पूजायां–यथा–

१ ॥ श्रीचक्रस्यादिबिन्दूद्भवसदनगतां सर्वदानन्ददात्रीं ।
श्रीविद्यां देववन्द्यां विविधबलिवरैराजलक्ष्मीसमेतैः ॥
पूर्णैः सर्वोपचारैरवनिपतिवराभूतिभिः पूजयन्ति ।
ते वै स्वर्गाधिपत्यं धनदशचिपतिस्थानमेवाप्नुवन्ति ॥
॥ द्रव्याभावे बुधेन्द्रागिरिवरतनयां सुन्दरीं योगमाया ।
मेतैर्वाक्योपचारैः प्रमुदितमनसोयोगिनोये यजन्ति ॥
सद्योब्रह्माण्डभाण्डाधिपतयइव वै ब्रह्मविद्याविदस्ते ।
सद्भिस्ते वन्द्यपादादिवि विबुधवरैरीज्यमानानरेन्द्रैः ॥
॥ श्रीचक्रराजार्चनसत्क्रमं यः करोति कर्मातिशयं यतात्मा ।
**सएव धन्योविबुधाधिकोत्र वैकुण्ठवासं लभते तदन्ते** ॥इति॥
तथैव

२ श्रीश्रीविद्यामानसपूजने–यथा–
॥ श्रीचक्रराजस्य सपर्ययास्य श्रीसुन्दरीशङ्करमन्दिरस्य ।
प्रदक्षिणालोकनमेकवारं **कृत्वापवर्गं लभते मनुष्यः** ॥
॥ श्रीसुन्दरीमन्दिरमिन्दिरायानिधानमाधानमिहागमानाम् ।
सन्दर्शनंस्पर्शनकं च कृत्वा **स्वर्गाधिपत्यं लभते मनुष्यः** ॥
॥ श्रीचक्रराजार्चनसत्क्रमं यः करोति कर्मातिशयं यतात्मा ॥
सएव धन्योविबुधाधिकोत्र **वैकुण्ठवासं लभते मनुष्यः** ॥ इति ॥
(१३-४१-१३ तथा च १३-४१ वि. सर्वः सं.)

॥ **श्रीपूजया सर्वकार्यसिद्धिः** ॥

३ **श्रीयोगिनीतन्त्रे**–१८ पटले–१०० पत्रे-यथा–
॥ यं यं भावमुपाश्रित्य **यजेत् कालीं हि साधकः** ।
प्राप्नुयादचिरादेव महाकाल्याः प्रसादतः ॥ इति ॥
(१३-४१-१५ वि. सं.)

१३-४२ ॥ पूजासमाप्तौ भूमिप्रोक्षणविषये ॥ शारदापटले-यथा–
॥ अप्रोक्षितजपस्थानाच्छक्रोहरति यज्जपम् ।
तस्माज्जपान्ते तत्प्रोक्ष्य ललाटे तिलकं क्रियात् ॥ इति ॥ य-आ-सु.

इतिश्री-प-क-सूत्रे–द्वितीयावृत्तौ द्विपरिशिष्टे १३-१-वि-तः
१३-४२ तथा च १३ सर्वोपि विषयोत्र परिसमापितः श्रीष्टकृपया ॥

॥ अथ द्विपरिशिष्ट-वि-१४ ॥ **पात्रोद्वासनादिविषये** ॥

॥ अत्र पूजान्ते क्रियमाणं पात्रोद्वासनादिसमाप्तिसङ्कल्पान्तं कर्म स्वगुरुपदिष्ट परम्परयाऽथवा तन्त्रग्रन्थतोऽथवाऽस्मत्कृतश्रीबालातन्त्रचन्द्रिकापुस्तक ३९३ पत्रस्थ २६-३१ विषयतोऽथवैतत्परशूरामकल्पसूत्रस्थतत्तद्देवतार्चनान्तोक्तप्रयोगानुसारेण विधेय-मित्यभ्यर्थये साधकानाप्तान् ॥ इति ॥

द्वि–परिशिष्टकारः

॥ सप्रश्रयं निवेदनम् ॥

॥ मदुक्तविधिनामुना विदधतां श्रियः पूजनं
अहो न वितथाग्रहोमम मनागपि प्रागपि ॥
स्वतन्त्रनिजतन्त्रशम्भुकृततन्त्रशास्त्राश्रयं
विधाय परिपूरणीयमयि शेषमीश्यर्चनम् ॥

॥ प-क-सू-द्वितीयावृत्तिकारः ॥

ॐ श्री.

श्री

॥ अथ श्रीपरशुरामकल्पसूत्रस्य द्विपरिशिष्टे **मुद्रोद्धारे** परिशिष्टविषय १५ प्रारम्भः ॥

## भूमिकात्र

॥ एतच्छ्रीपरशुरामकल्पसूत्रविपठिषूणां तत्तन्मुद्रावलोकनकरणसुगमतासिद्ध्यै, एतद् ग्रन्थस्य तत्तत्पत्रदर्शितमुद्राणां पत्रानुन्धानपूर्वकमन्यासां चानुक्तानामप्यत्युपयुक्तमुद्राणां चैतद्ग्रन्थान्यतन्त्र**ग्रन्थतो**मुद्रोद्धारः प्रदर्श्यते ॥

॥ **१५-१** अथ **मुद्राशब्दार्थः**–

१ ॥ मुद्राशब्दार्थः अत्रैव प–क–सू. ४ खण्डे श्री ललिताक्रमे १३५ पत्रे १ सूत्रभाष्ये यथा–

॥ मुद्राशब्दार्थश्च विश्वस्यमोदनात् द्रावणाच्च मुद्रा ।
तदुक्तं–योगिनीतन्त्रे
॥ चिदात्मभितौ विश्वस्य प्रकाशामर्शने यदा ।
करोति स्वेच्छया पूर्णविचिकीर्षा समन्विता ॥
क्रियाशक्तिस्तु विश्वस्य मोदनाद्द्रावणात्तथा ।

मुद्रेति कथिता देवी............॥ इति ॥

इयं क्रियाशक्तिः त्रिपुरसुन्दर्या क्रियमाणोत्पत्त्यभिवृद्धी अनुमोदते द्रावयति चेति सा-मुद्रा। अनुमोदनं नाम स्वभिन्नकर्तृकक्रियाऽनुकूल्यम्। द्रावणं नाम, घनस्य सङ्कुचितस्य प्रशिथिलावयवताऽऽपादनात्मकः प्रसरः। ईदृशक्रियाशक्तिरेव स्ववृत्तिमुद्रात्व सामानाधिकरण्येन ईक्षणादेर्मेलनेन त्रिकालमयी-त्रिखण्डा-भवति।

इति परमरहस्यार्थः ॥ इति ॥

२ सटीकशारदातिलकेऽपि—२३ पटले ८४२ पत्रे-टीकायाम्

**मुद्राशब्दार्थः मुद्राकरणफलं च**—यथा—

॥ आवाहन्यादिकामुद्राः प्रवक्ष्यामि यथाक्रमम्।
याभिर्विरचिताभिस्तु मोदन्ते सर्वदेवताः ॥ १०६ ॥

**अत्रटीका**—मुद्राः आह-आवाहनीति। रा दाने। **मुदं राति ददाति-इति-मुद्रा-** इति निर्वचनम्। इदमेव-मोदन्ते सर्वदेवताः—इत्यनेन सूचितम्। अतएव तद्दर्शनेन देवताहर्षोत्पत्तिः। स्वाङ्गुल्योहि पञ्चभूतात्मिकाऽङ्गुष्ठाद्याः आकाशवायग्निसलिलभूरूपाः। तासां मिथः संयोगरूपसङ्केतात् कोपि देवताप्रगुणीभावपूर्वकोमोदः सान्निध्यकरोभवति। तदुक्तम्-

पृथिव्यादीनि भूतानि कनिष्ठाद्याः क्रमान्मताः।
तेषामन्योन्यसम्भेदप्रकारैस्तत्प्रपञ्चता ॥
अर्चने जपकाले तु ध्याने काम्ये च कर्मणि।
तत्तन्मुद्राः प्रयोक्तव्या देवतासन्निधापिकाः ॥ इति ॥

३ अन्यत्रापि—मुदं रातीति मुद्रा स्याद्येनैका मुष्टिरेव तु।
स्वल्पभेदात् कोपहर्षौ प्राणिनां जनयत्यतः ॥
**तेनैव सर्वदेवानां मुद्रा हर्षप्रदा मता।**
**पूजाकाले दर्शनीया मुद्रास्ताः सर्वदा शिवे** ॥ इति ॥

तथा—खादिमार्गक्रमाद्भूतान्यङ्गुष्ठाद्यङ्गुलिक्रमात्।
कापि [1]मुत्तन्मिथोयोगात् सान्निध्यप्रह्वताकरी ॥ इति ॥

४ तन्त्रसारे—योजनात् सर्वदेवानां द्रावणात् पापसंहतेः।
**तस्मान्मुद्रेति साख्याता** सर्वकामार्थसाधिनी ॥ इति ॥ प. आ. सु. ५१ पत्रे

५ **अत्रात्र मुद्राकर्तव्यतोपदेशः**।

मुद्राप्रकारनामकग्रन्थे प्रथमपत्रे-आरम्भे यथा—

---

१ अत्राशुद्धं भातीति शोध्यम्।

॥ अर्चने जपकाले च ध्याने काम्ये च कर्मणि ।
स्नाने चावाहने शङ्खे प्रतिष्ठायां च रक्षणे ॥ २ ॥
नैवेद्ये च तथान्यत्र तत्तत्कल्पप्रकाशिते ।
स्थाने मुद्राः प्रद्रष्टव्याः सर्वलक्षणलक्षिताः ॥ ३ ॥ इति ॥

६ ॥ **देवतापरत्वेन, तत्तन्मुद्राग्राह्यता**–उक्ता–

मुद्राप्रकारनामकग्रन्थे–यथा–

॥ **लक्ष्मीमु**द्रार्चने लक्ष्म्यावाग्वादिन्यास्तु पूजने ।
**अक्षमाला** तथा वीणा व्याख्या पुस्तकमुद्रिका ॥ १२ ॥
**सप्तजिह्वा**ह्वया चैव **विज्ञेया वह्निपूजने ।**
**मत्समुद्रा** च कूर्माख्या **लेलिहा मुण्डसं**ज्ञका ॥
**महायोनि**रिति ख्याता **सर्वसिद्धिसमृधिधदा ॥**
शक्त्यर्चने **महायोनिः** श्यामादौ **मुण्डसंज्ञका ॥**
**मस्त्यकूर्माख्यलेलिहा[1] सर्वसाधारणी मता ।**
**तारार्चने च कथ्यन्ते** पञ्च मुद्राविलोकिताः ॥
**योनिश्च भूतिनी** चैव **बीजा**ख्या दैन्यधूमिनी ।
**लेलिहानेति** सम्प्रोक्ताः **पञ्च मुद्राः** प्रकीर्तिताः ॥
दशमी मुद्रिका ज्ञेया **त्रिपुरायाः प्रपूजने ।**
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ।
खेचरीबीजयोन्याख्या **त्रिखण्डा परिकीर्तिता ॥**
॥ **कुम्भमुद्राभिषेके** स्यात् **पद्ममुद्रासने** तथा ।
कालकर्णा प्रयोक्तव्या [2]विघ्नमश्रमकर्मणि ॥
॥ गालिनी च प्रयोक्तव्या **जलशोधनकर्मणि ।**
॥ **श्रीगोपालार्चने वेणुः नृहरेर्नारसिंहिका** ॥
॥ वराहस्य च पूजायां वाराह्याख्यां प्रदर्शयेत् ।
॥ **हयग्रीवार्चने** नित्यं **हयग्रीवी च** दर्शयेत् ॥
॥ **रामार्चने धनुर्बाणमुद्रे परशुरर्चने ।**
॥ **परशुरामस्य** विज्ञेया **जगन्मोहिनिका** तथा ॥

---

१ आर्षच्छन्दोभङ्गोऽत्र ।    २ विघ्नमश्रम–इति संशोध्यम् ।

वासुदेवाह्वया **ध्याने** कुम्भमुद्रा तु **रक्षणे** ।
**सर्वेणां प्रार्थने चैव प्रार्थनाख्यां प्रयोजयेत्** ॥ इति ॥

**७–शक्तिप्रियामुद्रा:** । मुद्राप्रकारग्रन्थे--१ पत्रे–यथा—

॥ पाशाङ्कुशवराभीतिखड्गचर्मधनुःशराः ।
मौशली मुद्रिका दौर्गी मुद्राः **शक्तिप्रियङ्कराः** ॥ इति ॥

**८–मुद्राकरणावश्यकता**—गा. पु. ४१ पत्रे-श्रीमच्छङ्कराचार्यपादाययथा—

॥ आवाहनादिहीनेन कृता पूजा निरर्थका ॥ विपरीतफल दद्यादभक्त्याचार्चनं यथा ॥ इति ॥

९ ॥ **समाजे मुद्राकरणनिषेधः** । सटीकशारदा० २३ पटले–८४४ पत्रे-११४ श्लोकटीकायां--यथा—

॥ एतामुद्रास्तत्तन्मन्त्रान् मदुक्तविशेषमुद्राश्च न कस्यचिद्दर्शयेत् । तदुक्तं-महाकाल-संहितायाम्—

॥ न जातु दर्शयेन् मुद्रामहाजनसमागमे ।
गुह्यमेतन्मुनिश्रेष्ठ तस्माद्रहसि योजयेत् ॥
नाऽदीक्षितस्य मुद्राणां लक्षणानि प्रकाशयेत् ।
**क्षुभ्यन्ति देवतास्तस्य विफलं च भवेदिति**॥ इति ॥

**१०** ॥ **मुद्राणां गोप्यत्वं** । तत्रैव-यथा—

॥ अन्यत्राऽपि–अक्षमालां च मुद्रां च गुरोरपि न दर्शयेत् ॥ इति ॥

**११** ॥ **अधिकारिभेदेन मुद्राकरणभेदः** । तत्रैव–यथा—

॥ अथ चैताः सर्वारहस्येव कुर्यात् । मोक्षार्थिना मनसैव दर्शयितव्याः । तदाहुः

॥ मानसरूपसङ्कल्पा मुद्रा मोक्षार्थिनां विदुः ।
इतरेषां तु सर्वेषां हस्ताभ्यां शस्यते बुधैः ॥ इति ॥ ११३ । ११४ ॥

॥ **इति मुद्राप्रकीर्णम्** ( १५।१ वि. सर्वः सं. )

॥ द्वि० परि० वि. १५।२ –**नानामुद्रोद्धारः** ॥

**१५–२** ॥ **अथ सर्वादौ-श्रीगणेशमुद्रोद्धारः लिख्यते** ॥
१

॥ सा च सटीकशारदा०-१३ पटले–**श्रीगणेशोपासनायां**–५४८ पत्रे-४–टीकायां–यथा—

॥ अत्र ध्यानानन्तरमियं गणपतिमुद्रा प्रदर्शनीया—इत्युक्तम् ॥

॥ मुखात् प्रलम्बितं हस्तं कृत्वा सङ्कुचिताङ्गुलिम् ।
मध्या तर्जनिगताग्राङ्गुष्ठं चाधस्थमध्यमम् ॥
कुर्यान्**मुद्रां गणेशस्य** प्रोक्तेयं सर्वसिद्धिदा ॥ इति ॥

२ ॥ **गणेश्वरीमुद्रोद्धारोपि**—तत्रैव ॥

॥ यद्वा । कुञ्चिताग्रस्य हस्तस्य मूले नासा नियोगतः ॥
**गणेश्वरी** भवेन्मुद्रा० ॥ इति इयं सर्वगणपतिमन्त्रसाधारणीति ज्ञेयम् ॥ ४ ॥

३ ॥ **अविघ्नमुद्रिका**-तत्रैव ॥

यद्वा ॥ तर्जनीमध्यमासन्धिनिर्गताङ्गुष्ठमुष्टिका ।
अधोमुखी दीर्घरूपा मध्यमा**विघ्नमुद्रिका** ॥ इति ॥

४—तथैव, ॥ मुद्राप्रकारोक्ता**विघ्नमुद्रा**-५३ श्लोके—यथा—

॥ तर्जनीमध्यमानामाकनिष्ठाङ्गुष्ठमुष्टिका ।
अधोमुखी दीर्घरूपा मध्यमा**विघ्नमुद्रिका** ॥ ५३ ॥ इति ॥

५ ॥ श्रीगणपतिप्रसादसम्पादयित्री-**दन्तमुद्रा**- ॥

अस्याः उद्धारः-मुद्राप्रकारे—५०—श्लोके—

॥ उत्तानोर्ध्वमुखी मध्यशिरसा बद्धमुष्टिका ।
**दन्तमुद्रा समाख्याता** सर्वागमविशारदैः ॥ इति ॥

॥ **इति श्रीगणेशमुद्राः** ॥ **सं**— । ( १५—२ वि. सं. )

वि. १५।२—**अथ-युगपन्मुद्रोद्धारः** ।

॥ [1]आवाहन [2]संस्थापन [3]संनिधापन [4]संनिरोधन [5]संमुखीकरण [6]सकलीकरणेत्यादियुगपन्मुद्रोद्धारः ॥

**तत्रादौ-आवाहनादिपञ्चमुद्रोद्धारः**

१—प. क. सू. ७ खण्डे-श्रीवाराहीक्रमे—२१—सूत्रभाष्ये—२१८—पत्रे—यथा—

॥ हस्तद्वयं चोर्ध्वमुखमृज्वङ्गुलियुतं युतम् ।
अङ्गुल्यग्राणि भुग्नानि कनिष्ठामूलभागतः ॥
अङ्गुष्ठाग्रसमायोगान्मुद्रैषाऽऽ[1]**वाहिनी** मता ।
॥ अधोमुखी चेयमेव [2]**स्थापनाख्या** समीरिता ॥
॥ मुष्टिद्वयोदरयुता भवेत् सा [3]**संनिधापनी** ।
॥ इयमङ्गुष्ठगर्भा तु [4]**संनिरोधन**रूपिणी ॥
॥ इयमेवोत्तानरूपा [5]**सम्मुखीकरणाभिधा** ॥ इति ॥

( अधस्तनः-३ वि. द्रष्टव्यः )

**अत्र भाष्यम्--**आवाहनादिमुद्राअनूद्य तदङ्गत्वेन मूलमन्त्रविधानात् " प्रतिप्रधानमङ्गावृत्तिः " इति न्यायेन " सृष्टीरुपदधाति " इतिवत् यावत्योमुद्राविहिताः तावतीषु मुद्रासु बध्यमानासु तावद्वारं मूलमावर्तयेत्, न तु सकृन्मूलमुच्चार्य सर्वमुद्राबन्धनं-इति ज्ञेयम् ॥ २१ ॥ इति ॥

२-आवाहनादिषण्मुद्रोद्धारः-सटीकशारदा० २३-पटले-८४३ पत्रे-यथा-

॥ सम्यक् सम्पूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः ।
[1]**आवाहनी** समाख्याता मुद्रा देशिकसत्तमैः ॥ १०७ ॥
॥ अधोमुखी कृता सैव प्रोक्ता [2]**स्थापनकर्मणि ।**
॥ आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका ॥ १०८ ॥
[3]**सन्निधाने** समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः ।
॥ अङ्गुष्ठगर्भिणी सैव [4]**सन्निरोधे** समीरिता ॥ १०९ ॥
॥ उत्तानौ द्वौ कृतौ मुष्टी [5]**सन्मुखीकरणी** स्मृता ॥
॥ देवताङ्गे षडङ्गानां न्यासः स्यात् [6]**सकलीकृतिः** ॥ ११० ॥

३-अथवा-ज्ञानार्णवतन्त्रे--आवाहनादिपञ्चमुद्रोद्धारः-४ पटले-१३ पत्रे-यथा--

॥ आवाहनादिमुद्रास्तु कथयामि तवानघे ॥ ३१ ॥
ऊर्ध्वाञ्जलिमधः कुर्यादियमा**वाहनी** भवेत् ।
इयं तु विपरीता स्यात्तदा वै **स्थापनी** मता ॥ ३२ ॥
मिलितं मुष्टियुगलं **संनिधापन**रूपिणी ।
अन्तरङ्गुष्ठमुष्टिभ्यां **संनिरोधन**रूपिणी ॥ ३३ ॥
एतस्याएव मुद्रायास्तर्जन्यौ सरले यदा ।
सव्यापसव्यभ्रमणान्मुद्रेय**मवगुण्ठनी** ॥ ३४ ॥

( उपरितनः १५।३-१ वि. दृश्यः )

४-संस्थापिनी, सन्निधापनी, सन्निरोधनी, प्रार्थनी, मुद्राणां युगपदुध्दारः-श्रीश्रीमद्जगद्गुरुश्रीमच्छङ्कराचार्यविरचितश्रीश्रीविद्यामहात्रिपुरसुन्दरीचक्रराजमानसपूजास्तोत्रे-यथा-

॥ कृत्वा हस्तयुगाञ्जलिं च तदधोवक्त्रां तु **संस्थापिनी ।**
मुष्ट्यङ्गुष्ठयुगा सुमुष्टिभिरियं सा **सन्निधा**ख्या परा ॥
अङ्गुष्ठद्वयगर्भिणीयमुदिता **संरोधिनी**मुद्रिका ।
हस्तौ सम्पुटसंस्थितौ स्वहृदये मुद्रोदिता **प्रार्थनी** ॥ इति ॥

५-॥ **आवाहनी, संस्थापनी, सन्निधापनी, सन्निरोधिनीं मुद्राणामुध्धारः ॥**

॥ आनन्दाश्रमग्रन्थावलि ७३ अङ्कमुद्रितश्रीगा. पु. पद्धतौ-९ पत्रे-धारे, इत्युपनामकश्रीशङ्करसूरिर्दर्शयति--यथा--

॥ हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः ॥
अङ्गुष्ठौ निक्षिपेदुच्छ्रौ मुद्रैषाऽऽ**वाहनी** स्मृता ।
॥ अधोमुखी त्वियं चेत् स्यात् **स्थापनी** मुद्रिका भवेत् ॥
॥ उच्छ्रिताऽङ्गुष्ठमुष्ट्योस्तु संयोगात् **संनिधापिनी** ।
॥ अन्तःप्रवेशिताङ्गुष्ठा सैव **संरोधिनी** मता ॥
॥ अङ्गुष्ठतर्जन्यग्रं तु मीलितं स्वहृदि स्थितम् ।
**स्थान**मुद्राभवेदेवं ....................॥ इति ॥

६-॥ **आवहन, स्थिरीकरण, सान्निध्य, सन्निरोधशब्दानामर्थः** ॥
सटीकशारदा० ४ पटले-२८७ पत्रे-८९-९० श्लोकटीकायाम्
सिद्धान्तसागरे-**आवाहनादी**नामन्यथा लक्षणमुक्तम् । यथा-

॥ १ स्वतएवाभिपूर्णस्य तत्त्वस्येहार्चनादिषु ।
सादरं सन्मुखीभावस्तदा**वाहन**मुच्यते ॥
२ शिवस्याऽऽवाहितस्यास्य विद्यादेहे तु सन्ततम् ।
**स्थिरीकरण**मुद्दिष्टं स्थापनं भक्तितोऽर्चने ॥
३ पूजां प्रयोज्यमानां तु गृहीत्वाऽनुग्रहादिकम् ।
कर्त्तुं सामर्थ्यमस्येह तत् **सान्निध्यं** प्रचक्षते ॥
४ आसमाप्तेस्तु पूजायाः सान्निध्यं हि शिवस्य यत् ।
**ससन्निरोध**उद्दिष्टोविभोरस्यापि शक्तितः ॥ इत्यादिना ।
( अनन्तरमित्यनेन सन्मुखीकरण प्रार्थनं च मुद्राद्वयेनोक्तं-तत्र प्रमाणम् )
अज्ञानादूदुर्मनस्त्वाद्वा वैकल्यात् साधनस्य च ।
यदाऽपूर्णं भवेत् कृत्यं तदाऽप्यभिमुखोभव ॥
दृशा पीयूषवर्षिण्या पूरयन् यज्ञविष्टरम् ।
मूर्त्तोवायज्ञसम्पूर्त्तेः स्थिरोभव महेश्वर ॥ इति ॥

७ **अथावाहनादिनवमुद्रोद्धारः ।**

अयं नवमुद्रोद्धारः । दुर्गाकल्पद्रुमपुस्तिकायां-३७२ पत्रे-टीपण्यां-यथा-

॥ हस्ताभ्यामञ्जलिं बध्वानामिकामूलपर्वभिः ।

अङ्गुष्ठौ निःक्षिपेत् सेयं मुद्रा [1]**त्वावाहिनी** स्मृता ॥ १ ॥

अधोमुखी त्वियं चेत् स्यात् [2]**स्थापनी** मुद्रिका स्मृता ॥ २ ॥

उच्छ्रिताङ्गुष्ठमुष्टयोस्तु संयोगात् [3]**संनिधापनी** ॥ ३ ॥

अन्तः प्रवेशिताङ्गुष्ठा सैव [4]**संरोधनी** स्मृता ॥ ४ ॥

उत्तानमुष्टियुगला [5]**सन्मुखीकरणी** मता ॥ ५ ॥

देवतानां षडङ्गानां न्यासः स्यात् [6]**सकलीकृतिः** ॥ ६ ॥

सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्ज्जनी ।

[7]**अवगण्ठनमुद्रेय**मभितोभ्रामिता मता ॥ ७ ॥

अन्योन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः ॥

तथैव तर्जनीमध्या [8]**धेनुमुद्रा** समीरिता ॥ ८ ॥

अमृतीकरणं कुर्यात्तथा साधकसत्तमः ।

इत्यमृतीकरणे **धेनुमुद्रा ज्ञेया** ॥ ९ ॥

अन्योन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुली ।

**महामुद्रेय**मुदिता [9]**परमीकरणे** बुधैः ॥ १० ॥

॥ इति--परमीकरणे महामुद्रा ।

**॥ प्रयोजयेदिमामुद्रादेवताह्वानकर्मणि ॥**

**॥ इत्यावाहनादयोनव मुद्राः-सं- ॥**

**१५-३/८ अथ गन्ध, पुष्प, धूप, दीप, नैवेद्यादिपञ्चमुद्राणामुद्धारः ॥**

१—सटीकशारदा० ४ पटले-२९८ पत्रे-१०९ श्लोकटीकायां—यथा—

॥ ज्येष्ठाङ्गुष्ठस्य पुष्पस्य युक्ता **धूपस्य तर्जनी ।**

**दीपस्य मध्यमानामा नैवेद्यस्य** प्रकीर्तिता ॥

इतराङ्गुलिसंयोगात् **पञ्च मुद्राः** प्रकीर्त्तिताः ।

गन्धादिष्वपि दत्तेषु ( भेदेषु ) मुद्राश्चेमाः प्रदर्शयेत् ॥ इति ॥

**मुद्रया यत् कृतं कर्म तदक्षयफलप्रदम्-**

**२-पुनश्चापि गन्धमुद्राविषये ॥**

सटीकशारदा० ४ पटले-२९३-पत्रे-१०० श्लोक० टीकायां—यथा—

॥ इदं गन्धदानं कनिष्ठिकयेति ज्ञेयम् । यदाहुः—

॥ शङ्खपात्रस्थितं गन्धं मन्त्रैर्दद्यात् कनिष्ठया ॥ इति ॥

ततो**गन्धमुद्रां** प्रदर्शयेत् । तल्लक्षणन्तु–

कनिष्ठाङ्गुष्ठसंयुक्ता **गन्धमुद्रा** प्रकीर्तिता ॥ इति ॥

१५-३।८-३–एतासां **गन्धादिमुद्राणामुद्धारः**। प्राक्तनश्रीमदाद्यार्चनपद्धतौ-यथा–

१ कनिष्ठाङ्गुष्ठयोगेन गन्धमुद्रां प्रदर्श्य ॥ इति

२ अधोमुखतर्जन्यङ्गुष्ठयोगेन पुष्पमुद्रां प्रदर्श्य ॥ इति ॥

३ तर्जन्यङ्गुष्ठयोगेन [1]धूपमुद्रां० ,, ,,

४ मध्यमाङ्गुष्ठ ,, दीप० ,, ,, ( १५।३-८ सं )

५ ॐ प्राणायस्वाहा-इति अङ्गुष्ठकनिष्ठानामाभिः । ॐ अपानायस्वाहा-इत्यङ्गुष्ठ तर्जनीमध्यमाभिः ॥ ॐ व्यानायस्वाहा - इत्यङ्गुष्ठमध्यमानामाभिः ॥ ॐ उदानायस्वाहा-इत्यङ्गुष्ठतर्जनीमध्यामाभिः । ॐ समानाय स्वाहा-इत्यङ्गुष्ठादि- सर्वाभिः ॥ इति ॥

**१५।३-८-४ ॥ सर्वत्र–पूजोपयुक्तगन्धपुष्पधूपनैवेद्यमुद्रोद्धारः–**

**१–गन्धमुद्रोद्धारः** ॥–य. आ. सू. ५१ पत्रे-यथा–

॥ मध्यमानामिकाङ्गुष्ठैरङ्गुल्यग्रेण पार्वति ॥

दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः ॥ इति ॥

**२–पुष्पमुद्रोद्धारोऽपि**–ज्ञाना. १६ प. १३६ श्लोके–यथा–

॥ पुष्पं समर्पयेद्देवि मुद्रया ज्ञानसंज्ञया ॥

अङ्गुष्ठतर्जनीयोगाज्**ज्ञानमुद्रा** प्रकीर्तिता ।

॥ अङ्गुष्ठतर्जनीभ्यां च पुष्पं चक्रे निवेदयेत् ॥ इति यजु. आ. सु. ५१-पत्रे ॥

**३–धूपमुद्रोद्धारोऽपि**–तत्रैव यथा–

॥ मध्यमानामिकाभ्यां तु मध्यपर्वणि देशिकः ।

अङ्गुष्ठाग्रेण देवेशि धृत्वा धूपं निवेदयेत्[1] ॥ इति ॥

**४।१–नैवेद्यमुद्रोद्धारोऽपि**–तत्रैव–यथा–

॥ उत्तोलनं त्रिधा कृत्वा गायत्र्या मूलयोगतः ।

तत्त्वाख्यमुद्रया देव्यै नैवेद्यं विनिवेदयेत् ॥

---

१ दु. क. पुस्तके-१५५ पत्रे । देवीवामभागे धूपपात्रं–निधाय–तर्जनीमूलयोरङ्गुष्ठयोगात्मिकां धूपमुद्रां प्रदर्शयेदित्यस्ति ॥

१–अत्र दीपमुद्रा नोक्ता तथाऽप्युपर्युक्त १५।३-८।१, १५।३-८।२ विषये-तथा च दु. क. पुस्तके १५५ पत्रे-च-मध्यमे-अङ्गुष्ठमूललग्ने दीपमुद्रा-तां प्रदर्शयेदित्युक्तम् ।

॥ मूलेनाचमनं दद्यात्ताम्बूलं तत्त्वमुद्रया ।

॥ अङ्गुष्ठानामिकाभ्यां तु तत्वमुद्रेय मीरिता (ज्ञानार्णवे १६ पटले १३५ पत्रे)

॥ १ **प्राणादिमुद्राः** । कनिष्ठानामिके अङ्गुष्ठेन स्पृशेदिति ॥ **प्राणमुद्रा** ॥

२ ......................अनामामध्ये अङ्गुष्ठेन स्पृशेदिति ॥ **अपानमुद्रा** ॥

३ ......................मध्यमातर्जन्यावङ्गुष्ठेन स्पृशेदिति ॥ **व्यानमुद्रा** ॥

४ ......................तर्जनीमध्यमानामाः अङ्गुष्ठेन स्पृशेदिति ॥ **उदानमुद्रा** ॥

५ ......................तर्जन्याद्यङ्गुलिचतुष्टयमङ्गुष्ठेन स्पृशेदिति ॥ **समानमुद्रा** ॥

६ ......................॥ **ग्रासमुद्रा**—

अङ्गुल्यः कुटिलीभूताविरलाग्राः परस्परम् ।
**ग्रासमुद्रा** समाख्याता सव्यपाणौ नियोजिता ॥ इति ॥

( १५।३-८।४-वि. सं. )

१५-३।८-५—दु. क. पृ. १५७ पत्रे—यथा—

॥ अनामामूलयोरङ्गुष्ठयोगे **नैवेद्यमुद्रा** तां-प्रदर्श्य

सपुष्पकराभ्यां पात्रमुद्धरन् । नैवेद्यं निवेदयामि ॐ भगवति हवींषि जुषाण-इति पठन्-ग्रासमुद्रां प्रदर्शयेत् । यथा—

॥ वामहस्तेन पद्माभां प्राणाद्यां दक्षिणेन तु ॥

१ कनिष्ठिकानामिकाङ्गुष्ठैः ह्रीं प्राणाय स्वाहाः ॥

२ तर्जनीमध्यमाङ्गुष्ठैः० अपानाय स्वाहाः ।

३ तर्जन्यनामामध्यमाङ्गुष्ठैः० व्यानाय स्वाहाः ।

४ अनामामध्यमाङ्गुष्ठैः० उदानाय स्वाहाः ।

५ सर्वाङ्गुलिभिः समानाय० स्वाहाः ॥

एवं मायाबीजपूर्वाः प्राणादिमुद्रापूर्वाश्च ५-प्राणाहुतीः समर्पयेत् । इति ॥

( १५।३ वि. सर्व. सं. )

**वि—१५।४ केवलश्रीवैष्णवीमुद्राविषये—**

**१—श्रीलक्ष्मीमुद्रोद्धारः ।** सटीकशारदा० ८ पटले ४१४ पत्रे—४ श्लोक टीकायाम्-अत्र-ध्यानानन्तरं लक्ष्मीमुद्रा दर्शनीया इत्युक्तम्—

**लक्ष्मीमुद्रोद्धारोयथा**—

॥ चक्रमुद्रां तथा बद्ध्वा मध्यमे द्वे प्रसार्य्य च ।
कनिष्ठिके तथानीय तदग्रेऽङ्गुष्ठकौ क्षिपेत् ॥
**लक्ष्मीमुद्रा** परा ह्येषा सर्वसम्पत्प्रदायिका ॥ इति ॥

१५।४-२-**कमलपद्ममुद्रोद्धारः** । ज्ञानार्णवतन्त्रे ४ पटले १४ पत्रे-यथा-

१ ॥ हस्ताभ्यां कमलाकारोयदा तत् कमलं भवेत् ॥ ४६
एषा **कमलमुद्रा च** लक्ष्मीवृद्धिकरी मता ॥ इति ॥

**२-अन्यथा-कमलमुद्रोद्धारः**-सटीकशारदा-४ पटले-५८३ पत्रे-३६ श्लोकटीकायाम्-यथा—

॥ करौ तु सम्मुखौ कृत्वा संहतावुन्नताङ्गुली ।
तलान्तर्मिलिताङ्गुष्ठौ कुर्यादे**षाब्जमुद्रिका** ॥ इति ॥

३-**पद्ममुद्रोद्धारः** ॥

१ मुद्राप्रकारनामकग्रन्थे-१४-श्लोके-यथा—

॥ हस्तौ तु सन्मुखौ कृत्वा संहतप्रथिताङ्गुली ।
तलान्तर्मिलिताङ्गुष्ठौ कृत्वैषा **पद्ममुद्रिका** ॥ इति ॥

२ दु-क-पुस्तिकायां-३७४ पत्रे-यथा—

॥ हस्तौ च सन्मुखौ कृत्वा संहतप्रोन्नताङ्गुली ।
तलान्तर्मिलिताङ्गुष्ठौ कृत्वैषा **पद्ममुद्रिका** ॥ इति ॥

( १५।४-२ वि. सं. )

१५।४-३-**मत्स्यमुद्रोद्धारः** प-क-सू-६ खण्डे-श्यामाक्रमे-१९७-पत्रे १८ सूत्रभाष्ये-यथा—

१ ॥ अधोमुखे वामकरे दक्षणं तादृशं करम् ।
स्थापये**न्मत्स्यमुद्रेयं** तान्त्रिकैः परिकीर्तिता ॥ इति ॥

२ ॥ दक्षपाणितलं देवि वामपृष्ठोपरि न्यसेत् ।
अङ्गुष्ठद्वितयं सम्यक् ऋजुरूपमधोमुखम् ॥
**मत्स्यमुद्रेय**माख्याता मण्डलादिप्रकल्पने ॥ इति ॥

३-मुद्राप्रकारे-यथा—

॥ दक्षपाणिपृष्टदेशे वामपाणितलं न्यसेत् ।
अङ्गुष्ठौ चालयेत् सम्यक् मुद्रेयं **मत्स्यरूपिणी** ॥ ७९ ॥ इति ॥

( वि. १५।४-३ सं. )

**१५।४-४-कूर्ममुद्रोद्धारः**—मुद्राप्रकारे—यथा—

॥ वामहस्तस्य तर्जन्यां दक्षिणस्य कनिष्ठिकाम् ।
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ॥
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ।
अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ॥
वामस्य पितृतीर्थेन मध्यमानामिके तथा ।
अधोमुखे च ते कुर्याद्दक्षिणस्य करस्य च ॥
कूर्मपृष्ठसमं कुर्याद्दक्षपाणिं च सर्वतः ।
**कूर्ममुद्रेय**माख्याता देवताध्यानकर्मणि ॥ इति ६ पत्रे-८१-श्लो. ॥

**१५।४-५-श्रीहयग्रीवमुद्रोद्धारः** । सटीकशारदा०—१५ पटले—६२४—पत्रे—७२—श्लो० टीकायां-यथा—

( अत्र ध्यानानन्तरमियं मुद्रा दर्शनीया । )

॥ वामहस्ततले दक्षाअङ्गुलीस्तास्त्वधोमुखीः ।
संरोप्य मध्यमां तासामुन्नम्याऽधोविकुञ्चयेत् ॥
**हयग्रीवप्रिया** मुद्रा तन्मूर्तेरनुकारिणी ॥ इति ॥ ७२ ॥

**१५।४-६-श्रीनारसिंहीमुद्रोद्धारः** । सटीकशारदा० १६—पटले—६४६—पत्रे—७—श्लो. टीकायां—यथा—

१—॥ अत्र ध्यानानन्तरमेतामुद्राः प्रदर्शयेत्

॥ जानुमध्यगतौ कृत्वा चिबुकोष्ठौ समावुभौ ।
हस्तौ च भूमिसंलग्नौ कम्पमानः पुनः पुनः ॥
मुखं विजृम्भितं कृत्वा लेलिहानां च जिह्विकाम् ।
एषा मुद्रा **नारसिंही** प्रधानेति प्रकीर्त्तिता ॥ इति ॥

॥ वामस्याङ्गुष्ठतोबद्ध्वा कनिष्ठामङ्गुलीत्रयम् ।
त्रिशूलवत् सम्मुखोर्ध्वं कुर्यान्मुद्रां नृसिंहगाम् ॥

॥ अङ्गुष्ठाभ्यां च करयोस्तथाक्रम्य कनिष्ठिके ।
अधोमुखाभिः श्लिष्टाभिः शेषाभिर्नृहरेर्मता ॥ इति ॥

२ । मुद्राप्रकारनामकग्रन्थे—

अङ्गुष्ठाभ्यां च करयोरथाक्रम्य कनिष्ठिके ।
अधोमुखीभिः सर्वाभिर्मुद्रेयं नृहरेर्मता ॥ इति ॥ २८-श्लो.

( १५।४-६-२ सं. )

१—मुद्राप्रकारनामकग्रन्थे, ॥ संरोप्य मध्यमानामां मूलस्याधोविकुञ्चयेत् ॥ इति पाठः

**१५।४-६।३ आन्त्रमुद्रोद्धारः**-। तत्रैव-यथा

॥ हस्तावधोमुखौ कृत्वा नाभिदेशे प्रसार्य्य च ।
तर्जनीभ्यां नयेत् **स्कन्धौ** प्रोक्तै**षाऽन्त्राख्य**मुद्रिका ॥

४ **वक्त्रमुद्रोद्धारः**-। तत्रैव-यथा-

॥ हस्तावूर्ध्वमुखौ कृत्वा तले संयोज्य मध्यमे ।
अनामायां तु वामायां दक्षिणां तु विनिक्षिपेत् ॥
तर्जन्यौ पृष्ठतोलग्ने अङ्गुष्ठौ तर्जनीश्रितौ ।
**वक्त्रमुद्रा भवेदेषा** नृहरेः सन्निधौ मता ॥

**दंष्ट्रामुद्रोद्धारः**-। तत्रैव-यथा-

५ वक्त्रमुद्रां तथा कृत्वा तर्जनीभ्यां तु मध्यमे ।
पीडयेद्दं**ष्ट्रमुंद्रैषा** सर्वपापप्रणाशिनी ॥ इति ॥

६ **दारणमुद्रोद्धारः** । सटीकशारदा०-१६ पटले-६५६ पत्रे-५० श्लोक-टीकायां-यथा-

एवं क्रमेण चतुर्थाभ्यां दक्षवामाभ्यां दारणमुद्रा । तल्लक्षणं तु ।

॥ मिथः संसृष्टसंमुख्योऽङ्गुलयऋज्वधोऽग्रकाः ।
स्वस्थान**सरलाङ्गुष्ठौ** मुद्रेयं **दारणा मता** ॥ इति ॥

( १५।४-६।६ वि. सं. )

**१५।४-७-वाराहमुद्रोद्धारः** । सटीकशारदा० १५-पटले-६३७ पत्रे-१०८ श्लोकटीकायाम्-यथा-

१ ॥ अत्र ध्यानानन्तरमिदं मुद्राद्वयं दर्शनीयमिति ज्ञेयम् । तल्लक्षणं-यथा-

॥ वामहस्तमथोत्तानं कृत्वा देवस्य चोपरि ।
नामयेदिति सम्प्रोक्ता मुद्रा **वाराहसंज्ञिता** ॥ इति ॥

२ ॥ दक्षहस्तं चोर्ध्वमुखं वामहस्तमधोमुखम् ।
अङ्गुल्यग्रन्तु संयुक्तं मुद्रा **वाराहसंज्ञिता** ॥ इति ॥ १०८ ॥

३ ॥ मुद्राप्रकारनामकग्रन्थे २९-श्लोके

॥ देवोपरि करं वामं कृत्वोत्तानमधः सुधीः ।
आमयेदिति सम्प्रोक्ता मुद्रा **वाराहसंज्ञिका** ॥ इति ॥

( १५।४-७ वि. सं. )

---

१ आर्षोऽत्र दंष्ट्रशब्दोथवा-अपि माषं मषं-ब्रूयाच्छन्दोभङ्गं-न-कारयेत्-इति-समाधेयम्

**१५।४-८ श्रीवत्समुद्रोद्धार-**

सटीकशारदा०-१५ पटले-६१२-पत्रे-२२ श्लोकटीकायां-यथा-

॥ अन्योन्यपृष्ठकरयोर्मध्यमानामिकाङ्गुली ।

अङ्गुष्ठेन तु बन्धीयात् कनिष्ठामूलसंश्रिते ॥

तर्जन्यौ कारयेदेषा मुद्रा **श्रीवत्ससंज्ञिका** ॥ इति ॥

**१५।४-९ श्रीकौस्तुभमुद्रोद्धारः ।** तत्रैव शारदापत्रे-यथा-

१ ॥ अनामापृष्ठसंलग्ना दक्षिणस्य कनिष्ठिका ॥

कनिष्ठिकान्या[1] बन्धीयादनामा दक्षतर्जनीम् ।

गृहीत्वा दक्षिणाङ्गुष्ठमध्यमानामिकात्रयम् ॥

उच्छ्रयित्वा तत्र वामे तर्जनीमध्यमे न्यसेत् ।

दक्षिणे मणिबन्धे च वामाङ्गुष्ठं तु योजयेत् ॥

मुद्रेयं **कौस्तुभस्योक्ता** दर्शनीया प्रयत्नतः ॥ इति ॥

**२-प्रकारः ।** मुद्राप्रकारनामकग्रन्थे-यथा-

॥ अनामापृष्टसंलग्ना दक्षिणस्य कनिष्ठिका ॥

कनिष्ठयान्यया बध्वा तर्जन्या दक्षया तथा ।

वामानामा च बध्नीयाद्दक्षिणाङ्गुष्ठमूलके ॥

अङ्गुष्ठमध्यमे वामे संयोज्य सरलाः पराः ।

चतुरोप्यग्रसंलग्ना मुद्रा कौस्तुभसंज्ञका ॥ इति ॥

( २० श्लो.-१५।४-९ वि. सं. )

**१५।४-१० । वनमालामुद्रोद्धारः ।** सटीकशा० १५ पटले-६१२-पत्रे-

३ ॥ स्पृशेत् कण्ठादिपादान्तं तर्जन्याङ्गुष्ठनिष्ठया ।

करद्वयेन मालावत् मुद्रेयं **वनमालिका** ॥ इति ॥

**१५।४-११** श्रीगोविन्दध्यानपूर्वक**वेणुमुद्रोद्धारः** । सटीकशारदा०-१७ पटले-६९६ पत्रे-८९-९० श्लो. टीकायां-यथा-

॥ फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं ।

श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ॥

गोपीनां नयनोत्पलार्चिततनुं गोपालसङ्घावृतं ।

गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे ॥ ८९ ॥

---

१ अत्राशुध्धं स्वयं शोध्यम्-

एतच्छ्लोकटीकायां—**वेणुमुद्रोद्धारो**यथा—

ओष्ठे वामकराङ्गुष्ठोलग्नस्तस्य कनिष्ठिका।
दक्षिणाङ्गुष्ठसंसक्ता तत्कनिष्ठा प्रसारिता॥
तर्जनीमध्यमानामाः किञ्चित् सङ्कुच्य चालिताः।
**वेणुमुद्रेह** कथिता सुगुप्ता **प्रेयसी हरेः**॥ इति

**१५-४।१२ गरुडमुद्रोद्धारः।** आनन्दाश्रमग्रन्थावलि७२अङ्कमुद्रितश्री. गा. पु. पद्धतौ—९ पत्रे-धारे—इत्युपनामकश्रीशङ्करसूरिर्दर्शयति—यथा—

**१**—॥ करद्वयस्य पृष्ठे संयोज्य कनिष्ठिकाभ्यामवष्टभ्याधोऽङ्गुष्ठौ पुरस्तर्जन्यौ संयोज्य, मध्यमानामिकयोर्वक्रयोः पक्षतुल्यत्वेन **गरुडमुद्रा**॥ इति॥

२॥ सटीकशारदा० ४ पटले-२६४ पत्रे ४८ श्लो० टीकायां—यथा—

॥ हस्तावभिमुखौ कृत्वा रचयित्वा कनिष्ठिके।
मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा॥
मध्यमानामिके द्वे तु द्वौ पक्षाविति कुञ्चयेत्।
एषा **गरुडमुद्रा स्यादशेषविषनाशिनी**॥ ४८॥ इति॥

३॥ मुद्राप्रकारनामकग्रन्थे—यथा—

॥ हस्तौ तु विमुखौ ग्रथित्वा च कनिष्ठिके।
मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्टकौ तथा॥
मध्यमानामिके द्वे तु द्वौ पक्षाविव चालयेत्
एषा **गरुडमुद्रास्याद्विष्णोः संतोषवर्धनी**॥ इति२९-श्लो॥

॥ इति श्री**वैष्णवीमुद्रोद्धारः** सम्पन्नः॥

(१५।४-१२ तथा च १५।४ वि. सर्वः सं.)

**॥ द्वि. परि. वि. १५।५ केवलश्रीशैवमुद्राविषये॥**

**१—॥बिल्वमुद्रोद्धारः।** तत्रैव॥ सटीकशारदा० १७ पटले-६९६ पत्रे-८९ श्लो. टीकायां-यथा-

॥ उच्यतेऽच्युतमुद्राणां भद्रा बिल्वफलाकृतिः।
॥ अङ्गुष्ठं वाममुद्दण्डितमितरकराङ्गुष्ठकेनाऽथ बध्वा
तस्याऽग्र पीडयित्वाऽङ्गुलिभिरपि च तावामहस्ताङ्गुलीभिः॥
बध्वा गाढं हृदि विमलधीर्व्याहरन् मारबीजं
**बिल्वाख्या मुद्रिकै**षा स्फुटमिह गदिता गोपनीया विधिज्ञैः॥ इति॥

**२-१ कपालमुद्रोद्धारः** । ज्ञानार्णतन्त्रे-४ पटले-१४ पत्रे-यथा-

॥ वामहस्ततलं देवि कपालाकृति कारयेत् ॥
कपालमुद्रा देवेशि देव्यानन्दकरी सदा ॥ इति ॥

**२ कपालमुद्रोद्धारः** प्राक्तनश्रीमदाद्यार्चनपद्धतौ-यथा-

॥ अस्याः कापालिका मुद्रा विशेषेण प्रियङ्करी ।
पात्रवद्वामहस्तं च कृत्वाङ्के वामके तथा ॥
विधायोच्छ्रितवत् कुर्यात् मुद्रा **कापालिकी** तथा ॥ इति ॥

( १५-'१२ वि. सं. )

**३-खट्वाङ्गमुद्रोद्धारः** । मुद्राप्रकारे-यथा-

॥ पञ्चाङ्गुल्योदक्षिणास्तु मिलिताह्यूर्ध्वमुच्छ्रिताः ।
**खट्वाङ्गमुद्रा** विख्याता **शिवस्यातिप्रिया** मता ॥ ४५ ॥ इति ॥

**४-डमरुमुद्रोध्धारः** । सटीकशारदा०-२०-पटले-७६४-पत्रे-५३-श्लो-टीकायाम्-यथा—

अथ-( श्रीबटुक ) ध्यानानन्तरं डमरुमुद्रां प्रदर्शयेत् तल्लक्षणं तु-

॥ मुष्टिं सुशिथिलां बध्वा ईषदुच्छ्रितमध्यमाम् ।
दक्षिणामूर्ध्वमुन्नम्य[1] कर्णदेशे प्रचालयेत्
एषा मुद्रा **डमरुका सर्वविघ्नविनाशिनी** ॥ इति ४८-श्लो. ॥

**५-मृगमुद्रालक्षणम्-**

सटीकशारदा० १४ पटले-६०३ पत्रे-टीकायां-यथा—

॥ मिलित्वाऽनामिकाङ्गुष्ठमध्यमाग्राणि योजयेत् ।
शिष्टाङ्गुल्युच्छ्रेत कुर्यान्**मृगमुद्रेयसीरिता** ॥ इति ॥

**६-मुण्डमुद्रोद्धारः** मुद्राप्रकारे-६-पत्राधः ८२-श्लो.-यथा—

॥ पृष्टे कोडेऽन्तराङ्गुष्टमुष्टिं वामकरस्य च ।
मध्यमाग्रं दक्षिणस्य तथालम्ब्य प्रयत्नतः ॥
मध्यमेनाथ तर्जन्या अङ्गुष्टाग्रं तु योजयेत् ।
दक्षिणं योजयेत् पार्णि वाममुष्टौ च साधकः ॥
दर्शयेद्दक्षिणे भागे **मुण्डमुद्रेय**मीरिता ॥ ५७-९ इति ॥

---

१ मुद्राप्रकारे तु दक्षिणामूर्ध्व मुन्नम्य-इति-पाठः-चिन्त्यः-

७-**चर्ममुद्रोद्धारः**। मुद्राप्रकारे-यथा—

॥ वामहस्तं तथा तिर्यक् कृत्वा चैव प्रसार्य च।

आकुञ्चिताङ्गुलिं कुर्या**च्चर्ममुद्रेय**मीरिता ॥ ५७॥ इति ॥

८-**परशुमुद्रोद्धारः** सटीकशारदा० १८ पटले-७१५ पत्रे-१३-श्लोकटीकायां-यथा-

॥ [1]करे करं तु करयोस्तिर्यक् संयोज्य चाऽङ्गुलीः।

संहताः प्रसृताः कुर्यान्**मुद्रेयं परशोर्मता** ॥ इति ॥

९॥१ **खड्गमुद्रोद्धारः**। सटीकशारदा० १७ पटले-६८४ पत्रे-२२-श्लोकटीकायां-यथा-

॥ कनिष्ठानामिके बद्ध्वा स्वाङ्गुष्ठेनैव वामतः।

शिष्टाङ्गुली तु प्रसृते संश्लिष्टे **खड्गमुद्रिका** ॥ इति ॥

२ **मुद्राप्रकारे**-

॥ कनिष्ठानामिके बध्वा प्राङ्गुष्ठेनैव दक्षतः।

शिष्टाङ्गुली तु प्रसृते संसृष्टे खड्गमुद्रिका ॥ ५५॥ इति ॥

( वि. १५।५-९ सर्वः सं० )

१०॥१ **त्रिशूलमुद्रोद्धारः**। सटीकशारदा-१०-पटले-४७९ पत्रे-यथा-

**त्रिशुलमुद्रां** पाणिभ्यां बध्वात्मानं त्रिकण्टकीम्

ध्यायन् स्पृष्ट्वा जपेद्ग्रस्तं **सद्यस्तं मुञ्चतिग्रहः** ॥ ४७ ॥

२-एतच्छोलोकटीकायां-यथा—

॥ त्रिशूलमुद्रामिति। सा तु कनिष्ठाङ्गुष्ठसंयोगात् शेषाणां तु प्रसारणात् ॥ इत्यादि

टीका-दृश्यात्र-( उपरितनपत्रे- )

३-मुद्राप्रकारे-४२-श्लोके-तु-

॥ अङ्गुष्ठेन कनिष्ठान्तु बध्वा श्लिष्टाङ्गुलित्रयम्।

प्रसारयेत् **त्रिशूलाख्या** मुद्रैषा परिकीर्तिता ॥ इति ॥

( १५।५-१०-वि. सं-० )

११-**लिङ्गमुद्रालक्षणं तु**-। सटीकशारदा०-१८ पटले०-७१६ पत्रे-

श्रीशिवपूजायां-**ध्यायेन्नित्यमिति**-१३ श्लोकटीकायां-यथा-

॥ उच्छ्रितं दक्षिणाङ्गुष्ठं, वामाङ्गुष्ठेन बन्धयेत्।

वामाङ्गुलीर्दक्षिणाभिरङ्गुलीभिश्च [2]वेष्टयेत्।

**लिङ्गमुद्रेय**माख्याता, **शिवसान्निध्यकारिणी** ॥ इति ॥

---

१ मुद्राप्रकारे तु। तले तलं तु करयोरिति पाठः ॥

२ मुद्राप्रकारे तु बन्धयेदिति पाठः

इयं-सर्वशैवमन्त्रसाधारणीति-ज्ञेयम् ॥' ( १५।५-वि. सर्वः सं० )

॥ इति यथोपलब्धश्रीशैवमुद्राः सम्पन्नाः ॥

**द्वि. परि. वि. १५।६ । केवलश्रीसरस्वतीमुद्रोद्धारविषये ॥**

**१५।६१-श्रीज्ञानमुद्रोद्धारः** ज्ञानार्णवतन्त्रे-४ पटले-१४ पत्रे-यथा-

॥ तर्जन्यङ्गुष्ठयोगे तु दक्षहस्ते तु पार्वति ॥ ४० ॥

**अक्षमालेति** मुद्रेयं **ज्ञानमुद्रा** च वै भवेत् ॥ इति ॥

**२ प्रकार**-। सटीकशारदातिलके-६ पटले-३५८ पत्रे-४ श्लोकटीकायां-यथा-

ज्ञानमुद्रा । अङ्गुष्ठतर्जनीयोगरूपा पार्श्वाभिमुखी । यदाहुः—

॥ श्लिष्टाग्रेऽङ्गुष्ठतर्जन्यौ प्रसार्य्योऽन्याः प्रयोजयेत् ।

पार्श्वस्याभिमुखी सेयं **ज्ञानमुद्रा** प्रकीर्त्तिता ॥ इति ॥

**३ प्र.** मुद्राप्रकारनामकग्रन्थे-यथा-

॥ तर्जन्यङ्गुष्ठकौ सक्तावग्रतोहृदि विन्यसेत् ॥

वामहस्ताम्बुजं वामजानुमूर्धनि विन्यसेत् ॥

**ज्ञानमुद्रा** भवेदेषा **रामचन्द्रस्य प्रेयसी** ॥ इति २२-श्लो. ॥

( १५।६-१ वि. सर्वः सं. )

**१५।६-२।१-अक्षमालामुद्रोद्धारः** । तत्रैव-मुद्राप्रकारे ४-पत्रे-यथा-

॥ अङ्गुष्ठतर्जन्यग्रे तु ग्रथयित्वाङ्गुलित्रयम्

प्रसारयेद**क्षमाला मुद्रेयं** परिकीर्तिता ॥ इति ॥

१५।६-२।२ ज्ञानार्णवे-४ पटले-१४ पत्रे-४०-श्लो. यथा-

॥ तर्जन्यङ्गुष्ठयोगेतु दक्षहस्तेतु पार्वति ।

**अक्षमालेति** मुद्रेयं **ज्ञानमुद्रा**-च-वै भवेत् ॥ (१५।६-२-२ वि. सं.)

**१५।६-३-पुस्तकमुद्रोद्धारः** । सटीकशारदातिलके-६ पटले-३५८ पत्रे-४ श्लोक टीकायां यथा-विद्यां[1] पुस्तकं तन्मुद्रेत्यर्थः-

॥ वाममुष्टि स्वाभिमुखी बद्ध्वा **पुस्तकमुद्रिका** ॥ इति ॥

२-मुद्राप्रकारे

वाममुष्टिं स्वाभिमुखीं कृत्वा संचालयेच्छिरः ॥ इति ॥

३-ज्ञानार्णवतन्त्रे-४ पटले-१४ पत्रे-यथा—

॥ पुस्तकवद्वामकरं कुर्यात् समतलं प्रिये ।

**पुस्तकं नाम मुद्रेयं वाग्विलासं प्रयच्छति** ॥ इति ॥

( १५।६-३ वि. सर्वः सं. )

---

१ अर्थात्-विद्यामुद्रा-पुस्तकमुद्रा-एका-एवेति-ध्वनितम्—

४-**वीणामुद्रोद्धारः** ॥ मुद्राप्रकारे-यथा—

॥ वीणावादनबध्धस्तौ कृत्वा संचालयेच्छिरः ।

**वीणामुद्रा** समाख्याता सरस्वत्याः प्रियङ्करी ॥ ६४ ॥ इति ॥

५।१ **व्याख्यानमुद्रोद्धारः** । सटीकशारदा० ७ पटले-४०५ पत्रे-८२ श्लोकटीकायां-यथा-

॥ श्लिष्टाग्रेऽङ्गुष्ठतर्जन्यौ प्रसार्य्याऽन्याः प्रदर्शयेत् ।

प्रयोज्याऽभिमुखं सैषा मुद्रा **व्याख्यान**संज्ञिता ॥ इति ॥

२-**मुद्राप्रकारेः**

॥ दक्षिणाङ्गुष्टतर्जन्यावग्रलग्ने पराङ्गुली ।

प्रसार्यसंहतोत्तानं एषा **व्याख्यानमुद्रिका** ॥६६॥ इति ॥

( १५।६-५ वि. सं० )

॥ इति **श्रीसरस्वतीदेवतामुद्रोद्धारः** वि. १५।६ सर्वः सम्पन्नः ॥

॥ द्वि. परि. वि. १५।७ **श्रीदुर्गामुद्रोद्धार**विषये ॥

१-**श्रीदुर्गामुद्रोद्धारः**-सटीकशारदा०-११-पटले-४९४-पत्रे-५ श्लोक टीकायां-यथाः-

॥ सर्व्वदुर्गामन्त्रेषु ध्यानानन्तरमियं मुद्रा दर्शनीया

॥ मुष्टिं बद्ध्वा कराभ्यां तु वामस्योपरि दक्षिणम् ।

कृत्वा शिरसि [1]सम्पूज्या **दुर्गामुद्रेय**मीरिता ॥ इति ॥

२-**गदामुद्रोद्धारः** सटीकशारदा०-१५ पटले-६०८ पत्रे-७ श्लोकटीकायां यथाः-

॥ वाममुष्टयन्तरेऽङ्गुष्ठं दक्षिणे सरलाङ्गुलीः ।

वामाङ्गुष्ठः स्पृशेदग्रे योजितः सरलोदरः ॥

अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुलीः ।

अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते ॥

**गदामुद्रेय**माख्याता भुक्तिमुक्तिकरी तथा । इति ॥

३-**वज्रमुद्रोद्धारः** । सटीकशारदा०-२३ पटले-८५१ पत्रे-१३२ श्लो० टीकायां-यथाः-

---

१ संयोज्य-इति मुद्राप्रकारे पाठः ॥

॥ कनिष्ठाङ्गुष्ठयुङ्मुद्रा त्रिकोणा **त्वशनेर्मता** ॥

इति-अशनिमुद्रालक्षणम् ॥

४—**तर्जनीमुद्रोद्धारः** । मुद्राप्रकारेऽन्तिमपत्रे—यथाः—

॥ वाममुष्टिं विधायाथ तर्जनीमध्यमे ततः ।
प्रसार्य **तर्जनीमुद्रा** निर्दिष्टा वज्रपाणिना ॥ ११४ ॥ इति ॥

५—**मुषलमुद्रोद्धारः** । सटीकशारदा०—४ पटले-२६४ पत्रे, अन्यासां लक्षणानि, इत्यत्र—यथाः—

॥ मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम् ।
कुर्य्यान्**मुषलमुद्रेयं** सर्वे विघ्नप्रणाशिनी ॥ इति ॥

**१५७—६—॥ अङ्कुशसर्वमहाङ्कुशमुद्रोद्धारः ॥**

१—ज्ञानार्णवतन्त्रे—४ पटले—१४ पत्रे—यथाः—

॥ मुष्टिं बध्वा दक्षकरे तर्जन्यङ्कुशरूपिणी ॥ ४१ ॥
**अङ्कुशाख्या** महामुद्रा **त्रैलोक्याकर्षिणीभवेत्** ॥ इति ॥

२—**प्रकारः** ॥ आनन्दाश्रमग्रन्थावलि ७३ अङ्कमुद्रितश्री. गा. पु. पद्धतौ ९ पत्रे—घारे, इत्युपनामकश्रीशङ्करसूरिर्दर्शयति—यथाः—

॥ सर्वाङ्गुलीः समाकुञ्च्य वामहस्तस्य तर्जनीम् ।
प्रगृह्य साधकेन्द्रस्तु दक्षिणेन तु पृष्ठिना ॥
प्रसार्य तर्जनीं तस्य ईषदग्रे विकुञ्चयेत् ।
**अङ्कुशा तु** इयं मुद्रा **वश्यकर्मविधौ** मता ॥ इति ॥

३—॥ मुद्राप्रकारे—

॥ ऋज्वीं च मध्यमां कृत्वा तर्जनीमध्यपर्वणि ।
संयोज्याकुञ्चयेत् किञ्चित् **मुद्रैषाङ्कुशसंज्ञका** ॥ ५२ ॥ इति ॥

४—**सर्वमहाङ्कुशामुद्राशब्दार्थः**—प. क. सू. ५ खण्डे-श्रीललिताक्रमे-१५२—१५३—पत्रयोः—१ सूत्रभाष्ये--यथाः—

॥ षष्ठी तु—इदमेव पूर्वोक्तं शिखाद्वयं यदा वामाप्रधानं तदा सर्वमहाङ्कुशा । सूक्ष्मरूपेण परमाशिवकुक्षौ स्थितं जगत् । यथा अन्तस्थोगजः, अङ्कुशेन बहिराकृष्यते-तथा सर्वस्य बहिराकर्षणात्, सर्वमहाङ्कुशेत्युच्यते । परशिवकु**क्षिस्थजगतोवमनात**, वामा तत्प्रधाना शिखा **सर्वमहाङ्कुशा**, इत्युच्यते । तदप्युक्तं—योगिनीतन्त्रे—

वामाशक्तिप्रधाना तु महाङ्कुशमयी पुनः ।
तद्वद्विश्वं वमन्ती सा द्वितीये तु दशारके ॥ इति ॥

अतएव—पूर्वमुद्रायां सरलयोरनामयोः वक्रता दृश्यते । लोके वमनवेलायां मानवो धनुराकारोवक्रोभवति । प्रसिद्धमेतत् ।

॥ अत्रायं विवेकः—केवलवामात्वं सर्वसंक्षोभिणीपदप्रवृत्तिनिमित्तं, ज्येष्ठात्वविशिष्ट-वामात्वं सर्वाकर्षणीपदप्रवृत्तिनिमित्तं, सूक्ष्माकाशान्तर्वृत्तिबिन्दुद्वयत्वं सर्ववश्यकरपदप्रवृत्ति-निमित्तं, ज्येष्ठाशक्तिप्रधानकबिन्दुद्वयमध्यवृत्तिरेखात्वं सर्वोन्मादिनीपदशक्यताऽवच्छेदकं, वामाशक्तिप्रधानत्वं सर्वमहाङ्कुशापदशक्यताऽवच्छेदकं, एवं रीत्या वैलक्षण्यं सूक्ष्मधिया द्रष्टव्यम् ॥ इति ॥

५—॥ **सर्वमहाऽङ्कुशामुद्रोद्धारः**—प. क. सू. ५ खण्डे श्री ललिताक्रमे १६९ पत्रे—१५ सूत्रभाष्ये—यथा—

॥ षष्ठी मुद्राऽपि सर्वमहाङ्कुशा—तत्रैव प्रकटिता—

॥ [1]अस्यास्त्वनामिकायुग्ममधः कृत्वाऽङ्कुशाकृति ।
तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ॥
**इयं महाङ्कुशा मुद्रा सर्वकार्यार्थसाधिनी** ॥ इति ॥

६—अत्र भाष्यम्—अस्याः सर्वोन्मादिन्याः । तेनैव क्रमेण अनामिकाक्रमेण ।
अनामिकाऽङ्कुशाकारा । तथैव तर्जनीद्वयमपि कर्तव्यम् ।
शेषं पूर्वमुद्रावत्—इति भावः ॥

( १५।७—६ वि. सं. )

१५।७—७—**नाराचमुद्रोद्धारः**—प. क. सू. ६ खण्डे—श्यामाक्रमे—२०४ पत्रे ३५ सूत्रभाष्ये—परमानन्दतन्त्रे—यथा—

१—॥ विमुष्टयङ्गुष्ठतर्जन्यावूर्ध्वाङ्गुष्ठाग्रतर्जनी ।
हस्तद्वयगता चैवं मुद्रा **नाराच**संज्ञिता ॥ इति ॥

**अयमर्थः**—प्रथमं हस्तद्वये मुष्टिभावं सम्पाद्य तस्यानिर्गते विमुष्टी ये अङ्गुष्ठतर्जन्यौ, तयोर्मध्ये ऊर्ध्वाग्रमङ्गुष्ठं प्रागग्रां ऋजुरूपां तर्जनीं कुर्यात् । इयं नाराचमुद्रेत्यर्थः ॥ ३५ ॥ इति ॥

२—सटीकशारदा—४—पटले—२४८ पत्रे—२४ श्लोकटीकायां—यथा—

अन्यत्रापि

१ अत्र अस्याः नाम उन्मादिनी—इत्यवसेयम ।

॥ अङ्गुष्ठमग्रं यदि मध्यमाग्रं स्पृशेत् स्युरन्याङ्गुलयस्त्वलग्नाः ।
तदा भवेत् **भूतनिषूदनस्य नाराचनाम्नोऽस्त्रवरस्य** मुद्रा ॥ इति ॥

३—तत्रैव—२५६ पत्रे—३३ श्लोके टीकायां च—यथा—
॥ अङ्गुष्ठतर्जन्यग्राभ्यां स्फोटो**नाराचमुद्रिका** ॥ इति ॥

( १५।७—७ वि. सर्व. सं. )

॥ **पाशमुद्रायाम्**

१५।७—८—**पाशमुद्रोद्धारः** ॥ ज्ञानार्णवे—४ पटले—१४ पत्रे—यथा—

१— ॥ तर्जनीयुगलं देवि वामांसे शृङ्खलाकृति ।
**पाशमुद्रा** समाख्याता **त्रैलोक्याकर्षणक्षमा** ॥ इति ॥

२— ॥ **पाशमुद्रालक्षणं यथा**—सटीकशारदा०—९ पटले—४४३ पत्रे—१६ श्लोकटीकायां—यथा—

॥ वाममुष्टिस्थतर्जन्या दक्षमुष्टिस्थतर्जनीम् ।
संयोज्याऽङ्गुष्ठकाग्राभ्यां तर्जन्यग्रे खके क्षिपेत् ॥
एषा **पाशस्य** मुद्रेति विद्वद्भिः परिकीर्तिता ॥ इति ॥

३—॥ सटीकशारदा०—१७ पटले—६८४ पत्रे—यथा—
अथवेयं पाशमुद्रा । यदाहुः —
॥ तर्जन्यङ्गुष्ठकौ कृत्वा सक्ताग्नौ कुञ्चिताः पराः ।
**पाशमुद्रा** समाख्याता ॥ इति ॥

४—मुद्राप्रकारे ५१—श्लोके यथा—
॥ वाममुष्टेस्तु तर्जन्या दक्षमुष्टेस्तु तर्जनीम् ।
संयोज्याङ्गुष्ठकाग्राभ्यां तर्जन्यग्रे समुत्क्षिपेत् ॥
एषा **पाशाह्वया** मुद्रा विद्वद्भिः परिकीर्तिता ॥ ५१ इति ॥

( १५।७—८ वि, सर्व. सं. )

१५।७—९।१—**चक्रमुद्रोद्धारः** ॥ आनन्दाश्रमग्रन्थावलि—७२ अङ्कमुद्रितघारे इत्युपनामकशङ्करसूरिविरचित—श्री. गा. पु. पद्धतौ—१० पत्रे—यथा—

॥ हस्तौ तु संमुखौ कृत्वा [1]संलग्नौ तु प्रसारितौ ।
कनिष्ठाङ्गुष्ठकौ लग्नौ **मुद्रा चक्रस्य** सिद्धिदा ॥ इति ॥

---

१ मुद्राप्रकारग्रन्थे तु—उद्भुग्नौ सुप्रसारितौ—इति—पाठः ॥

२–सटीकशारदा–४–पटले–२६४–पत्रे–४९ श्लोकटीकायां–यथा—

॥ विपर्य्यस्ते तले कृत्वा वामदक्षिणहस्तयोः ।

अङ्गुष्ठौ ग्रथयेच्चैव कनिष्ठानामिकान्तरे ॥

**चक्रमुद्रेय**मुद्दिष्टा सर्वसिद्धिकरी शुभा ॥ इति ॥

( १५।७–९ वि.सर्व. सं. )

**१५।७-१० ॥ चापमुद्रोद्धारः**

१–ज्ञानार्णवतन्त्रे–४ पटले–१४ पत्रे–यथा—

॥ यथा हस्तगतं चापं तथा हस्तं कुरु प्रिये ॥ ४३ ॥

**चापमुद्रेय**माख्याता वामहस्ते व्यवस्थिता ॥ इति ॥

२–सटीकशारदा०–१७–पटले–६८४ पत्रे, टीकायां–यथा—

॥ वामस्य मध्यमाग्रं तु तर्जन्यग्रे नियोजयेत्

अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् ।

दर्शयेद्दक्षिणे[1]स्कन्धे **धनुर्मुद्रेय**मीरिता ॥ इति ॥

३–तत्रैव

अथवेयं धनुर्मुद्रा ज्ञेया । यदाहुः—

॥ बाहुमूलं स्पृशेत्तेन बाह्वग्रेणैव साधकः ।

**धनुर्मुद्रा यशःकीर्तिबलवीर्यविवर्धिनी** ॥ इति ॥

( १५।७–१० वि. सं. )

**११।१ बाणमुद्रोद्धारः**

ज्ञानार्णवे–४ पटले–१४ पत्रे–यथा—

॥ यथा हस्तगतोबाणस्तथा हस्तं कुरु प्रिये ॥ ४४ ॥

**बाणमुद्रेयमाख्याता** रिपुवर्गनिकृन्तनी ॥ इति ॥

२–मुद्राप्रकारे–

॥ दक्षमुष्टिस्तु तर्जन्या दीर्घया **बाणमुद्रया** ॥ इति ३४ श्लो. ॥

( १५।७–११ वि. सर्वः सं. )

**१५।७-१२–शिखा [2]कवच, [3]नेत्रास्त्रमुद्राणां युगपदुद्धारः ।**

सटीकशारदा०–४ पटले–२५८ पत्रे-३४ श्लोकटीकायां–यथा—

---

१ मुद्राप्रकारनाम्नि ग्रन्थे–दर्शयेद्वामके स्कन्धे–इति–३३ श्लो.के–

१–ज्येष्ठावधःप्रसक्ताग्रौ कनिष्ठावुर्ध्वतस्तथा ॥
कुर्य्यात् सेयं **शिखामुद्रा** सर्व्वोपद्रवनाशिनी ।
२–कृत्वाऽङ्गुष्ठौ प्रसक्ताग्रौ तर्जन्यौ च त्रिकोणवत् ॥
मूर्द्ध्नि पश्चान्मुखं कृत्वा नयेदुभयपार्श्वतः ।
करौ हृदन्तर्मुद्रेयं **कवचस्या**ऽभयप्रदा ॥
३–कृत्वा नेत्रोन्मुखं हस्तं सक्ताङ्गुष्ठकनिष्ठिकम् ।
प्रसार्य्य मध्यमां किञ्चिन्नमयेदितराङ्गुलीः ॥
**नेत्रमुद्रे**यमुद्दिष्टा रक्षोभूतार्त्ति भञ्जिनी ।
४–परस्परतलद्वन्द्वं पुनरास्फोटयेद्भृशम् ॥ इति ॥ (**इयमस्त्रमुद्रा**-ज्ञेयेत्यर्थः)

**१३–पुनरपि चास्त्रशिखाकवचमुद्रोद्धारः।**

प. क. सू. ३ खण्डे–श्रीक्रमे-१९ सूत्रभाष्ये १०४–पत्रे–यथा—

॥ **शिखाऽङ्गुष्ठेन** विन्यस्य दशभिः **कवचं** न्यसेत् ॥ इति ॥

**१५।७-१४–केवलास्त्रमुद्रोद्धारः ॥**

१–अथ प्रमाणानि १ प. क. सू. ३ खण्डे १०४–पत्रे-१९ सूत्रभाष्ये–यथा—

॥ तर्जनीमध्यमाभ्यां तु **ततोस्त्रं** विन्यसेत् प्रिये। इति श्रीशिवोक्तिः श्रीशिवां प्रतीत्ति ॥

२–॥ इयं विचित्रा अग्निप्राकाररूपाऽपि अस्त्रमुद्रा–सटीकशारदा०-४ पटले, २४८ पत्रे–२४ श्लोकटीकायां–अग्निप्राकारमुद्रोक्ता प्रयोगसारे–यथा—

॥ त्रिशूलाग्रौ करौ कृत्वा व्यत्यस्तावभितोनयेत् ।
**अस्त्रमुद्रेयमाख्याना वह्निप्राकारलक्षणा।**
**परद्रोहप्रशमनी नागाशनिभयापहा** ॥ इति ॥

तदुक्तं–ततोऽस्त्रमन्त्रेण विशोध्य पाणित्रितालदिग्बन्धहुताशशालाम् । इति एषां फलमाह तेनेति ॥ २४ ॥ इति ॥

३–॥ सटीकशारदातिलके, ४ पटले, २५६ पत्रे, ३२ श्लोकोयथा—

॥ अस्त्रं तत्तलयोर्न्यस्य कुर्यात्तालत्रयादिकम् ॥ इति-मूलग्रन्थः ॥

॥ अत्रतलशब्देनान्तर्बाह्यमपि तलं गृह्यते० इत्यादि० ॥ इति ॥

४–अत्रटीका तत्रैव–कुर्यात्तालत्रयादिकमिति, अङ्गास्त्रविनियोगः तत्स्वरूपमुक्तमन्यत्र–

॥ प्रसारिततलाभ्यां तु तालत्रयमुदीरयेत् । इति ।

---

१ अत्रार्षत्वाद्व्या व्याकरणमचिन्त्यम्

५–तदग्रे-तत्रैव २५८ पत्रे–३३ श्लोकटीकायां–च–यथा—

॥ परस्परतलद्वन्द्वं पुनरास्फोटयेद्भृशम् ॥ इति ॥ ३२-३३ ॥

६–य. आ. सू. ५१ पत्रे-**अस्त्रमुद्रोद्धारो**यथा—

॥ दक्षस्य तर्जनीमध्ये सव्ये करतले क्षिपेत् ।

अभिघातेन **शब्दः स्यादस्त्रमुद्रा** समीरिता ॥ इति ॥

( १५।७–१४ वि. सर्वः सं. )

**॥ इति-श्रीदुर्गामुद्रोद्धारवि. १५।७ सर्वः-सपन्नः ॥**

॥ द्वि. परि. वि. १५–८ । **न्यासपूजोपयुक्तमुद्रोद्धारः** ॥

**१५–८/१ लेलिहानाख्यमुद्रोद्धारः**–सटीक श्रीमहानिर्वाणतन्त्रे-१३१-पत्रे-६

उल्लासे–श्रीमदाद्या-प्राणप्रतिष्ठाविधौ-यथा—

॥ इति त्रेधा यन्त्रमध्ये लेलिहानाख्यमुद्रया ।

संस्थाप्य विधिवत् प्राणान् कृताञ्जलिपुटोवदेत् ॥७१॥ इति ॥

२–एतच्छ्लोकटीकायाम् ॥ लेलिहानाख्यमुद्रा, श्रीदक्षिणामूर्तिसंहितायां–यथा–

॥ तर्जनीमध्यमानामाः समाः कुर्यादधोमुखीः ।

अनामायां क्षिपेद्वृद्धामृद्ध्वं कृत्वा कनिष्ठिकाम् ॥

**लेलिहा नाम मुद्रेयं** जीवन्यासे प्रकीर्तिता ॥ इति ॥ (१५-८।१–सं)

**१५–८/२ धेनुमुद्रोद्धारः** । प. क. सू. पत्रे–१ खण्डे–३७ सूत्रे–५७-५८–

पत्रयोः–मुले च, धेनुयोनिमुद्राकरणं-आज्ञप्तम् ।

अत्र–टीकायां वृत्तिकारः, धेनुयोनिमुद्रे प्रसिद्धे—इत्याह–तथापि, साधकानां सदुपयोगाय एषा उध्रियते–

अत्रैव-प. क. सूत्रे. ६ खण्डे-श्यामाक्रमे-१८ सूत्रभाष्यान्ते, १९८ पत्रे, यथा—

इयं लोके बहुरूढा । तथापि तत्प्रमाणं लिख्यते–

॥ तर्जन्यादिचतुष्कं तु प्रोतं हस्तद्वयस्थितम् ।

दक्षतर्जन्यनामायां वाममध्यकनिष्ठिके ॥

वामतर्जन्यनामायां दक्षमध्यकनिष्ठिके ।

अधोमुखी **धेनुमुद्रा**—॥ इति ॥

१ दूद्ध्वीमिति–मुद्राप्रकारे–पाठः

३-**ज्ञानार्णवे**-४-पटले-१४-पत्रे-३७ श्लोके, यथा-

॥ परिवर्त्य करौ पश्चात् तर्जनीमध्यमायुगम् ।

कनिष्ठानामिकायुग्मं परस्परयुतं कुरु ॥ ३७ ॥

**धेनुमुद्रेय**माख्याता **अमृतीकरणं भवेत्**-॥ इति ॥

४-**आनन्दाश्रम**ग्रन्थावलि-७३-अङ्कमुद्रितश्रीगा-पु-पद्धतौ-९-पत्रे-घारे, इत्युपनामकश्रीशङ्करसूरिर्दर्शयति, यथा—

॥ वामाङ्गुलीनां मध्ये तु, अङ्गुष्ठं त्वथ दक्षिणम् ।

नियोज्य तर्जनीं दक्षां मध्यया वामतर्जनीम् ॥

वामयाऽनामया दक्षां कनिष्ठां च नियोजयेत् ।

दक्षयाऽनामया वामां कनिष्ठां च नियोजयेत् ॥

ततस्त्वधोमुखाः कुर्याद्धेनुमुद्रा प्रकीर्तिता ॥ इति ॥

५-तत्रैव तदनु-१० पत्रे, प्रकारान्तरेण मुद्रा-इत्यत्र-यथा-

**धेनुमुद्रैवामृ**ती-मुद्रा-

॥ अन्योन्याङ्गष्ठसंलग्नविस्तारितकरद्वया ।

**महामुद्रेय**माख्याता **न्युनाधिकसमापनी** ॥ इति ॥

६-सटीकशारदा० २३ पटले-८४३ पत्रे-यथा-

॥ अन्योन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः ।

तथा च तर्जनीमध्या **धेनुमुद्रा** समीरिता ॥ ११२ ॥

अत्र टीका-यथा-**अमृतीकरणं** कुर्यात्तया देशिकसत्तमः ॥ इति ॥

धेनुमुद्रामाह अन्योन्येति । कनिष्ठाऽनामिका अन्योन्याभिमुखाश्लिष्टा-तर्जनीमध्या तथैवान्योन्याभिमुखाश्लिष्टेत्यर्थः । हस्तद्वयाङ्गुल्यः अन्योन्यान्तरालप्रदेशेन पूर्वमध्यतः कृतदक्षकनिष्ठाव्यतिषक्ताः कार्याः । तत्र दक्षकनिष्ठा दक्षानामापृष्ठमुल्लङ्घ्य तद्वामभागमागता वामानामिकया योज्या। वामा कनिष्ठा तु, यथास्थितैव दक्षानामया । एवं वामतर्जनी-वाममध्यमापृष्ठमुल्लङ्घ्य तद्दक्षभागागतदक्षमध्यमया योज्या । दक्षतर्जनी यथास्थितैव वाममध्यमया योज्या । तदुक्तम्-

७-तत्रैव ॥ वामाङ्गुलीर्दक्षिणानामङ्गुलीनां च सन्धिषु ।

प्रवेश्य मध्यमाभ्यां तु तर्जन्यौ द्वे प्रयोजयेत् ।

कनिष्ठे द्वेऽनामिकाभ्यां युञ्ज्यात् सा **धेनुमुद्रिका** ॥ इति ॥

८ य–आ–सु–५१ पत्रे–धेनुमुद्रोद्धारोद्विधाभिहितोयथा–

॥ दक्षानामासमायुक्ता वामहस्तकनिष्ठिका ।
वामानामासमायुक्ता दक्षपाणिकनिष्ठिका ॥
दक्षस्य मध्यमाक्रान्ता वामहस्तस्य तर्जनी ।
वाममध्यमयाक्रान्ता दक्षहस्तस्य तर्जनी ॥
संयुक्तौ कारयेद्विद्वानङ्गुष्ठावुभयोरपि ।
**धेनुमुद्रा** निगदिता **गोपिता साधकोत्तमैः** ॥

॥ परिवृत्तकरौ पश्चात्तर्जनीमध्यमे युते ।
कनिष्ठानामिकाङ्गुष्ठं परस्परयुतं कुरु ॥
**धेनुमुद्रेय**माख्याता **अमृतीकरणं** भवेत् ॥ इति ॥

( १५–८।१ वि–सं. )

**१५।८–२–॥ योनिमहायोनिमुद्रोद्धारः ॥**

१–॥ योनिमुद्रोद्धारः । प. क. सू. १ खण्डे-३७ सूत्रे,१ **टिपण्यामनुसन्धानम्** ॥

॥ अस्याः योनिमुद्रायाउद्धारोऽत्रैव प. क. सू.–५ खण्डे–श्रीललिताक्रमे १७०-पत्रे १५–सूत्रभाष्ये, मध्यमे कुटिलेत्यादितउदितः ॥ ततोविज्ञाय–एषा मुद्रा कार्यायद्य-परिशीलिता स्यात्–॥ इति ॥

२–॥ **महायोनिमुद्रोद्धारो**ऽप्यत्रैव-१७०–पत्रे-योनिमुद्रोद्धारान्तरं-लिखितः–
॥ इति–विदाङ्कुर्वन्तु विद्वांसः ॥ इति ॥

३–॥ **योनिमुद्रोद्धारः**–सटीकशारदा०-४ पटले–२६४ पत्रे–यथा —

॥ मिथः कनिष्ठिके बध्वा तर्जनीभ्यामनामिके ।
अनामिकोर्ध्वगाश्लिष्टदीर्घमध्यमयोरधः ।
अङ्गुष्ठाग्रद्वयं न्यसेद्**योनिमुद्रे**यमीरिता ॥ इति ॥

४–॥ **महायोनिमुद्रोद्धारः** । मुद्राप्रकारे-८८–श्लोकेतोयथा —

॥ तर्जन्यनामिकामध्ये कनिष्ठाक्रमयोगतः ।
करयोर्योजयित्वैव कनिष्ठामूलदेशतः ॥
अङ्गुष्ठाग्रे तु निक्षिप्य **महायोनिः** प्रकीर्तिता ॥ इति ॥

---

१ मुद्राप्रकारे ४१ श्लोके–तु अनामिकोर्ध्वसंश्लिष्ट–इति पाठः ॥

॥ **पञ्चमुद्रामयी योनिमुद्रा** ॥ तल्लक्षणं-**विशेषश्च**-

५-॥ योनिमुद्रातः । त्रैलोक्यक्षोभिणी, त्रैलोक्यद्राविणी, त्रैलोक्याकर्षिणी, त्रैलोक्यवशङ्करी, त्रैलोक्योन्मादकारिणी, इति, **पञ्चमुद्रामयी-योनिमुद्रा**-यथाः-

॥ ज्ञानार्णवतन्त्रे-४ पटले-१५ पत्रे-५१ श्लोकतः ५६ श्लोकान्तं यावत् ॥यथाः—

॥ परिवर्त्य करौ सम्यक्तर्जनीवाहनी समे ॥ ५१ ॥
मध्यमे कुरु तन्मध्ये योजयेत्तदनन्तरम् ।
अन्योन्यानामिके देवि कनिष्ठे तु यथास्थिते ॥ ५२ ॥
अङ्गुष्ठाभ्यां योजिताभ्यां योन्याकारं तु कल्पयेत् ।
**योनिमुद्रे**यमाख्याता परा त्रैलोक्यमातृका ॥ ५३ ॥
॥ इयमेव हृदि क्षिप्ता **त्रैलोक्यक्षोभिणी** भवेत् ।
॥ **त्रैलोक्यद्राविणी** नाम मुखस्था परमेश्वरि ॥ ५४ ॥
॥ भ्रूमध्यस्था महादेवि **त्रैलोक्याकर्षिणी** भवेत् ।
॥ ललाटस्था महादेवि **त्रैलोक्यवशकारिणी** ॥ ५५ ॥
॥ ब्रह्मरन्ध्रस्थिता देवि **त्रैलोक्योन्मादकारिणी** ।
पञ्चमुद्रामयीं मुद्रां **योनिमुद्रां** च दर्शयेत् ॥ ५६ ॥ इति ॥

६-॥ इतरप्रकारेण-**योनिमुद्रा-योनिबन्धस्तत्फलं-च**-यथा—

॥ सटीकशारदा०-२-पटले-९५ पत्रे-**मन्त्रशोधनविषये**-

शोधयेदूर्ध्वपवनोबद्धया योनिमुद्रया ॥ इति-मूलग्रन्थः-श्लोकः १११-॥ इति ॥

॥ अत्र टीकाः—

प्रकारान्तरेण शोधनमाह-**शोधयेदिति**। वक्ष्यमाणलक्षणां योनिमुद्रां बध्वा मूलाधारोत्पन्नान् मन्त्रवर्णान् ब्रह्मरन्ध्रपर्यन्तं गतागतानि कुर्वतोध्यात्वा वायुधारणं कृत्वा सहस्रं जपेदिति-शोधनप्रकारमाहुः । तदुक्तम्-योनिं बध्वा बीजं बिन्द्वादिपथेन चोन्मनीं प्राप्य-तत्र सहस्रं मन्त्रं जपेत्-समन्त्रः प्रबुद्धः स्यात्-इति ।

**योनिबन्धलक्षणं**-यथा—

॥ पार्ष्णिभागात सुसम्पीड्य योनिमार्गं तथा गुदम् ।
अपानमूर्ध्वमाकर्षे**न्मूलबन्धो**निगद्यते ॥
गुदमेढान्तरं योनिस्तामाकुञ्च्य प्रबन्धयेत् ।
**युवा भवति वृद्धोऽपि सततं मूलबन्धनात्** ॥ इति ॥

योनिस्थानमुद्रणात् योनिमुद्रात्वमस्याः । तदाहुः—

॥ सेयं मयोक्ता खलु **योनिमुद्रा बन्धश्च देवैरपि दुर्लभोऽस्याः** ।

( अत्र-स्फोटः )

अनेन बन्धेन न साध्यते यन्नास्त्येव तत् साधकपुङ्गवस्य ॥

छिन्नारुद्धाःकीलिताः स्तम्भितायेे सुप्तामत्तामूर्च्छिताहीनवीर्य्याः ।

दग्धास्त्रस्ताः शत्रुपक्षे स्थितायेे बालावृद्धागर्विताश्यौवनेन ॥

ये निर्बीजाये च सत्त्वेन हीनाः,खण्डीभूताश्चाङ्गमन्त्रैर्विहीनाः ।

**एते मुद्राबन्धनेनैव योन्यामन्त्राःसर्वे वीर्यवन्तोभवन्ति ॥**

इति ॥ १११ ॥

( १५।८–२ वि. सं.)

**१५।८–३–॥ व्यापकमुद्रोद्धारः ॥**

१–इयं व्यापकमुद्रा–अत्रैव–प. क. सू. २ खण्डे-गणनायकपद्धतौ–७५ पत्रे–४ सूत्रभाष्ये–उक्ता —यथा —

॥ सकलमूलेन करतलाभ्यां सर्वाङ्गे विन्यसेत् । इदमेव व्यापककरणम् ।

तदुक्तं, परमानन्दतन्त्रे —

॥ तलाभ्यां निखिलाङ्गस्य स्पर्शनं **व्यापकं** भवेत् ॥ इति ॥

२–श्रीसटीकमहानिर्वाणतन्त्रे-५-उल्लासे–१२४ श्लोकटीकायां च-यथा—

॥ मूलमन्त्रेण हस्ताभ्यामापादमस्तकावधि ।

मस्तकात् पादपर्य्यन्तं सप्तधा वा त्रिधा न्यसेत् ।

अयन्तु **व्यापकन्यासो**यथोक्तफलसिद्धिदः ॥१२४॥

अत्र टीका–अथ व्यापकन्यासं ब्रूते । मूलेत्यादिना । आपादमस्तकावधि पादमारभ्य मस्तकपर्य्यन्तं मस्तकमारभ्य पादपर्य्यन्तं च प्रतिहस्ताभ्यां मूलमन्त्रेण सप्तधा सप्तवारं त्रिधा वा न्यसेन्न्यासं कुर्यात् । मस्तकादिति–ल्यब्लोपे कर्म्मण्यधिकरणे चेति· कर्म्मणि पञ्चमी ॥ १२४ ॥ ॥ इति ॥

३–॥ व्यापककरणाय प्राक्तनश्रीमदाद्यार्चनपद्धतौ–यथा—

॥ अथ व्यापकन्यासः ॥ तत्र, प्रणवादिनमोन्तेन मूलमन्त्रेण केशादिपादान्तम् आपादादि केशान्तं, सप्तधा व्यापकं कुर्यात् ॥ इति-व्यापकन्यासः ॥ इति ॥

( १५।८–३ वि. सं. )

**१५।८–४–अवगुण्ठनीमुद्रायाम् ॥**

१–**अवगुण्ठनीमुद्राशब्दार्थः** । कुलार्णवे-१७ उ. १५८ पत्रे-यथा—

॥ आच्छादनं समुद्दिष्ट**मवगुण्ठन**मीरितम् ॥ इति ॥

२ –**अवगुण्ठनमुद्रोद्धारः** –प. क. सू. ६ खण्डे, १९८–पत्रे–१८ सूत्रभाष्ये-अवकुण्ठन-मुद्रास्वरूपमुक्तं तन्त्रे–यथा–

॥ हस्तद्वयं मुष्टिरूपं तर्जन्यावृजुरूपके ।

युगपत् भ्रामयेत् ताभ्यां **मुद्रेयमवकुण्डिनी** ॥

इति, प्रजगुः ॥ इति ॥

३–॥ **अवकुण्ठिन्यन्तत्रिमुद्राणामुद्धारः**--ज्ञानार्णवे–४ पटले–१४ पत्रे–३३-३४ श्लोकयोः -यथा–

**अपरा** च–॥ मिलितं मुष्टियुगलं-**संनिधापन**रूपिणी ।

अन्तरङ्गुष्ठमुष्टिभ्यां–**संनिरोधन**रूपिणी ॥

एतस्याएव मुद्रायास्तर्जन्यौ सरले यदा ।

सव्यापसव्यभ्रमणान्मुद्रेयम**वगुण्ठनी** ॥ इति ॥

४–केवलावगुण्ठनमुद्रोद्धारः

॥ आनन्दाश्रमग्रन्थावलि ७३ अङ्कमुद्रितघारे-इत्युपनामकशङ्करसूरिविरचितश्री गा. पु. पद्धतौ, १० पत्रे-यथा–

॥ तर्जनीभ्रमणेनैव **अवगुण्ठन**मीरितम् ॥ इति ॥

( १५।८-४ वि. सं. )

१५।८–५–॥ **सर्वसंक्षोभिणीमुद्रायाम्** ॥

१–**सर्वसंक्षोभिणीमुद्राशब्दार्थः**–प. क. सू. ५ खण्डे-श्रीललिताक्रमे-१५१ पत्रे–१ सूत्रभाष्ये–यथा–

॥ सर्वसंक्षोभिणीपदार्थश्च इत्थं–सर्वान् पदार्थभूतान् क्षोभयतीति उत्पादयतीति सर्वसंक्षोभिणी, कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताऽऽश्रयेति यावत् । इयमेव वामा शक्तिरित्युच्यते ।

एदुक्तं–योगिनीतन्त्रे–

योनिप्राचुर्यतस्सैषा सर्वसंक्षोभिका पुनः ।

वामाशक्तिप्रधानेयम्............॥ इति ॥

योनिःकारणत्वानि तेषां प्राचुर्यतोभूयस्त्वेन । अतएव सर्वसंक्षोभिण्याब्राह्यस्वरूपे अङ्गुलीग्रथनात्मकेऽपि अङ्गुष्ठे कनिष्ठानामामध्यमाग्राणां योगे योनिभूयस्त्वं प्रत्यक्षेणानुभूयते । एतेन अदृश्यरूपमपि तथेत्युन्नेयम् ॥ इति ॥

२–**सर्वसंक्षोभिणी**मुद्रोद्धारः । अत्रैव-प. क. सू. श्रीललिताक्रमे–५ खण्डे-१९ सूत्रभाष्ये–१६८ पत्रे–यथा—

---

१ अत्र मुद्रावाचकशब्दसमूहे–अवकुण्ठिनी–अवगुण्ठनी–एवं शब्दद्वयमपि सुप्रसिद्धं वर्तते ततोन मुग्धव्यम् ।

॥ मध्यमे मध्यगे कृत्वा कनिष्ठाङ्गुष्ठरोधिते ।
तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके ॥
एषा तु प्रथमा मुद्रा **सर्वसंक्षोभकारिणी** ॥ इति ॥

३–॥ तत्रैव तन्त्रराजे तु–॥
कनिष्ठाऽनामिकामध्याः नखैरन्योन्यसङ्गता ।
कृत्वाऽङ्गुष्ठौ कनिष्ठास्थावृजू कुर्याच्च तर्जनीम् ।
**सर्वसंक्षोभिणी** मुद्रा **त्रैलोक्यक्षोभकारिणी** ॥ इति ॥

४–॥ **ज्ञानार्णव**तन्त्रे-४ पटले-१९ पत्रे-९४ श्लोके-यथा—
॥ परिवर्त्य करौ सम्यक् तर्जनीवाहनी समे ।
मध्यमे कुरु तन्मध्ये योजयेत्तदनन्तरम् ।
अन्योन्यानामिके देवि कनिष्ठे तु यथास्थिते ॥
अङ्गुष्ठाभ्यां योजिताभ्यां योन्याकारं तु कल्पयेत् ।
**योनिमुद्रेयमाख्याता** परा त्रैलोक्यमातृका ।
[1]इयमेव हृदि क्षिप्ता **त्रैलोक्यक्षोभिणी** भवेत् ॥ इति ॥
( १५।८-५ वि. सं. )

## १५–८।६ ॥ सर्वविद्राविणीमुद्रायाम् ॥

१–प्र–**सर्वविद्राविणीमुद्राशब्दार्थः** प. क. सू. ५ खण्डे–१५१ पत्रे–१ सूत्रभाष्ये–यथा—

॥ द्वितीया, सर्वविद्राविणी, सर्वानुत्पन्नान् द्रावयति वर्धयति पोषणेन सा–सर्वविद्राविणी, सर्वेषां वस्तूनां पालकत्वादृजुस्वभावा, ज्येष्ठाशक्तिप्रचुरा च ।

तदुक्तं योगिनीतन्त्रे

क्षुब्धविश्वस्थितिकरी ज्येष्ठा प्राचुर्यमास्थिता'' इति ॥

क्षुब्धस्य उत्पन्नस्येत्यर्थः । यश्च संरक्षकः सऋजुरिति लोके प्रसिद्धा गाथा । अतएव अस्या मुद्रायाः बाह्यरूपेऽपि अङ्गुष्ठेन कनिष्ठिकानामायोगे अङ्गुलिचतुष्टये ऋजुत्वं दृश्यते । एवमाद्यत्रिकोणे रेखात्रयमध्ये पूर्वस्यां दिशि स्थितायां ऋजुरेखायामेव तस्याअधिष्ठानं शास्त्रप्रसिद्धम् ॥ इति ॥

२–॥ **सर्वविद्राणीमुद्रोद्धारः**–प–क–सू. ५ खण्डे–१६८–पत्रे–१५ सूत्रभाष्ये–यथा—

॥ एतस्याएव मुद्रायामध्यमे सरले यदि ।
क्रियते चेन्महेशानि सर्वविद्राविणी तदा ॥ इति ॥
एतस्यानाम, उपर्युक्तायाः क्षोभिणीमुद्रायाः इत्यर्थः

---

१ इयमेव नाम, उपर्युक्ता योनिमुद्रेत्यर्थः

—अत्र भाष्यं यथा, मध्यमे मध्यमेपीत्यर्थः । एतेन तर्जनीमध्यमयोः

द्वयोः सरलत्वं ज्ञेयम् ॥ इति **विद्राविणी** ॥ इति ॥

३—ज्ञानार्णवतन्त्रे—४ पटले—१५ पत्रे, यथा

॥ [1]**त्रैलोक्यद्राविणी** नाम **मुखस्था** परमेश्वरि ॥ ५४ ॥ इति—

( १५।८—६ वि—सं० )

**१५।८—७ ॥ सर्वाकर्षिणमुद्रेयम् ॥**

**१—सर्वाकर्षिणीमुद्राशब्दार्थः**—अत्रैव प. क. सू. ५ खण्डे—श्रीललिताक्रमे १५१—१५२ पत्रयोः—१ सूत्रभाष्ये—यथा—

तृतीया, सर्वाकर्षिणी सर्वाकर्षणशीला । इयं ज्येष्ठावामोभयात्मिका ।

तदुक्तं योगिनीतन्त्रे

—ज्येष्ठावामासमत्वेन सृष्टेः प्राधान्यमास्थिता ।

**आकर्षिणीति मुद्रेयम् .........** ॥ इति ॥

पूर्वोक्तिमुद्राद्वयवाचकपदशक्यताऽवच्छेदकयोः द्वयोरपि सर्वाकर्षिणीपदशक्यताऽवच्छेदकत्वं—बोध्यम् पुष्पवच्छब्दवत । तत्रापि ज्येष्ठात्वविशिष्टवामात्वं शक्यताऽवच्छेदकं, न तु विपरीतम् । तथा सति ज्येष्ठायाविशेष्यत्वेन प्राधान्यं वाच्यम् । प्राधान्ये ज्येष्ठायाः अतिसरलत्वेन प्रधानानुसारेण विशेषणीभूतवामायाअपि प्रधानानुवर्तिन्याः सरलतया तर्जनीमध्यमयोः बाह्यरूपे कुटिलत्वं न स्यात् । वामायाः प्राधान्ये तु तस्याः कुटिलतया-तदनुसारेण अप्रधानायाज्येष्ठायाः प्रधानानुवर्तिन्याः कुटिलत्वं युक्तम् । अतएव बाह्यस्वरूपे अङ्गुलिप्रथने सर्वास्वङ्गुलिषु कुटिलत्वम् ॥ इति ॥

**२—॥ सर्वाकर्षिणमुद्रोद्धारः**

अत्रैव—प. क. सू. ५ खण्डे—ललिताक्रमे—१६८ पत्रे—१५—सूत्रभाष्ये, यथा—

॥ मध्यमातर्जनीयुग्मे वक्रीकुर्यात् सुलोचने ।

एतस्याएव मुद्रायास्त**दाकर्षणकारि**णी ॥ इति ॥

३—**ज्ञानार्णवतन्त्रे**—४ पटले—१५ पत्रे, यथा—

॥ भ्रूमध्यस्था महादेवि **त्रैलोक्याकर्षिणी** भवेत् ॥ इति ॥

४—॥ मुद्राप्रकारे—यथा—

॥ मध्यमातर्जनीभ्यां च कनिष्ठानामिके समे ।

अङ्कुशाकाररूपाभ्यां मध्यमे परमेश्वरि ॥

---

१ अत्रोट्टङ्कित सर्वविद्राविणीमुद्राद्धारोनुगा ६३५-पत्रे-१५-८।२ वि-गतयोनिमुद्रोद्धारलेखमाश्रित्यैव-ज्ञेयः कार्यश्चेति विनयामि ॥

अङ्गुष्ठं च वियुञ्जीत कनिष्ठानामिकोपरि ।

इयमाकर्षणीमुद्रा त्रैलोक्याकर्षिणी मता ॥ इति ॥

( १५।८-७ वि-सं. )

१५-८।८-॥**सर्ववशङ्करीमुद्रायाम्** ॥

**१-सर्ववशङ्करीमुद्राशब्दार्थः**-प. क. सू. ५ खण्डे-श्रीललिताक्रमे १५२-पत्रे-१ सूत्रभाष्ये-यथा—

॥ चतुर्थी, सर्ववश्यकरी-सर्वान् क्षित्यादिशिवान्तान् वश्यं स्वाधीनं नयति प्रापयतीति तथा । लोके आकाशोद्विविधः दह्रः प्राकृतश्च । दह्राकाशेऽपि सुसुक्ष्मोऽन्यआकाशोऽस्ति, 'तस्यान्ते सुषिरं "सूक्ष्मं" इति-श्रुतिप्रसिद्धः । तन्मध्ये गाढमाश्लिष्टा परशिवेन या आनन्द विग्रहा मूर्तिः सा **सर्ववश्यकरी** पदवाच्या । तदुक्तं उत्तरचतुश्शत्याम्—

व्योमद्वयान्तरालस्था बिन्दुरूपा महेश्वरी ।

शिवशक्त्यात्मसंश्लेषादेषा **वश्यकरी** स्मृता ॥ इति ॥

बिन्दुरूपेति कथनात् स्वरूपमपि तथा । अतएवाङ्गुलिग्रथनेऽपि अस्याबाह्यरूपे बिन्द्वाकारता सर्वाङ्गुलीनां गाढसंश्लेषोऽपि व्यक्तः ॥ इति ॥

**२-॥ सर्ववशङ्करीमुद्रोद्धारः ॥**

प. क. सू. ५-खण्डे-श्रीललिताक्रमे-१५८ पत्रे-१५ सूत्रभाष्ये-तत्रैव चतुर्थी मुद्रासर्ववशङ्कर्युक्ता—

॥ पुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ।

परिवर्त्य क्रमेणैव मध्यमे तदधोगते ॥

क्रमेण देवि तेनैव कनिष्ठानामिके[1] अपि ।

संयोज्य निबिडाः सर्वाः अङ्गुष्ठावग्रदेशतः ॥

मुद्रेयं परमेशानि **सर्ववश्यकरी** स्मृता ॥ इति ॥

**अस्यार्थः**-पुटाकारौ परस्परं पृष्ठसंलग्नौ ऊर्ध्वाग्राङ्गुलिकौ हस्तौ कृत्वा ततोऽङ्गुष्ठ व्यतिरिक्ताङ्गुलीः परस्परमङ्गुलिसन्धिषु प्रवेश्य, तर्जन्यादिकनिष्ठाऽन्ताअङ्गुलीः अङ्कुशाकाराः कुर्यात् । एवं कृत्वा ततोऽङ्गुष्ठद्वयं अधोमुखं तर्जन्युपरि स्थापयेत् । इयं **सर्वशङ्करी**-इति भावः ॥

---

१ नाभिकादयः-इति-मुद्राप्रकारे-पाठः

३—ज्ञानार्णवतन्त्रे—४ पटले १५ पत्रे—यथा—

॥ [1]ललाटस्था महादेवि **त्रैलोक्यवशकारिणी** ॥ ५५ ॥ इति ॥

( १५।८—८ वि. सं. )

## १५।८—९—उन्मादिनीमुद्रायाम्—॥

**१—उन्मादिनीमुद्राविषये**—प. क. सू. ५ खण्डे—श्रीललिताक्रमे—१५२ पत्रे—१ सूत्रभाष्ये—उक्तं—यथा—

॥ पञ्चमी—उक्तशिवशक्तिविन्द्वोर्मध्ये सूक्ष्मरेखा "नीवारशूकवत्तन्वी" "तस्य मध्ये वह्निशिखा" इति—श्रुतिप्रसिद्धा। तस्याः शिखायाः द्विस्वभावत्वं, ज्येष्ठास्वभावत्वं च। यथा लोके—एकस्यैव दण्डस्य घटोत्पादकशक्तिमत्त्वं तन्नाशकशक्तिमत्त्वं चास्ति, तथाऽपि सदण्डः कदाचिदुत्पादकशक्तिप्रधानोभूत्वा घटमुत्पादयति, कदाचिन्नाशशक्तिप्रधानः तं नाशयति। एवं लोके बहुस्थले दृष्टम्। तथा दण्डस्थानीया उक्तरेखा। सा यदा जगद्रक्षण कर्तृत्वविशिष्टज्येष्ठाशक्तिप्रधाना—तदा **सर्वोन्मादिनी**पदवाच्या। तदुक्तं उत्तरचतुश्शत्याम् यथा—

॥ विन्द्वन्तरालविलसत्सूक्ष्मरूपशिखामयी।
ज्येष्ठाशक्तिप्रधाना तु **सर्वोन्मादन**कारिणी ॥ इति ॥

अतएव तदङ्गुलिग्रथनवेलायां अङ्गुष्ठानामतर्जन्यः सरलाः दृश्यन्ते, बिन्दुद्वयाकारं मध्यमाद्वयं च भवति। तत्रापि निरुक्तशिखास्थानापन्नग्रथनवेलायां अनामाद्वयमेव ज्ञेयम्। मध्यमाद्वयस्य तदानीं बिन्दुद्वयरूपत्वेन तन्मध्यवर्त्यनामाद्वयस्य "तस्य मध्ये वह्निशिखा" इति प्रसिद्धशिखात्वं युक्तम्॥ इति॥

२—॥ **उन्मादिनीमुद्राविषये**। ज्ञानार्णवतन्त्रे—४ पटले—१५ पत्रे—यथा—

॥ [2]ब्रह्मरन्ध्रस्थिता देवि **त्रैलोक्योन्मादकारिणी** ॥ इति ॥

**३—॥ अन्यथा उन्मादिनीमुद्रोद्धारः**। प. क. सू. ५ खण्डे—श्री ललिताक्रमे—१६९—पत्रे—१५ सूत्रभाष्ये—यथा—

पञ्चम्यपि तत्रैव—

॥ संमुखौ तु करौ कृत्वा मध्यमामध्यगेऽनुजे।
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम्॥

---

१ अत्रोट्टङ्कितवशङ्करीमुद्रोद्धारोनुगत ६३५ पत्रे—१५।८—२ वि. गत. योनिमुद्रोद्धारमाश्रित्यैव ज्ञेयः कार्यश्चेति विनयामि ॥

२ अत्रोट्टङ्कितउन्मादिनीमुद्रोद्धारोनुगत ६३५ पत्रे—१५/८—२ पत्रे वि. गतयोनिमुद्रोद्धारमाश्रित्यैव ज्ञेयः कार्यश्चेति विनयामि ॥

दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ।

**मुद्रैषोन्मादिनी नाम क्लेदिनी सर्वयोषिताम्** ॥ इति ॥

**अयमर्थः**—वामकनिष्ठोपरि दक्षकनिष्ठां तिर्यगनामाद्वयोपरिमार्गेण मध्यमापर्यन्तं प्रसार्य तादृशकनिष्ठाऽग्रद्वयं मध्यमाद्वयेन दृढं गृह्णीयात् । गृहीतमध्यमानखोपरि दण्डाकारमङ्गुष्ठद्वयं स्थापयेत् । तथाऽनामाद्वयं परस्पराभिमुख्येन सरले कुर्यात् । अनामिकयोः पार्श्वद्वये तर्जनीद्वयमपि सरलं कुर्यात् । एषा **सर्वोन्मादिनी** मुद्रा—योषिद्वश्यकरी ॥ इति ॥ ( १५।८–९ वि. सं. )

**१५।८–१०–॥ खेचरीमुद्रायाम्** ॥

**१–खेचरीमुद्राशब्दार्थः**–प. क. सू. ५ खण्डे–श्रीललिताक्रमे **१५३–पत्रे–१** सूत्रभाष्ये–यथा—

॥ सप्तमी सर्वखेचरी जीवानां स्वकर्मजनितरोगादिदुःखनाशनक्षमा शक्तिः । अतः एव सर्वरोगहरचक्रस्था भवति ! तदप्युक्तं **योगिनीतन्त्रे**—

धर्माधर्मस्य सङ्घट्टादुत्थिता वित्तिरूपिणी ।
विकल्पोत्थक्रियालोपरूपदोषविघातिनी ।
**विकल्परूपरोगाणां हारिणी खेचरी मता** ॥ इति ॥

**॥ अत्र भाष्यम्** । धर्मः शक्तिः परशिववृत्तित्वात् । न विद्यते धर्मो यत्रेति, अधर्मः परं ब्रह्म, परशिवः । यद्वा—न (कस्यापि) धर्मः अधर्मः इति—नञ्तत्पुरुषएव युक्तः, परशिवे शक्तिरूपधर्मसत्त्वेन पूर्वकल्पे स्वोक्तव्याघातात् । तयोः सङ्घट्टः मेलनं तेन उत्थिता । यावद्विकल्पः तेनोत्थिताः । याः क्रियाः नित्यनैमित्तिकाः—तासां लोपेन यत् पापं तत्सम्भवाः रोगाः—तन्नाशिनी खेचरीति । अतएवैतादृशशिवशक्तिसामरस्यद्योतकं बाह्यरूपे बाहुद्वयपरिवर्तनम् ॥ इति ॥

२–**॥खेचरीमुद्रोद्धारः** ॥ प. क. सू. ५ ॥–खण्डे–ललिताक्रमे–१६९ पत्रे–१५ सूत्रभाष्ये–यथा—

**सप्तमीं खेचरीमुद्रां तत्रैव व्याचचक्षे–यथा**—

॥ सव्यं दक्षिणहस्ते तु दक्षिणं सव्यहस्ततः ।
बाहू कृत्वा महेशानि हस्तौ सम्परिवर्त्य च ॥
कनिष्ठानामिके देवि युक्त्वा तेन क्रमेण तु ।
तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ॥

अङ्गुष्ठौ तु महेशानि कारयेत् सरलावपि ।
इयं सा **खेचरीनाम** मुद्रा सर्वोत्तमा प्रिये ॥ इति ॥

**३–अत्र तात्पर्यम्**–तत्रैव–यथा—

॥ बाहू सरलौ प्रथमं कृत्वा–दक्षबाहूपरि वामं स्थापयित्वा पुनर्वामं हस्तं दक्षहस्ताधो मार्गेण वामपार्श्वे निर्गमयय हस्तद्वयाङ्गुलीः वक्ष्यमाणरीत्या ग्रथ्नीयात् । तद्यथा वामानामा कनिष्ठे दक्षमध्यमाधोमार्गेण दक्षतर्जन्यां नीत्वा–एवं दक्षानामाकनिष्ठे वाममध्यमाऽधोमार्गेण वामतर्जन्यां नीत्वा–हस्तद्वयतर्जनीभ्यां स्वसमीपागतानामाकनिष्ठे दृढं गृह्णीयात् । मध्यमे सर्वोर्ध्वे सरले एवाग्राभ्यां परस्परसंलग्ने स्थापयेत् । अङ्गुष्ठौ सरलौ कृत्वा योनिसादृश्यं सम्पादये । इयं खेचरीमुद्रा । यद्यप्युक्तार्थः सर्वोऽपि पूर्वलिखितवचनेनास्ति, तथाऽपि-

**वामं भुजं दक्षभुजे दक्षिणं** वामदेशतः ।
निवेश्य योजयेत् पश्चात् परिवर्त्य क्रमेण हि ॥
कनिष्ठाऽनामिकायुग्मे तर्जनीभ्यां निरोधयेत्
मध्यमे सरले कृत्वा योनिवत् सरलौ ततः ॥

अङ्गुष्ठौ **खेचरीमुद्रा** पार्थिवस्थानयोजिता, इति–ज्ञानार्णववचनेन सह एक वाक्यतां सम्पाद्य निष्कासितोऽर्थोज्ञेय; ॥ इति ॥

**४– ॥ – खेचरीमुद्रोद्धारः** । मुद्राप्रकारनामकग्रन्थे–७ पत्रोधः–महाङ्कुशमुद्रो-ध्धारानन्तरं–यथा–

॥ सव्यं दक्षिणदेशे तु सव्यदेशे तु दक्षिणम् ॥
बाहुं कृत्वाऽमहादेवि हस्तौ सम्परिवर्त्य च ।
कनिष्ठानामिके देवि युक्ता तेन क्रमेण च
तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे
अङ्गुष्ठौ च महेशानि सरलावपि कारयेत् ॥
इयं तु **खेचरी नाम** पार्थिवस्थानयोजिता ॥ इति ॥

( १५–८।१० वि. सं. )

**१५–८।११ ॥ त्रिखण्डाऽवाहनमुद्रयोः** ।

**१ त्रिखण्डामुद्राशब्दार्थः** । प. क. सू. ४ खण्डे-१ ३ ५पत्रे-१ सूत्रभाष्ये–यथा–

॥ त्रिखण्डा मुद्रा, त्रीन् जन्ममृत्युजराः,
यद्वा–सत्वरजस्तमोगुणान्, खण्डयतीति **त्रिखण्डा, केवलमोक्षप्रदेत्यर्थः** ।
॥ **यद्वा**–त्रीणि खण्डानि–कलाः इच्छाज्ञानक्रियाऽऽत्मिकाः, तत्स्वरूपा

**त्रिखण्डा,** ॥ तदुक्तं–योगिनीतन्त्रे—

॥ मुद्राऽऽख्या सा यदा संविदम्बिका त्रिकलामयी ।
त्रिखण्डारूपमापन्ना सदा सन्निधिकारिणी ।
सर्वस्य चक्रराजस्य व्यापिका परिकीर्तिता ॥ इति ॥

१५-८।११-२- **त्रिखण्डामुद्रोद्धारः** । प. क. सू. पत्रे.५-खण्डे-१५ सूत्रभाष्ये १६७-पत्रे-यथा-

१-तत्रावाहने प्रथमं विनियुक्ता त्रिखण्डोच्यते । त्रिखण्डालक्षणमुक्तं, वामकेश्वरतन्त्रे:-

॥ परिवर्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत् समौ ।
अनामाऽन्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।
**त्रिखण्डेयं** समाख्याता **त्रिपुराऽह्वानकर्मणि** ॥ इति ॥

अत्र भाष्यम्-परिवर्तनं नाम, हस्तद्वयाङ्गुलिमेलनम् । इदं सर्वत्राधिकाररूपं सद्न्वेति । अङ्गुष्ठौ सरलौ परस्परस्पृष्टौ, तथैव कनिष्ठे मध्यमे च कुर्यात् । वामानामोपरि दक्षनामां तिर्यक् प्रसार्य-तयोरधःप्रदेशात् तर्जनीद्वयमानीय-कुटिलाकाराभ्यां तर्जनीभ्यां । अनामाऽग्रद्वयं धारयेत् । अनामे अन्तर्गते ययोरिति विग्रहेण लब्धोऽर्थः । अस्याउक्तरीत्या निर्माणे-खण्डत्रयं दृश्यते । उपरि सरलाङ्गुष्ठद्वययोगः । मध्ये तादृशमध्यमायोगः । अधश्च कनिष्ठायोगस्तादृशः । एवं सति पूर्वोक्तवामाज्येष्ठारौद्रीकलात्रयरूपमस्यां स्फुटम् । अतएव त्रयःखण्डाः कलाः यस्यां-इति विग्रहेण-**त्रिखण्डेयम्** । अत्र-यद्यपि खण्डद्वय निर्माणप्रकारउक्तः । मध्यमखण्डरचनाप्रकारोनोक्तः । तथाऽपि त्रिखण्डेति योगार्थसम्पत्तये तन्त्रान्तरं शरणीकृत्य-खण्डत्रयं सम्पादनीयम् । खण्डत्रयमुक्त मधस्तात्-यथा-

॥ **३-त्रिखण्डामुद्रायाः-द्वितीयः प्रकारः-**

ज्ञानार्णवे-१५-पटले-५९-पत्रे-४९ श्लोकोत्तरार्धे—

॥ पाणिद्वयं महेशानि परिवर्तनयोगतः ।
योजयित्वा तर्जनीभ्यां अनामे धारयेत् प्रिये ॥
मध्यमे योजयेन्मध्ये कनिष्ठे तदधस्ततः ।
अङ्गुष्ठावपि संयोज्य त्रिधा युग्मक्रमेण तु ॥
**त्रिखण्डा मम मुद्रेयं त्रिपुराऽऽह्वानकर्मणि** ॥ इति ॥

**१५।८-४ केवलावाहनमुद्रोद्धारः** ॥

अस्याः आवाहनमुद्रायाउद्धारः-प. क. सु. ७ खण्डे-श्रीवाराहीक्रमे-२१ सूत्रभाष्ये २१७-पत्रेऽस्ति-ततोज्ञेयः-

५ ॥ ज्ञानमालायाम्—

देवता न च सन्तुष्टा सर्वदा संमुखी भवेत् ।

अङ्गुष्ठौ निक्षिपेत् सेयं मुद्रा **त्वावाहनी मता** ॥ इति ॥

य. आ. सु. २२४ पत्रे-यथा-

६ सटीकशारदा० २३-पटले-८४३-पत्रे-यथा-

॥ सम्यक् सम्पूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः ।

**आवाहनी** समाख्याता मुद्रा देशिकसत्तमैः ॥ इति ॥ १०७ ॥

७ एतच्छ्लोकटीकायां च-यथा-

॥ हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः ।

अङ्गुष्ठौ निक्षिपेत् सेयं मुद्रा **त्वावाहनी** स्मृता ॥ इति ॥

८ ज्ञानार्णवतन्त्रे-४ पटले-१३ पत्रे-यथा-

॥ आवाहनादिमुद्रास्तु कथयामि तवानघे ।

ऊर्ध्वाञ्जलिमधः कुर्यादिय**मावाहनी** भवेत् ॥ इति ॥

( १५-८।११ वि. सं. )

१५-८।१२ ॥ **सन्निरोधनमुद्रायाम्**

१ ॥ सन्निरोधनमुद्रोद्धारः

ज्ञानार्णवे-४ पटले-१४ पत्रे-यथा-

॥ अन्तरङ्गुष्ठमुष्टिभ्यां **संनिरोधनरूपिणी** ॥ ३३ ॥ इति ॥

२ आनन्दाश्रमग्रन्थावलि ७३ अङ्कमुद्रितश्री. गा. पु. पद्धतौ-९पत्रे-घोरे-इत्युपनामक श्रीशङ्करसूरिर्दर्शयति-यथा-

॥ अन्तःप्रवेशिताङ्गुष्ठा सैव **संरोधिनी** मता ॥ इति ॥

**३ केवलसंनिरोधनमुद्रोद्धारः**

सटीकशारदा० २३ पटले-८४३ पत्रे-१०८ श्लोकतः-१०९ श्लोकान्तं यावत्-

॥ आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका ।

सन्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः ।

अङ्गुष्ठगर्भिणी सैव **सन्निरोधे** समीरिता ॥ १०९ ॥ इति

( १५-८।१२ वि. सं. )

१५।८-१३-॥ **वराभयमुद्राविषये** ॥

१-॥ वराभयमुद्रयोर्दक्षिणवामहस्तग्रहणविषयकोमतभेदशास्त्रार्थः ॥ श्रीवह्निकलापूजोपदेशे-सटीकशारदा० २ पटले-७३ पत्रे-१६ श्लोके-तट्टीकायां-च

॥ यादीनां दशवर्णानां कलाधर्मप्रदाइमाः ॥

अभयेष्टकराध्येया० इत्यादि० ॥ १६ ॥

तत्र भाष्यम् ॥ अभयेष्टेति । इष्टोवरः । तत्र दक्षिणहस्ते अभयं-वामहस्ते वरः-इति-सम्प्रदायविदः

**वरदानमुद्रोद्धारः**-तत्रैव-उक्तञ्च-

॥ ऊर्ध्वीकृतोदक्षहस्तः प्रसृतोऽ**भयमुद्रिका** ।

अधोमुखोवामहस्तः प्रसृतो**वरमुद्रिका** ॥ इति ॥

॥ दशमपटल्यामपि **भुवनेशीध्याने**-

**दक्षेङ्कुशाभये** प्रोक्ते वामे **पाशमथेष्टदम्** । इति ।

॥ तन्त्रान्तरे-**सरस्वतीध्याने**-

साक्षस्रक्कलशोर्ध्वबाहुयुगलंचाधःसमुद्राभयं

हस्तं दक्षिणमन्यतः सवरदं यस्याः करे पुस्तकम् ॥ इति ॥

॥ सौत्रामणीतन्त्रे, पञ्चमीध्याने-

चक्रं खड्गं मुषलमभयं दक्षिणाभिर्भुजाभिः

शङ्खं खेटं हलमपि वरं बिभ्रती वामदोर्भिः ॥ इति ॥

॥ तन्त्रान्तरे-नित्याध्याने-

कपालमभयन्तथा ।

दधाना दक्षिणैर्हस्तैः । इत्यादि ।

॥ अन्यत्रापि-पाशं पताकां चर्म्माऽपि शार्ङ्गं चापं वरं करैः

दधानां वामपार्श्वस्थैः सर्वाभरणभूषितैः ॥

अङ्कुशं च ततोदण्डं खड्गं बाणं तथाऽभयम् ।

दधानां दक्षिणैर्हस्तैरासीनां पद्मविष्टरे ॥ इति ॥

॥ कादिमतेऽपि-ब्रूहि देव महेशान स्थूलसूक्ष्मस्वरूपयोः ।

ध्यानयोः कर्म्मणां सिद्धिं विविधां फलयोगतः ॥

तासां तत्तत्करेषूक्तेष्वायुधान्यथ शेषतः

शृणु वक्ष्ये महेशानि क्रमेण त्वं हि साम्प्रतम्

वामदक्षिणयोः स्यातां द्विभुजे तु वराभयौ[1] ।

पाशाङ्कुशौ चतुर्बाहौ षड्भुजे चापसायकौ ॥

चर्म्मखड्गावष्टभुजे गदाशूले दशोदिते । इति ।

॥ अतोयत्र यत्र शक्तिध्याने वराभये-तत्र तत्र प्रायोऽभयं दक्षिणे-वामे वरमितिज्ञेयम् ।

यत्तूत्तरषट्के-

१. अत्र वराभये-इति पाठः-साधुः-

वामेनाभयसंयुक्तां वरदां दक्षिणेन तु । इति ॥

॥ **अन्यात्रापि**—पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम् ।
वरदानरतां देवीम् ० । इति ।

॥ एतत् स्वस्वगुरुसम्प्रदायानुसारेण तत्तद्देवताविशेषे बोद्धव्यमित्यलम् ॥ इति ॥

२ ॥ **अभयवरदमुद्रयोरुद्धारः**—

एतयोरुद्धारः सटीकशारदा० १८—पटले—७१५—पत्रे—टीकायां—यथा—

॥ ऊर्द्धीकृतोवामहस्तः प्रसृतोऽ**भयमुद्रिका** ।

॥ अधोमुखोदक्षहस्तः प्रसृतो**वरमुद्रिका** ॥ इति ॥

१५—८।१३ वि. सं.

॥ पार्थनामुद्रायाम् ॥

**१५।८—१४—प्रार्थनामुद्रोद्धारः** । सटीकशारदा०—४ पटले-२८७ पत्रे-९० श्लोक—टीकायां—यथा—

प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च सन्मुखौ ।
कुर्यात् स्वे हृदये सेयं मुद्रा **प्रार्थनसंज्ञिका** ॥ इति ॥

**१५-८।१५—बीजमुद्रायाम्** ॥

॥ १—**बीजमुद्राशब्दार्थः** प. क. सू. ५ खण्डे—श्रीललिताक्रमे-१५२ पत्रे—१ सूत्रभाष्ये, यथा—

॥ अष्टमी बीजमुद्रा—जगतः षड्विकारेषु प्राथमिकोयोभावविकारः सूक्ष्मरूपेण सत्ता, तदभिमानिनी शक्तिः । तदुक्तमुत्तरचतुश्शत्याम्—

शिवशक्तिसमाश्लेषस्फुरद्व्योमान्तरे पुनः ।
प्रकाशयन्ती विश्वं सा सूक्ष्मरूपस्थितं सदा ।
**बीज**रूपा महामुद्राः...................... ॥ इति ॥

अयमर्थः—वटबीजे सुसूक्ष्मेऽपि किंचिदाकाशोऽस्ति विभुत्वात् । तस्मिन् यथा-महावृक्षः सूक्ष्मरूपेण-तिष्ठति-तथा षट्त्रिंशत्तत्त्वानि,-शिवशक्तिगर्भे विद्यन्ते सूक्ष्मरूपेण, सैव सत्ता-घटोऽस्ति पटोऽस्ति-इत्यत्र अनुवर्तते । सा **बीजमुद्रेत्यर्थः** । सर्वबीजस्थानापन्नत्वात् **सर्वबीजा** । सूक्ष्मत्वादेव अङ्गुलिग्रथनवेलायां, संक्षोभिण्याद्यपेक्षया अल्पयोनित्वं सूक्ष्मत्वाद्यापकम् ॥ इति ॥

२ **बीजमुद्रोद्धारः**—प. क. सू. ५ खण्डे—१७०—पत्रे—१५ सूत्र—५ भाष्ये—यथा—

॥ अष्टमी मुद्राऽपि तत्रैव प्रकटिता ॥

॥ परिवर्त्य करौ स्पृष्टावर्धचन्द्राकृती प्रिये ।
तर्जन्यङ्गुष्ठयुगलं युगपत् कारयेत् ततः ॥
अधःकनिष्ठाऽवष्टब्धे मध्यमे विनियोजयेत् ।
तथैव कुटिले योज्ये सर्वाधस्तादनामिके ॥
**बीजमुद्रेयमचिरात् सर्वसिद्धिप्रवर्तिनी** ॥ इति ॥

॥ अस्यार्थः—अनामामध्यमामार्गेण व्यत्यस्ते कनिष्ठिके स्वाधोभागे मध्यमा यथा तिष्ठति तथा कुर्यात्। ततोमध्यमाद्वयं कनिष्ठाद्वयावष्टम्भकं यथा—तथा कुर्यात्। सर्वाधः-स्थिते अनामे यावत् कुटिले भवतः तावत् कुर्यात् । अङ्गुष्ठतर्जनीयुगलं अर्धचन्द्राकृति, यथा भवति तथा योजयेत्, इयं बीजमुद्रा-भवति ॥ इति ॥ ( १५-८।१५ वि. सं. )

**१५-८।१६ शङ्खमुद्रोद्धारः**—आनन्दाश्रमग्रन्थावलि७३अङ्कमुद्रित श्री. गा. पु. पद्धतौ-घारे--इत्युपनामकशङ्करसूरिविरचितश्री. गा. पु. पद्धतौ—९ पत्रे—यथा—

१ ॥ वामाङ्गुष्ठं तु सङ्गृह्य दक्षिणेन तु मुष्टिना ।
कृत्वोत्तानं ततोमुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥
वामाङ्गुल्यस्तथाऽऽश्लिष्टाः संयुक्ताःस्युःप्रसारिताः ।
दक्षिणाङ्गुष्ठके लग्ना मुद्रा **शङ्खस्य** भूतिदा ॥ इति ॥

२ य. आ. सु. ५२ पत्रे—यथा—

॥ वामाङ्गुष्ठं तु सङ्गृह्य दक्षिणेन तु मुष्टिना ।
कृत्वोत्तानं ततोमुष्टिं अङ्गुष्ठं तु प्रसारयेत् ॥
वामाङ्गुल्यस्तथाश्लिष्टाः संयुक्ताः सुप्रसारिताः ।
दक्षिणाङ्गुष्ठसंस्पृष्टा ज्ञेयैषा **शङ्खमुद्रिका** ॥ इति ॥

(१९-८।१६ वि. सं. )

## ॥ गालिनीमुद्रायाम् ॥

**१५-८।१७-गालिनीमुद्रोद्धारः** ॥ सटीकशारदा०--४ पटले—२६४ पत्रे—४७ श्लोकटीकायां—यथा—

१-- ॥ कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम्
तर्जनीमध्यमानामाः संहताभुग्नवर्जिताः (सज्जिताः)।
मुद्रैषा **गालिनी** प्रोक्ता शङ्खस्योपरि चालिता ॥ इति ॥

२– ॥ श्रीदुर्गाकल्पद्रुमपुस्तिकायां तु--१२२ पत्रे–यथा—

॥ करद्वयाङ्गुष्ठतर्जन्यग्रसंयोगे **गालिनी**मुद्रा ॥ इत्युक्ता–इति ॥

( १९-८।१७ वि. सं. )

**१५-८।१८ ॥ संस्थापनमुद्रायाम् ॥**

१– **संस्थापनी**,शब्दार्थः ॥

कुलार्णवे -१७-उ-१९८ पत्रे--यथा—

॥ आसनें सन्निवेशःस्यात् **स्थापनं** कुलनायिके ॥ इति ॥

२– ॥ **संस्थापनीमुद्रोद्धारः**–ज्ञानार्णवतन्त्रे–४ पटले–१३ पत्रे–यथा–

॥ ऊर्ध्वाञ्जलिमधः कुर्यादिय**मावाहनी**भवेत्

इयं तु विपरीता स्यात्तदा वै **स्थापनी** मता ॥ ३२ ॥ इति ॥

३–॥ आनन्दाश्रमग्रन्थावलि ७३ अङ्कमुद्रित**श्रीगा. पु. पद्धतौ**–९ पत्रे, घारे, इत्युपनामकश्रीशङ्करसूरिर्दर्शयति, यथा—

॥ हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः ॥

अङ्गुष्ठौ निक्षिपेदुच्छ्रौ **मुद्रेषाऽवाहनी** स्मृता ।

अधोमुखी त्वियं चेत् स्यात् **स्थापनी** मुद्रिका भवेत् ॥ इति ॥

४–सटीकशारदा–२३ पटले-८४३-पत्रे–१०८ श्लोके–यथा—

॥ सम्यक् सम्पूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः ।

**आवाहनी** समाख्याता मुद्रा देशिकसत्तमैः ॥ १०७ ॥

अधोमुखी कृता सैव प्रोक्ता **स्थापनकर्मणि** ॥ इति ॥

( १९।८–१८ वि. सं. )

**१५।८–१९ ॥ सन्निधापनमुद्रायाम् ॥**

**१–सन्निधापनमुद्राशब्दार्थः** । कुलार्णवे–१७ उ. १९८ पत्रे–यथा–

॥ अन्योऽन्यसम्मुखाकारः **सन्निधापन**मीरितम् ॥ इति ॥

२–॥**सन्निधापनमुद्रोद्धारः** ॥ ज्ञानार्णवतन्त्रे–४ पटले–१४ पत्रे–यथा–

॥ मिलितं मुष्टियुगलं **सन्निधापनरूपिणी** ॥ इति ॥

३–आनन्दाश्रमग्रन्थावलि ७३ अङ्कमुद्रित **श्री. गा. पु. पद्धतौ**–९ पत्रे–घारे-इत्युपनामकश्रीशङ्करसूरिर्दर्शयति यथा–

॥ उच्छ्रिताऽङ्गुष्ठमुष्टयोस्तु संयोगात् **सन्निधापनी** ॥ इति ॥

४–॥ सटीकशारदा० २३ पटले–८४३ पत्रे–१०८ श्लोकेपि–यथा–

॥ आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका ॥ १०८ ॥

**सन्निधाने** समुद्दिष्टा मुद्रेयं तत्ववेदिभिः ॥ इति ॥

( १५।८-१९ वि. स. )

**१५।८–२० ॥ सम्मुखीकरणमुद्रायाम् ॥**

**१–सम्मुखीकरणमुद्रोद्धारः** ॥ सटीकशारदा० ४ पटले–२८७ पत्रे–९ श्लोकटीकायां–यथा–

॥ मुष्टिद्वयस्थिताङ्गुष्ठौ सम्मुखौ च परस्परम् ।

संश्लिष्ठावुच्छ्रितौ कुर्यात् सेयं सम्मुखमुद्रिका ॥ इति ॥

२–सटीकशारदा० २३ पटले-८४३ पत्रेपि–यथा–

॥ उत्तानौ द्वौ कृतौ मुष्ठी **सम्मुखीकरणी** स्मृता ॥ इति ॥

( १५।८–२० वि. सं. )

**१५।८–२१ ॥ सकलीकरणमुद्रायाम् ॥**

१–॥ **सकलीकरणमुद्रा शब्दार्थः** ॥ कुलार्णवे १७ उल्लासे-१५८ पत्रे-यथा–

॥ देवताङ्गे षडङ्गानां न्यासः स्यात् **सकलीकृतिः** ॥ इति ॥

२–॥ **सकलीमुद्रोद्धारः** । ज्ञानार्णवे-४ पटले-१४ पत्रे-यथा–

॥ अङ्गमन्त्रैर्न्यसेद्देवि देव्यङ्गे साधकोत्तमः ।

**सकलीकरणं** नाम मुद्रेयं व्याप्तिकारिणी ॥ ३९ ॥ इति ॥

३–॥ सटीकशारदा० २३ पटले-८४३ पत्रेऽपि-यथा–

॥ देवताङ्गे षडङ्गानां न्यासः स्यात् **सकलीकृतिः** ॥ इति ॥

४–॥ य. आ. सू. ९१ पत्रे-**षडङ्गन्यासमुद्रा उक्ता**-यथा –

॥ हृन्नेत्रं त्रिभिराख्यातं द्वाभ्यामस्त्रं शिरोन्यसेत् ।

अङ्गुष्ठेन शिखा ज्ञेया दिग्भिः कवचमीरितम् ॥ इति ॥

॥ अर्थादेवं षडङ्गन्यासाः कार्याः **न समस्तपाणिनेति** मार्मिकम् ॥ इति ॥

( १५।८–२१ वि. सं. )

**१५–८।२२ ॥ परमीकरणमुद्रायामथ च महामुद्रायां च–॥**

**१–परमीकरणमुद्रोद्धारः** ॥ कुलार्णवे–१७ उल्लासे–१५८ पत्रे–यथा–

॥ क्षमस्वेत्यङ्गुलिर्देवि **परमीकरणं** भवेत् ॥ इति ॥

२–ज्ञानार्णवे–४ पटले–१४ पत्रे–३६ श्लोकेऽपि–यथा–

॥ करावेकत्र संयोज्यावङ्गुष्ठौ बन्धयेत् प्रिये ।

**परमीकरणं** नाम मुद्रेयं तु ततः परम् ॥ इति ॥

३–**महामुद्रोद्धारः** ॥ सटीकशारदा०–२३ पटले–८४४ पत्रे–११३ श्लोक टीकायां च–यथा–

॥ अन्योऽन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुली ॥ ११३ ॥

महामुद्रेयमुदिता **परमीकरणे** बुधैः ॥

प्रयोजयेदिमां मुद्रां **देवतायाग**[1]कर्मणि ॥ ११४ ॥ इति ॥

अत्र टीका–यथा–

॥ महामुद्रामाह । अन्योऽन्येति । पाण्योरङ्गुष्ठौ परस्पर–

ग्रथनेन ग्रन्थिरूपौ शेषाः सरलाः ॥ इति ॥

( १५–८।२२ वि. सं. )

**१५–८।२३ ॥ अमृतीकरणमुद्रायाम् ॥**

१–**अमृतीकरणमुद्राशब्दार्थः** ।। कुलार्णवे–१७ उल्लासे–१५८ पत्रे–यथा–

॥ दर्शयेद्धेनुमुद्रां च **अमृतीकरणं** प्रिये ॥ इति ॥

२–द्वि. प्र. **अमृतीकरणमुद्रार्थे** । सटीकशारदा०–२३ पटले–८४३ पत्रे–११२ श्लोकान्ते–यथा–

॥ अन्योऽन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः ।

तथा च तर्जनी मध्या **धेनुमुद्रा समीरिता** ॥

**अमृतीकरणं** कुर्यात्तया देशिकसत्तमः ॥ इति ॥

३–अत्रेदं ज्ञेयम्–

॥ अयमुपरिष्ठादुच्यमानोमुद्रोद्धारस्तु धेनुमुद्रायाएव, नामृतीकरणमुद्रायाः––इति नाशङ्क्यम् ॥

अमृतीकरणमुद्रायाः प्रायः पार्थक्येन निरूपणाभावाद्धेनुमुद्रयैवैतदमृतीकरणविधानमुपदिष्टं–यथा–

।। ज्ञानार्णवे, श्री. गा. पु. पद्धतौ ।

॥ अमृतीकरणं कुर्यात् तया देशिकसत्तमः । इत्यादिना शारदातिलके चेति–शम्–॥

( १५–८।२३ वि. सं. )

---

१ मुद्राप्रकारग्रन्थे-तु-देवताह्वानकर्मणीतिपाठः ॥

**१५-८।२४ बिन्दुमुद्रोद्धारः** । मुद्राप्रकारे-७६-श्लोके-

॥ तर्जन्युङ्गुष्ठसंयोगादग्रतो **बिन्दुमुद्रिका** ॥ इति ॥

**१५-८।२५-संहारमुद्रोद्धारः**स्तत्रैव-यथा-

॥ अधोमुखे वामहस्ते ऊर्ध्वास्यं दक्षहस्तकम् ।

क्षिप्त्वाङ्गुलीरङ्गुलिभिः सङ्ग्रथ्य परिवर्तयेत् ॥

एषा **संहार**मुद्रा स्याद्विसर्जनविधौ स्मृता ॥ इति ॥

**१५-८।२६-लोकपालमुद्रोद्धारः** ॥ सटीकशारदा०-४ पटले-३०१ पत्रे-टीकायां-यथा-

एषां पूजायां **लोकपालमुद्रा** दर्शनीया । यदाहु-

॥ पाणिमूले सुसंलग्ने शाखाः सर्वाः प्रसारिताः ।

**लोकेशानामियं मुद्रा** तेषामर्चासु दर्शयेत् ॥ इति ॥

( १५-८ वि. सर्वोऽपि. सं. )

**॥ इति-श्रीन्यासपूजोपयुक्तमुद्रोद्धारः समाप्तः ॥**

**१५-९अथ-श्रीमदग्निविषयक-१-ज्वालिनी-२-सप्तजिह्वा-३-मृगी-४-हंसी-५-सूकरी**मुद्राणामुद्धारः ॥

१-॥ **ज्वालिनीमुद्रोद्धारः** । आनन्दाश्रमग्रन्थावलि ७३ अङ्कमुद्रित श्री. गा. पु. पद्धतौ-९ पत्रे-घोर-इत्युपनामकश्रीशङ्करसूरिर्दर्शयति-यथा-

॥ पद्माकरौ करौ कृत्वा अङ्गुष्ठौ योजयेदुभौ ।

वाममध्यानामिकयोर्युग्मेनेतरमध्यया ॥

संयोज्याङ्गुलयः शेषाः सरला **ज्वालिनी** भवेत् ॥ इति ॥

२-॥ श्रीसटीकशारदा०-५ पटले-३१८ पत्रे-१८ श्लोकटीकायां-यथा-

॥ मणिबन्धौ समौ कृत्वा करौ तु प्रसृताङ्गुली ।

मध्यमे मिलिते कृत्वा तन्मध्येऽङ्गुष्ठकौ क्षिपेत् ॥

इयं सा परमा मुद्रा **ज्वालिनी होम**कर्मणि ॥ इति ॥

३-॥ मुद्राप्रकारे-

॥ मणिबन्धयुतौ कृत्वा प्रसृताङ्गुलिकौ करौ ।

कनिष्ठाङ्गुष्ठयुगले मिलित्वान्तः प्रसारयेत्

**ज्वालिनी नाम** मुद्रेयं **वैश्वानरप्रियङ्करी** ॥ ११९ ॥ इति ॥

**४—मृगीहंसीसूकरीमुद्रासु ॥**

॥ मृगीहंसीसूकरीमुद्रोद्धारः—आनन्दाश्रमग्रन्थावलि ७३ अङ्कमुद्रितधारे—इत्युपनामक-शङ्करसूरिविरचित श्री. गा. पु. पद्धतौ—१० पत्रे—यथा—

॥ होमे मुद्राः स्मृतास्तिस्रो **मृगी हंसी च सूकरी** ।
**मुद्रां विना कृतोहोमः सर्वोभवति निष्फलः ॥**
**सूकरी** करसङ्कोचा **हंसी** मुक्तकनिष्ठिका ।
कनिष्ठातर्जनीमुक्ता **मृगी मुद्रा** प्रकीर्तिता ॥ इति ॥

५।१—**सप्तजिह्वामुद्रोद्धारः**—सटीकशारदा०-१४ पटलें—५९८—पत्रे—९५ श्लोकटीकायां-ध्यानानन्तरं, सप्तजिह्वाख्यमुद्रां प्रदर्शयेत् ॥ तल्लक्षणं-यथा—

॥ मणिबन्धस्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ ।
कनिष्ठाङ्गुलिष्ठयुगले मिलित्वाऽन्याः प्रसारयेत् ॥
**सप्तजिह्वाख्यमुद्रेयं वैश्वानरवशङ्करी** ॥ इति ॥

५।२—मुद्राप्रकारे-यथा—

॥ मणिबन्धस्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ ।
कनिष्ठाङ्गुष्ठयुगले मिलित्वान्तः प्रसारयेत् ॥
कनिष्ठाङ्गुष्ठकौ सक्तौ कारयेदितरेतरम् ।
**सप्तजिह्वाख्यमुद्रेयं वैश्वानरपियङ्करी** ॥ इति ॥

॥ इति—**श्रीमदग्निविषयकमुद्रोद्धारः**-सं. ( १५-९ वि. सं. ॥ )

॥ अथ द्वि. परि. वि. १५।१०—**प्रकीर्णमुद्रोद्धारः**

१—**मालिनीमुद्रोद्धारः** । आनन्दाश्रमग्रन्थावलि ७३ अङ्कमुद्रितश्री. गा. पु. पद्धतौ-९ पत्रे-धारे-इत्युपनामकश्रीशङ्करसूरिर्दर्शयति, यथा—

॥ करद्वयाङ्गुष्ठतर्जन्यग्रसंयोगे **मालिनी** मुद्रा ॥ इति ॥

२।१—**[1]कुम्भमुद्रोद्धारो**थवा कलशमुद्रोद्धारः ॥ मुद्राप्रकारे-यथा—

॥ दक्षाङ्गुष्ठं पराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन तु ।
सावकाशामेकमेकमुष्टिं कुर्यात् सा **कुम्भमुद्रिका** ॥ ७१ ॥ इति ॥

२।१—अपरः प्रकारस्तत्रैव-यथा—

मुष्ट्योरूर्ध्वकृताङ्गुष्ठौ तर्जन्यग्रे तु विन्यसेत् ॥
**सर्वरक्षाकरी** ह्येषा **कुम्भमुद्रेयमीरिता**—॥ ७२ ॥ इति ॥

( १५।१०—२ वि. सं. )

---

१ इयमेव कलशमुद्रापि ज्ञेया —

३ **भूतिनीमुद्रोद्धार**-मुद्राप्रकारे यथा—

तत्रादौ-**भूतिनीमुद्रोद्धारः** ॥

॥ बध्वा तु योनिमुद्रां वै मध्यमे कुटिले कुरु ।
अङ्गुष्ठेन तदग्रं तु मुद्रेयं **भूतिनी** मता ॥ इति ॥

४-**दण्डिनीमुद्रोद्धारो**पि तत्रैव-यथा-

॥ वामहस्तेन मुष्टिं तु बध्वा कर्णप्रदेशके ।
तर्जनीं सरलीकृत्य भ्रामयेन्मनुवित्तमः ॥
सौभाग्यदण्डिनी मुद्रा न्यासकालेपि सूचिता ॥ इति ॥

५-**त्रैलोक्यमोहिनीकाममुद्रोद्धारविषये** ।

तदुद्धारः-सटीकशारदा०-१७ पटले-७०५ पत्रे-१२श्लोकटीकायां-यथा-

( अत्र ध्यानानन्तरमेते मुद्रे दर्शनीये )

॥ हस्तौ तु सम्पुटौ कृत्वा प्रसृताङ्गलिकौ तथा ।
तर्जन्यौ मध्यमाङ्गुष्ठे अङ्गुष्ठौ मध्यमान्वितौ ॥
**काममुद्रेय**माख्याता **सर्वसत्त्वप्रियङ्करी**[1] ।
मूर्धन्यगुष्टमुष्टी द्वे मुद्रा **त्रैलोक्यमोहिनी** ॥ इति ॥ १२० ॥

॥ **इति-श्रीमुद्राविषयक-१५।१ विषयतः १५।१० विषयावधिः-१५ विषयः सर्वोऽपि सम्पूर्णः**- ॥

१५।११-१ **मुद्राकरणफलम्** ॥

॥ श्रीवामकेश्वरतन्त्रे-४ विश्रामे-१५९ पत्रे-६७ श्लोके-टीकायां च ।-

॥ मुद्रायास्त्रिपुरायास्तु देवि सिद्ध्यष्टकान्विताः ।
**ताएव सर्वचक्रेषु पूजाकाले प्रदर्शयेत्** ॥ ६७ ॥

त्रिपुरासम्बन्धिन्योयामुद्रास्ताः स्वरूपेणैव सिद्ध्यष्टकप्रदाः-**न पुनर्मन्त्रसाधनादि सापेक्षतया** । अतः पूजाकाले प्रतिचक्रं ताएव प्रदर्शयेत् ॥ इति ॥

२ ॥ सटीकशारदा०-चतुर्थः पटले-२९८ पत्रे-१०९ श्लोकटीकायाम्

॥ **मुद्रया यत् कृतं कर्म तदक्षय्यफलप्रदम्** ॥ इति ॥

३ मुद्राप्रकारनामकग्रन्थारम्भे-यथा-

॥ अथ मुद्राः प्रवक्ष्यामि सर्वतन्त्रेषु गोपिताः
**याभिर्विरचिताभिश्च मोदन्ते मन्त्रदेवताः** ॥ इति

४ ॥ पुनरपि तत्रैव-

॥ वामकेश्वरतन्त्रोक्ताः प्रकाश्यन्तेत्र मुद्रिकाः

---

१ मुद्राप्रकारे तु । सर्वदेवप्रियङ्करी-इति पाठः ॥

श्रृणु देवि प्रवक्ष्यामि मुद्राःसर्वार्थसिद्धिदाः
याभिर्विरचिताभिश्च **सान्निध्यं त्रैपुरं भवेत्** ॥ इति ॥

**इति-श्रीमुद्राविषयकः-१५ विषयः-सर्वोपि-सम्पूर्णः**

**सविनयम्**–

॥ सुतरां सुवाच्यमपि पुस्तकोद्विस्मृते-
रिहैव परिशेषयामि परिशिष्टमिष्टाहतम् ।
विलोक्य तदिदं मदीयरचनाश्रमं चान्तिमं
खलाय **तद्दानतः सुफलयन्तु** सन्तश्चिरम् ॥ इति ॥

**( श्रीपरशुरामकल्पसूत्रद्वि. परिशिष्टद्वितीयावृत्त्युभयकारः )**

एतद्ग्रन्थस्य द्विरावृत्तिद्विपरिशिष्टोभयकर्त्रा सङ्ग्रथिता, ग्रन्थान्ते **श्रीमदाद्या देवतायाः सङ्गीतस्तुतीरागबध्धा-यथा–**

**॥ मन्ददादरातालेन भैरवीभीमप्लासरागाभ्यां गीयते ॥**

॥ कालिके सकललोकपालिके ।
प्रसीद देवि सद्यएव भक्ते मयि कालिके । ध्रुवम्.
पदनखनतसुरसुरारिभासितमणिमौलिके ॥
करनिकरनिक्लृप्तकाम्यकाञ्चनकाटिमेखले ।
मूर्धखड्गभीत्यभाववरदपाणिजालिके ॥ १ ॥ प्रसीद.
कुटजहारगुञ्जन्मधुकरमनोज्ञमालिके ।
युद्धभाण्डचण्डमुण्डचित्रकेलिदालिके ॥
प्रचण्डतुण्डमुण्डखण्डुभारहारशीलिके ॥ २ ॥ प्रसीद.
कर्णकर्यलङ्कृते सुदन्तकलिकरालिके ।
रसनाखिलदेवारिसुवारिधिविषज्वालिके ॥
प्रशस्यनस्ययुक्तमौक्तिकाभूषणशालिके ॥ ३ ॥ प्रसीद.
नयनत्रययुक्कपालफालकालकालिके ।
व्यालचन्द्ररत्नमुकुटबालचन्द्रभालिके ॥
मुक्तकेशलेशवेषहासितहरतालिके ।
(कासितकरवालिके शोषितहरहालिके ) ॥ ४ ॥ प्रसीद.
ब्रह्ममहिषि ब्रह्म ते, पृथङ्गतेऽद्रिबालिके ।
सचराचरजन्तुमनुजदनुजवितनुजालिके ॥
गृहाण नमनाम्बिकेम्ब कात्यायनि कालिके (कात्यायनबालिके) ॥ ५ ॥ प्रसीद.

प्रणेतास्याः स्तुतेः ॥

भवद्विद्वशंवदःश्रीकृपाकाङ्क्षी ॥ साकरलालशास्त्री ॥

॥ **सर्वजनकल्याणशुभाशा** ॥

॥ अपुत्राः पुत्रिणःसन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदांशतम् ॥ १ ॥
काले वर्षतु पर्जन्यः पृथिवीसस्यशालिनी ।
देशोऽयं क्षोभरहितोब्राह्मणाः सन्तु निर्भयाः ॥ २ ॥
ॐ सहनाववतु सहनौ भुनक्तु सहवीर्यं करवावहै ।
तेजास्विनावधीतमस्तु माविद्विषावहै ॥ ३ ॥ ॐ शान्तिः ३ (उपनिषत)

**" सर्वेषां मनसामैक्यमस्तु "**

॥ वृत्तौ मदुक्तौ मम दूषणोक्त्या किं वा गुणोक्त्या विबुधाविचार्य ।
ग्राह्यं गुणाढ्यं सदसद्विशोध्यं **सर्वान् गुणान् वेत्ति शिवात् परः कः** ॥

॥ **भाकानन[1]पुरभूसुरसाग्निश्रीप्रागजिज्जयज्ञेशः**
**तज्जेन व्यरचीयं पुनरावृत्तिः सदिष्टतोषार्थम्-**
**( प्रतापनृपकीर्त्यै- ) श्रीः-**

५४७

॥ **पुनरावृत्तिकालः** ॥

सुधाङ्काङ्कदुर्गारसे वैक्रमेस्मिन् ।
मधौ कल्पसूत्रद्विरावृत्तिरेषा ॥
समारम्भिता तत् तया देवतास्तां ।
**रमारोग्यभोगप्रदा प्रेक्षकाणाम्** ॥

१९९६-संवदि-१८६२-शाके-चैत्रकृष्ण १० तिथ्यां-भौमे-१-५-४० दिने-श्रीसौराष्ट्रदेशान्तर्गतभावनगरवास्तव्यश्रौतस्मार्ताग्निहोत्रिषट्त्रिंशच्चातुर्मासयाजिद्विवेदि-**श्रीप्रागजित्प्रपौत्रः यज्ञेश्वरतनुजन्मा साकरलालशास्त्री-श्रीदेशिकेन्द्रपण्डितवशंवदः-** ॥

**श्रीवडोदरा-श्रीराजकीयसंस्कृतमहाविद्यालयाध्यापकः राजकीय-देवगृहसतताश्रितः श्रीधर्मपरायण भावनगराधीशपरम्पराश्रितश्च—**

॥ समाप्तोयं समस्तग्रन्थः ॐ श्रीतत्सज्जगदम्बाचरणार्पितोस्तु—शिवमस्तु—सर्वेषाम्— ॥

श्री—३—

5.

१-अत्रस्थ-भाकानन-शब्देन-भावनगर-शब्दोज्ञेयः-इति-शिवम्

७-९-४९-सङ्ख्यार्वाचिनाब्दे-२००५-भाद्रपद पूर्णिमायां बुधे-सुसमार्पितं पुस्तकम्- ॐतत्सत्

श्री ३